र्त्तानि रौद्रादिकालनामानि तु कालमाधवे पुराणे दर्शितानि ॥ रौद्रः श्वेतश्च मैत्रश्च तथा सारभटः स्मृतः ॥ सावित्रो वैश्वदेवश्च गांधर्वकुतपःस्तथा ॥ रौहिणस्तिलकश्चैव विभवो निर्ऋतिस्तथाः ॥ शंबरो विजयश्चैव भेदाः पंचदश स्मृता इति ॥ नंदपंडितकृतबालभूषायां शंखस्त्वन्यथा नामान्याह ॥ रौद्रश्चैत्रश्च मैत्रश्च तथा साभ्कटः स्मृतः ॥ सावित्रश्च जयन्तश्च गांधर्वः कुतपस्तथा ॥ रौहिणश्च विरंचिश्च विजयो निर्ऋतिरतथा ॥ महेन्द्रो वरुणश्चैव भेदाः पंचदश स्मृता इति ॥ एते पंचदश सूर्योदयमारभ्य क्रमाद्दिवा मुहूर्त्ताः॥ तथा रात्रिमुहूर्त्ताः शंकरश्चाजपादश्च तथाहिर्बुध्न्यपैतृकौ ॥ आश्विनो याम्यवाऽऽग्नेयो वैधात्रश्चांद्र एव च ॥ आदितेयोथ जैवश्च वैष्णवः सौर एव च॥ ब्राह्मो नाभस्वतश्चैव मुहूर्त्ताः क्रमतो निशीति ॥ एवं देशकालावधिकरणतयासमनुकीर्त्त्यामुकफलार्थममुककर्म करिष्य इति ॥ तत्र कैश्चिन्मातृपूजादीनां प्रयोगबहिर्भूतांगत्वं वदद्भिदर्शपूर्णमासाभ्यारक्ष्यमानोऽन्वारंभणीयया यक्ष्य इति ॥ वाजपेयेन यक्ष्यमाणो बृहस्पतिसवेन यक्ष्य इति संकल्पवत्तत्करिष्यमाणामुककर्मांगत्वेन मातृपूजादीनि करिष्य इत्येवं मातृपूजादीनां संकल्प उक्तः ॥ अन्यैस्तु प्रधानप्रयोगान्तः पाति गुणत्वं वदद्भिरमुककर्म करिष्ये ॥ तदंगत्वेन मातृपूजादीनि करिष्ये इत्येवं प्रधानसंकल्पोत्तरमेवैषां संकल्प उक्तः ॥ वस्तु तस्तु कर्मादिषु च सर्वेषु मातरः सगणाधिपा इत्यादि वक्ष्यमाणवचनान्मातृपूजादीनां स्वस्तिवाचनान्तानां कर्मणां प्रयोगबहिर्भूतांगत्वमेव युक्तं प्रतिभाति ॥ अत एवामुककर्मप्रारंभनिमित्तं मातृपूजादीनि करिष्य इत्येवं प्राचां संकल्पवाक्यं ॥ इति ॥

## ॥ अथोदकस्पर्शविचारः ॥

तत्रादौ दिङ्मुखनिर्णयः ॥ छंदोगपरिशिष्टे कात्यायनः ॥ यत्रोपदिश्यते कर्मक रंगं न तूच्यते ॥ दक्षिणस्तत्र विज्ञेयः कर्मणः पारगः करः ॥ यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु ॥ तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्रिसौम्याऽपराजितेति ॥ ऐंद्री पूर्वा ॥ सौम्योदीची ॥ ऐशानी अपराजिता ( गौतमः ॥ रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि॥ शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ॥ तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः॥ तदासीनेन कर्त्तव्यं न प्रह्वेन न तिष्ठतेति॥ प्रह्वो नम्रः॥

अथोदकस्पर्शनिर्णयः"–कात्यायनः ॥ रौद्रं राक्षसमासुरमाभिचरणिकं मंत्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदप इति ॥ यत्र च शब्दात्तद्दैवत्यं कर्म कृत्वेति कर्कोपाध्यायादयः सर्वे कल्पसूत्रभाष्यकाराः व्याख्यातवन्तः ॥ हेमाद्रौ याज्ञवल्क्योपि ॥ रौद्रपित्र्यासुरान्मंत्रास्तथा चैवाभिचारकान् ॥ व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेदिति ॥ ( अपामुपस्पर्शनमाचमनं ॥ लिंगात् ॥ प्राङ्तिष्ठन्नप उपस्पृ-

शतीति प्रवृत्य तेन पूतिरंतरतो मध्या वा आपो मेध्यो भूत्वा व्रतमुपायानीति ॥ आलंभमात्रं वा ॥ आचमनानुपदेशात् ॥ तस्य च नैमित्तकत्वात् ॥ शद्बसामर्थ्याच्च॥ अप उपस्पृशतीति लिंगमर्थवादमात्रं ॥ दीक्षास्नानवत् ॥ इति कर्कः ) छंदोगप-रिशिष्टे कात्यायनोपि॥ पित्र्यमंत्रानुद्रवणे आत्मालंभे अवेक्षणे॥ अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे ॥ निमित्ते-ष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेदिति ॥ अनुद्रवणमुच्चारणं ॥ आत्मालंभो हृदय-स्पर्शः ॥ ॥ अवेक्षणमपि तस्यैव ॥ अत्र पित्र्यमंत्रोच्चारणात्मालंभावेक्षणानि यज्ञादौ विहितान्येव ग्राह्याणि न लौकिकानि ॥ प्रहासे महति हासेन स्मितमात्रे ॥ मार्जा-रस्य मार्जारकृत एव ॥ स्वयंकृते तु स्नानस्योक्तत्वादित्युक्तमाचारदर्शे॥ आक्रुष्टे प-रुषभाषणे ॥ क्रोधसंभवो मानसिकोऽपि ॥ हेमाद्रौ बृहस्पतिरपि ॥ अधोवायुसमु-त्सर्गे आक्रन्दे क्रोधसंभवे ॥ मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे ॥ निमित्तेष्वेषु धर्मार्थं कर्म कुर्वन्नपः स्पृशेदिति ॥ अपःस्पृशेदित्यनेनापांस्पर्शमेव विवक्षितं नत्वा-चमनमिति ॥ भर्तृ यज्ञपितृ भूति कर्कोपाध्याय वासुदेव गर्ग श्रीअनन्तदेव याज्ञि-कादयः सर्वे कल्पसूत्रभाष्यकाराः व्याख्यातवन्तः ॥ संप्रदायादयः पद्धतिकारा-श्च॥ अपां स्पर्शनमाचमनमिति हेमाद्रिणा व्याख्यातं ॥ अत्र सर्वेषु वाक्येष्वपःस्पृशे-दिति पाठादपः स्पर्शो जलस्पर्श एव याज्ञिकसंप्रदायाविरुद्धः ॥ येषु तूपस्पृशेदिति पाठस्तत्र तूपस्पर्शनमाचमनमित्युक्तमाचारदर्शे ॥ आपस्तंबः ॥ स्वप्ने क्षवथौ सिंघा-णिकाश्रवालंभे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालंभे महापथं गत्वाऽमे-ध्यं चोपस्पृश्याप्रयतं च मनुष्यं निवींच परिधायापउपस्पृशेदिति ॥ क्षवथुः क्षुतं ( थुंक ) सिंघाणिका नासिकामलः॥ अश्रु नेत्रजलं ॥ अपः स्पर्शोऽत्राचमनं ॥ हेमाद्रौ मार्कंडेयपुराणे ॥ क्षुतादा सम्यगाचामे स्पृशेद्वार्द्रतृणादिकं ॥ कुर्वीतालंभनं वापि दक्षिणश्रवणस्य वै ॥ यथाविभवतो ह्येतत्पूर्वालाभे ततः परं ॥ न विद्यमाने पूर्वत्र उत्तर प्राप्तिरिष्यत इति ॥ तत्रैव वसिष्ठः ॥ क्षुते निष्ठीविते सुप्ते परिधानेऽश्रु-पातने ॥ पंचस्वेतेषु चाचामेच्छ्रोत्रं वा दक्षिणं स्पृशेदिति ॥ पराशरः ॥ क्षुते निष्ठी-विते चैव दन्तश्लिष्टे तथानृते ॥ पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥ प्र-भासादीनि तीर्थानि गंगाद्याः सरितस्तथा ॥ विप्रस्य दक्षिणे कर्णे संतीति मनुरब्र-वीत् ॥ आदित्यो वरुणः सोमो वन्हिर्वायुस्तथैव च ॥ विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवता इति मदनरत्ने बौधायनः ॥ कर्मयुक्तो नरो नाभेरधः स्पर्शं त्रिवर्ज-येदिति ॥ स्कंदपुराणे ॥ पाखंडिनश्च पतिता ये चैव नास्तिका द्विजाः ॥ पुण्यक-र्मणि तेषां वै सन्निधिर्नेष्यते क्वचिदिति ॥ छंदोगपरिशिष्टे कात्यायनः ॥ अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणां॥ अक्रिया च परोक्ता च तृतीया चायथाक्रिया॥

## ॥ अथ स्वकीयशाखाश्रयविचारः ॥

स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ॥ कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितं ॥ यत्राम्नातं स्वशाखायां परोक्तमविरोधि यत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्माविरुद्धत्वादनुष्ठीयते यद्वा॥ स्वशाखोक्तस्यांकाक्षा पूरकत्वेन स्वरूपतो वा यदविरोधि ॥ यथा मनुनोक्तस्य मेखलामजिनं दंडमुपवीतं कमंडलुं ॥ अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मंत्रवदित्यस्य मंत्राकांक्षापूरकं गृह्यान्तरे मंत्राभिधानं तद्धर्मज्ञैः कर्त्तव्यमेव॥ पौराणिकादि तु साधारणत्वान्न पारक्यमिति तदपि स्वशाखोक्तादधिकमनुष्ठेयमेव ॥ यथा देवताभ्य इति मंत्रजपादि ॥ यत्तु गृह्यपरिशिष्टं ॥ बहुरूपं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितं॥ तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेदिति तत्साधारणानां परोक्तानां च नावश्यकमनुष्ठानमित्येवं परं नतु स्वगृह्योक्तमात्रमेवानुष्ठेयमिति ॥ अन्यथा गृह्यानुक्तानां साधारणानामुपदेशानर्थक्यापत्तेः शाखान्तराधिकरणविरोधाच्च॥ तत्रैव ॥ प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथंचन ॥ यतस्तदन्यथा भूतं तत एव समापयेदिति ॥ प्रवृत्तं पारब्धं कर्मान्यथाक्रमान्यत्वेन कुर्यात्तत्र यस्मात्पदार्थादारभ्य यत्कर्मान्यथा जातं तत एवारभ्य पुनर्यथोक्तप्रकारेण कुर्यात् ॥ यथा गंधोत्सर्गे गंधदानयोः क्रमान्यत्वेनानुष्ठाने अन्यथाकरणकाले ज्ञातयोस्तत एवारभ्य पुनरनुष्ठानं ॥ तत्रैव ॥ समाप्ते यदि जानीयान्मयैतदयथाकृतं ॥ तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मण इति समाप्ते अन्यथा कृते अन्यथाकरणज्ञाने सति यत्पदार्थान्यथाकरणं जातं तमेव यथोक्तप्रकारेण पुनः कुर्यान्न तत आरभ्य सर्वं कर्मकांडं ॥ एतच्च पुनरनुष्ठानमविलंबे सुकरत्वे च कर्त्तव्यं ॥ यत्र तु विलंबो दुष्करत्वं वा तत्र विष्णुस्मरणमेव नावृत्तिः ॥ यथाऽकृतोत्सर्गस्यान्नस्य ब्राह्मणैर्भोजने पुनरन्नान्तरोपादानेनोत्सर्गे ॥ अन्यथा ब्राह्मणोपरोधसहत्वबाधापत्तेरित्युक्तं नारायणवृत्तौ ॥ प्रधानस्याक्रिया यत्र सांगं तत् क्रियते पुनः ॥ तदंगस्याक्रियायां तु नावृत्तिर्नैच तत् क्रियेति ॥ यत्र प्रधानस्य कर्मणो दानादेरकरणमुत्सर्गश्च तदंगभूतः कृतस्तत्पुनरंगानुष्ठानसहितं कर्तव्यं ॥ अंगमात्रस्य तूत्सर्गस्याकरणे कृतस्य प्रधानस्य नावृत्तिः॥ नापि तावदंगमात्रकरणं॥ किन्तु तत्समाधानार्थं॥ अज्ञानाद्यदि वा मोहात्प्रच्यवेताध्वरेषु यत्॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति॥ याज्ञवल्क्योक्तं प्रायश्चित्तमनुष्ठेयं ॥ एवं समाप्ते प्रयोगे अकरणज्ञानेप्येतदेव समाधानं ॥ अन्येतु तदंगस्य सांगप्रधानांगस्य चोपवीतित्वादेरकरणेन सांगप्रधानस्यावृत्तिः॥नाप्युपवीतित्वादेः करणं॥ किन्तु तत्समाधानार्थं विष्णुस्मरणमेव प्रायश्चित्तमित्याहुः॥श्रीशंभोश्चरणद्वंद्वमाधाय हृदयांबुजे ॥ उद्धवस्य तनूजेन काशिपुरनिवासिना॥१॥ धीमतानन्तदेवेन परिभाषा निरूपिता॥गुरवस्तेन तुष्यन्तु विद्वांसश्च तथा मयि॥२॥इति परिभाषा॥

## ॥ अथ प्रसंगादितरसर्वकर्मसाधारणान्यपि गणपतिपूजनादीनि स्वस्तिवाचनान्तानि रुद्रांगानि निरूप्यन्ते ॥

तत्र तावद्गणपतिपूजनविचारः ॥ तदुक्तं पद्मपुराणे॥ नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः ॥ तस्माद्विघ्नं समुत्पन्नमक्रोधजमिदं तवेति॥ अस्माच्चार्थवादाद्विध्युन्नयनं द्रष्टव्यं ॥ ब्रह्मवैवर्त्तेऽपि ॥ ढुंढिराजः प्रियः पुत्रो भवान्याः शंकरस्य च ॥ तस्य पूजनमात्रेण त्रयोपि वरदाः सदा ॥ त्रयो ब्रह्माविष्णुशिवाः ॥ भवानी शिव गणेशा इति वा ॥ गणेशः सर्वदेवानामादौ पूज्यः सदैव हि ॥ सर्वैरपि महाविघ्ननाशकोऽन्यो न विद्यत इति ॥ पूजाविधिमाह रुद्रपद्धतिकृत्परशुरामः ॥ गणेशं पूजयेत्पूर्वं न विघ्नार्थं स्वकर्मणः ॥ पट्टे वा मृन्मये पीठे रक्तवस्त्रेऽरुणाक्षतैः ॥ कार्यमष्टदलं पद्मं तस्योपरि गणेश्वरं॥ गणानां त्वेति संस्थाप्य पूजयेत्तदनन्तरं ॥ हे हेरंब त्वमेह्येहि० ॥ आवाह्यैवं गणेश्वरं संस्थाप्य गणानां त्वेति मंत्रेण पूजयेदित्यन्वयः ॥ स्थापनं गणेशप्रतिमायाः पूजायामन्तर्भावादावाहनमप्यनेनैव मंत्रेण ज्ञेयं ॥ गणानां त्वेति मंत्रसमाप्तिस्तु कंडिकापरिसमाप्त्या ज्ञेया ॥ सर्वत्र स्मार्त्ते कर्मणि मंत्रावसानबोधकप्रमाणाभावे मंत्रस्य कंडिकान्तत्वात् ॥ उक्तं च रेणुकारिकायां ॥ गृह्यकर्मसु ये मंत्राः ज्ञेयाः स्वाध्यायपाठतः ॥ किंच मध्यमवृत्त्या तेन द्रुता न विलंबिता इति ॥ यत्तु काशीदीक्षितैर्विश्वनाथभट्टैश्च प्रयोगरत्ने रुद्रपद्धतौ च गणानां त्वेत्ययं मंत्रो वसोममेत्यन्त इत्युक्तं तत्काण्वशाखाविषयं ॥ काण्वशाखायां गणानां त्वेति कंडिकायाः ॥ वसोममेत्यन्ताया एव समधीतत्वात्॥ एवमित्युक्तमंत्रैः ॥ ते च हेहेरंब त्वमेह्येहीत्यादयः॥ तेषां गणानां त्वेति मंत्रेण महाव्याहृतिभिश्च सह विकल्पः॥ विनायकं तथा दुर्गां वायुमाकाशमेव च ॥ आवाहयेद् व्याहृतिभिस्तथैवाश्वकुमारकाविति ग्रहयज्ञे मत्स्यपुराणवचनात् ॥ उपचारैः ससिंदूरैश्चंदनै रक्तचंदनैः ॥ पुष्पैर्धूपैस्तथा दीपैराच्छादनसुशोभनैः ॥ इति पंचोपचारैश्च यन्मया पूजनं कृतं प्रारब्धकर्मसिद्ध्यर्थं देवाय कल्पयामि तत् ॥ नालिकेरेण देयोर्घः फलेन फलकांक्षिभिरिति ॥ अर्घमंत्रान्प्रार्थनामंत्राश्च प्रयोगे वक्ष्यामः ॥ इति ॥

"पंचोपचारैरिति" वाक्ये पंचोपचारग्रहणमुपलक्षणं॥ तेन षोडशोपचारा अपि भवन्ति॥ अत एव पद्धतिकाराः षोडशोपचारैः पंचोपचारैर्वा पूजयेदित्याहुः॥ षोडशोचारास्तु आचारचिन्तामणौ ॥ पंचायतनपूजायामुक्ताः ॥ आसनं स्वागतं चार्घं पाद्यं चाचमनीयकं ॥ मधुपर्काचमस्नानवसनाभरणानि च ॥ गंधपुष्पे धूपदीपौ नैवेद्यं चंदनं तथेति ॥ विष्णुपुराणे तु पूर्वमावाहनं प्रोक्तमासनं तदनन्तरं ॥ ततश्च पाद्यमर्घ्यं च ततस्त्वाचमनीयकं ॥ स्नानं वस्त्रं चोपवीतं ततो गंधादि चंदनं ॥ पुष्पं धूपं च

दीपं च नैवेद्यं तदनन्तरं ॥ ततो देयः प्रणामश्च ततो देया प्रदक्षिणा॥ विसर्जनं ततो दद्यादुपचारास्तु षोडशेत्युक्तं॥ एतदनुसारी शिष्टाचारोऽपि॥ क्वचित्तु प्रणाम प्रदक्षिणास्थाने तांबूलदक्षिणे उक्ते॥ पंचोपचारपूजायां तु न दक्षिणा॥गंधादिका नैवेद्यान्ता पूजा पंचोपचारिकेत्याचारचिन्तामणौ वचनात् ॥ षोडशोपचारपक्षे तु स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं हरेरिति ऋग्विधानवाक्यात्स्नानाद्यंगत्वेनाचमनं दद्यात् ॥ यज्ञोपवीतोपचारानन्तरमाचमनसमर्पणमत्र नोक्तं ॥ तथापि अर्घे स्नाने तथा वस्त्रे उपवीतोपहारयोः॥ ततो विराडित्यनया दद्यादाचमनीयकमिति स्नानसूत्रपद्धतौ देवयाज्ञिकोदाहृतवचनात्कार्यं ॥ हरेरिति देवतान्तरोपलक्षणं ॥ क्वचित्तु विसर्जनमाग्निमारुतादूर्ध्वमनुयाजैश्चरंतीवदुत्कृष्यते ॥ यथा नवग्रहमखादावन्ते विसर्जनं ॥ तेन सर्वत्र षोडशोपचारैरेव पूजा ॥ पंचोपचारपूजा तु यत्र स्थापितदेवानां विसर्जनात् मध्ये पूजोक्ता तद्विषयेति रामकृष्णभट्टाः ॥ इति द्विवेद्युपाह्वपरशुरामात्मजेन जगन्नाथशर्मणा संशोधिते रुद्रकल्पद्रुमे परिभाषापरिच्छेदे गणपतिपूजनविचारः ॥

## ॥ अथ मंडपदेवतास्थापनविचारः ॥

तदुक्तं हेमाद्रौ चतुर्विंशतिमध्ये ॥ आभ्युदयिके संप्राप्ते देवतास्थापनं स्मृतं ॥ जातिधर्मकुलाम्नात लोकानां वृद्धिकारकमिति ॥ अस्यार्थो हेमाद्रिणैवमुक्तः॥ आभ्युदयिकश्राद्धे कर्त्तव्यतया प्रस्तुते सति ब्राह्मणक्षत्रियादिजातिविभागेन श्रुत्यादिषु समाम्नातं कुलवृद्धैश्चोपदिश्यमानं देवतानां प्रतिष्ठापनं कर्त्तव्यतया स्मृतं ॥ तद्धि लोकानां वृद्धेर्मंगलपरंपरायाः कारणमिति ॥ मंडपश्च विवाहादिपंचकर्मसु कार्यः ॥ तदुक्तं पारस्करगृह्ये ॥ पंचसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति॥ अस्यार्थः ॥ विवाहादिषु पंचसु संस्कारकर्मसु बहिर्वाह्योऽगृह्यो लौकिकोऽग्निर्भवतीत्यर्थः ॥ कर्कोपाध्याया अपि॥ विवाहादयाश्चागृह्याग्निविषय इति ॥ शालायां मंडपे कर्म कर्त्तव्यमिति शेषः ॥ यद्वा बहिः शालायां इत्येकपदं गृहाद्बहिर्वाह्याशालाबहिः शाला तस्यां बहिः शालायां मंडप इति यावत्॥ अत्राप्यग्निर्लौकिक एव ॥ बहिः शालाविधानसामर्थ्यात् ॥ नहि कर्मार्थवचनमन्तरेणावसथाद्गृहाद्बहिरावसथ्याग्निप्रणयनं संभवति ॥ औपासनमरण्यं हृत्वेति शूलगवपशौ सूत्रारंभसामर्थ्यात्॥ यदि हि कर्मार्थं गृह्याग्नेर्गृहाद्बहिःप्रणयनं स्यात्तर्हि शूलगवार्थत्वेनापि प्राप्तत्वात्पुनस्तदर्थत्वेनौपासनमरण्यं हृत्वेति सूत्रारंभो निरर्थक एव स्यात्॥ किंच ॥ आवसथ्यो गृह्यः शालाग्निरित्यन्वर्थसंज्ञाकरणादप्ययमर्थो लभ्यते॥ यदयमावसथ्याग्निर्विना वचनमन्यत्र कर्मार्थं न प्रणेतव्य इति ॥ किंच ॥ आवसथ्यशब्दप्रवृत्तौ ह्यावसथ-

संबंधे निमित्तं ॥ आवसथसंबंधाभावे च शब्दप्रवृत्तिनिमित्ताभावाद्बहिः प्रणीते-
तस्मिन्नावसथ्येऽग्नौ निमित्तापाये नैमित्तिकस्याप्यपायादावसथ्यशब्दो न प्रवर्तेत ॥
तस्मात् गृह्याग्नेः प्राप्त्यभावादग्निसाध्यत्वाच्च विवाहादिषु लौकिकोऽग्निरेव भवति ॥
ननु चाग्निमादधीतेत्यत्रादधीतेत्यात्मने पदादात्मगामिक्रियाफलकानामेव कर्मणामा-
धानसंपाद्याग्निसाध्यत्वावगमादर्थादन्यगामिक्रियाफलककर्मणां स्वाहितेऽग्नौ निषेध-
प्रतीतेः ॥ यस्याग्नावन्यहोमःस्यात्स वैश्वानरदैवतं ॥ चरुं निरूप्य जुहुयात्प्रायश्चित्तं
तु तस्य तदिति छंदोगपरिशिष्टे कात्यायनेन प्रायश्चित्तविधानाच्चैतानि संस्कारक-
र्माणि लौकिकाग्नावेव भविष्यन्तीति पुनर्विधानं किमर्थमिति चेत् ॥ अत्रोच्यते ॥
गृह्यस्थालीपाकानां कर्मेत्युपक्रमबलात्सुतसंस्कारहोमाः स्वेग्नावेव स्युस्तन्माभूदित्ये-
तदर्थं॥ अन्यथा पुत्रानुत्पाद्य संस्कुर्यादित्यनेन सुतसंस्काराणां स्वाधिकारिकत्वावगमा
ज्जातेष्टिन्यायाद्गृह्यस्थालीपाकानां कर्मेत्युपक्रमाच्च सुतसंस्कारकहोमाः स्वेग्नावेवा
पद्येरन् ॥ तथाऽनाग्निमत्तोऽग्निसंबद्ध गृह्यसूत्रविहितान्यकर्मव्युदासार्थं च ॥ पंचस्वे-
वाग्निसंबंद्धेष्वनग्निरधिक्रियते नान्यत्रेति ॥ एवं च सति द्वितीयविवाहोग्निमतोऽपि
लौकिकाग्नावेव भवति ॥ बहिः शालाविधानसामर्थ्यादेव ॥ नहि बहिः शालायामा-
वसथ्याग्निप्रणयनं संभवतीत्युक्तं ॥ नच स्वस्थानस्थिते गृह्येग्नावेव विवाहहोमः स्या-
दिति वाच्यम् ॥ बहिः शालाविधिविरोधात् ॥ यत्तु छंदोगपरिशिष्टे ॥ सदारोन्या-
न्पुनर्दारान्कथंचित्कारणांतरात् ॥ य इच्छेदग्निमान्कर्तुं क होमोऽस्य विधीयत इति
कात्यायनवचनं ॥ यच्चोक्तं प्रायश्चित्ताध्यायदेवपद्धतौ ॥ भार्यायां विद्यमानायां द्वि-
तीयामुद्वहेद्यदि ॥ तदा वैवाहिकं कर्म कुर्यादावसथेऽग्निमानिति तच्छंदोगविषयं ॥
अत एवोक्तं देवपद्धतौ स्मृतिचंद्रिकायां ॥ जीवंत्यामपि ज्येष्ठायां द्वितीयस्त्री-
परिणयने कृते उत्सर्गेष्ट्याग्नीनुत्सृज्यान्यया सह पुनरादध्यादिति ॥ हरिहर-
भाष्येपि ॥ अथ यदि कृतावसथ्याधानो यजमानः प्रजार्थी वोद्वहेत्तत्रान्ये
अरणी संपाद्य प्रातर्होमं विधाय दिवा विवाहं कृत्वा आचतुर्थीकर्मणो होमं त्य-
क्त्वा तदंते अतिक्रान्तहोमद्रव्यं दत्वा पंचमेहनि पुनराधानं यथोक्तमित्येकः पक्षः ॥
प्रातर्होमं कृत्वा दिवा विवाहं संपाद्य सद्यश्चतुर्थीकर्म च कृत्वा तद्दिन एवावसथ्याधान-
मिति द्वितीयः ॥ अत्र पक्षद्वयेपि पूर्वारण्योः स्फोटितयोरावसथ्ये दहनं ॥ अन्यार-
ण्योराधानं ॥ पात्राणि तु तान्येव ॥ य सदारोन्यान्पुनर्दारानित्यादिके ॥ नह्या-
हिताग्नेः स्वं कर्म लौकिकेऽग्नौ विधीयत इत्यन्ते छंदोगपरिशिष्टे पुनराधानाभावप्र-
तिपादनं तच्छंदोगविषयमित्युक्तं ॥ इत्थमभिदधताद्धरिहरेण विवाहहोममावसथ्याग्नौ
कुर्वतां तु न पुनराधानामित्येतदभिहितं भवति ॥ अन्यथा पुनराधानाभावप्रतिपा-

दनमिति हरिहरोक्तेरसंगतत्वापत्तेः ॥ नन्वनेन छंदोगपरिशिष्टेन पुनराधानाभावः प्रतिपाद्यते ॥ किंतर्हि विवाहहोमस्यावसथ्याग्नावनुष्ठानमिति ॥ अत्र च पुनराधानाभावप्रतिपादनं तच्छंदोगविषयमित्युक्तवता हरिहरेण विवाहहोमस्यावसथ्याग्नावनुष्ठानप्रतिपादनमपि छंदोगविषयमित्युक्तं भवति ॥ अत्र गृह्याग्नौ त्विष्टिस्थाने स्थालीपाकः कार्यः ॥ य एवाहिताग्नेः पुरोडाशास्त एवानाहिताग्नेश्चरवइत्युक्तत्वात् ॥ अत्र विवाहादिपदस्य यद्समासतः प्रणयनं तु तत्र तत्र तत्संबद्धान्यकर्मणोप्युपलक्षणार्थं ॥ विवाह इति चतुर्थी कर्मण उपलक्षकं तदेकशात् ॥ अत एव परिणीतायाः स्वगृहं प्रतिनीयमानायाः स्त्रिया मार्गे रथाक्षभंगादिनिमित्ते विहिते नैमित्तिके कर्मणि तमेवाग्निमुपसमाधायेति विवाहाग्नेर्धारणानुवृत्तिर्दृश्यते तच्चधारणं चतुर्थीकमार्थं॥ अन्यथाऽनर्थक्यापत्तेः॥ चूडाकरण इति तदव्यवहितपूर्वकालीनान्नप्राशनस्याप्युपलक्षणं उपनयन इति व्रतादेशोपलक्षं॥ केशान्त इति वेदं समाप्य स्नायादित्यादिना विहितसमावर्त्तनस्नानोपलक्षणं॥ सीमन्तोन्नयन इति श्रुत्युक्तगार्भिकहोमजातकर्महोमानामुपलक्षणं॥ इति शब्दः प्रकारे॥ तेन पाकयज्ञविधानेन विहितोप्यवकीर्णीनः पशुराज्याहुती वालौकिकेग्नावेव भवति हविर्यज्ञविधानविहितस्यापि तथोक्तत्वात् ॥ न व्रात्यस्तोमवद्लौकिके ॥ व्रात्यस्तोमा अपि लौकिकेग्नावेवेति कर्कसंप्रदायकारौ ॥ यत्तु देवयाज्ञिकैर्नोपासनश्रुतेरिति सूत्रे भार्यादिरग्निर्दायादिर्वा तस्मिन् गृह्याणीत्यापस्तंबसूत्रमुदाहृत्य गृहाय हीतं गृह्यं ॥ गृहशब्दश्च दंपत्योर्वर्त्तते ॥ अतश्च यत्किंचिद्दंपत्योर्हितं शांतिकपौष्टिकव्रतांगभूतहोमादिकं तत्सर्वमावसथ्येग्नौ भवतीति ॥ अत एवाह कात्यायनः ॥ न स्वेग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिं ॥ स्वगर्भसत्क्रियार्थाश्च यावन्नासौ प्रजायते ॥ अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः ॥ नहि पित्रा समानीतः पुत्रस्य भवति क्वचिदिति ॥ अतश्च सीमन्तोन्नयनं स्मार्त्तेग्नौ कार्यमित्युक्ते तच्छंदोगविषयं ॥ छंदोगपरिशिष्टस्थस्यैव कात्यायनवाक्यस्योपसंहारात् ॥ वाजसनेयिभिस्तु कृतावसथ्यैरपि सीमन्तोन्नयनं लौकिकाग्नावेव कार्यं ॥ बहिः शालाविधानसामर्थ्यात् ॥ सीमन्तोन्नयनार्थत्वेन बहिःशालायां गृह्याग्नेः प्रणयनम्याशक्यत्वादित्युक्तत्वाच्च॥ न च स्वस्वस्थानस्थिते शालाग्नौ स्यादिति॥ बहिःशालाविधानविरोधात्॥ न च शाखान्तरोपसंहारन्यायेन गृह्याग्नौ स्यादिति वाच्यम् ॥ आकांक्षाया अभावात्स्वशाखाविरुद्धत्वाच्च ॥ अत एव गर्गोपाध्यायाः ॥ विवाहादिपंचकर्मसु लौकिकाग्निमूचुः ॥ कर्कोपाध्याया अपि ॥ विवाहादयश्चागृह्याग्निविषय इति ॥ यत्तूक्तं गृहशब्दश्च दंपत्योर्वर्तत इति ॥ तच्चिन्त्यं ॥ सर्वनिबंधेषु हि दारवचनस्य शालावचनस्य वा गृहशब्दस्य दृष्टत्वेन दंपत्योर्वचनस्य गृहशब्दस्य

काप्यदर्शनात्॥ यदप्यतश्च यत्किंचिद्दंपत्योर्हितं शान्तिकपौष्टिकव्रतांगभूत होमादीकं तत्सर्वमावसथ्येऽग्नौ भवतीति तदपि गृह्यसूत्रोक्तकर्मविषयं ॥ तस्मात् गृह्याणि गृह्यसूत्रोक्तानीत्यर्थः ॥ धर्मशास्त्रपुराणोक्तेषु तु यत्रैव विशिष्यौपासनाग्नेर्विधानं तत्रैवौपासनाग्निरन्यत्र तु लौकिक एव ॥ तथा चोक्तं स्मृत्यर्थसारे ॥ गार्ह्यमौपासने कुर्यात्सर्वाधानी तु लौकिके ॥ स्मार्त्तं तु लौकिके कार्यं श्रौतं वैतानिकाग्निर्ष्विति ॥ गृह्यसूत्रविहितं गार्ह्यं ॥ सर्वाधानिनस्तु औपासनाग्नेरभावाल्लौकिके तत् ॥ स्मृतिपुराणादिविहितं तु स्मार्त्तं ॥ तेन शान्तिक पौष्टिक व्रत होम तुला ग्रह यज्ञ महारुद्र नवरात्रानन्तादिव्रत शतचंड्यादिहोमास्तीर्थगयाश्राद्धादीनि च लौकिकेऽग्नौ भवन्ति॥ एतच्चाग्निनिर्णये विस्तरतो वक्ष्य इत्यलं प्रसंगागतचिन्तया ॥ इति ॥

" अथ प्रकृतमनुसरामः"—मंडपे कर्म कर्त्तव्यमित्युक्तं॥ मंडपश्च वसिष्ठेनोक्तः॥ षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितं ॥ मंडपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ॥ अष्टहस्तं तु रचयेन्मंडपं वा द्विषट्करमिति ॥ द्विगुणिताः षट्करा यस्य तं द्वादशहस्तं ॥ उत्तमः षोडशहस्तो मध्यमो द्वादशहस्तोऽधमोष्टहस्तः ॥ अयं वैकल्पिको मंडपो गृह्यमानत एव कार्यो नतु स्वेच्छया ॥ तदुक्तं सप्तर्षिमते विवाहपटले ॥ मंगलेषु च सर्वेषु मंडपो गृहमानतः ॥ कार्यः षोडशहस्तो वा द्विषट्हस्तो दशावधीति ॥ गृहमानत इति महति गृहे महान्मंडपो न्यूने न्यून इत्यर्थः ॥ दशावधीति न्यूनतायां दशसंख्यावधिरित्यर्थः ॥ अतो वसिष्ठोक्तोऽष्टहस्तपक्षोऽत्यन्तापद्विषयः ॥ अत्र वेद्यप्युक्ता नारदेन ॥ हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः ॥ स्तंभैश्चतुर्भिः सुश्लक्ष्णां वामभागे स्वसद्मनः ॥ समंडपां चतुर्दिक्षु सोपानैरुपशोभितां ॥ प्रागुदक्प्रवणारंभास्तंभैर्हंसशुकादिभिः ॥ विचित्रितां चित्रकुंभैर्विचित्रैस्तोरणांकुरैः ॥ एवं त्रिधां समारोहेन्मिथुनं साग्निवेदिकामिति ॥ साग्नीति भिन्नं पदं मिथुनस्य विशेषणं॥ वेद्यां विशेषः सप्तर्षिमते ॥ स्तंभैश्चतुर्भिरेवात्र मध्ये वेदी प्रतिष्ठिता ॥ शोभिता चित्रिता कुंभैरासमन्ताच्चतुर्दिशं ॥ द्वारविद्धा वलीविद्धा कूपवृक्षव्यधा तथा ॥ न कार्या वेदिका तज्ज्ञैः शुभा मंगलकर्मणीति ॥ वलि काष्ठपाषाणादिनिर्मितस्तंभः ॥ रेणुकारिकायामपि ॥ अविघ्नकारिणं देवं विघ्नराजं प्रपूज्य च ॥ षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितं ॥ मंडपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ॥ अष्टहस्तो भवेद्वापि मंडपो वा द्विषट्करः॥पृथुं च दैर्घ्येऽधिकरा विधेया हस्तोच्छ्रयाऽपक्वमृदिष्टकाभिः ॥ बद्धा गृहान्निर्गमदक्षिणेन विवाहवेदी सिकतोपकीर्णा ॥ आद्या वेदी ब्राह्मणस्योपदिष्टा द्वाभ्यामूना क्षत्रियस्यांगुलाभ्यां ॥ वैश्ये शूद्रे त्र्यङ्घ्रिहीना हि सैव वेदीमानं वै वसिष्ठेन चोक्तमिति ॥ अङ्घ्रयश्चत्वारः ॥ व्रतबंधे संस्कार्यत्वाद्वटुहस्तेनैव

वेदीनिर्माणं ॥ विवाहे तु कन्यागृह एव वरपूजनस्योक्तत्वाद् गृहस्थाश्रमस्य तदायत्तत्वात्कन्याहस्तेनैव वेदीनिर्माणमित्युक्तं स्मृतिकौस्तुभे मंडपादौ स्तंभनिवेशनं तु वृषाद्राशित्रये सूर्ये सति आग्नेय्यां कार्यं ॥ सिंहाद्राशित्रये ईशान्यां ॥ वृश्चिकाद्राशित्रये वायव्यां ॥ कुंभाद्राशित्रये नैर्ऋत्यां अन्यासु दिक्षु व्युत्क्रमेण राहोर्मुखमध्यं पुच्छं च तिष्ठति ॥ अतस्तत्र स्तंभनिवेशनमनुचितं॥ यदाह विश्वकर्मा॥ वेद्यां वृषाद्गृहे सिंहात्त्रिकं मीनात्सुरालये ॥ ईशानतो व्यस्तगत्या पृष्टिस्तस्य शुभावहेति ॥ तस्य राहोर्वृषादित्रये सूर्ये सति ईशानदिशि मुखं ॥ अग्रे व्यस्तगत्या विलोममित्यर्थः ॥ पृष्ठिः पृष्ठदिक् आग्नेयी शुभा ॥ यत्तूक्तं शिल्पशास्त्रे विश्वकर्मणा ॥ कन्यासिंहे तुलायां भुजगपतिमुखं शंभुकोणेऽग्निखातं वायव्ये स्यात्तदास्यं मकरधनुरलावीशखातं वदन्ति ॥ कुंभे मीने च मेषे निर्ऋतिदिशि मुखं वायुकोणेऽहिखातं वन्हेः कोणे मुखे वै वृषमिथुनगते कर्कटे रक्ष खात इति ॥ तद्गृहविषयं ॥ गृहे सिंहादित्युक्तत्वात् अमुमेवार्थमभिप्रेत्योक्तं संग्रहे ॥ स्तंभः स्थाप्यः क्रमादर्के वृषराशेस्त्रिभे त्रिभे ॥ आग्नेय्यां च तथैशान्यां वायव्यां निर्ऋतेर्दिशीति ॥ मंडपप्रतिष्ठाविधिरुक्तो रेणुकारिकायां ॥ मंडपस्थापनं कुर्यात्स्वस्तिवाचनपूर्वकं ॥ चतुरो ब्राह्मणांस्तत्र पूजयेद्दक्षिणादिभिः ॥ नंदिनी नलिनी मैत्रा उमा च पशुवर्द्धनी॥ मंडपस्थापने योज्याः स्तंभे मात्राः प्रकीर्त्तिताः॥इति रुद्रकल्पद्रुमे मंडपदेवता स्थापनम्॥

## ॥ अथ गौर्यादिमातृपूजनविचारः ॥

तदुक्तं छंदोगपरिशिष्टे कात्यायनेन॥ कर्मादिषु च सर्वेषु मातरः सगणाधिपाः॥ पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ता इति ॥ सर्वषु कर्मादिषु सर्ववैदिककर्मारंभेष्वित्यर्थः ॥ मातरश्च तत्र तेनैवोक्ता ॥ गौरी पद्मा शची मेधा सावित्रि विजया जया ॥ देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ॥ गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दशेति ॥ अन्ते श्रुतमपि गणपतिपूजनमादौ कार्यं ॥ आदौ विनायकः पूज्यो अन्ते च कुलदेवता इति स्मृतिकौस्तुभे बह्वृचपरिशिष्टात् ॥ एतेन मदनरत्नादीनामन्ते गणपतिपूजोक्तिरनादरणीया ॥ इदं च गणपतिपूजनं मातृपूजांगं ॥ मातरः सगणाधिपा इत्यनेन सगणाधिपानां मातॄणां पूज्यत्वविधानेन गणपतिपूजाया मातृपूजांगत्वावगमात् ॥ अत एव कर्मारंभे निर्विघ्नफलसिद्ध्यर्थमपि गणपतिपूजनं भवतीत्युक्तवता श्राद्धदीपिकाकृता काशीदीक्षितेन चैवमेव वदता निर्विघ्नफलसिद्ध्यर्थत्वाद्भिन्नमिदमित्युक्तं ॥ एवमेव मदनरत्ने दानकांडे जलाशयोत्सर्गकांडे च ॥ न चात्र संप्रतिपन्नदेवताकत्वात्सप्तदशमाजाप्रत्यानितिवचनेन गणपतिपूजा स्यादिति

वाच्यं ॥ निर्विघ्नफलसिद्ध्यर्थाया गणपतिपूजायाः पुरुषार्थत्वेन मातृपूजांगभूतायाः कर्मार्थत्वेन च फलभेदात् ॥ प्राजापत्येषु तु फलैक्याद्देशकालकर्त्रैक्याच्च तंत्रता ॥ इह तु सत्यपि देशकालकर्त्रैक्ये फलभेदादेव न तंत्रता ॥ अत एव कात्यायनः ॥ कर्मणां युगपद्भावस्तंत्रमिति ॥ तंत्रं प्रक्रम्य फलकर्मदेशकालद्रव्यदेवतागुणसामान्य इत्यनेन फलसाम्यादीनि तन्त्रत्वे कारणान्यभिधाय फलादीनां भेदे तंत्रभेदमाह ॥ तद्भेदे भेद इति ॥ मंडपदेवताप्रतिष्ठया गणपतिमातृपूजयोर्मध्ये व्यवधाने तु नेयं तंत्राशंका न चोत्तरं ॥ मातरो लोकमातर इति सर्वासां विशेषणं ॥ एताः मातरो लोकमातरो भवन्ति ॥ एता मातरो वृद्धौ पूज्या इत्यर्थः ॥ ततश्च वृद्धौ पूज्याश्चतुर्दशेत्युपपद्यते एवमेव नारायणवृत्तावाशादित्यभाष्ये च परशुरामोऽप्याह गौर्यादितुष्टिपर्यन्ता आत्मदेवतया सह॥ गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दशेति॥ हेमाद्रिरूपनारायण मदनरत्न ज्ञानसागर दानप्रदीपादिकारास्तु पूज्याश्च षोडशेत्येव मातरो लोकमातर इति परिगणनातः पठन्ति ॥ तत्र हेमाद्रिकारादिसकलशिष्टपरिग्रहेण प्रामाण्यनिश्चयाद्युक्तोऽयं पक्ष इति केचित् ॥ उभयत्रापि शिष्टपरिग्रहस्याविशिष्टत्वेन प्रामाण्यनिश्चयाविशेषाद् द्वावपि पक्षौ युक्तावित्यन्ये ॥ अत एव पद्धतिकारैर्द्वौ पक्षावुपन्यस्तौ ॥ वस्तु तस्तु हेमाद्रौ प्रतिष्ठाकांडोदाहृतानां पौराणानां गौर्याद्यावाहनलिंगकानां चतुर्दशमंत्राणामेव सत्त्वाच्चतुर्दशेत्येव पाठः श्रेयान् ॥ अत एवाविच्छिन्नाध्ययनसंप्रदायसमागतं पाठं सम्यक् जानन्तः परिशिष्टा ध्येतारोपि वृद्धौ पूज्याश्चर्दशेत्येवं पठन्ति ॥ अत्र केचित् ॥ मातरः सगणाधिपाः इत्यत्र मातृणां गौर्याद्यविशेषितानां पूज्यत्वावगमात्तासामेव मिलितानां देवतात्वं नतु गौर्यादि विशेषितानां ॥ ( गौरीमात्रे नम इत्यादि रूपं ) अश्रुतत्त्वात्तासां ॥ यद्यपि गौरीपद्मेत्यादिना विशेषिता एव मातरो देवतात्वेन श्रूयन्ते तथापि तस्य वचनोद्देशमात्रपरत्वान्मिलितानामेव मातृणां देवतात्वमिति मन्यन्ते ॥ ( शास्त्रारंभे त्रीणि कारणानि सर्वत्र ॥ उपदेश लक्षण परिक्षाः ॥ नाम्ना पदार्थकथनं उद्देशः ॥ तस्य परिक्षा ) अन्येतु गौर्यादीनां प्रत्येकं देवतात्वमाहुः ॥ युक्ततरमिव चैतत् ॥ अन्यथा बहुत्वविशिष्टमातृणामेकदेवतात्वे वृद्धौ पूज्याश्चतुर्दशेति चतुर्दश संख्यानुपपत्तेः ॥ दशोपचारैर्देवेशि प्रत्येकं नाम भेदत इति रुद्रयामले प्रत्येकं पूज्यत्वविधानानुपपत्तेश्च॥ हेमाद्रौ प्रतिष्ठाकांडोदाहृतगौर्याद्यावाहनलिंगकचतुर्दशमंत्रविरोधापत्तेश्च ॥ किंच ॥ आदौ विनायकः पूज्यः स्यादन्ते कुलदेवता इति बह्वृचपरिशिष्टमपि प्रत्येकं देवतात्व एवोपपद्यते ॥ इतरथा क्व आद्यन्तवद्भावः स्यात् ॥ मातरः सगणाधिपा इति प्रयोगस्तु अभिधानक्रियापेक्षया ( प्रत्येकं भोजनक्रियावत् मातृपदेन प्रत्येक गौर्या-

द्विकथनक्रिययेति यावत् ) प्युपपद्यते गर्गा भोज्यन्तामितिवत् ॥ (प्रत्येकं वाक्य-परिसमाप्त्युदाहरणं ॥ कुतः सर्वेषां भिन्नक्रियाफलं चातः प्रत्येकं ॥ गर्गाः शतं दंडयतामिति समुदाये वाक्यपरिसमाप्त्युदाहरणं ॥ प्रत्येकं शतदंडस्य संभवात् ) तस्मात्प्रत्येकं देवतात्वं ॥ वाजसनेयिभिश्च यद्यपि स्वगृह्ये मातृपूजाविधेरनुक्तत्वा-त्सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते ॥ स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेदिति संग्रहवचनाच्च छंदोगपरिशिष्टे कात्यायनोक्ता मातरश्चतुर्विंशतिमतोक्ता वा मातरो विकल्पेन पूज्या इत्यवगम्यते ॥ तथापि छंदोगपरिशिष्टोक्ता एव मातर पूज्याः सूत्रपरिशिष्टयोरेककर्तृत्वात्पारस्करमतस्याश्रयणीयत्वाच्च ॥ तथा च स्मृ-तिसंग्रहः॥न गृह्याणि स्मृतिर्येषां श्राद्धादावुपलभ्यते॥कर्त्तुमर्हन्ति ते सर्वे पारस्करमुनी-रितमिति॥ परेषां करोतीति व्युत्पत्तेः॥श्राद्धकाशिकायामप्येवं॥ एवमेव वाजसनेयिनः समाचरन्ति॥ केचित्तु छंदोगपरिशिष्टोक्तानां चतुर्विंशतिमतोक्तानां च मातृणांसमुच्चय माहुः ॥ तत्तु वाजसनेयिनां तथाचारादर्शनादुपेक्षणीयं ॥ यथाकुलाचारं व्यवस्था-पनीयं वा ॥ एवं च सति चतुर्विंशतिमतोक्ता मातर इहोपयोगाभावान्नोपन्यस्ताःइति

"अथ पूजाविधिमाह छंदोगपरिशिष्टे कात्यायनः"—प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु ॥ अपि वाक्षतपुंजेषु नैवेद्यैश्च पृथग्विधैरिति ॥ प्रतिमासु प्रतिकृतिषु ॥ शुभ्रासु रजतस्फाटिकादिमयीषु ॥ शुद्धास्त्विति पाठेप्ययमेवार्थः ॥ अयं मुख्यकल्पोऽनुकल्पमाह ॥ लिखित्वा वा पटादिषु इति ॥ वर्णकलिखिता वा॥ तत्र विनायकप्रतिमास्वरूपं हेमाद्रौ मत्स्यपुराणे ॥ स्वदन्तं दक्षिणकरे उत्पलं च त-थापरे ॥ लड्डुकं परशुं चैव वामतः संप्रकल्पयेत् ॥ संयुक्तं बुद्धिऋद्धिभ्यामधस्ता-न्मुषिकान्वितमिति ॥ तत्रैव सिद्धार्थपृच्छायां ॥ चन्द्रार्द्धनवचक्षुर्भ्यां भास्करेण शचे णच ॥ विद्योतन्ते कराः यस्या पद्मा सा च प्रकीर्त्तिता ॥१॥ कीरकव्यजिनी चैव व्यंजनं समिधं तथा ॥ या बिभर्त्ति कराग्रैः सा शची नाम्नी प्रकीर्त्तिता ॥२॥ धत्ते या समिधं हस्तैः रजनीकीरकावपि ॥ क्रमतस्तालवृन्तं च सा मेधाऽभिधीयते॥३॥ अक्षसूत्रं स्रुवं चैव शक्तिकां च कमंडलुं॥ कलयन्ति करा यस्याः सावित्री सा प्रकी-र्त्तिता ॥ ४ ॥ या कपालं च कोशं च पीयूषं पाशमेव च॥ या बिभर्त्ति करांभोजै-र्विजया सा प्रकीर्त्तिता ॥५॥ क्रमात्कोशकपाले च पीयूषं च सपाशकं ॥ आश्रित्य-यत्कराग्राणि विजयन्ते जया च सा ॥६॥ तत्त्वसागरसंहितायां॥ दर्पणं पंकजं पद्मं पुष्टिकां दधतीं स्मरेत् ॥ पुष्टिं लक्ष्मीं सितां सौम्यां पंकजासनसंस्थितां ॥७॥ वज्रं पद्मं तथादर्शं पीयूषं दधतीं स्मरेत् ॥ सा मा तुष्टिर्महालक्ष्मीः स्थिता वीरासनोपरि ॥८॥ तदेवं विशेषतः कासांचिन्मातृणां स्वरूपं दर्शितं॥ सामान्याकारेण तु सर्वासां

महापंचरात्रे उक्तम् ॥ पूज्याश्चित्रेऽथवार्चायां वरदाभयपाणय इति।। आपत्कल्पमाह॥ अक्षतपुंजेष्वपि वा मातरः पूजनीया इत्यनुषंग इति नारायणवृत्तिकृता व्याख्यातं।। श्राद्धकाशिकाकारस्तु जातकर्मणि बालानां नामाह्वयनकर्मणि।। निरीक्षणे प्राशने च यवस्थं मातृपूजनमिति वचनाद्वा शब्दो व्यवस्थित विकल्पार्थ इत्याह॥ रेणुकारिकायां तु ॥ कुलानुक्रमाद्वेश्मनो देवतानां हरिद्रारजोभिर्लिखित्वा सुवस्त्रे ।। प्रतीचीमुखाः स्थापयित्वा सुकुड्ये ततः प्राङ्मुखः पूजयेत्पुष्पधूपैरिति विशेष उक्तः।। अक्षतपुंजा यवमुष्टय इति नारायणवृत्तिश्राद्धकाशिकादयः ।। युक्तं चैतत् ।। अक्षतास्तु यवाः प्रोक्ता ( तंदुला व्रिहयस्तथेति स्मृत्यन्तरादवगन्तव्यं ) भ्रष्टा धाना भवन्ति ते ।। भ्रष्टास्तु व्रिहयो लाजा घृष्टाः खांडिक उच्यत इति छंदोगपरिशिष्टे कात्यायनोक्तेः ।। अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयःस्मृता।। तदभावे च गोधूमा नतु खंडिततंडुला इति परशुरामोक्तेश्च ।। निवेदनीयैश्च नानाविधैर्गंधपुष्पधूपदीपपायसमोदकापूपादिभिः ।। चकारो भक्तिश्रद्धासमुच्चये इति नारायणवृत्तौ ।। गंधतांबूलवस्त्रादिश्च शब्दार्थ इति श्राद्धकाशिकायां ।। आभ्योर्घ्यं गंधपुष्पं च धूपं दीपं निवेदयेदिति वाक्ये अर्घ्यग्रहणेन षोडशोपचारपूजाऽवश्यकेति द्योत्यत इत्युक्तं स्मृतिकौस्तुभे ।। रुद्रयामले तु विशेषः ॥ अमंता स्थापयामीति मंत्रेण नामभेदतः ॥ स्थापयित्वा ततः प्राणान्प्रतिष्ठाप्य प्रपूजयेत् ।। दशोपचारैर्देवीश प्रत्येकं नामभेदतः॥ आदौ गणाधिपः पूज्यः स्यादन्ते कुलदेवता इति ।। एताश्च पदार्थानुसमयेन पूज्या इति रुद्रपद्धतौ नारायणभट्टाः ।। ग्रहपूजापि पदार्थानुसमयेनैवेति शान्तिदानमयूखयोः ।। अत्र निर्वापवत्पूजैव पदार्थेनत्वेकैकोपचारसमर्पणं पदार्थः ।। तस्य मुष्टिवत्पदार्थावयवत्वात् ।। अक्षतपुंजादौ पूजनेत्वावाहनादिविसर्जनान्तं सर्वत्र कार्यम् ।। प्रतिमापूजने त्वावाहनविसर्जने न स्तः।। एतच्च यत्र यत्र वृद्धिश्राद्धं तत्र तत्र कर्तव्यं।। यत्र यत्र भवेत् श्राद्धं तत्र तत्र च मातर इति छंदोगपरिशिष्टे कात्यायनोक्तेः ।। इदं च मातृपूजनं श्राद्धात्पूर्वं कार्यं ।। छंदोगपरिशिष्टे तथैव पाठात् ।। अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत् ॥ तास्तस्य क्रोधसंपन्ना हिंसां कुर्वन्ति दारुणामिति हेमाद्रौ भविष्ये मातृपूजामंतरेणाभ्युदयिकानुष्ठाने निंदाश्रवणाच्च ।। अत्र केचित् ।। अकृत्वा मातृयागं त्विति हेमाद्रौ भविष्योक्तेर्मातृपूजनं वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवदाभ्युदयिकश्राद्धांगं ।। आभ्युदयिकश्राद्धान्ते च मातृविसर्जनमित्याहुः।। अपरे त्वाहुः।। कर्मादिषु च सर्वेषु मातरः सगणाधिपा इत्यादिवचनैः साक्षात्कर्मांगत्वेनावगताया एव मातृपूजायादर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवत् श्राद्धात्पूर्वकालतामात्रबोधनादंगांगित्वे मानाभावात्सत्यपि चांगत्वे विसर्जनान्ताया एव

मातृपूजाया अंगत्वोपपत्तेः पूर्वं विसर्जनान्तां मातृपूजां कृत्वा पश्चात् श्राद्धमिति ॥ एवं च सति श्राद्धसंकल्पात्पृथगेवास्य संकल्पः ॥ वृद्धिश्राद्धानंगत्वात् ॥ स्मार्त्तकर्मांगानां पृथक् संकल्पे आचार एव प्रमाणं ॥ प्रधानसंकल्पेनैवांगसंकल्पस्यापि सिद्धेः ॥ अत एव याज्ञिकाः श्रौतकर्मस्वंगसंकल्पं पृथगेवाचरन्तीति ॥ इति श्रीरुद्रकल्पद्रुमे परिभाषापरिच्छेदे मातृपूजाविचारः ॥

## ॥ अथ वसोर्द्धाराविचारः ॥

ताश्च पाठक्रमान्मातृपूजां समाप्यैव कार्याः ॥ एवं ताः संपूज्य किं कर्तव्यमित्याह कुडयलग्ना वसोर्द्धारेत्याशादित्यनारायणवृत्तिकारादिभिर्व्याकृतत्वाच्च ॥ रुद्रयामले मातृपूजामभिधाय तत्पुरः संनिधाने वेत्याद्युक्तेश्च ॥ स्मृतिरत्नावलिदानखंडमदनरत्नढोढूमिश्रप्रयोगरत्नादिनिबंधेष्वप्येवं ॥ ये तु पूर्वं वसोर्द्धाराः कृत्वा मातृः संस्थाप्य मातृणां वसोर्द्धाराणां च युगपत्पूजनमित्याचरन्ति त उक्तग्रंथविरुद्धाचारकत्वादुपेक्षणीयाः ॥ वसोर्द्धाराप्रकारस्तु छंदोगपरिशिष्टे कात्यायनेनोक्तः॥ कुडयलग्ना वसोर्द्धाराः सप्तधारा घृतेन तु ॥ कारयेत्पंचधारा वा नातिनीचा नचोच्छ्रिता इति ॥ वसोश्चेदिराजस्याग्नेर्वा ॥ तदुद्देशप्रवृत्तत्वेन तत्संबंधिनीं ॥ वसोश्च सर्वोत्सवप्रवर्त्तकत्वेन मंगलहेतुत्वाद्विवाह पुत्रजन्मादि मंगलकर्मसु पूजा युक्ता ॥ कारयेदिति स्वार्थे णिच् ॥ स्वकर्तृत्वान्नियमार्थो वेति श्राद्धकाशिकायामाशादित्यभाष्ये च ॥ (धान्येन धनवानित्यत्र यथा धान्याभिन्नेन धनेन धनवत्त्वं तथात्रापि स्वकर्तृकत्वाभिन्नो नियमस्वदर्थोऽयं णिच्) वसोर्द्धारास्तु स्वतंत्रा एव न ता मातृसंप्रदानिकाः ॥ मंत्रलिंगादेवबोधकस्याभावाद्वसोर्द्धारेति ( नामकथनात् ) समाख्यानाच्चेत्युक्तं श्राद्धदीपिकायां ॥ एताश्च वसोर्द्धाराः मातृपूजासंनिहितकुडयलग्ना विवक्षिताः॥ परशुरामकारिकायां त्वत्र विशेष उक्तः॥ नातिनीचोच्छ्रिते कुडये वसोर्द्धारातु सर्पिषा ॥ पंच वा सप्त धारा वा वसोर्मंत्रेण कारयेत् ॥ दुग्धेन वा वसोर्द्धाराःकुर्यास्तासां च देवता ॥ श्रीश्च लक्ष्मीर्धृतिर्मेधास्वाहाप्रज्ञासरस्वतीति ॥ रुद्रयामलेऽपि ॥ तत्पुरः सन्निधाने वा कुडये रेखा घृतेन वै ॥ धारालिंगेन मंत्रेण समरेखाःसमालिखेत् ॥ एकीकृत्योर्ध्वभागे तु रोचन्तं कुंकुमादिना॥ प्रतिष्ठा भिन्नतो कार्या पूजनं युगपद्भवेत् ॥ चंदनं कुंकुमं प्रोक्तं दूर्वापुष्पेऽरुणानि वै॥ गुडधूपो भवेद्दीपः सर्पिषा परिकीर्त्तितः ॥ नैवेद्यं तु भवेद्द्राभ्यां भवेदर्घ्यं यथेच्छया ॥ दशोपचारैः पूर्वोक्तैरर्घदानान्तिकैः प्रिये ॥ पूजा गौर्यादिमनुभिर्यथाशास्त्रविधानतः अनुक्तं पूर्वतो ग्राह्यमाम्नायैक्यान्महेश्वरि ॥ संप्रार्थयेत्ततो देवान्मातृधारागणेश्वरानिति वसोः पवित्रमसि शतधारमित्ययं धारालिंगको मंत्रः ॥ मनुभिरिति मनवो,

मंत्राः ॥ पूर्वतो मातृपूजाविधेः ॥ प्रार्थनामंत्रस्तु प्रयोगे वक्ष्यते ॥ तत आयुष्य-मंत्रजपः कार्यः ॥ तदुक्तं छंदोगपरिशिष्टे कात्यायनेन ॥ आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ॥ षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेदिति ॥ आ-युषे हितान्यायुष्यं वर्चस्यमित्यादीनि मंत्रवाक्यानीति नारायणवृत्तिकृता व्याख्या-तं ॥ हेमाद्रिस्त्वानोभद्रा इत्यादीनि यान्याशीः प्रधानानि सूक्तानि तथाविधमंत्रा-धाराणि सामानि चेति व्याचख्यौ ॥ तत्र कर्मादौ ॥ यद्वा यत्र मातृपूजा वसोर्द्धारा च कृता तत्र शान्त्यर्थममंगलनाशाय जप्त्वा ॥ अत्र जप्त्वेति क्त्वा प्रत्ययादेशाद्वाक्य-गततदनुशब्दाच्च श्राद्धोपक्रमस्यायुष्यमंत्रजपानन्तर्यमवगम्यते ॥ अत एव मातृपूजा वसोर्द्धाराऽयुष्यमंत्रजपेभ्योऽनन्तरं पित्रादिभ्यो मातामहादिभ्यश्च श्राद्धदानमारभेदिति नारायणवृत्तौ व्याख्यातं ॥ इति ॥

## ॥ अथाभ्युदयिकश्राद्धविचारः ॥

तानिष्ट्वा तु पितृन श्राद्धे वैदिकं किंचिदाचरेदिति॥ तानिष्ट्वा तु पितृन् श्राद्धे कर्म वैदिकमाचरेदिति॥ अनिष्ट्वा तु पितृन् श्राद्धे न कुर्यात्कर्मवैदिकमित्येवमादिभिः॥ शातातपमत्स्यपुराणछंदोगपरिशिष्टस्थकात्यायनादिवाक्यैस्तस्य वैदिककर्ममात्रांग-त्वावगमाद्रुद्रस्य वैदिककर्मत्वाच्च ॥ तत्र तावत्कात्यायनसूत्रं ॥ आभ्युदयिके प्रद-क्षिणमुपचारः पूर्वान्हे पित्र्यमंत्रवर्जं जप ऋजवो दर्भा यवैस्तिलार्थः संपन्नमिति तृ-प्तप्रश्नः सुसंपन्नमिती ते ब्रूयुर्दधिबदराक्षतमिश्राः पिंडा नांदीमुखान्पितृनावाहयिष्य इति पृच्छति नांदीमुखाः पितर प्रीयन्तामित्यक्षय्यस्थाने नांदीमुखान्पितृन्वाचयि-ष्य इति पृच्छति वाच्यतामित्यनुज्ञातो नांदीमुखाः पितरः पितामहाः प्रपिता-महा मातामह प्रमातामह वृद्धप्रमातामहाश्च प्रीयन्तामिति न स्वधां प्रयुंजित युग्मान्ना-शयेदत्रेति ॥ अस्यार्थः ॥ आभ्युदयिक इति ॥ पुत्रजन्म विवाहादिरूपोऽभ्युदयो वृद्धिस्तस्मिन्सति क्रियमाणं श्राद्धमाभ्युदयिकशब्दे वाच्यं ॥ वृद्धिश्राद्धशब्दे वाच्यं वा ॥ यथाह गार्ग्यः ॥ अग्न्याधानाभिषेकादाविष्टापूर्त्ते क्रिया ऋतौ ॥ वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा ॥ पुत्रोत्पत्तिप्रतिष्ठासु तन्मौंजीत्यागबंधने ॥ चूडायां च विवाहेषु वृद्धिश्राद्धं विधीयत इति ॥ ननु च नांदीमुखं कर्मांगं चेति संज्ञाभेदात्कथ-माभ्युदयिकं वृद्धिश्राद्धमिति संज्ञाद्वयमुक्तं ॥ उच्यते ॥ नामान्नचौलगोदानसा-मोपनयपुंसवे ॥ स्नानाधानविवाहेषु नांदीश्राद्धं विधीयत इति लौगाक्षिवाक्यवृ-द्धिश्राद्ध एव नांदीमुखमिति संज्ञाभेदकथनं तत्प्रयोगविशेषणार्थं ॥ तथा च वृद्ध-वसिष्ठः ॥ पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतं ॥ तत्र नांदीमुख इति विशेषः समुदाहृत इति॥ यत्तु कर्मांगमिति संज्ञांतरं तदपि वृद्धिधर्मातिदेशेन तद्रूपमेव संज्ञा

भेदेपीत्यविरोधः ॥ तथा च हेमाद्रौ पारस्करः ॥ निषेककाले सोमे च सीमन्तोन्नयने तथा ॥ ज्ञेयं पुंसवने श्राद्धं कर्मांगं वृद्धिवत्कृतमिति ॥ अत्र कर्मांगमिति नांदीमुखदेवतावत्त्रस्वाहाशब्दप्रयोग दधिबदरादिमिश्रपिंडवत्वादयो वृद्धिश्राद्धधर्मा अतिदिश्यन्ते ॥ विहितं च वृद्धिश्राद्धं याज्ञवल्क्यादि स्मृतिषु ॥ एवं प्रदक्षिणावृत्को वृद्धौ नांदीमुखान् पितृन् यजेतेत्यादिभिर्वचनैः ॥ वृद्धिश्राद्धं च वृद्धवसिष्ठादिभिर्दर्शितं ॥ पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतमिति॥ अत्राभ्युदयिकश्राध्धविशेषे वृध्धिश्राध्धशब्दः परिभाष्यते ॥ आदिशब्देन गर्भाधानपुंसवनसीमन्तोन्नयनव्यतिरिक्तानामन्नप्राशनचूडाकरणादिसंस्कारकर्मणां ग्रहणम् ॥ गर्भाधानादि संस्कारत्रयांगभूताभ्युदयिकस्य कर्मांगशब्देनाभिधानात् ॥ एतच्च वृध्धिश्राध्धाद्भिन्नं कर्मांगं ॥ वृध्धिवदिति पारस्करवाक्येऽतिदेशदर्शनात्॥ भेदे ह्यतिदेशो भवति अत्र निषेकादिग्रहणमाधानाद्युपलक्षणार्थमिति पारिजातादयः ॥ सोमशब्दस्तेषामुपलक्षणार्थं इति मदनरत्नादयः ॥ अन्येतु निषेकादिशब्दानामुपलक्षणार्थतामन्याय्यां मन्यमाना निषेकादिगणितेष्वेव कर्मांगश्राध्धसंज्ञेत्याहुः॥ इदमेव युक्ततरम्॥ तत्राभ्युदयिके श्राद्धे प्रदक्षिणोपचारः ॥ उपचरणमुपचारः अनुष्ठानं करणमिति यावत् ॥ तेनात्र सर्वमनुष्ठानं प्रदक्षिणं भवतीत्यर्थः॥ अत्र प्रदक्षिणग्रहणं कर्मकर्तृनिष्ठसकलदैवधर्मोपलक्षणार्थं ॥ ततश्च प्राक्संस्थत्वोदक्संस्थत्वोपवीतित्वप्राङ्मुखत्वोदङ्मुखत्वदक्षिणजानुनि पाते त्वदेवतीर्थत्वादिदैवधर्मः कृत्स्नोत्र भवति ॥ यथाह हेमाद्रौ शातातपः ॥ कर्त्तव्यं चाभ्युदयिकश्राद्धमभ्युदयार्थिना ॥ सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता ॥ पितॄणां रूपमास्थाय देवा अन्नं समश्नुते ॥ तस्मात्सव्येन दातव्यं वृद्धिश्राद्धे तु नित्यशः ॥ यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपीति ॥ छंदोगपरिशिष्टे कात्यायनोऽपि ॥ दक्षिणं पातयेज्जानुं देवान्परिचरन् सदा ॥ पातयेदितरत् जानुं पितॄन्परिचरन्नपि ॥ निपातो नहि सव्यस्य जानुनो विद्यते क्वचित् ॥ सदा परिचरेद्भक्त्या पितॄनप्यत्र देववदिति॥ अत्रैके प्राङ्मुखस्य कर्त्तुरुदक् संस्थितायां विधानसामर्थ्यात्प्रादक्षिण्यमपास्येदित्याहुः ॥ तत्रापि प्रादक्षिण्यमेवेत्युदङ्मुखस्यैककर्तृत्वमित्यन्ये ॥ एतच्च मतद्वयं श्राद्धकाशिकाकार उपन्यस्तवान् ॥ अत्र ब्रूमः ॥ प्रागग्रेष्वथ दर्भेषु आद्यमामंत्र्य पूर्ववत् ॥ अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेतिनिस्तिलाः ॥ द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ॥ मातामहप्रभृतींस्तु एतेषामेव वामत इति छंदोगपरिशिष्टे कात्यायनेन पित्रादीनां वामतो मातामहादीनामवनेजनं विदधता प्रादक्षिण्यानुग्रहायावनेजनपिंडं पंक्त्योर्दक्षिणसंस्थता विधानात्प्राङ्-

मुखस्य कर्तुरुदक्संस्थतायां विधानसामर्थ्यात्प्रादक्षिण्यमपास्येदित्ययुक्तं॥ उदङ्मुखो वा यजमानः समाहितः ॥ वृद्धिश्राद्धं प्रकुर्वीत नान्यवक्त्रः कदाचनेहि हेमाद्रौ मार्कंडेयपुराणे वृद्धिश्राद्धशब्दवाच्यपार्वणे प्राङ्मुखत्वोदङ्मुखत्वयोर्विकल्पस्य विहितत्वेनोदङ्मुखस्यैव कर्तृत्वमित्यप्ययुक्तमेव ॥ प्रदक्षिणोपचार इत्यनेन वैश्वदेविके ये धर्मास्ते सर्वेऽप्यत्र कर्तव्या न पित्र्यश्राद्धधर्मा इत्युक्तं भवति ॥ विश्वान्देवानुद्दिश्य क्रियमाणं कर्म वैश्वदेविकं॥ अत्र च प्रकृतिवदेव दैवे प्राङ्मुखाः पित्र्ये चोदङ्मुखा विप्रा उपवेशनीया न पुनर्देवधर्मत्वेन सर्वेपि प्राङ्मुखाः ॥ तदाह छंदोगपरिशिष्टे कात्यायनः ॥ प्रातरामंत्रितान्विप्रान्युग्मानुभयतस्तथा ॥ उपवेश्य कुशान् दद्यात् ऋजुनैव हि पाणिनेति ॥ अत्र प्रातः शब्दः प्रथमघटिकात्रयवाचीति नारायणवृत्तिकृत् ॥ अपरे तु सार्द्धं प्रहरात्मककालवचनः प्रातः शब्दः ॥ तदाह गार्ग्यः ॥ ललाटसंमिते भानौ प्रथमप्रहरः स्मृतः॥ स एवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयत इति॥ अध्यर्द्धमधिकार्द्धं सार्द्धप्रहर इत्यर्थ इत्याहुः ॥ अत्रेदं तत्वं ॥ प्रातर्वृद्धिनिमित्तकमिति वचनादस्य च पूर्वान्हविधिना तुल्यार्थकत्वाच्च गार्ग्योक्तप्रातः शब्दार्थः श्राद्धकालविषयः ॥ नारायणवृत्तिकृदुक्तः प्रातःशब्दार्थस्त्वामंत्रणकालविषयः प्रातरामंत्रितानिति भूतकालनिर्देशात् ॥ उभयतो दैवे पित्र्ये च ॥ तथा पार्वणवत् दैवे प्राङ्मुखान् पित्र्ये चोदङ्मुखान् ॥ हेमाद्रौ भविष्यपुराणे ॥ प्राङ्मुखाश्चतुरश्चैव चतुरश्च उदङ्मुखान् ॥ निवेश्य ऋजुभिर्दर्भैर्दद्यादासनमादरादिति ॥ सर्वानेव तु तान्विप्रान्प्राङ्मुखानुपवेशयेदिति ॥ हेमाद्रौ छागलेयोक्तेर्दैवे पित्र्ये च ये विप्रास्ते सर्वेपि प्राङ्मुखा उपवेशनीया इत्ययमपि पक्षोऽस्ति तथापि छंदोगपरिशिष्टे कात्यायनेन प्रकृतिप्राप्तस्यापि ब्राह्मणोपवेशनस्य पुनर्विधानात्प्रकृत्यनुग्रहाच्च पूर्वोदाहृतपक्ष एव कात्यायनादि संमत इति वाजसनेयिभिः स एवाश्रयणीयः ॥ परं त्वेतावान्विशेषः ॥ अत्र प्रदक्षिणोपचारता विधानात्तदनुग्रहाय ब्राह्मणपंक्तिनिवेशः प्रागुपक्रमः पश्चादपवर्ग एव विधेय इति॥ अत्र कर्तुर्दिङ्नियमोभिहित आश्वलायनगृह्यपरिशिष्टे ॥ आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यादुदङ्मुखेभ्यो वा प्राङ्मुखो द्वौ दर्भौ पवित्रे इति ॥ अत्र प्राङ्मुखेभ्य उदङ्मुखो दद्यादुदङ्मुखेभ्यो वा प्राङ्मुखो द्वौ दर्भौ पवित्रे इति ॥ अत्र प्राङ्मुखेभ्य उदङ्मुखो दद्यादित्युदङ्मुखता नियमः ॥ उदङ्मुखेभ्यो वा प्राङ्मुख इत्यनेन प्राङ्मुखत्वोदङ्मुखत्वयोर्विकल्प उक्तः ॥ अतएव हेमाद्रौ मार्कंडेयपुराणे ॥ उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः ॥ वृद्धिश्राद्धं प्रकुर्वीत नान्यवक्त्रः कदाचनेति ॥ अत्र वृद्धिश्राद्धशब्दवाच्यं पितृपार्वणं मातामहपार्वणं चेति पार्वणद्वय-

मेव नतु वैश्वदेविकं ॥ वृद्धिश्राद्धोद्देशेन वैश्वदेविकधर्माणामेव विधेयत्वात् ॥ पूर्वान्हे ॥ पूर्वसूत्राद्विभक्तिव्यत्ययेन द्वितीयान्तमाभ्युदयिकपदमत्रानुवर्त्तते ॥ ततश्च पूर्वान्हे आभ्युदयिकं विधेयमित्यर्थः ॥ प्रकृतेरपरान्हे प्राप्तमप्येतत्पूर्वान्हे विधीयते ॥ प्रकृतौ तु पिंडपितृयज्ञवदुपचार इति वचनादपरान्हप्राप्तिः ॥ अत आभ्युदयिकं पूर्वान्हे कर्तव्यं ॥ अत्र पूर्वान्हस्त्रेधा विभक्तस्यान्हः प्रथमो भागः ॥ पूर्वान्हो वै देवानां मध्यं दिनो मनुष्याणामपरान्हः पितृणामित्यर्थवादे पूर्वान्हमध्यान्हापरान्हानां त्रयाणां दिवसभागानामभिधानात् ॥ अत एव छंदोगपरिशिष्टे कात्यायनः ॥ पिंडान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ॥ वासरस्य तृतीयेंशे नातिसंध्यासमीपत इति त्रेधाविभागमाह ॥ विभागस्तु समो ज्ञेयः समं स्यादश्रुतत्वादिति न्यायात् ॥ अग्न्याधेयाभ्युदयिके तु विशेषो गालवेनाभिहितः ॥ पावणं चापरान्हे तु वृद्धिश्राद्धं तथाग्निकमिति ॥ आग्निकमग्न्याधेयनिमित्तमाभ्युदयिकमपरान्हे कुर्यादित्यर्थः ॥ इदं चाधानपूर्वदिने बौधायनोक्तं नान्दीश्राध्दविषयं ॥ आपस्तंबसूत्रानुसारिणां यत्संभारस्पर्शोत्तरं भाष्यकारादिभिरुक्तं तत्पूर्वोत्तरपदार्थैर्निबध्दक्रमत्वान्न पृथकालमपेक्षत इति न तद्विषयं ॥ नापि कात्यायनविषयं ॥ विहितो ह्यग्न्याधेयोपक्रमो दिवाशनात्पूर्वमाचार्येण ॥ दिवाशनं चाष्टधाविभक्तस्यान्हः पंचमभागे दक्षादिभिः स्मर्यते ॥ नहि त्रेधा विभक्ते द्वेधा विभक्ते वाऽपरान्हे आभ्युदयिकानुष्ठानपूर्वकं क्रियमाणोऽग्न्याधेयोपक्रमो दिवाशनकालात्पूर्वं संभवति ॥ पुत्रजन्मादौ तु तत्काल एव न पुनस्तत्र पूर्वान्हनियमः ॥ यथाह लौगाक्षिः ॥ नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकं तेषामनियतत्वे तु तदानन्तर्यमिष्यत इति ॥ यद्यप्याभ्युदयिके प्रदक्षिणमुपचार इत्यत्र प्रदक्षिणग्रहणस्य सकलदैवधर्मोपलक्षणार्थत्वेन व्याकृतत्वात्तेनैव सूत्रेण पूर्वान्हप्राप्तेः पुनः पूर्वान्हे इति सूत्रमनर्थकमिव भाति तथापि यथैवोपचरेद्देवांस्तथा वृध्दौ पितृनपीति शातातपेन ॥ सदा परिचरेद्भक्त्या पितृनप्यत्र देववदिति कात्यायनेन च पितृणां देववदुपचरणमात्रस्यैवादिष्टत्वात्प्रकृतेरपरान्हे विहितत्वादंगप्रधानयोश्चैककालत्वेन तच्छेषभूते दैवे कर्मण्यपि अपरान्हस्यैव सत्वान्नाभ्युदयिके प्रदक्षिणमुपचार इति सूत्रस्थप्रदक्षिणग्रहणस्य सकलदैवधर्मोपलक्षणार्थत्वेनेह पूर्वान्हप्राप्तिः ॥ किन्त्वपरान्ह एव प्रकृतितःप्राप्नोति ॥ अत आभ्युदयिकस्य पूर्वान्हे विधानार्थं पूर्वान्हे इति सत्रं वक्तव्यमेवेत्यलम् ॥ इति ॥

## ॥ अथ मातृश्राद्धदिवसविचारः ॥

यत्तु मातृश्राध्दं पूर्वेद्युः कर्माहनि तु पैतृकं ॥ मातामहं चोत्तरेद्युर्वृध्दौ श्राध्दत्रयं स्मृतमिति ॥ पूर्वान्हे मातृकं श्राध्दं मध्यान्हे पैतृकं तथा ॥ ततो मातामहानां

च वृद्धौ श्राद्धत्रयं स्मृतमित्यादि हेमाद्र्युदाहृतैर्गार्ग्यशातातपादिस्मृतिवाक्यैराभ्युदयिकं श्राद्धमेकैकमात्रादिश्राध्धस्यैकैकदिनसाध्यत्वाद्दिनत्रयसाध्यमसंभवे पूर्वान्हादि कालत्रयसाध्यत्वेनैकदिनसाध्यमुक्तं तदन्यशाखा विषयं वाजसनेयिनां तु एकवचननिर्देशादेकस्मिन् पूर्वान्हे आभ्युदयिकं कार्यमित्यर्थकात्पूर्वान्ह इति सूत्रादाभ्युदयिकश्राध्धस्यैकपूर्वान्हकालसाध्यतावगमात् ॥ यदि तु मात्रादि त्रीणि श्राद्धानि सूत्रकृता उक्तानि स्युस्तदा तेषां दीनत्रय साध्यतापूर्वान्हादिकालत्रयसाध्यता वा स्यात् ॥ न च सूत्रकृता त्रीणि श्राध्धान्युक्तानि ॥ किंतु ॥ पितृमातामहपार्वणद्वयात्मकं श्राध्धद्वयमेवोक्तं ॥ अपि च मात्रादिश्राद्धानां कालभेदात्प्रयोगभेदो भविष्यति ॥ सूत्रकारस्तु द्वयोः श्राध्धयोः प्रयोगैकत्वं दर्शयति ॥ नांदीमुखाः पितरः पितामहाः प्रपितामहा मातामह प्रमातामह वृध्धप्रमातामहाश्च प्रीयन्तामिति ॥ एतच्च प्रकृतिप्राप्तसह प्रयोग एवोपपद्यते प्रागग्रेष्वथ दर्भेषु आद्यमामंत्र्य पूर्ववत् ॥ अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति पात्रतः ॥ द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयो ॥ मातामहप्रभृतींस्तु एतेषामेव वामत इति छंदोगपरिशिष्टे कात्यायनेन निःसंदिग्धं सह प्रयोगो दर्शितः ॥ आद्यं पितरं द्वितीयं पितामहं ॥ नहि प्रयोगभेदे पित्रादीनां वामतो मातामहादीनामवनेजनं संभवति ॥ यद्यपि अलाभे भिन्नकालानां नांदीश्राध्धत्रयं बुधः ॥ पूर्वेद्युर्वै प्रकुर्वीत पर्वान्हे मातृपूर्वकमिति वृद्धमनुवचनं तदपि शाखान्तरविषयं ॥ यत्रहि मात्रादिश्राद्धत्रयविधिः कालत्रयेऽस्ति तत्रैवानुकल्पतया कालैकत्त्वेन विधिर्युक्तः ॥ नहि कात्यायनसूत्रादौ कालत्रये मात्रादिश्राध्धत्रयविधिरस्ति ॥ तस्माद्वाजसनेयिभिरेकस्मिन्पूर्वान्ह एवैकप्रयोगं पार्वणद्वयात्मकमाभ्युदयिकं श्राध्धमनुष्ठेयमिति स्वसूत्रानुरूपं ॥ पित्र्यमंत्रवर्जं जपः ॥ पित्र्यमंत्रा अश्नन्सुजपेदित्यत्रोक्ता उदीरितामवर इत्याद्यस्तान्वर्जयित्वा जपः कर्त्तव्य इत्यर्थः ॥ पित्र्यमंत्रग्रहणं मधुमती पितृसंहितयोरुपलक्षणार्थं ॥ तथा च श्राध्धकाशिकायां मनुकात्यायनौ ॥ मधुव्वाता जपस्थाने कुर्यात्तत्र प्रयत्नतः ॥ उपास्मै गायतेत्यादि ऋचःपंचजपेत्तथा ॥ इदं च मधुमती जपस्थाने उपास्मै गायता नर इति पंचर्चां जपविधानं ऋक् शाखिविषयं ॥ मधुवाता ऋतायत इति ऋचः स्थाने उपास्मै गायतेति पंचमधुमतीः श्रावयेदक्षन्नमीमदन्तेति च षष्ठीमित्याश्वलायनोक्तेः ॥ मधुमतीनां जपस्थाने मंत्रान्तरजपविधानादेव मधुमतीजपो निषिद्ध एव ॥ अयं च मधुमतीजपो भोजनोत्तरकालीनः ॥ प्राक् भोजनान्मधुमतीजपस्याविधानात् ॥ यस्तु मधुमध्विति जपस्तत्र त्रिर्जपोऽशितुमिच्छतां व्याहृत्यनन्तरं सोत्रमधुमंत्रविवर्जित इति छंदोगपरिशिष्टे भोजनात्प्राक्कालीनो मधुमंत्रजपनिषेधः स छंदोगपरः ॥ कात्यायनीयश्राद्धकल्पे मधुमंत्रजपस्य भोजनात् प्राक् प्रकृतौ विधानाभावात् ॥ ततश्च भोजनो-

त्तरकालविहितो मधुमंत्रजपो भवत्येव॥ पूर्वकाले निषेधादित्युक्तं नारायणवृत्तौ दानकांडे मदनरत्ने च ॥ छंदोगपरिशिष्टे कात्यायनः ॥ नचाश्नत्सु जपेत्तत्र कदाचित्पितृसंहितां ॥ अन्य एव जपः कार्यः सोमसामादिकः शुभ इति॥ अत्र सुरावन्तमित्यादयो मंत्राः पितृसंहिताशब्देनाभिधीयन्ते॥ सुरावन्तादिकां सर्वां जपेच्च पितृसंहितामिति श्राद्धकाशिकाकारोदाहृतवचनात् ॥ अत्र जपत्वाविशेषादायन्तु न इत्यादीनामपि प्रतिषेध इति केचित् ॥ तदयुक्तं ॥ अश्नत्सुब्राह्मणेषु विहितस्य पित्र्यमंत्रजपस्य पित्र्यमंत्रवर्जं जप इत्यनेन प्रतिषिध्यत्वेनान्येषां प्रतिषेधाभावादायन्तु न इत्यादि जपस्यावाहनार्थत्वाच्च ॥ कर्कोपाध्याया अप्येवमाहुः ॥ हेमाद्रिरप्याह ॥ अत्र जप्यशब्दाद्यो भुंजानेषु द्विजेषु पितृलिंगकानां मंत्राणां जपः स एव प्रतिषिध्यते नतु पदार्थानुष्ठानकरणीभूतानामपि ॥ अत एवाह जातूकर्ण्यः ॥ पितृलिंगेन मंत्रेण यत्कर्म मुनिभिः स्मृतं ॥ तेनैव तद्विधातव्यममंत्रमकृतं यत इति ॥

अथ ऋजवो दर्भाः ॥ अत्रामूला ऋजवो (सरलाः) दर्भा भवन्ति न द्विगुणा इत्यर्थः ॥ दर्भाणाममूलत्वविशेषणमुक्तमाश्वलायनसूत्रे ॥ आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भा इति ॥ ननु चाभ्युदयिके प्रदक्षिणमुपचार इत्यत्र प्रदक्षिणग्रहणस्य सकलदैवधर्मोपलक्षणार्थत्वात्तत्प्रकृतौ च दैवे कर्मणि ऋजुदर्भाणामेव विहितत्वादिह ऋजवो दर्भाः प्राप्ता एव ॥ किमर्थमेतत्सूत्रं ॥ उच्यते ॥ कुशस्थाने च दूर्वाः स्युर्मंगलस्याभिवृद्धये इति हेमाद्रौ ब्रह्मांडपुराणे दूर्वाया उपदिष्टत्वेनातिदिष्टानामृजुदर्भाणां बाधो माभूदित्येतदर्थं एवं च दूर्वाया ऋजुदर्भैर्विकल्पः ॥ सोपि मंगलात्मकविवाहाद्यारंभे क्रियमाणवृध्धिश्राध्धे कुशस्थाने दूर्वाविधिर्यज्ञाद्यारंभे तु क्रियमाणेऽमूलऋजुदर्भविधिरित्येवं व्यवस्थित इत्युक्तं स्मृतिकौस्तुभे ॥ केचित्तु येषां कात्यायनादीनां सूत्रेऽमूलऋजुदर्भविधिरस्ति तेषाममूलऋजुदर्भविधिर्येषां नास्त्यमूलऋजुदर्भविधिस्तेषां दूर्वाविधिरिति व्यवस्था ॥ पुराणस्य सर्वशाखासाधारण्येन सर्वान्प्रति प्रवृत्तत्वेन यान्प्रतिऋजुदर्भविधिः प्रवृत्तस्तदितरान्प्रति दूर्वाविधेः सावकाशत्वात्सूत्रस्य चासाधारण्येन निरवकाशत्वादित्याहुः ॥ इति ॥

" अथ यवैस्तिलार्थः "—अर्थः प्रयोजनकार्यमिति यावत् ॥ यस्तिलार्थः स सर्वो यवैर्निर्वर्त्तितव्य इत्यर्थः ॥ हेमाद्रौ पद्मपुराणे ॥ तिलार्थस्तु यवैः कार्यः सव्येनैवानुपूर्वशः ॥ मंगलानि च सर्वाणि वाचयेद् द्विजपुंगवानिति ॥ तत्रैव विष्णुधर्मोत्तरेऽपि ॥ वृद्धिश्राद्धेषु कर्तव्यास्तिलस्थाने यवास्तथेति ॥ तदत्र द्रव्याभिधायकत्वात्तन्मंत्रो यवोसीति यथार्थमूहितव्यः ॥ मंत्रोहश्चाश्वलायनसूत्रे प्रदर्शितः ॥ यवोऽसि सोमदैवत्यो गोसवो देवनिर्मितः ॥ प्रयत्नमद्भिः प्रक्तः पुष्ट्या नांदीमुखान्पितॄन्

लोकान्प्रीणाहि नःस्वाहेति ॥ अन्यत्राप्युक्तं ॥ तिलोसीति पदस्थाने यवोसीति पदं वदेत् ॥ स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह ॥ पितृनिति पदात्पूर्वं वदेन्नांदीमुखानिति ॥ ननु चाभ्युदयिके प्रदक्षिणमुपचार इत्यत्र प्रदक्षिणग्रहणस्य सकलदैवधर्मोपलक्षणार्थत्वात्प्रकृतौ च दैवे कर्मणि यवैरन्वकीर्याथ भाजने सपवित्रके ॥ शन्नो देव्या पयः क्षिप्त्वा यवोसीति यवांस्तथेति याज्ञवल्क्येन यवविधानाद्दैवधर्मत्वेन प्राप्तेर्यवैस्तिलार्थ इति सूत्रानर्थक्यमिति चेत्॥ अत्र ब्रूमः॥ प्रकृतौ दैवे कर्मण्यपि अवकीरणादितिलैरेव यथा स्यादिति द्योतयितुं यवैस्तिलार्थ इति सूत्रं॥ न च यवैरन्वकीर्येति याज्ञवल्क्योक्तेर्दैवकर्मण्यप्यवकीरणादियवैरेव स्यादिति वाच्यं ॥ यदि ह्यवकीरणादिसाधनत्वं यवानां सूत्रकृतोऽभीष्टं स्यात्तदा यवैरन्वकीर्येति याज्ञवल्क्योक्तिवद्यवानादायोंकारं कृत्वेति वसिष्ठोक्तिवच्च सूत्रकृताप्यभिहितं स्यात् ॥ न च तथाभिहितं ॥ तस्मान्न यवानां तत्साधनत्वं ॥ अन्यथा प्रदक्षिणग्रहणस्य सकलदैवधर्मोपलक्षणार्थत्वेनेहापि तत एव यव प्राप्तेर्यवैस्तिलार्थ इति सूत्रस्य वैयर्थ्यमेव प्रसज्येत ॥ अत एव प्रकृतौ दैवे कर्मण्यपि प्रकरणानुग्रहादवकीरणादि तिलैरेवाभिहितं कर्कोपाध्यायैरित्यलम् ॥

" अथार्घदाने विशेषः "–छंदोगपरिशिष्टे कात्यायनः ॥ ज्येष्ठोत्तरकरान्युग्मान्कराग्राग्रपवित्रकान् ॥ कृत्वार्घः संप्रदातव्यो नैकैकस्यात्र दीयत इति ॥ युग्मान् पित्र्यत्राह्मणान् ज्येष्ठोत्तरकरान् ज्येष्ठस्य प्रथमोपवेशितस्य कर उपरि येषांते॥ तथा कराग्रे पवित्राग्रं येषांते कराग्राग्रपवित्रकाः॥ तांस्तथाविधान् कृत्वाऽर्घो दातव्य इत्यर्थः ॥ इदं च छंदोगविषयं ॥ तत्परिशिष्टगतत्वादिति स्मृतिरत्नावलीकारः ॥ तेनास्य मते प्रकृतिवदेवार्घदानं न त्विह कश्चिद्विशेषः॥ अन्ये मदनरत्नढोडूपद्धतिकारादयस्तु अर्घदाने विशेषविधेर्वाजसनेऽपि शाखासाधारणं मन्यन्ते ॥ अत्र च शेषं प्रकृतिवदित्यतिदेशेन प्राप्ताऽर्घ पात्रस्य न्युब्जता भवत्येव ॥ श्राद्धकाशिकाकारस्तु अपसव्यं पित्र्यमंत्रा वामजानुनि पातनं ॥ न्युब्जपात्रं न कर्तव्यं वृद्धिश्राद्धेषु सर्वदेतीश्वरवाक्यान्नविधेयमित्याह ॥ तद्विशेषवाक्यानवलोकननिबंधनमित्युपेक्षणीयं ॥ तथाहि दत्वा पिंडान्न कुर्वीत पिंडपात्रमधोमुखमिति वृद्धवसिष्ठेन पिंडपात्रन्युब्जतानिषेधादेकश्रुतिमूलकल्पना लाघवे नेश्वरवाक्यस्य तद्विषयत्वेनार्थपात्रन्युब्जतानिषेधे प्रमाणाभावात् ॥ अत एव मदनरत्ने दानकांडे तुलादानजलाशयोत्सर्गांगतयाऽभिहिते वृद्धिश्राद्धप्रयोगे ढोडूमिश्रपद्धतौ वेदांगरायपद्धतौ च न्युब्जं पात्रं कर्त्तव्यमित्युक्तं ॥ अयं च पिंडपात्रन्युब्जकरणप्रतिषेधश्छंदोगपरः स्वशाखीयप्रकृतिप्रयोगे तद्विधानाभावात् ॥ निषेधस्य प्राप्तिपूर्वकत्वाच्च

यद्विषयिणी प्राप्तिस्तद्विषयताया एव वक्तुं युक्तत्वाच्च ॥ अत्र वृद्धिश्राध्धे गुडधूपः कर्त्तव्यः ॥ तदुक्तं श्राद्धकाशिकायां ॥ गुडधूपः प्रयत्नेन पुष्पाण्येवात्र यानि चेति॥ अत्राग्नौकरणहोमः पृषदाज्याभिघारितोदनेन कार्यः ॥ पृषदाज्यमिश्रओदनो हविः सर्वत्र तस्य द्वे द्वे आहुती जुहुयादिति बह्वृच परिशिष्टात् ॥ दधिमिश्रमाज्यं पृषदाज्यं॥ सर्वत्रेत्यग्नौकरण विप्रभोजन विकिरणपिंडदानेषु ॥ द्वे द्वे इति वीप्सा बह्वृच विषयाः ॥ अत्रोपनयनादिसुतसंस्कारशेषभूते वृद्धिश्राध्धेऽग्नौकरणहोमो जातेष्ट्यधिकरणन्यायेन पितुरग्निमत्वेग्नावेव कार्योऽन्यभावे तु पाणाविति ॥ यत्तु पंचसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति पारस्करेण ॥ नत्वेग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिः ॥ स्वगर्भसत्क्रियार्थाश्च यावन्नासौ प्रजायते ॥ अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः ॥ नहि पित्रा समानीतः पुत्रस्य भवति क्वचिदिति छंदोगपरिशिष्टे कात्यायनेन च लौकिकाग्निविधानं तत्प्रधानभूतसंस्कार कर्मविषयमित्युक्तं गंगाधरपद्धतौ ॥ युक्ततरमिवैतत् ॥ यतो गर्भाधानादि संस्कर्त्ता पिता श्रेष्ठतमः स्मृत इति ॥ ततस्तु नाम कुर्वीत पितैव दशमेहनीति ॥ पिता कुर्यादन्यो वा कुलवृद्ध इति ॥ पितैवोपनयेत्पुत्रं तदभावे पितुः पितेति ॥ पुत्रानुत्पाद्य संस्कुर्यादित्यादिभिः स्मृत्यन्तर विष्णुपुराणशंखस्मृत्यादि वाक्यैः सुतसंस्काराणां पित्रधिकारीकत्वावगमादग्निमादधीतेत्यात्मनेपदश्रवणादात्मगामिक्रियाफलकानामेव कर्मणां स्वाहितेग्नौ विधानादुपनयनादिनां च तेषामन्यगामिक्रियाफलकत्वात्तेषु स्वाहिताग्नेः प्राप्त्यभावेपि जातेष्टिन्यायेन तस्मिन्प्राप्ते पंचसु बहिः शालायामित्यादिना अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिक इत्यादिना च लौकिकोऽग्निर्विधीयते ॥ एवं च सति सुतसंस्कारांगभूते वृद्धिश्राध्धे लौकिकाग्निविध्यभावाज्जातेष्टिन्यायप्राप्तः स्वाहिताग्निरेव भवतीति सुधीभिर्विभावनीयं ॥ यत्त्वाश्वलायनगृह्यपरिशिष्टे ॥ आन्वष्टक्यं पूर्वेद्युर्मासि मास्यथ पार्वणं ॥ काम्यमभ्युदयेष्टम्यामेकोद्दिष्टं तथाष्टमं ॥ चतुर्ष्वाद्येषु साग्नीनां वन्हौ होमो विधीयते ॥ पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपिति ॥ अष्टकानामुपरितना नवभ्योऽन्वष्टकास्तन्निमित्तश्राद्धमन्वष्टक्यं ॥ अष्टकापूर्वदिनरूपासु सप्तमीषु क्रियमाणं श्राध्धं पूर्वेद्युः ॥ मासि मासीति यस्यां कस्यांचित्तिथौ प्रतिकृष्णपक्षं क्रियमाणं श्राध्धं ॥ अमावास्या निमित्तकं श्राध्धं पार्वणं ॥ पुत्रादिकामनया क्रियमाणं काम्यं ॥ अभ्युदये पुत्रजन्मविवाहादौ क्रियमाणं ॥ अष्टकासंज्ञकायामष्टम्यां क्रियमाणं ॥ मुख्यैकोद्दिष्टेग्नौ करणाभावात्सपिंडीकरणस्यैकोद्दिष्टपार्वणोभयात्मकत्वादेकोद्दिष्टशब्देन लक्षणया सपिंडीकरणमेकोच्यते ॥ तत्राद्येषु चतुर्षु श्राध्देषु साग्नेरग्नावेव होमः॥ इतरेषु चतुर्षु॥ श्राद्धेष्वग्निमतोपि पाणौ होम इत्याभ्युदयिकश्राद्धेऽग्नि-

मतः ॥ पितृयत्राह्मणहस्तेऽग्नौकरणहोमविधानं तच्छाखाविषयमित्युक्तं श्राद्धहेमाद्रौ स्मृतिदर्पणे च ॥ कर्कादयोप्येवं ॥ येनाग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति तदकृतावसथ्याधानाभ्युदयिकविषयमित्याह ॥ अकृतावसथस्य पाणिहोमं वदता कृतावसथ्यस्यत्वावसथ्ये होम इत्युक्तं भवति ॥ अन्यथा कृतावसथ्यस्यापि पाणौ होम आपद्येतेत्यलम् ॥ इति ॥

" अथ निरग्निकस्य तु नागरस्य नाग्नौकरणहोमः"–तदुक्तं नागरखंडे ॥ निरग्नेरग्नौ करणं क्षयाहे चैव पार्वणं ॥ भस्मना मंडलं कुर्यान्नागरो यात्यधोगतिं ॥ संपन्नमिति तृप्तप्रश्नः ॥ तृप्तास्थेत्यत्र संपन्नं वदेदित्यर्थः ॥ साकांक्षत्वात्सुसंपन्नमिति प्रतिप्रश्नः ॥ सांप्रदायिकास्तु सुसंसपन्नमितीतरे ब्रूयुरिति पठन्ति ॥ तत्त्वनाहृतं कर्कोपाध्यायादिभिर्भाष्यकारैः ॥ छंदोगपरिशिष्टकात्यायनोपि ॥ संपन्नमिति तृप्तास्थ प्रश्नस्थाने विधीयते ॥ सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेदिति ॥ अत्र परिवेषणे विशेषो भविष्यपुराणे ॥ पृषदाज्येन संयुक्तं दद्याद्योदनमादितः ॥ पायसं च तथा भव्यं मोदकादिरसोत्तरं ॥ भोजनं मधुरं दद्यान्नचाम्लं परिवेषयेत् ॥ रक्तपुष्पं तिलांश्चैव अपसव्यं विवर्जयेदिति ॥ जलोद्भवमप्यत्र रक्तपुष्पं न दातव्यमित्येतदर्थोयं निषेधः हेमाद्रौ ब्रह्मांडपुराणे ॥ मंगल्यं भक्षभोज्यादि दद्यादन्नं पृथग्विधं ॥ गुडमिश्रं खगश्रेष्ठ साज्यं चैवोदनं परं ॥ रसालान्मोचकांश्चैव नचाम्लकटुकादिकमिति ॥ रसालाश्च सूपकारशास्त्रेऽभिहिताः ॥ अर्द्धाढकं सुचिरपर्युषितस्य दध्नः खंडस्य षोडशपलानि शशिप्रभस्य ॥ सर्पिः पलं मधुपलं मरीचिद्विकर्षं शुंठ्याः पलार्द्धमथवार्द्धपलं चतुर्णां ॥ श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतभांडसंस्था ॥ एषा वृकोदरकृता सरसा रसालाऽस्वादिता भगवता मधुसूदनेनेति ॥ मोचकान् कदलीफलानि ॥ आम्लं चात्र दधिव्यतिरिक्तं द्रष्टव्यं ॥ तस्यात्यन्तमांगलिकत्वेन विधानादित्युक्तं स्मृतिरत्नावल्यां ॥ अत्रादिशब्देनोद्वेजकतिक्तादेरसंग्रहः क्रियते ॥ निर्णयसिंधौ वृद्धपराशरः ॥ ॥ मालत्याः शतपत्रया वा मल्लिकाकुब्जयोरपि ॥ केतक्याः पाटलाया वा देया माला न लोहिता इति ॥ अयं च श्राद्धे मालानिषेधस्यापवादः ॥ तथा ॥ सुवेषभूषणैस्तत्र सालंकारैस्तथा नरैः ॥ कुंकुमाद्यनुलिप्तांगैर्भाव्यं तु ब्राह्मणैरिह ॥ स्त्रियोऽपि स्युस्तथाभूता गीतनृत्यादि हर्षिता इति॥ अत्र शेषं प्रकृतिवदिति चोदकात्प्राप्तेर्विकिरः कार्य एव॥ केचित्तु विकिरो वृद्धिश्राद्धे न कार्यः॥ आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैवच॥ विकिरं नैव कुर्वीत मुनिः कात्यायनोऽब्रवीदिति धर्मप्रदीपादित्याहुः ॥ तन्न ॥ नांदीमुखान्पितॄन्पूज्य पितृकार्ये विधानविदिति प्रकृत्य विकिरं च तथा पिंडान्

दद्याच्च नियमं विना।। ब्रूयात्तृप्तेषु संपन्नं वृद्धिश्राद्धे समाहित इति हेमाद्रौ चतुर्विंशतिमतोक्तेः ।। सर्वजातीयसिद्धमन्नमेकपात्रे समुद्धृत्य विकिरं कुर्यादित्यर्थकात् सुसंपन्नं च ते ब्रूयुः सर्वसिद्धं ततः क्षिपेदिति हेमाद्रौ ब्रह्मपुराणाच्च ।। छंदोगपरिशिष्टे कात्यायनेन विकिरणे विशेषाभिधानाच्च ॥ तथाहि ॥ यस्तस्य प्रकरोन्नस्य तिलवद्यववत्तथा ।। उच्छिष्टसंनिधौ सोत्र तृप्तेषु विपरीतक इति ।। पार्वणे उच्छिष्टसन्निधौ विप्रतृप्त्यनन्तरं यदन्नविकिरणं तिष्ठति तदिह विपरीतं तृप्तेः पूर्वं कार्यं ।। तथा तिलवत्प्रकरोत्र यवयुक्तः स्यात्तथा कार्यं इत्यर्थः ॥ यत्तु धर्मप्रदीपवचनं तद्यस्यां शाखायां विकिरणनिषेधोस्ति तद्विषयं ।। वस्तुतस्तु धर्मप्रदीपवचने कात्यायनोऽब्रवीदित्युक्तेः कात्यायनसूत्रपरिशिष्टादि विरुद्धत्वात्तन्निर्मूलं ।। इति ।।

## ॥ अथ सपिंडकनान्दीश्राद्धविचारः ॥

दधिबदराक्षतमिश्राः पिंडाः ॥ अक्षता यवाः ॥ मिश्रणं मिश्रः।। दध्यादिभिर्मिश्रितोदनेन पिंडा अत्र देया इत्यर्थः ( शाल्यन्नं दधिमध्वक्तमिति ब्रह्मपुराणवचनात् ) बहुव्रीह्युपलब्धेः ॥ छंदोगपरिशिष्टे कात्यायनोपि ।। सर्वस्मादन्नमुद्धृत्य व्यंजनैरुपसिच्य च ( सर्वस्मात्प्रकृतत्वात्स्तोकस्तोकशः पात्रे समादाय व्यंजनैर्घृतमधुदुग्धादिभिरासिच्य ) संयोज्य यवकर्कंन्धु (बदरीफलं) दधिभिः प्राङ्मुखस्तत इति।। अत्र पक्षप्राप्तायाः प्राङ्मुखतायाः प्राङ्मुख इत्ययमनुवादो न पुनरुदङ्मुखतायाः परिसंख्या ।। अत एव हेमाद्रौ पद्मपुराणे ॥ प्रदक्षिणोपचारेण दध्यक्षतफलोदकैः ।। प्राङ्मुखोदङ्मुखो वापि प्रदद्याद्बदरैर्युतानिति ।। पिंडानिति शेषः ।। अत्र पिंडदानं बहिः शालायां कार्यं।। यथाह हेमाद्रौ वृद्धशातातपः।। प्रदद्यात्प्राङ्मुखः पिंडान्वृध्यौ नाम्ना सबाह्यत इति ।। स श्राद्धकर्त्ता ॥ बाह्यतो भोजनशालाया बहिर्नतूच्छिष्टसमीप इत्यर्थः ॥ अत्र दक्षिणासंस्थमेव रेखाकरणमवनेजनपिंडदानादिकार्यं ।। आभ्युदयिके प्रदक्षिणमुपचार इत्युक्तत्वात्।। केचित्त्वप्रदक्षिणत्वेप्यस्य दैविकत्वादुदकसंस्थमेवेत्याहुः ।। तदयुक्तं ।। आभ्युदयिके प्रदक्षिणमुपचार इति विरोधात् ।। नचोदक्संस्थतायां प्रमाणमुपलब्धं ।। दक्षिणासंस्थत्वे च प्रदक्षिणं प्रमाणमस्ति ।। तस्मात् दक्षिणासंस्थमेव रेखाकरणादि ।। अमुमेवार्थमाह छंदोगपरिशिष्टे कात्यायनः ॥ प्रागग्रेष्वथ दर्भेषु आद्यमामंत्र्य पूर्ववत् ।। अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति पात्रतः ।। द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ।। मातामहप्रभृतींस्तु एतेषामेव वामत इति।। एतेषां पित्रादित्रयाणां वामत इत्यर्थः।। तत्र पित्रादीनां ध्येयत्वेन संबोध्यत्वेन च स्वसंमुखत्वाद्दक्षिणासंस्थत्वेनैव तद्वामता ।। यत्त्वाशादित्येन पिंडानामवयवाभावाद्वामतायां कर्तृगतोऽवयव इष्यत इति ।। तदसंगतं ।। एतेषामेव वामत इत्येतच्छब्देन पित्रादीनां परामृष्टत्वात्कर्त्रवयवत्वेत्वेतेषामिति बहुत्वविरोधाच्च ।। तस्माद्दक्षिणासंस्थ-

त्वेनैव तद्वामतासंभवः ॥ नारायणवृत्तौ श्राद्धकाशिकायां चाप्येवं ॥ अत्र केचित्प्रपितामहमारभ्य प्रतिलोमक्रमेण पिंडदानादिप्रयोगमाचरन्ति ॥ तदुक्तं वृद्धवसिष्ठेन ॥ नांदीमुखे विवाहे च प्रपितामहपूर्वकं ॥ वाक्ये समुच्चरेद्विद्वानन्यत्र पितृपूर्वकमिति ॥ तन्न ॥ नांदीमुखाः पितरः पितामहा इत्यादिना भगवताचार्येणानुलोमक्रमेणैव विहितत्वात् छंदोगसूत्रेप्येवं ॥ माता पितामही चैव तथैव प्रपितामही ॥ पित्रयादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ॥ एते नैवार्चनीयाः स्युः पितरोभ्युदये द्विजैरित्याश्वलायनस्मृतावनुलोमक्रमाभिधानादाश्वलायनानामप्यनुलोमक्रम एवेति पारिजातादयः ॥ यत्तु वृद्धवासिष्ठं तच्छाखान्तरविषयं ॥ आथर्वणानां तु पितृयज्ञदर्श श्राद्धादौ सर्वत्र प्रतिलोमक्रम एव तद्गृह्ये उक्तोऽस्ति॥ अत्रावनेजनपिंडदानादि सर्वं कर्म देवतीर्थेन कुर्यात् ॥ तदुक्तं छंदोगपरिशिष्टे कात्यायनेन ॥ नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ॥ पात्राणां पूरणादीनि दैवेनैव हि कारयेदिति ॥ आदीनीत्यादी शद्बादन्नोत्सर्गपिंडदानादि यावदेव पित्र्यं कर्म देवेन तीर्थेन कुर्यात् ॥ एवकारस्तु नांदीमुखानां कुर्वीत प्राज्ञः पिंडोदकक्रियां ॥ प्राजापत्येन तीर्थेन यत्त्वकिंचित्प्रजापतेरिति मार्कंडेयपुराणोक्तप्राजापत्य व्यावृत्त्यर्थ इत्युक्तं नारायणवृत्तौ ॥ तेन मार्कंडेयोक्तं प्राजापत्यं तु शाखान्तरपरं ॥ आशादित्यभाष्येप्येवं ॥ प्राङ्मुखास्त्वथ दर्भा वै दद्यात् क्षीरावनेजनमिति ब्रह्मपुराणादत्र क्षीरेणावनेजनं कर्तव्यमिति श्राद्धकाशिकाकृत् ॥ तन्न ॥ अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिला इति छंदोगपरिशिष्टे कात्यायनेनाद्भिरेव विहितत्वात् ॥ यत्तु क्षीरावनेजनविधायकं ब्रह्मपुराणवचस्तच्छाखान्तरविषयं ॥ ननु च निघंटौ ॥ क्षीरशद्बस्योदकपर्याये पठितत्वात् क्षीरशद्ब उदकपरः ॥ एवं च प्रकृतिवद्विकृतिरनुष्ठिता भवतीति चेन्न ॥ अवनेजनसाधनीभूतानामपामतिदेशेनैव प्राप्तत्वात् क्षीरावनेजनविधायकवाक्यवैयर्थ्यापत्तेः ॥ यत्तु तत्पात्रक्षालनेनाथ पुनरप्यवनेजनेदिति छंदोगपरिशिष्टे कात्यायनेन पुनरवनेजनं पिंडपात्रप्रक्षालनोदकेनैवाभिहितं तच्छंदोगविषयं वाजसनेयिनां तु अथोदपात्रमादायावनेजयतीति शतपथश्रुत्या पुनरवनेजनस्योदपात्रेणैव विहितत्वात् ॥ अत्र बिल्वफलपरिमाणाः पिंडाः कार्याः ॥ तदाह छंदोगपरिशिष्टे कात्यायनः ॥ अवनेजनवत्पिंडान्दत्वा बिल्वप्रमाणकानिति ॥ केचित्त्वत्रैतत्ते अन्नमित्यस्य स्थानेऽयं पिंडःस्वाहेत्येवं प्रयोगः कार्यः ॥ महालये गयाश्राध्धे वृद्धिश्राद्धे दशाहिके ॥ पिंडशद्बप्रयोगः स्यादन्नमत्र प्रकीर्तयेदिति हेमाद्रौ लौगाक्षिणोक्तेरित्याहुः ॥ तन्न ॥ यतो हेमाद्रौ श्राद्धकाशिकायां च महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिक इत्येव पाठदर्शनात् ॥ अतो वृद्धिश्राद्ध इत्ययं पाठोऽसाधु-

रेव ॥ न च महालयादौ पुंलिंगेन शब्दनिर्देशेन पिंडदानविधानादसावेतत इति नपुंसकलिंगनिर्देशाच्च श्रुतिविरोधः शंक्यः ॥ एतदित्यनेन निर्वप्स्यमानपिंडनिर्देशात् ॥ प्रविश्य पिंडीकुड्यस्य पिंडं पततीति महाभाष्यादौ पिंडशब्दस्य स्त्रीनपुंसकयोरपि प्रयोगदर्शनात् तस्मान्नपुंसकेनैतदिति शब्देन पिंडशब्दनिर्देशो न विरुद्ध्यते ॥ अतश्चैतत्त इत्यस्यानंतरमन्नमिति पिंडमिति वाध्याहारः कार्यः ॥ अनयोश्च व्यवस्थाऽभिहिता लौगाक्षिणा ॥ महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके ॥ पिंडशब्दः प्रयोगस्यादन्नमन्यत्र कीर्तयेदिति ॥ महालये तीर्थविशेषे ॥ प्रेतश्राद्ध इति सपिंडीकरणान्येषु श्राद्धेषु ॥ दशाहिके श्राद्धव्यतिरेकेणापि दशाहनिर्वर्त्ये पिंडदाने ॥ यत्तु श्राद्धकाशिकाकृता महालयादावेतदिति नपुंसकलिंगनिर्देशोपपत्तये एतत्ते पिंडान्नं स्वधेति प्रयोगोऽभिहितः सोप्येतेनैव परास्तः ॥ वैकल्पिकयोः पिंडान्नशब्दप्रयोगयोर्लौगाक्षिणा श्राद्धविशेषपरत्वेन व्यवस्थितत्वात्समुच्चये मानाभावाच्च ॥ अत्र कश्चिदाह ॥ द्वौ द्वौ चाभ्युदये पिंडावेकैकस्य पृथक् पृथक् ॥ एकं नाम्ना परं तूष्णीं दद्यात्पिंडद्वयं बुध इति चतुर्विंशतिमतादेकैकस्मै पिंडद्वयं देयमिति ॥ तन्न ॥ सूत्रकृता भगवताऽस्य विशेषस्यानुपदिष्टत्वात्प्रकृतित एकैकपिंडदानप्राप्तेश्च ॥ अत एवोक्तं ब्रह्मपुराणे ॥ उक्तमादाय पिंडं तु कृत्वा बिल्वप्रमाणकं ॥ दद्यात्पितामहादिभ्यो दर्भमूले यथाक्रममिति ॥ पिंडपदनिष्ठैकत्वस्य प्रकृतिप्राप्तस्याप्यत्र पुनः पिंडमित्येकत्वनिर्देशस्य चतुर्विंशतिमतोक्तपिंडनिष्ठसंख्यान्तरव्युदासार्थत्वात्॥ तस्मादेकैक एवकैकस्मै पिंडो देय इति ॥ यच्च चतुर्विंशतिमते पिंडद्वयमेकैकस्मै देयमित्युक्तं तच्छाखान्तरपरं कुलधर्मपरं वा ॥ स्मृतिरत्नावल्यामप्येवमाशादित्यभाष्ये च ॥ अत्र च पिंडोपरि रक्तसूत्ररक्तगंधादिदानं ॥ तदुक्तं श्राद्धकाशिकायां पुराणसमुच्चये ॥ अनुलेपनगंधादिरक्तसूत्रं च शस्यत इति ॥ अत्र पिंडेष्वित्यधिकृत्योक्तं हेमाद्रौ ब्रह्मपुराणे ॥ अर्घ्यं पुष्पं च धूपं च प्रशस्तमनुलेपनं ॥ वासः साध्वहतं शुद्धं देयं च सदृशं समं ॥ द्राक्षामलकमूलानि यवान्यथ निवेदयेदिति ॥ पिंडदानं चात्र वैकल्पिकमित्युक्तं मिताक्षरायां वृद्धिश्राद्धे विकल्पेन पिंडदानं बुधैःस्मृतमिति ॥ हेमाद्रौ विष्णुपुराणेऽपि दध्यक्षतैः सबदरैः प्राङ्मुखोदङ्मुखोपि वा ॥ देवतीर्थेन वै पिंडान्दद्यात्कामेन वै नृपेति ॥ कामेन इच्छया ॥ आभ्युदयिकं प्रकृत्याहिताग्नेः पित्रर्चनं पिंडैरेवेति निगमपरिशिष्टोक्तत्वादाहिताग्नेः सपिंडकाभ्युदयिकश्राद्धनियमः ॥ तदितरस्य तु सपिंडकमपिंडकं वेति विकल्पः ॥ अत्र पिंडकरणाकरणयोः कुलाचारपरत्वेन व्यवस्थाभिहिता हेमाद्रौ भविष्यपुराणे ॥ पिंडनिर्वपणं कुर्यान्नवा कुर्यान्नराधिप ॥ वृद्धिश्राद्धे महाबाहो कुलधर्ममवेक्ष्य वा इति॥

अनेन येषां कुले वृद्धपरंपरया वृद्धिश्राद्धे पिंडदानमनुष्ठीयते तैरनुष्ठेयमेव ।। येषां तु कुले नानुष्ठीयते तैर्नानुष्ठेयमिति व्यवस्थाभिहिता भवति ।। आहिताग्नेः सपिंडकाभ्युदयिकश्राद्धनियमे सत्यपि येषां कुले वृद्धपरंपरयाऽपिंडक श्राद्धानुष्ठानं तेषां कुले कुलाचारत्वेनाहिताग्निनाप्यपिंडकमेवाभ्युदयिकश्राद्धमनुष्ठेयं ।। केचित्तु योग्नौ तु विद्यमानेपि वृद्धौ पिंडान्न निर्वपेत् ।। पतन्ति पितरस्तस्य नरके सतु पच्यत इति स्मृतिरत्नावल्यां हेमाद्रौ निर्णयसिंधौ च ब्राह्मोक्तेरग्निमतः सपिंडकमनग्निमतोऽपिंडकमित्याहुः ।। तन्नातीव युक्तं ।। योग्नौ तु विद्यमानेपीत्यस्मिन्वचने स्मृतिरत्नावल्यादिसर्वग्रंथे संमतपाठे वर्त्तमानस्य विद्यमानेपीत्यपि शब्दस्याविद्यमानेप्यग्नावित्यर्थोपलंभादनग्निमतोऽपि सपिंडकश्राद्धप्राप्तेः ।। अग्न्यभावेतु विप्रस्य पाणावेवोपपादयेदिति तदकृतावसथ्याधानाभ्युदयिक विषयमिति कर्कोपाध्यायप्रणीतव्यवस्थाविरोधापत्तेश्च ।। यद्यनग्निमतोपि सपिंडकं श्राद्धमस्ति तदैवाग्नौकरणहोमाधिकरणव्यवस्था कर्कोपाध्यायप्रणीता संगच्छते ।। इतरथाग्निमतः सपिंडकश्राद्धविधानेनाग्नेस्तदप्राप्तेर्होमाधिकरणव्यवस्थाऽसंगता स्यात्।। नचापिंडकश्राद्धेग्नौकरणहोमोऽस्ति ।। येन तत्र होमाधिकरणत्वेन पाण्यभिधानं संगच्छते ।। तस्मादग्निमाननग्निमांश्चाधकृत्यापिंडकश्राद्धनिंदया सपिंडकश्राद्धस्तुतिपरा ब्राह्मोक्तिरिति न साग्निनिरग्निपरत्वेन सपिंडकमपिंडकश्राद्धयोर्व्यवस्था ।। किन्तु पूर्वोदितैव व्यवस्था ।। केचिदत्रैवं व्याचक्षते ।। दधिबदराक्षतमिश्राः पिंडा इति सूत्रे पिंडग्रहणं पक्षप्राप्तापिंडकश्राद्धव्युदासार्थं ।। पिंडदानप्राधान्यात्तदभावेंऽगानुष्ठानायोगात् ।। पिंडदानप्राधान्यं तु निर्णयसिंधौ छंदोगपरिशिष्टे कात्यायनेनाभिहितं ।। प्राधान्यं पिंडदानस्य केचिदाहुर्मनीषिणः ।। गयादौ पिंडमात्रस्य दीयमानस्य दर्शनात् ।। भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः।। ब्राह्मणानां परीक्षायां महायत्नप्रदर्शनात् ।। प्राधान्यमुभयोर्यस्मात्तस्मादेष समुच्चय इति ।। अत्र केचित्पदेन यजुर्वेदिन उच्यन्ते ।। अन्यपदेन बह्वृचाः ।। छंदोगानां तु भोजनपिंडदानयोरुभयोः प्राधान्यमिति ।। श्राद्धकाशिकायां धर्मप्रदीपेऽपि ।। यजुषां पिंडदानं तु बह्वृचां द्विजतर्पणं ।। श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनामिति ।। विस्तरतस्तु पिंडदानप्राधान्यं कर्कभाष्ये निरूपितं ।। तस्माद्वाजसनेयिनां सर्वेषां सपिंडकमेवाभ्युदयिकश्राद्धं भवतीति स्वसूत्रानुरूपं।। यत्तु वृद्धिश्राद्धे विकल्पेन पिंडदानं बुधैः स्मृतमिति मिताक्षरायां वचनं यच्च पिंडनिर्वपणं कुर्यान्न वा कुर्यान्नराधिपेति भविष्णपुराणवचनं तदन्यशाखाविषयमिति।।

## ।। अथ वृद्धिश्राद्धोक्तपित्र्याद्यावाहनविचारः ।।

नांदीमुखान्पितॄनावाहयिष्य इति पृच्छति।। लिंमर्थे लेट्।। पितॄनावाहयिष्य

इत्यस्य स्थाने नांदीमुखान्पितृनावाहयिष्य इति पृच्छेदित्यर्थः ॥ अत्र पितृग्रहणा-देवानां नांदीमुखविशेषणं न भवतीत्युक्तं भवति ॥ वृद्धपराशरेण तु देवानामपि नांदी-मुखविशेषणमुक्तं ॥ नांदीमुखेभ्यो देवेभ्यः प्रदक्षिणं कुशासनमिति ॥ अतश्च वि-कल्पः ॥ सच शाखाभेदेन व्यवस्थितो द्रष्टव्यः ॥ अत्रावाहने विशेषो हेमाद्रावाधे ब्रह्मपुराणे ॥ नांदीमुखान्पितृन् भक्त्या सांजलिश्च समाह्वयेत् ॥ पठेत्पवित्रं मंत्रं तु विश्वेदेवा स आगतेति ॥ प्रकृतौ तु निरंगुष्ठकरग्रहणेन देवानां जान्वालंभनेन च पितृणामावाहनमासीत् ॥ इह पुनर्विशेषविधानात्सांजलिनेति ध्येयं ॥ यद्यपि नांदी-मुखान् पितृनित्युक्तेः पित्र्याद्यावाहन एवायं विशेषो न देवावाहन इति प्रतिभाति तथापि पठेत्पवित्रं मंत्रं तु विश्वेदेवा स आगतेत्युत्तरार्द्धे वैश्वदेविकावाहने विनियुक्त-मंत्रपठनविधानादुभयसाधारण्यमस्य बोध्यं ॥ पितृन् पितामहान् प्रपितामहानावाह-यिष्य इति पितृणां मातामहानामप्येवमित्यतिदेशाच्च मातामहान् प्रमातामहान् वृद्ध-प्रमातामहानावाहयिष्य इत्येवमावाहनमाचरति प्रांचः ॥ नव्यास्त्वाहुः॥ प्रकृतिभूत-पितृश्राद्धे एकवचनान्तः पितृशद्वो जनकपरः ॥ बहुवचनान्तः पितामहादिपदसम-भिव्याहृतश्च ॥ पितामहादिपदा समभिव्याहृतो बहुवचनान्तः पितृशद्वस्तु सपिंडी-करणान्तसंस्कारजन्यपितृभावापत्तिरूपः ॥ यथा ॥ पितृभ्यो दद्यात् ॥ पितृनावाह-यिष्ये॥ पितृन्हविषे अत्तवे ॥ आयन्तु नः पितर इति ॥ अत्र पितरो मादयध्वमिति॥ अमी मदन्त पितर इति॥ नमो वः पितर इति ॥ एतद्वः पितर इति तर्पय तमे पितृ-नित्यादि॥ तस्य पित्रादिषु मातामहादिषु मातृभ्रातृपितृव्यादिषु च तुल्यत्वान्नोह्यते॥ अतः पितृनावाहयिष्य इत्येवावाहनप्रश्नः ॥ अत्रैतत्संदिह्यते ॥ किं पित्रादित्रिकस्य नांदीमुखत्वमाहोस्विद् वृद्धप्रपितामहादित्रिकस्येति ॥ स्मृतिषूभयथादर्शनात् ॥ तत्र पित्रादित्रिकस्यैवेति ब्रूमः ॥ नांदीमुखाः पितरः पितामहाः प्रपितामहा इति सूत्रका-रप्रस्थानात् ॥ पिता पितामहश्चैव तथैव प्रपितामहाः ॥ पिंडसंबंधिनो ह्येते पितरः संप्रकीर्त्तिता इति स्मृत्यन्तराच्च ॥ तेनात्र पित्रादीनामेव देवतात्वे स्थित्वे वृद्धौ नांदी-मुखान्पितृन् यजेतेत्यादौ नांदीमुखशद्ववाच्यत्वेनोर्ध्ववक्त्रादिरूपास्त एव विवक्षिताः॥ ऊर्ध्ववक्त्रास्तु ये तत्र ते नांदीमुखसंज्ञिता इति ॥ यत्तु ये स्युः पितामहादूर्ध्वं ते तु नांदीमुखाः स्मृता इति मार्कंडेयपुराणवचनं ॥ यच्च पिता पितामहश्चैव तथैव प्रपिता-महः ॥ त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्त्तिताः॥ तेभ्यः पूर्वतरा येच प्रजावन्तःसु-खैषिणः ॥ ते तु नांदीमुखा नांदीसमृद्धिरिति कथ्यते ॥ प्रसन्नमुखसंसर्गा मंग-लीया यतस्तु त इति ब्रह्मपुराणवचनं तज्जीवत्पित्रादित्रिककर्तृकवृद्धिश्राद्धविषयं ॥ वृद्धिश्राद्धं प्रकृत्य दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदीति निगमोक्तेः ॥ यत्तु

पितरि पितामहे प्रपितामहे च जीवति न कुर्यादिति विष्णुवचनं तज्जीवत्पित्रादि त्रिककर्तृकतीर्थश्राद्धादि विषयं॥ एवमेव कल्पतरौ हलायुधभाष्ये च ।। ये स्युः पितामहादूर्ध्वमित्यत्र पितामहशब्देन प्रपितामहो लक्ष्यते ।। अपरे तु नांदीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।। पौर्णमास्यां तु कर्त्तव्यं वराहवचनं यथेति हेमाद्रौ ब्रह्मपुराणवाक्यविहितमहालयप्रकरणपठितप्रौष्ठपदी श्राद्धमधिकृत्य पिता पितामहश्चैव तथैव प्रपितामहाः ।। त्रयो ह्यश्रुमुखा ह्येते पितर इत्यादि पूर्वोक्तब्रह्मपुराणवचनस्य पठितत्वेन तद्विषयत्वाद्ये स्युः पितामहादूर्ध्वमिति प्रागुदाहृतमिति मार्कंडेयपुराणवचनमपिप्रोष्ठपदीनिमित्ते श्राद्धविषयमित्येवमूचिरे ।। हेमाद्र्यादयोऽप्येवं यत्तु निगमपरिशिष्टेऽदर्शनान्निगमपरिशिष्टवचनं निर्मूलं ।। एवं प्रौष्ठपदीश्राद्धे पित्रादित्रयोर्ध्वानां प्रसन्नमुखत्वरूपवैश्वदेवव्याप्तं नांदीमुखत्वं पारिभाषिकं ।। प्रसन्नमुखसंसर्गा मंगलीयाय वस्तुत इत्युक्तेः ।।

## ।। अथाक्षय्योदकदानविचारः ।।

अत्रोदकादिदाने विशेषमाह छंदोगपरिशिष्टे कात्यायनः ।। अथाग्रभूमिमासिंचेत्सुसंप्रोक्षितमस्त्विति ।। शिवा आपः सन्त्विति च युग्मानेवोदकेन च ।। सौमनस्यमस्त्विति पुष्पदानमनन्तरं ।। अक्षतं चारिष्टं चास्त्वित्यक्षतान्प्रतिपादयेदिति हेमाद्रौ तु अक्षय्यं च ततः कुर्यादैवपूर्वविधानत इति श्लोकार्द्धमधिकं पठितमस्ति कर्कभाष्येतु अक्षय्योदकदानं तु पित्र्य एव ।। औचित्याद्दैवस्य च रक्षोघ्नत्वादित्युक्तं ।। नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने ।। अक्षय्योदकमंत्रस्थाने नांदीमुखाः पितरः प्रीयन्तामिति मंत्रः स्यादित्यर्थः ।। यद्यपि नांदीमुखान्पितृनावाहयिष्य इत्यनेन पितृविशेषणं नांदीमुखत्वंप्राप्तमेव तथापि पुनस्तदुपादानं सर्वत्र प्रयोगार्थं ।। यत्तु वृद्धिश्राद्धं प्रकृत्य अक्षय्योदकदानं तु अर्घदानवदिष्यते ।। षष्ठ्यैव नित्यं तत्कुर्यान्न कदाचनेति छंदोगपरिशिष्टे कात्यायनेनाक्षय्योदकदानं षष्ठ्याविहितं तच्छंदोगविषयं ।। नांदीमुखाः पितरः इति मंत्रे पितृशब्दस्य प्रथमान्तप्रयोगविधानात्॥ एवं संकल्पवाक्यमपि प्रथमान्तमेवात्र प्रयोज्यं ।। तदुक्तं संग्रहे ।। शुभाय प्रथमान्तेन वृद्धौ संकल्पमाचरेत् ।। न षष्ठ्याय दिवा कुर्यान्महान्दोषोऽभिजायत इति।। प्रकृतिप्राप्तषष्ठ्या अपवादोयं ।। तदिदमक्षय्योदकदानं तंत्रेण भवति।।नांदीमुखाः पितरः प्रीयन्तामित्यत्र श्रुतस्य पितामहादिपदा समभिव्याहृतबहुवचनांतपितृशब्दस्य सपिंडीकृतप्रमीतमात्रप्रकाशने शक्तत्वात्सकृदुच्चारणेनैव सर्वेषां प्रकाशनरूपकार्यसिद्धेः ।। तेनाक्षय्योदकदानं प्रति पुरुषं नावर्त्तते ।। यत्तु अक्षय्योदकदानं तु अर्घदानं वदिष्यत इत्यक्षय्योदकदानेऽर्घदानवत्तंत्राभाव उक्तः स छंदोगविषयः ।। हलायुधभाष्ये

विष्णुमिश्रभाष्ये श्राद्धकाशिकायां चाप्येवं ॥ एतेन पितर इत्युपलक्षणं ॥ तेन पितरः प्रीयन्तां पितामहाः प्रीयन्तां प्रपितामहाः प्रीयन्तामित्यादि प्रयोगमभिदधानाः परास्ताः॥ एवं च सति प्रकृतावक्षय्योदकं दद्यादित्येतावदुक्तत्वात्तंत्रता तदभावो वेति विशेषस्य भगवतानुक्तत्वाच्चास्मादि देवलिंगात्प्रकृतावपि तंत्रेणैव पितॄणां दत्तं श्राद्धमक्षय्यमस्त्वित्येवं षष्ठीबहुवचान्तेनैव प्रयोगेणाक्षय्योदकदानं कार्यं ॥ प्राकृताक्षयोदकानुवादेन विकृतौ प्राकृतमंत्रस्थाने मंत्रान्तरविधानात् ॥ अत एव कर्कोपाध्यायैर्व्याख्यातं अक्षयोदकमंत्रस्थाने नांदीमुखाः पितरः प्रीयन्तामिति मंत्रः स्यादित्यर्थं इति अक्षयोदकमंत्रस्थानमक्षय्योदकदानवाक्यस्थान इत्यर्थः ॥ प्राकृताक्षय्योदकदाने मंत्रस्यानुक्तत्वात् ॥ हलायुधविष्णुमिश्र भाष्य श्राद्ध काशिकाकारादयस्तु प्रकृतिश्राद्धे अर्घेऽक्षय्योदके चैवेति छंदोगपरिशिष्टे कात्यायनवचनादक्षय्यो तंत्रताया अभावः ॥ आभ्युदयिके तु नांदीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने इति कात्यायनसूत्राच्च तंत्रतेत्याहुः ॥ इति ॥

" अथ स्वधावाचनेपि तंत्रतैव भवति ॥ पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामिति मंत्रप्रयोगं प्रदर्शयता भगवताचार्येण तंत्रतासूचनात् ॥ आचार्याशयं व्याचक्षाणैः कर्कोपाध्यायैरपि पितृभ्यः प्रपितामहेभ्य इत्यमुं मंत्रमुदाहरेदित्युक्तत्वाच्च ॥ यस्तु अर्घेऽक्षय्योदके चैव पिंडदानेऽवनेजने ॥ तंत्रस्य तु निवृत्तिः स्यात्स्वधावाचन एव चेति छंदोगपरिशिष्टे कात्यायनेनाक्षय्योदके स्वधावाचने च तंत्रताया अभाव उक्तः स छंदोगपरः॥ तेन स्वधावाचने पितृभ्यः स्वधोच्यतां पितामहेभ्यः स्वधोच्यतामित्यादि प्रयोगमभिदधाना निरस्ता एव ॥ अन्यत्रार्घपिंडदानादौ तु तंत्राभाव एव ॥ भगवता सूत्रकृता तेषु पदार्थेषु तथैवोक्तत्वात् अत्र च क्षीरयवोदकैरक्षय्योदकदानं कार्यं ॥ तदुक्तं ब्रह्मपुराणे ॥ तथाऽक्षय्योदकस्थाने दद्यात् क्षीरयवोदकमिति ॥ नांदीमुखान्पितॄन्वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातो नांदीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ स्वधां च वाचयिष्य इत्यस्य स्थाने नांदीमुखान्पितॄन्वाचयिष्य इति पृच्छेदित्यर्थः ॥ प्राप्तस्यापि नांदीमुखत्वस्यात्र पुनरुपादानं प्रयोगप्रदर्शनार्थं ॥ ततो वाच्यतामिति ब्राह्मणैरनुज्ञातो नांदीमुखाः पितर इत्यमुं मंत्रमुदाहरेत् ॥ चोदकप्राप्तस्यापि मंत्रस्य पुनर्ग्रहणं चतुर्थ्यन्तपित्रादिपदेषु प्रथमान्तता विधानार्थं ॥ नांदीमुखाः पितर इति मंत्रे च नांदीमुखा मातामहा इत्येवं मातामहपदात्पूर्वमपिनांदीमुख विशेषणं श्राद्धकाशिकाकृता समाम्नातं तत्कर्कोपाध्याय हलायुधादीनामनादराच्चानादरणीयमिति ॥

## ॥ अथ षट्दैवतविचारः ॥

अत्र मंत्रे पित्रादि षण्णामेव संकीर्त्तनमाभ्युदयिकं षट्दैवतमिति प्रज्ञप्त्यर्थं॥तथा च वृद्धिश्राद्धमधिकृत्य छंदोगपरिशिष्टे कात्यायनः ॥ षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेदिति षट्दैवतमाह ॥ तथा तत्रैवोक्तार्थप्रतिपादकं वचनान्तरमप्याह स एव ॥ कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशं ॥ प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्थितिरिति ॥ कर्षूसमन्वितमष्टकाश्राद्धं ॥ शेषेषु उक्तातिरिक्तेषु श्राद्धेषु ॥ उक्तातिरिक्तत्वेनाभ्युदयिकेपि षट्पिंडा इत्यर्थः ॥ तथा तत्रैव योषिद्भ्यः पृथक्त्वेन न देयमित्याह स एव ॥ न योषिद्भ्यः पृथगू दद्यादवसानदिना ( दिवस ) दृते ॥ स्वभर्तृपिंडदानाच्च तृप्तिरासां यतः स्मृता इति ॥ याज्ञवल्क्योऽपि ॥ एवं प्रदक्षिणावृत्को वृद्धौ नांदीमुखान्पितॄन् ॥ यजेतेत्यादिना विशिष्टदेवतान्तरोपदेशमकुर्वाणः प्राकृतानां पित्रादीनां षण्णामेव देवतात्वं दर्शयति ॥ सूत्रकारोऽपि नांदीमुखाः पितरः पितामहा इत्यादिना प्राकृतान् पित्रादीन् देवतात्वेनानुवदन् व्युत्क्रममेवाभ्युदयिकं षट्दैवतं दर्शयति ॥ छंदोगसूत्रे वसिष्ठोपि ॥ नांदीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहोच्यतामिति ॥ नच नांदीमुखाः पितर इत्यत्र पितामात्रेति सूत्रेणैकशेष इति वाच्यं ॥ मातामहश्राद्धपरित्यागप्रसंगात् ॥ न च विवक्षिता संख्या ॥ षट्संख्याया विधेयान्वयात् ॥ तथाप्यविवक्षितत्वे पंच प्रयाजा एकादशप्रयाज इत्यत्रापि तथा प्रसक्तेः॥ अत एव तंत्रकारो भगवान् जैमिनिः॥ कर्मभेदज्ञापके सुसंख्यामप्यजीगणत्॥ शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणभेदाद्भेद इति नच पिंडपितृयज्ञवत् स्त्रीभ्यश्चेत्यन्वष्टकावदत्र विशेषोपदेशोऽस्ति॥ येन मात्रादिनवानां देवतात्वं स्यात् ॥ सूत्रे अन्वष्टकावद्विशेषोपदेशाभावेपि ॥ अन्वष्टकासु वृद्धौ च गयायां च क्षयेहनि ॥ मातुः श्राद्धं पृथक् शस्तमन्यत्र पतिना सहेति स्मृत्यन्तरवाक्ये आभ्युदयिकेपि विशेषोपदेशोऽस्त्येवेति चेत् ॥ न॥ नांदीमुखाः पितरः पितामहा इति षड्भ्यः पितृभ्य इति॥ पिंडाः स्युः षडिति स्थितिरित्यादिपूर्वोक्तवचननिचयनिरोधात् ॥ तस्मात्पित्रादीनां षण्णामेवेह देवतात्वं ॥ अत एव छंदोगपरिशिष्टे कात्यायनः ॥ प्रागग्रेष्वथ दर्भेषु आद्यमामंत्र्य पूर्ववत् ॥ अपः क्षिपेन्मूलदेशेवनेनिक्ष्वेति निस्तिलाः ॥ द्वितीयंच तृतीयं च मध्यदेशाग्रदेशयोः ॥ मातामहप्रभृतींस्तु एतेषामेव वामत इत्यनेन पित्रादीनां षण्णामवनेजनमनुवदति ॥ अन्यथा पित्रादीनामिव मातॄणामप्यवनेजनमनूद्येत ॥ यत्तु कैश्चिदुक्तं ॥ षड्भ्यः पितृभ्य इति वाक्यं कोकिलविषयमिति ॥ तन्न ॥ यतश्छंदोगपरिशिष्टे एव षड्भ्यः पितृभ्य इति वाक्यमधिकृत्य पित्रादीनामवनेजन-

क्त्वा मातामहप्रभृतींस्तु एतेषामेव वामत इत्यादिना मातामहादीनामवनेजनं कात्यायनो ब्रूते ॥ नचैवं कोकिलमते संभवति ॥ मातृमातामहप्रमातामहानां त्रयाणामुद्देशेनैव द्वितीयपार्वणस्य सर्वत्र तन्मते विहितत्वात्॥ तस्मान्न षड्भ्यः पितृभ्य इति वचनं कोकिलविषयमिति ॥ अतश्च कात्यायनसूत्रानुसारिणां वाजसनेयिनां वासिष्ठसूत्रानुसारिणां छंदोगानां च षट्दैवत्यमेवाभ्युदयिकश्राद्धं भवतीति सिद्धं ॥ यत्तु अन्वष्टकासु वृद्धौ चेति स्मृत्यन्तरवचनं शाखान्तरविषयं ॥ मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरं ॥ ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमित्यादीनि वचनानि तानि शाखान्तरविषयाणि ॥ यद्यपि श्राद्धकाशिकायां ॥ नवानां नवकं वृद्धौ तथैवान्वष्टके विदुः ॥ कुर्याद्द्वादशदैवत्यं प्रेततीर्थे गयासु चेति कात्यायननाम्ना लिखितं वचनं तदप्यन्यशाखापरं ॥ सूत्रस्मृत्योर्विरोधे सूत्रस्यैवासाधारणत्वेन बलीयस्त्वात् ॥ स्मृतेस्तु सर्वशाखासाधारण्येनान्यत्र सावकाशत्वेन दुर्बलत्वात् एतेन हलायुधश्राद्धकाशिकाकारादिभिः कात्यायनसूत्रानुसारिभिर्वाजसनेयिनामाभ्युदयिकं नवदैवत्यमित्युक्तं तत्कात्यायनसूत्रविरुद्धत्वात्कात्यायनप्रणीतछंदोगपरिशिष्टादिवचनविरुद्धत्वाच्चोपेक्षणीयं ॥ कर्मांगाभ्युदयिकेप्येता एव देवताः ॥ निषेककाले सोमे चेति पूर्वोदाहृतपारस्करवाक्ये गर्भाधानाद्यंगभूतपारिभाषिककर्मांगश्राद्धे वृद्धिश्राद्धदेवताद्यतिदेशात् ॥ अत्राभ्युदयिकश्राद्धे सत्यवसूविश्वेदेवाः ॥ इति ॥

" इष्टिश्राद्धे " क्रतूदक्षौ सत्यौ नांदीमुखे वसू इति हेमाद्रौ शंखोक्तेः॥ कर्मांगश्राद्धे तु क्रतूदक्षौ ॥ इष्टिश्राद्धं कर्मांगश्राद्धमिति हेमाद्रेर्व्याख्यानात् ॥ अन्येतु कर्मांगश्राद्धेपि सत्यवसूविश्वान्देवानिच्छन्ति ॥ कर्मांगं वृद्धिवत्कृतमिति वृद्धिश्राद्धदेवताद्यतिदेशात् ॥ इष्टिश्राद्धशब्देन तु श्राद्धं प्रतिरुचिश्चैवेति वचनोक्तमिच्छानिमित्तकं श्राद्धमिति कल्पतरुकृता व्याख्यातत्वाच्च ॥ अन्ये तु इष्टिश्राद्धमिष्टिजन्याहवनीय प्रयोज्यमिष्टिनिमित्तकं वा चातुर्मास्यराजसूयाद्यंगभूतं तन्नतु कर्मांगं ॥ इष्टिश्राद्धशब्दस्य प्रवृत्तिनिमित्ताभावादलब्धात्मिकायाश्च रूढेरवयवबाधकत्वाभावेन रूढिर्योगमपहरतीत्यस्य न्यायस्य प्रकृतेरभावादित्याहुः ॥ हेमाद्र्यनुसारिणोऽपरेत्वाहुः ॥ कर्मांगश्राद्धमेवेष्टिश्राद्धं॥ नच योगानुसारेष्ट्यंगश्राद्धमित्येव व्याख्योचितेत्याशंकनीयं ॥ प्रधानसर्द्धिनोंगत्वस्य प्रवेशेनैवोद्देश्य बुद्धिपर्यवसाने सति इष्टिग्रहणस्य पंचावत्तैव वपाकार्येत्यत्र वपाग्रहणस्यैवाविवक्षितत्वादिति ॥ अत्र सत्यवस्वोः समुदितयोरेवाग्नीषोमवद्देवतात्वं नतु देवयोः समुच्चय इति न ब्राह्मणद्वये प्रत्येकमेकैकस्य प्रयोग इति हेमाद्रौ स्पष्टं ॥ अतश्च सत्यवसूविश्वान्देवानावाहयिष्य इति सामान्यविशेषसंज्ञापदयोः समुच्चयेन प्रयोगः कार्यः ॥ यद्यपि द्विवचनान्तबहुवचनान्तयोः

समानाधिकरण्यं न संभवतीति श्रीदत्तेनोक्तं तथापि शालास्तु भ्रातरः पत्न्याः स्वामिनो देवदेवरावितिति ॥ अत्र स्वामिनो भ्रातरो देवरावितिवदिहापि सामानाधिकरण्येनान्वयेन किंचिद्बाधकं ॥ किं अनियतबहुवचनकेनापि बहुवचनान्तेनाप्सरः शब्देनैकवचनान्तेनोर्वशीशब्देन चोर्वश्यप्सरस इत्यादौ सामानाधिकरण्यमंगीक्रियते ॥ नच स्त्रियां बहुष्वप्सरस इति कोशबलान्नियतबहुवचनान्त एवाप्सरः शब्द इति भ्रमितव्यं ॥ वत्सरः ॥ अप्सरा इत्येकवचनान्तस्यापि महाभाष्यकृता अष्टमे उदाहृतत्वात् ॥ प्रकृते तु विश्वेदेवास आगतेति ॥ विश्वान्देवान् आवाहयिष्य इत्यादि श्रुतिस्मृतिगतविश्वेदेवपदस्य नियतबहुवचनान्तस्यैव प्रयोगदर्शनात्सामाधिकरण्यं सुतरं ॥ हेमाद्रिस्तु विश्वेदेवा इति बहुवचनं पूजार्थे मत्वा सत्यवसुसंज्ञका विश्वेदेवा इत्यादिप्रयोगमूचे॥ तच्चिन्त्यं॥ संज्ञाशब्दान्तर्भावेन देवतात्वाभावा दित्यलम्॥

"अथ स्वधाशब्दविचारः"—न स्वधां प्रयुंजीत ॥ अत्राभ्युदयिके स्वधाशब्दप्रयोगो न कार्यं इत्यर्थः ॥ प्रदक्षिणग्रहणस्य सकलदैवधर्मोपलक्षणार्थतया व्याकृतत्वात्पितॄनप्यत्र देववदित्यतिदेशाद्दैवे कर्मणि स्वधाकारशब्दोच्चारणाभावाच्च नित्यानुवाद एवायं निषेधः ॥ प्राप्त्यभावात्॥ तेन स्वधाकारः पितृणामिति दर्शनादत्रापि स्वधाशब्दप्रयोगो भवेदेवेति शंकानिराकरणार्थमेतत्सूत्रं ॥ केचित्तु प्रकृते स्वधावाचने स्वधां न प्रयुंजीतेति वर्णयन्ति ॥तदयुक्तं॥ पितॄन्वाचयिष्य इति विधानबलादेव निषेधस्य प्राप्तत्वेन पौनरुक्त्यापत्तेः॥ अन्यत्र स्वधाप्रसक्तेश्च ॥ तस्मात्पूर्वैव व्याख्या ज्यायसी ॥ केचित्तु स्वधोदाहणप्रतिषेधादस्तु स्वधेत्युच्यमाने इति चोपदेशात्कुशेष्वपां निषेकं नेच्छन्ति ॥ कर्काचार्यास्तु मंत्रनिषेकयोरशेषशेषित्वं तस्मात्तस्मिन्काले निषेक इत्याहुः ॥ प्रकृतौ यत्र यत्र स्वधाशब्दोच्चारणं विहितं तत्र तत्र तत्तत्स्थाने स्वाहा शब्दं प्रयुंजीत स्वधास्थाने च बुद्धिमानिति हेमाद्रौ ब्रह्मपुराणात् ॥ तेन नमो वः पितरः स्वधायै इति मंत्रे ऊर्जं वहन्तीरिति मंत्रे च स्वधाशब्दस्थाने स्वाहाशब्दः प्रयोज्य इति ढोढूमिश्राः ॥ अत्र केचित्स्वधाशब्दनिषेधस्य निषेधान्तरोपलक्षणत्वान्न स्वधाशर्मेवर्मेति पितृनाम नवोच्चरेत्॥ न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः ॥ न तिलैर्नापसव्येन पित्र्यमंत्रविवर्जितं ॥ अस्मच्छब्दं न कुर्वीत श्राद्धे नांदीमुखे क्वचिदिति पुराणसमुच्चयात् ॥ इति ॥

## ॥ अथ नामगोत्रोच्चारणविचारः ॥

अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणामिति संग्रहवाक्याचशर्मवर्मास्मच्छब्दगोत्रनाम्नामुच्चारणं नेच्छन्ति ॥ तन्न ॥ नांदीश्राद्धं प्रकुर्व्य गोत्रनामभिरामंत्र्य पितृनर्घं प्रदापयेदिति छंदोगपरिशिष्टे कात्यायनेन चोदकप्राप्तस्यापि गोत्राद्युच्चारणस्य

गोत्रनामभिरित्यनेन पुनर्विधानात् ॥ नामानि तु शर्मादिशब्दान्तानि ॥ यस्तु शर्मादिशब्दोच्चारणनिषेधः सो प्रवृत्त्यानुवादः ॥ नाम्नो निषेधेन शर्मादिशब्दोच्चारणस्यापि निषेधसिद्धेः ॥ न चेदमर्घ्यदानमात्रविषयं ॥ स्थालीपुलाकन्यायेनैकत्र दृष्टस्यापि सर्वविषयकत्वात् ॥ अत एव मदनरत्ने दानकांडे जलाशयोत्सर्गकांडे ढोढूमिश्रपद्धतौ चाभ्युदयिके सर्वत्र गोत्रशर्मशब्दनाम्नामुच्चारणं लिखितं ॥ यत्तु शर्मशब्दादिनिषेधकं वचनं तदाश्वलायनादिविषयं ॥ तथा च तत्कारिकायां॥ संबंधनामरूपाणि वर्जयेदत्र कर्मणि ॥ संबंधाद्युच्चारणे क्रमविशेषनियमः श्राद्धकाशिकायां॥ संबंधं प्रथमं ब्रूयान्नामगोत्रमतःपरं॥ रूपं ततो विजानीयादेष धर्मः सनातन इति ॥ तत्रैव मृतनामसमुच्चार्य तस्य गोत्रमुदीरयेदिति ॥ तत्रैव बृहस्पतिः ॥ आसने चार्घदाने च पिंडदानेवनेजने ॥ संबंधनामगोत्राणि यथार्हमनुकीर्त्तयेदिति॥ हेमाद्रौ भृगुस्तु संबंधाद्युच्चारणे क्रमविशेषनियममन्यथाह ॥ गोत्रसबंधनामानि पितृकर्मणि कीर्त्तयेदिति ॥ तत्रैव व्यासोऽपि॥ गोत्रसंबंधनामानि पितृणामनुकीर्त्तयन् ॥ एकैकस्य तु विप्रस्य अर्घपात्रे विनिःक्षिपेदिति ॥ अतः संबंधाद्युच्चारणे क्रमविशेषनियमे विकल्पः ॥ तत्रापि गोत्रनामस्वधाकारैस्तर्पयेदनुपूर्वश इति हेमाद्रौ योगियाज्ञवल्क्योक्तेस्तस्य च वाजसनेयिगुरुत्वाद्वाजसनेयिभिर्योगियाज्ञवल्क्योक्तक्रमानुसारी भृग्वाद्युक्तक्रम एव गोत्राद्युच्चारणे समाश्रयणीयः ॥ अत्रैतच्चिन्त्यते ॥ इह किं वस्वादिप्रयोगः कर्तव्य नेति ॥ शेषं पार्वणवदित्यतिदेशेन प्राप्तत्वात्कर्त्तव्य इति केचिदाहुः॥ तन्नेत्याह श्राद्धकाशिकाकृत् ॥ पितृणामप्यत्र देवस्वरूपत्वात् ॥ तथा च स्मृतिः ॥ पितृणां रूपमास्थाय देवा अन्नमदन्ति ते ॥ तस्मात्सव्येन दातव्यमृद्धिपूर्तेषु दातृभिरिति ॥ नांदीमुखेति प्रयोगस्य तत्प्रतिनिधित्वाच्च ॥ तथा चोक्तं हेमाद्रौ विष्णुधर्मोत्तरे ॥ वृद्धौ समर्चयेद्विद्वान्नित्यं नांदीमुखान्पितॄन् ॥ संपादितो विशेषस्तु शेषं पार्वणवद्भवेदिति ॥ चतुर्विंशतिमतेपि तत्र नांदीमुख इति विशेषः समुदाहृत इति ॥ पितृणां नांदीमुखसंज्ञकत्वमित्येषो विशेषः संपादितो नान्य इत्यर्थः ॥ अत एवाश्वलायनगृह्यकारिकायां रूपोच्चारणवर्ज्यमुक्तं ॥ संबंधनामरूपाणि वर्जयेदत्र कर्मणीति ॥ संग्रहेपि ॥ अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणामिति ॥ एवं च सति रूपं ततो विजानीयादित्युक्तेर्नांदीमुखेति प्रयोगस्य वस्वादिप्रयोगप्रतिनिधिरूपत्वेन तत्स्थानापन्नत्वाच्चान्त एव नांदीमुखशब्दोच्चारणं प्राप्नोति तथापि नांदीमुखान् पितॄनावाहयिष्य इत्यादौ नांदीमुखेति शब्दस्य पितृशब्दात्पूर्वं समाम्नातत्वात्सर्वत्र नांदीमुखशब्दः पितृशब्दात्प्राक् प्रयोज्यः ॥ अत एवाह हेमाद्रिः॥ एवं यत्र यत्र पितृपदप्रयोगस्तत्र तत्र नांदीमुखपदं पूर्वं प्रयोज्यमिति

“अत्र मातृपर्वणानुष्ठानपक्षे”—ङीषन्तो नांदीमुखशब्दो मातृविशेषणमिति हेमाद्रिमदनरत्नादयो निबंधाः ॥ वाजसनेयिभिर्ढोंढूमिश्रादिभिः कृताः पद्धतयश्च ॥ टाबन्तो नांदीमुखशब्दो मातृविशेषणमिति स्मृतिकौस्तुभादय आश्वलायनशाखिकृतनिबंधाः पद्धतयश्च ॥ अयमुभयविधोपि नांदीमुखशब्दप्रयोगः साधुरेव ॥ मात्रादिष्वपि नांदीमुखशब्द संकेतस्थानादित्वेन विश्वेषां देवानामित्यादाविव संज्ञात्वाभावात्संज्ञायाश्चाधुनिकसंकेतात्मकत्वेनोक्तत्वान्न स्वमुखात्संज्ञायामिति निषेधाप्रवृत्तेः स्वांगाच्चोपसर्जनादसंयोगोपधादिति वैकल्पिको ङीष् भवत्येव ॥ न च पुंयोगादाख्यायामिति नित्य एव ङीषस्त्विति शंक्यं ॥ नांदीमुखशब्दस्य दिव्यपितृषु ऊर्ध्ववक्त्रास्तु ये तत्र ते नांदीमुखसंज्ञिता इति हेमाद्र्युदाहृतवाराहवचनवज्जनकादिषु शक्तिग्राहकवचनाभावेन पितृशब्दपरतंत्रत्वात् ॥ मातरश्च पितरश्च इत्येकशेषेण नांदीमुखत्वरूपेण शक्त्यैवबोधकत्वात्पुंवाचकस्य शब्दस्य प्रयोगात् स्त्रियां प्रवृत्तौ विधीयमानस्य ङीषोत्रासंभावित्वात् ॥ अन्यथा प्रथमोपस्थितपित्रादिभिरेव विधिनैराकांक्ष्ये पश्चादुपस्थितमातॄणां तत्रान्वयासंभवान्मातृश्राद्धं तु पूर्वं स्यादित्यादीनां वैयर्थ्यापत्तेः ॥ प्रपितामहीपर्यन्ता नांदीमुख्यश्च मातर इति ॥ अथ नांदीमुखीभ्यश्च मातृभ्यः श्राद्धमुत्तममिति हेमाद्र्युदाहृतब्रह्मपुराणे नांदीमुखीभ्य इति निर्देशः ॥ मातृपितामहीप्रपितामह्यः नांदीमुखा इति पद्धतिकाराणां निर्देशश्च संगच्छत इत्यास्तां प्रासंगिकं ॥ युग्मानाशयेदत्र॥ अत्राभ्युदयिके युग्मान् बहुवचनोपदेशाच्चतुरादीन् ब्राह्मणानाशयेद्भोजयेदित्यर्थः ॥ अत्राह काशिकाकृत् ॥ अस्य दैविकत्वाद्दैवे युग्मान्यथा शक्तीति परिभाषयैव युग्मत्वप्राप्तौ विशिष्टविध्यर्थं युग्मग्रहणं ॥ तेन पित्र्ये युग्मानेव प्रातर्निमंत्र्याशयेदित्यर्थः ॥ तथा च छंदोगपरिशिष्टे कात्यायनः ॥ प्रातरामंत्रितान्विप्रान्युग्मानुभयतस्तथेति आशयेदित्यपि विशिष्टविध्यर्थं ॥ तृप्तप्रश्नेनैव भोजनोपलब्धेः ॥ अतश्च गुडशर्करादिना मधुरान्नं भोजयेदिति विशिष्टविधिरित्यर्थः ॥ अत्र विशेषः परिवेषणे प्राक् निरूपितः ॥ अत्र च पाद्यार्घगंधादिदानान्नादिदानेषु उच्चारणीयवाक्यानि तु हेमाद्रौ ब्रह्मपुराणे दर्शितानि ॥ इदं वः पाद्यमर्घं च पुष्पधूपविलेपनं ॥ अयं दीपप्रकाशश्च विश्वेदेवाः समर्प्यते ॥ तथा ॥ अयं वो गंध इत्युक्त्वा गंधं दद्यात्सुशोभनं ॥ इदं वः पुष्पमित्युक्त्वा पुष्पाणि च निवेदयेत्॥ अयं वो धूप इत्युक्त्वा तदग्रे तु दहेत्ततः॥ अयं वो दीपइत्युक्त्वा तदग्रे तु दहेत्ततः ॥ अयं वो दीप इत्युक्त्वा दीपं हृद्यं निवेदयेत्॥ अनंगलग्नं सद्वस्त्रं भवेद्यत्तयुगं शुभं ॥ इदं वो वस्त्रमित्युक्त्वा त्रितयं वा निवेदयेत् ॥ इदं वो माल्यमित्युक्त्वा दद्यात्माल्यं सुशोभनमिति ॥ माल्यं ग्रथितपुष्पाणि ॥ येत्वस्मादेव वः शब्दनिर्देशाद-

मुकसगोत्राः पितृपितामहप्रपितामहाः एष वो गंधः स्वधेति वाक्यं गंधादिदाने-ष्वाहुर्मदनरत्नादयः ॥ तदयुक्तं ॥ तथा सति अग्नीषोमादिवत् मिलितानां पित्रा-दीनां देवतात्वापत्तेः ॥ नचैवमिष्टं ॥ विष्ण्वादिवचनविरोधात् ॥ यथाह विष्णुः ॥ नमो विश्वेभ्यो देवेभ्य इत्येवमादौ प्राङ्मुखयोर्निवेद्य पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेष्विति ॥ अत्र पित्रादेरेकैकस्य संप्रदानत्वमवगम्यते ॥ ब्रह्मपुराणेपि ॥ ततो मधुघृताक्तं तु सोष्णमन्नं तिलान्वितं ॥ गृहीत्वा देवतीर्थेन प्रणवेनैव तत्पुनः ॥ एतद्वो अन्नमित्युक्त्वा विश्वान्देवांश्च संयजेत् ॥ पितृभ्यश्च ततो दद्यादन्नमामंत्रणेन तु ॥ अमुकामुकगोत्रतत्तुभ्यमन्नं स्वधा नम इति॥ यत्रं च पि-त्रादीनां प्रत्येकं देवतात्वे सिद्धे अमावास्यायां पितृभ्यो दद्यादिति बहुवचनं गर्गा भोज्यन्तामितिवदुपपादनीयं ॥ तेनैतादृशं वाक्यमुच्चारणीयं ॥ अमुकसगोत्र पि-तरमुकशर्मन् अमुकगोत्रपितामहारमुकशर्मन् अमुकगोत्रप्रपितामहारमुकशर्मन् इ-त्युक्त्वा एतद्वः पाद्यं एषवोर्घः एतद्वः आसनं एषवो गंधः एतद्वः पुष्पं एषवो धूपः एषवो दीपः एतद्वो वस्त्रं इदमन्नं स्वाहेति ॥ एवमावाहनेपि पितृनिति पदं द्वितीया-बहुवचनान्तमुच्चार्यावाहयिष्य इति प्रयोगो बोध्यः ॥ अत्र युग्मानिति बहुवचनो-पदेशात्पित्रादि षण्णां श्राद्धेषु प्रतिपुरुषं चतुः प्रभृति यथाशक्ति युग्मान् ब्राह्मणा-नामंत्रयेत् ॥ अस्मिन्पक्षे वैश्वदेवे तंत्रपक्षो नेति कर्कोपाध्यायाः ॥ एतदसंभवे द्वौ द्वौ ब्राह्मणौ दैवे पित्र्ये च सर्वत्रामंत्रयेत् ॥ एवं षोडशब्राह्मणाः ॥ तंत्रं वा वैश्व-देविकं ॥ यावेव पितृभ्यो विश्वदेविकौ ब्राह्मणौ मातामहेभ्योपि तावेवेत्यर्थः ॥ एवं चतुर्दश ॥ एतस्याप्यसंभवे द्वौ पित्रादिश्राद्धे ॥ द्वौच मातामहादिश्राद्धे ॥ वैश्वदेविके च द्वौ द्वौ ॥ एवमष्टौ ॥ यत्तु हेमाद्रौ छागलेयेन एकैकस्य तु वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत् ॥ वैश्वदेवे तथा द्वौच न प्रसज्येत विस्तर इत्युक्तं ॥ यच्च तत्रैव भविष्ये ॥ पूर्वान्हे भोजयेद्विप्रानष्टौ सर्वं प्रदक्षिणमित्युक्तं तदुभयमपि वैश्वदेविकतंत्रपक्षे पार्वण-त्रयपरं ॥ वैश्वदेविकतंत्रपक्षे षट्॥ तदसंभवे पित्रादिश्राद्धे मातामहादिश्राद्धे च द्वावेव ब्राह्मणौ ॥ यावेव पितृभ्यस्तावेव मातामहेभ्य इत्यर्थः ॥ वैश्वदेवेतु तंत्रतैव ॥ एवं चत्वारः ॥ एतस्याप्यसंभवे द्वौ पितृमातार्थे ॥ वैश्वदेविकस्थानेत्वग्निः स्थापनीयः ॥ तथा चोक्तं हेमाद्रौ ब्रह्मांडपुराणे॥ एक एव यदा विप्रो द्वितीयो नोपपद्यते ॥ पितृ-णां ब्राह्मणो योज्यो दैवेत्वग्निं नियोजयेदिति ॥ अत्राग्निर्लौकिको न गृह्याग्निः ॥ विषये लौकिकप्रयुक्तत्वादिति कात्यायनसूत्रात्॥इदं च वैश्वदेविकस्थानेऽग्निनियो-जनं साग्निकविषयं ॥ तदाह निर्णयसिंधौ प्रचेताः॥ एकस्मिन् ब्राह्मणे दैवे साग्ने-रग्निर्भवेत् सदा ॥ अनग्नेः कुशमुष्टिः स्याच्छ्राद्धकर्मणि सर्वत इति ॥ हेमाद्रौ शंखेन

तु वैश्वदेविकस्थाने नैवेद्यमुक्तं ॥ भोजयेदथवाप्येकं ब्राह्मणं पंक्तिपावनं ॥ दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेदिति ॥ तस्य पित्र्यद्विजस्य स्थाने ॥ अत्रैकस्मिन् ब्राह्मणेऽनेकेषां पितॄणां तृप्तिप्रकार उक्तो हेमाद्रौ प्रभासखंडदेवलस्मृत्योः ॥ पिता भुंक्ते द्विजकरे मुखे भुंक्ते पितामहः॥ प्रपितामहस्तु तालुस्थाः कंठे मातामहः स्मृतः॥ प्रमातामहस्तु हृदये वृद्धो नाभौ तु संस्थित इति ॥ वृद्धो वृद्धप्रमातामहः ॥ एक एव यदा विप्र इति ब्रह्मांडपुराणादिवाक्ये यदुक्तं तदर्शश्राद्धादिविषयं ॥ तत्र ह्ययुग्मता विधानात् ॥ इह तु युग्मानाशयेदिति वचनाद् द्वाविति बोध्यं ॥ एवं द्वौ ॥ सर्वथा ब्राह्मणालाभे आह हेमाद्रौ देवलः ॥ निधाय वा दर्भवटून् आसनेषु समाहितः ॥ प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेदिति ॥ बटुर्लघुमनुष्यप्रतिकृतिः ॥ वटवस्तु कुशाग्रभागस्य मुखपरिकल्पनेन दैवे प्राङ्मुखाः पित्र्ये चोदङ्मुखाः स्थापनीयाः ॥ यतः प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च ॥ दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैरिति हेमाद्रौ देवलस्मृतिकूर्मपुराणयोर्वाक्ये प्राङ्मुखत्वस्य दक्षिणमुखत्वस्य चतुर्षी पीठादिषु मुखस्थानीयकल्पिताग्रभागाभिप्रायेण प्रयुक्तत्वादत्रापि तथैव मुखं परिकल्पनीयं शिष्टाचारोप्येवं ॥ प्रैषानुप्रैषाभ्यां संयुक्तं विधानं श्राद्धेति कर्त्तव्यताकांडं स्वयमेव प्रतिपादयेदित्यर्थः ॥ अस्मिन्पक्षे निमंत्रणादयो धर्माः सर्वेपि कुशबटावेव ब्राह्मणशब्दव्यवहारात्कार्यः ॥ यथा कुंडपाय्याग्निहोत्रेऽग्निहोत्रधर्माः ॥ तथा च समुद्रकरघृतभविष्यवचनं ॥ ब्राह्मणानामसंपत्तौ कृत्वा दर्भमयान् द्विजानिति ॥ गौडनिबंधे तु तदभावे कुशमयं स्नापयित्वा निमंत्रयेदिति कुशबटोर्वाचनिकमेव निमंत्रणमुक्तं ॥ अत्र द्राक्षामलकार्द्रकमूलयवनिष्क्रयिणी दक्षिणा देया ॥ तदुक्तं ब्रह्मपुराणे ॥ द्राक्षामलकमूलानि यवांश्च विनिवेदयेत्॥ तान्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदेति ॥ मूलमार्द्रकमूलं ॥ इति श्रीमद् द्विवेदी परशुरामात्मजजगन्नाथशर्मणा संशोधिते श्रीरुद्रकल्पद्रुमे आभ्युदयिकनिरूपणंसमाप्तम्॥

## ॥ अथ वैश्वदेवकालविचारः ॥

अस्य चाहिताग्निना न श्राद्धमध्ये श्राद्धान्ते वानुष्ठानं कार्यं ॥ किंत्वकृत एव श्राध्दे ॥ यतः श्राद्धात्पूर्वं पिंडपितृयज्ञो विहितस्तस्मादपि पूर्वं वैश्वदेवः ॥ तथा च हेमाद्रौ देवलः ॥ अकृते वैश्वदेवे तु ( वैश्वदेवं पुरा कृत्वा नित्ये चाभ्युदये तथा ॥ स्वाभीष्टदेवताद्भ्यो नैवेद्यं विनिवेदयेत् ॥ अकृत्वा वैश्वदेवं तु नैवेद्यं यो निवेदयेत् ॥ तदन्नं च न गृह्णन्ति देवा विप्स्वादयो ध्रुवमित्याश्वलायनस्मृतेः ॥ स एष देवयज्ञोऽहरहर्गोदानसंमितः सर्वाभीष्टप्रदस्वर्ग्योपवर्गश्च तस्मादेनमहरहः कुर्वीत तमेतं

वैश्वदेवहुतशेषेण पृथगन्नेन वा कुर्यान्नास्य शेषेण वैश्वदेवं कुर्यादिति गृह्यपरिशिष्टाच्च देवनैवेद्यदर्शनात्पूर्वं कार्यः ॥ स एष देवयज्ञः ॥ आवाहनादि नैवेद्यान्तः ॥ पंचाननपूजारूपो देवयज्ञ इत्यर्थः ॥ यत्तु विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरं ॥ पितृभ्यश्चापि तद्देयं तदनन्त्याय कल्पत इति स्कंदवचनं तद्विजीतत्वान्नादरणीयमथवा केवलवैष्णवपरं ॥ विजीतत्वं नाम देवतान्तराय दत्तस्य देवतान्तराय त्यागोपयोग्यत्वं ) स्थालीपाकाः प्रकीर्तिताः ॥ अन्यत्र पितृयज्ञात्तु सोपरान्हे विधीयत इति॥ अत्र स्थालीपाकसाध्यानि कर्माणि स्थालीपाकशब्देनोच्यन्ते ॥ तानि च पिंडपितृयज्ञादन्यान्यकृते वैं एव वैश्वदेवे क्रियन्ते॥ पिंडपितृयज्ञस्तु कृते वैश्वदेवे पश्चादपरान्हे क्रियते ॥ पिंडपितृयज्ञश्च श्राद्धात्पूर्वमुक्तो मनुना ॥ पितृयज्ञं तु निर्वर्त्य विप्रश्चंद्रक्षयेग्निमान् ॥ पिंडान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकमिति ॥ अमुमेवार्थं स्पष्टमाह हेमाद्रौ लौगाक्षिः पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ॥ पिंडयज्ञं ततः कुर्याच्चतोन्वाहार्यकं बुध इति ॥ अत्र साग्निकस्त्रेताग्निमान् ॥ पक्षान्तं कर्माग्न्यन्वाधानं ॥ अन्वाहार्यं दर्शश्राद्धं ॥ ननु पक्षान्तपिंडपितृयज्ञयोर्मध्ये विधानादेव वैश्वदेवस्य साग्निककर्तृकत्वावगमात्किमर्थं साग्निकग्रहणं ॥ उच्यते ॥ पक्षादिस्थालीपाकपिंडपितृयज्ञकर्तुर्निरग्निकस्यौपासनाग्नेर्निवृत्त्यर्थं ॥ अतस्तेनापि निरग्निकान्तरवद्वक्ष्यमाणेषु कालेषु वैश्वदेवः कर्त्तव्यः ॥ श्रुतावपि ॥ साग्निकस्यादावेव वैश्वदेवः श्रूयते ॥ नाहुतस्याश्नीयुर्नाहुतं दद्युरिति ॥ साग्निकस्यापि श्राद्धविशेषे पश्चादेव वैश्वदेवः ॥ तथा च परिशिष्टे ॥ संप्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ॥ अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेहनीति ॥ अत्र पार्वणग्रहणमनेकदैवत्योपलक्षणार्थं ॥ ततश्चैकादशाहिकव्यतिरिक्तेषु श्राद्धेषु साग्निकस्य पूर्वमेव वैश्वदेवः एकादशाहिक एव तु पश्चात्कर्त्तव्यः ॥ तदाह हेमाद्रौ शालंकायनः॥ श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः॥ एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयत इति ॥ अनग्निकस्य तु श्राद्धात्पूर्वकाले वैश्वदेवप्रतिषेध उक्तो हेमाद्रौ षड्त्रिंशन्मते ॥ प्रतिवासरिको होमः श्राद्धादौ क्रियते यदि ॥ देवा हव्यं न गृह्णन्ति कव्यं च पितरस्तथेति ॥ तत्रैव गौतमोऽपि ॥ पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ॥ अकृतं तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठत इति॥ ततश्चात्रायं निष्कर्षः ॥ अनग्निकेन श्राद्धोत्तरकालं श्राद्धपाकेनापि वैश्वदेवः कर्त्तव्यः ॥ श्राद्धमध्ये तु न कदाचिच्छ्राद्धपाकेन किन्तु पाकान्तरेणैव ॥ श्राद्धात्पूर्वं तु सर्वथा न कर्त्तव्य एवेति ॥ अत्रानग्निक शब्देन गृह्याग्निमान् गृह्याग्निशून्यश्चेत्येतावुभावपि परिग्राह्यौ हेमाद्रिग्रंथात्तथैव प्रतीतेः ॥ इति ॥

" श्राद्धमध्ये कर्त्तव्यता "—ब्रह्मांडपुराणे ॥ वैश्वदेवाहुतीरग्नाववर्वाक् ब्राह्मणभोजनात् ॥ जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतमिति ॥ अर्वाक् ब्राह्मणभोजनादित्यनेनाग्नौकरणानन्तरं वैश्वदेवाहुतीर्जुहुयादित्युक्तं ॥ श्राद्धं कृत्वा तु भूतयज्ञादिस्मृतमित्यनेन भूतयज्ञादेरेव श्राद्धान्ते कर्त्तव्यतेति कृत्वार्थात् वैश्वदेवाहुत्यनन्तरमेव बलिहरणं कार्यमिति दर्शितमिति स्मृतिचंद्रिकाकारः ॥ अयमेकोऽनग्निकस्य वैश्वदेवकालः ॥ द्वितीयोपि भविष्यपुराणे ॥ पितॄन्संतर्प्य विधिवद्बलिं दत्त्वा विधानतः ॥ वैश्वदेवं ततः कुर्यात्पश्चाद् ब्राह्मणवाचनमिति ॥ बलिशब्दोऽपि तत्रैव व्याख्यातः ॥ ये अग्निदग्धा मंत्रेण भूमौ यं निक्षिपेद्बुधः ॥ जानीहि तं बलिं वीर श्राद्धकर्मणि सर्वदेति ॥ अनेन विकिरसंज्ञकबलिप्रदानानन्तरं स्वस्तिवाचनात्प्राक् वैश्वदेवं कुर्यादिति द्वितीयः ॥ तृतीयोपि मन्वादिभिरुक्तः ॥ उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ॥ ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थित इति ॥ अत्राहि श्राद्धोत्तरकालं गृहबलिर्विहितःसच वैश्वदेवाख्यकर्मैकदेशः ॥ अतो वैश्वदेवएवायं श्राद्धोत्तरकालमुक्तो भवति ॥ बलिशब्दस्य प्रदर्शनार्थत्वात् ॥ मत्स्यपुराणेऽपि ॥ उच्छेषणं तु तत्तिष्ठेत्तावद्विप्रा विसर्जिताः ॥ वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणीति ॥ भविष्यत्पुराणे ॥ कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसृज्य च ॥ वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिपेति ॥स्मृत्यन्तरे ॥ यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः ॥ वैश्वदेवं ततः कुर्यान्निवृत्ते पितृकर्मणीति ॥ पैठिनसीरपि ॥ श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ॥ कुर्याद्भिक्षां ततो दद्याद्धंतकारादिकं तथेति॥ तदेवमनग्निककर्तृकवैश्वदेवादेस्त्रयः कालाः ॥ अग्नौकरणानन्तरमेकः ॥ अन्यो विकिरादुपरि ॥ तृतीयो ब्राह्मणविसर्जनात्पश्चादिति ॥ अत एव कालागृह्याग्निमतोऽपि ॥ तस्याप्यनग्निकशब्देन ग्रहणादिति हेमाद्र्यादयः ॥ कर्कोपाध्यायास्तु गृह्याग्निमतः श्राद्धात्पूर्वं वैश्वदेवस्ततो वैश्वदेवार्थेनैव पाकेन श्राद्धमित्यूक्तः ॥ एवं वैश्वदेवे कालत्रयमभिधायाशार्केण शांखायनपरिशिष्टमुदाहृत्येत्थं व्यवस्थाभिहिता ॥ आदौ वृद्धौ क्षये चान्ते दर्शे मध्ये महालये ॥ एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयत इति ॥ अतो निरग्निनाप्याभ्युदयिकश्राद्धमपि वैश्वदेवानुष्ठानपूर्वकं कार्यं ॥ यत्तु अकृते वैश्वदेवे तु स्थालीपाकाः प्रकीर्त्तिता इति देवलवचनं तद्द्वितीयादिप्रयोगविषयं ॥ तत्र हि वृद्धिश्राद्धाभावेन वैश्वदेवपूर्वकतायाः प्रसक्त्यभावात् ॥ रेणुकारिकायामपि ॥ निर्णेजनान्तं निर्वर्त्य ( पंचमहायज्ञेनैव हंतकारसिद्धौ श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथेति पैठीनस्युक्तौ हंतकारस्य पृथगुपादानसामर्थ्याद्धंतकारातिरिक्तं निर्णेजनान्तं

वैश्वदेवमनुष्ठेयं ॥ अतो रेणुकोक्तिरपि संगच्छते ) वैश्वदेवं द्विजो ततः ॥ श्राद्धं करिष्ये संकल्प्य तत्कृत्वा पूर्ववत्स्थितः ॥ असून्नियम्य संयुक्तः पत्न्या संकल्पमुचरेत् ॥ स्थालीपाके निवृत्ते तु द्वितीयादौ भवेदिदमिति ॥ इति वैश्वदेवकालनिर्णयः ॥

## ॥ अथ पाकनिर्णयविचारः ॥

प्रसंगात्पाकनिर्णयोपि क्रियते ॥ किं वैश्वदेवात्पाकाच्छ्राद्धमुत श्राद्धार्थः पृथक् पाक इति ॥ तत्र सर्वकर्मार्हस्यान्वहिक पाकस्य हि वैश्वदेवादन्नादिति पारस्करेण सर्वार्थत्वोक्तेः ॥ ( विश्वे सर्वे देवता यस्येति व्युत्पत्त्या सर्वार्थत्वोक्तिः ) श्राद्धार्थं पृथक् पाकस्य च वचनाभावाद्वैश्वदेवार्थेनैव पाकेन श्राद्धमिति कर्कोपाध्यायादयः ॥ आन्वहिकस्य हि पाकस्य सर्वार्थत्वेप्यन्वहमनुष्ठीयमानकर्ममात्रार्थत्वावधारणात्पाकांतराभिधानाच्च श्राद्धार्थः पृथक् पाक इति हेमाद्र्यादयः ॥ यत आह लौगाक्षिः ॥ पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ॥ वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकमिति ॥ अत्र यद्यपि पूर्वार्द्धे एकमेव पाकमुभयार्थं निर्वपेदित्यपि प्रतिभाति तथापि उत्तरार्द्धे पाकभेदः स्फुटीक्रियते ॥ वैश्वदेवं न पित्रर्थमिति ॥ वैश्वदेवार्थं नित्यहोमार्थं पक्वमन्नं वैश्वदेवं तन्न पित्रर्थं ॥ अन्वहमनुष्ठीयमानानां देवभूतपितृमनुष्योपपादानां यज्ञानामेकपाकसाध्यत्वनिश्चयाद्दर्शश्राद्धार्थं न भवति ॥ दर्शश्राद्धार्थं पक्वमन्नं दार्शं ॥ तद्वैश्वदेवार्थमपि न भवति ॥ दर्शशब्देन चात्र दर्शश्राद्धेति कर्त्तव्यतावत्त्वात्सर्वाणि विकृतिश्राद्धानि लक्ष्यन्ते ॥ वैश्वदेवशब्देन भूतयज्ञ पितृयज्ञ मनुष्ययज्ञा अप्युपलक्ष्यन्ते ॥ अत्र न दार्शं वैश्वदेविकमिति यल्लौगाक्षिवचनैकदेशेनोक्तं तद्वैश्वदेवस्य श्राद्धात्पूर्वं मध्ये वानुष्ठाने क्रियमाणे सत्येव वेदितव्यं न तदुत्तरकालं क्रियमाणेपीति ॥ यत आह पैठीनसिः ॥ पितृपाकात्समुद्धृत्य वैश्वदेवं करोति यः ॥ आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठत इति ॥ अत्र हि पितृपाकशब्देन संकल्पितः पितृदैवत्यतयावस्थः पाकोभिधीयते ॥ तदवस्थाचोद्धरणमेकदेशस्य तदवस्थता प्रच्यावनमेव न विभागमात्रं ॥ तदवस्थता प्रच्यावनं च पूर्वदेवतासंबंधापनयने सत्येवोपपद्यते ॥ अतः पितृरूपदेवताभ्योऽपनय एवायमुद्धर्तिना प्रतिपद्यते ॥ श्राद्धोत्तरकालं तु श्राद्धार्थस्यापि वैश्वदेवे विनियोग उक्त एव पैठीनसिना ॥ श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः कुर्याद्भिक्षां ततो दद्याद्धंतकारादिकं तथेति ॥ अत्राद्येन ततः शब्देन पूर्वश्लोकार्थो हेतुत्वेनोच्यते ॥ द्वितीयेन तु श्राद्धावशिष्टादन्नादित्युच्यते ॥ तेनायमर्थः ॥ यतः श्राद्धात्पूर्वं पितृपाकात्समुद्धृतेनान्नेन वैश्वदेवे क्रियमाणे श्राद्धमासुरं स्यात्ततः कारणात् श्राद्धं निर्वर्त्य ततस्तच्छ्राद्धावशिष्टादन्नात्किंचिदादाय वैश्वदेवादिकं कुर्यादित्यर्थः ॥ अत्रादिशब्देन

सर्वेऽन्नसाध्यं नैत्यकं कर्म गृह्यते ॥ तेन नित्यश्राद्धमपि दर्शश्राद्धोपयुक्तपाकशेषात्कर्तव्यं॥ तदेवं यदि ब्राह्मणविसर्जनान्ते वैश्वदेवं कुर्यात्तदा श्राद्धार्थेनैव पाकेनेति॥ यदा तु पूर्वोक्तेन प्रकारेण विसर्जनात्प्राचिनकालत्रयान्यतमकाले वैश्वदेवं कुर्यात्तदा पृथक् पाकेनेति ॥ पिंडदानात् प्राक् पाकभेदे स्मृत्यन्यतरं आतुरेभ्यः प्रहीणेभ्यो बालेभ्यो यच्च पच्यते वैश्वदेवं न तत्कुर्याच्छ्राद्धार्थं यच्च पच्यते ॥ तथा ॥ गृह्याग्नि शिशु देवेभ्यो यतये ब्रह्मचारिणे ॥ श्राद्धपाको न दातव्यो यावत्पिंडान्न निर्वपेदिति ॥ प्रचेतसाप्युक्तं गृह्यपाकाद् बलिं कृत्वा निर्वर्त्य पितृयज्ञिकं ॥ ततो निरुप्तमन्नं यत्तेभ्योग्रे तन्निवेदयेदिति ॥ गृह्यकर्मार्थो गृह्यः ॥ बलिरत्र वैश्वदेवः ॥ पितृयज्ञियं सांगं पिंडपितृयज्ञं निर्वर्त्य समाप्य ततस्तदनन्तरं श्राद्धार्थं निरुप्तं यदन्नं तत्तेभ्यः श्राद्धोद्देश्येभ्योग्रे पूर्वं निवेदयेद्द्यात् ॥ अर्थादुत्तरकालमन्येभ्योपि दद्यात्॥

## ॥ अथ साग्निकस्य पाकाग्निनिर्णयः ॥

अयं पाकस्तु गृह्याग्नौ कार्यः ॥ चत्वारः पाकयज्ञा इति सूत्रे पच्यतेऽन्वहमन्ने नैत्यस्मिन्निति वा पाक इत्यन्वर्थसंज्ञया पाकस्य गृह्याग्नौ कर्त्तव्यताप्रतीतेः ॥ वैवाह्यिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ॥ पंचयज्ञविधानं च पक्तिं चान्वाहिकीं गृहीति मनूक्तेश्च ॥ गृह्यकारैरुक्तं कर्म गृह्यं ॥ विवाहोत्तरकालं क्रियमाणत्वेन गृह्याग्नेर्विवाहसंबंधाद्वैवाहिकत्वं न पुनर्विवाहहोमाधिकरणत्वेन ॥ विवाहहोमस्य भार्यात्वसिद्ध्यर्थत्वेनाग्निसिद्ध्यर्थभावात् ॥ अत एव भगवता पारस्कराचार्येणावसथ्याधानं दारकाले इत्यादिनौपासनाग्निसिद्ध्ये आवसथ्याधानं पृथक् समाम्नातं ॥ यद्यपि पक्तिं चान्वाहिकीं गृहीति मनुनाऽन्वाहिक एव पाको गृह्याग्नावुक्तस्तथापि पाकत्वाविशेषात् श्राद्धस्य पाकयज्ञत्वाच्च श्राद्धार्थपाकोप्यत्रैव कार्यः ॥ अत एव शावजननाशौचयोर्वैश्वदेवाभावेप्यत्रैवावश्यमहरहः पाकः कर्त्तव्यः ( सूतके समनुप्राप्ते मध्ये पर्वसमागते ॥ सूतकेपि च कर्तव्यं वैश्वदेवं च साग्निकैः ॥ अकृत्वा वैश्वदेवं तु पितृयज्ञं समारभेत् ॥ वृथा भवति तत्सर्वमिति कात्यायनोऽब्रवीत् तदाह यज्ञपार्श्वे कात्यायनः ॥ पचनाग्नौ पचेदन्नं सूतके मृतकेपि वा ॥ अपचेन्नेकरात्रेण पुनराधानमर्हतीति ॥ पाकश्च गृह्याग्नेरेकदेशं ॥ महानसे कृत्वा कार्यः ॥ तदुक्तं चतुर्विंशतिमते ॥ प्रातर्होमं तु निर्वर्त्य समुध्धृत्य हुताशनात् ॥ शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ॥ तमग्निं पुनराहृत्य शालाग्नावेव निक्षिपेत् ॥ ततोस्मिन् वैश्वदेवादि कर्म कुर्यादतंद्रित इति ॥ शेष अग्न्येकदेशः ॥ शांखायनकारिकायामपि ॥ नित्यपाकस्य शालाग्नेरेकदेशस्य कार्यतः ॥ पाकार्थमुल्मूकं हृत्वा तत्र पक्त्वा महानसे॥ वैश्वदेवोऽध्यगारे स्यात्पाकार्थः सोप्यलौकिकः॥

भूरिपाको भवेद्यत्र श्राद्धादावुत्सवेषु च। कृतेपि वैश्वदेवे स लौकिको नैव कार्यतः॥ होमेनान्तरितं केचिदाहुः सर्वत्र लौकिकं ॥ न तत्समंजसं तेषामुपयद्धोमदर्शनात् ॥ समासं चोल्मुकस्याहुरग्न्यगारे महानसात् ॥ पाकान्ते वैश्वदेवात् प्राकू नैतदप्युपपद्यते ॥ आहृतेप्युल्मुके पाकः शामित्रं दृश्यते पशौ ॥ वचनादाहृतिः सातु लौकिकस्त्वपवर्गतः ॥ धूपको दीपकश्चैव तापार्थो यश्च नीयते ॥ सर्वे ते लौकिका ज्ञेयास्तावन्मात्रापवर्गत इति ॥ समासे कृते महानसेऽवशिष्टादग्नेर्धूपाद्यर्थं नीतानामग्नीनां लौकिकत्वमित्यर्थः ॥ प्रवासे तु विशेषः ॥ नित्यपाकस्यावसथ्याग्नौ विहितस्याभावात्स्वगृह एव ब्रह्मयज्ञवर्जितादेव यज्ञादयश्चत्वारो यज्ञाः ॥ पत्न्या ऋत्विगादिद्वारा कारणीयाः पाकयज्ञत्वेन तेषां गृह्याग्निसाध्यत्वाच्च ॥ न स्त्री जुहुयान्नानुपनीत इति निषेधात् पत्नी न स्वयं जुहोति ॥ अयं निषेधस्तु ऋत्विगादिसन्निधावेव प्रवर्तते ॥ तदसन्निधौ तु पत्न्यपि स्वयं देवयज्ञादि करोति ॥ नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतं ॥ पुत्रो भ्राताथवा पत्नी शिष्यो वास्य बलिं हरेदिति शांखायनगृह्ये ॥ प्रोषिते वाप्यशक्ते वा स्वामिन्यनधिकारिणि ॥ पुत्रो भ्राताथवा पत्नी शिष्यो वा जुहुयादिति रेणुकारिकायां च देवयज्ञादिषु चतुर्षु यज्ञेषु पत्नीकर्तृकत्वस्याप्युक्तत्वात् ॥ निरग्नेस्तु स्वकर्तृका एव पंचमहायज्ञाः ॥ यत्तु वचनं यदि कुर्वीत प्रवसन्नग्निमान् द्विजः॥ समारोपे कृते वाग्नेर्वैश्वदेवं तु लौकिके इति ॥ मदनपारिजाते परिशिष्टेपि ॥ प्रविशेदग्निकश्चेत् कदाचित् कालविपर्ययात् ॥ यस्मिन्नग्नौ भवेत्पाको वैश्वदेवस्तु तत्र वै इत्यादि वचनबलाद्वैश्वदेवः प्रवासेपि साग्निना कार्य इत्युक्तं तद्यस्यां शाखायां पंचमहायज्ञेभ्यो वैश्वदेवबलिहरणयोः पृथग्विधिरस्ति तच्छाखिकर्तृकवैश्वदेवविषयं ॥ वाजसनेयिनां तु अथातः पंचमहायज्ञा इत्यादिनापारस्कराचार्यैः पंचमहायज्ञमात्रविधानेन वैश्वदेवबलिहरणयोः पृथग् विध्यभावात्पंचमहायज्ञेष्वेवास्माकं वैश्वदेवव्यवहारात् ॥ येषामपि वैश्वदेवबलिहरणयोः पृथग्विधिरस्ति तेषामपि पंचमहायज्ञानुष्ठानं पंचगृह एवोक्तं ॥ यच्च यज्ञविधानं च गृहे यस्य न जायते ॥ पत्नीसंनिहिते ह्यग्नौ कथं कार्यं प्रवासिना ॥ गृह्योक्तेन विधानेन दैवभौतनृपैतृकान् ॥ तथा ब्राह्ममहामेधान् प्रोषितो लौकिके चरेदित्युक्तं तद्यस्यां शाखायां पत्नीसंनिहिते गृह्येऽग्नौ पंचमहायज्ञानुष्ठानं विहितं नास्ति तच्छाखिकर्तृकदेवयज्ञादिविषयं ॥ पंचयज्ञविधानं च गृहे यस्य न जायते ॥ पत्नी सन्निहिते ह्यग्नावित्युक्तत्वात् ॥ अस्माकं पारस्करगृह्यसूत्रानुसारिणां वाजसनेयिनां तु न प्रवासे ब्रह्मयज्ञवर्जितादेवयज्ञादयश्चत्वारो यज्ञा भवन्ति ॥ चत्वारः पाकयज्ञाहुतो हुतः प्रहुतः प्राशित इति सूत्रे देवयज्ञादीनां चतुर्णां यज्ञानां पाकयज्ञ-

त्वाभिधानात् ॥ नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतं ॥ पुत्रो भ्राताथवा पत्नी शिष्यो वास्य बलिं हरेदिति

शांखायनगृह्ये॥ पंचमहायज्ञान् प्रकृत्य प्रोषिते वाप्यशक्ते वा स्वामिन्यनधिकारिणि ॥ पुत्रो भ्राताथ वा पत्नी शिष्यो वा जुहुयादिति रेणुकारिकायां गृह्याग्नावेव स्वगृहे देवयज्ञादीनां चतुर्णामनुष्ठानस्याभिहितत्वात् ॥ प्रवासकर्मापि प्रकृत्या प्रवासे नैत्यकं कर्म कृत्वा चैव यथाविधि॥ संकल्प्य पूर्ववत्त्यागान् तान्कुर्यात्पंचयज्ञवदिति रेणुकारिकायामौपासनाग्निपरिचर्यायाः पंचमहायज्ञत्यागकर्तव्यतां वदता पंचमहायज्ञानुष्ठानस्य स्वगृहे दर्शितत्वात् ॥ वैश्वदेवबलिहरणयोः पंचमहायज्ञेभ्यः पृथक्त्वेन विध्यभावात्तेष्वेव वैश्वदेवव्यवहारो वाजसनेयिनामित्युक्तत्वाच्च आशार्कभाष्येपि ॥ प्रवासे वैश्वदेव इत्युक्तत्वाच्च ॥ अथातो धर्मजिज्ञासापद्धतौ गर्गोपाध्यायैरपि साग्नेः प्रवासे सति यावत्प्रवासं होम वैश्वदेवयोरभाव इत्युक्तत्वाच्च ॥ अत एव निक्षिप्याग्निं स्वदारेषु परिकल्प्य च ऋत्विजं ॥ प्रवसेत्कार्यवान् विप्रो वृथैव न चिरं क्वचिदिति छंदोगपरिशिष्टे कात्यायनेन प्रवासोपस्थितावग्निसाध्यकर्मणां स्वगृह एवानुष्ठेयत्वेन तदर्थमृत्विक् परिकल्पनमभिहितं ॥ किंच स्वेग्नावेव भवेद्धोमो लौकिके न कदाचन ॥ नह्याहिताग्नेः स्वकर्मलौकिकेऽग्नौ विधियत इति तत्रैव कात्यायनेन लौकिकाग्नौ साग्निकसंबंधि होमोपि प्रतिषिद्धः ॥ तस्मादग्निमतः प्रवासे देवयज्ञादयश्चत्वारो यज्ञा न भवन्ति ॥ किंतु स्वगृह एव गृह्याग्नौ ॥ अत एवोक्तं देवभाष्ये कठसूत्रे ॥ प्रवसन्यदा हुतं मन्येताथ भुंजीत पर्वण्युपोष्य यदा संस्थितं मन्येताथ भुंजीतेति ॥ प्रवासे देवयज्ञाद्यनुष्ठानं चिकीर्षितं चेत्स्यात्तदा प्रवसन्यदा हुतं मन्येतेति नावक्ष्यत ॥ किंतर्हि ॥ प्रवसन् हुत्वा भुंजीतेत्येवमेवावक्ष्यत् ॥ एवमन्वाहार्यं श्राद्धादिकमपि स्वगृह एवानुष्ठेयं ॥ चत्वारः पाकयज्ञा हुतो हुतः प्रहुतः प्राशित इति पारस्करगृह्ये ॥ प्रहुतः पितृकर्मणेति शांखायनगृह्ये च पितृकर्मणः श्राद्धापरपर्यायस्य प्रहुतपाकयज्ञत्वाभिधानात् ॥ अष्टकाः पार्वणः श्राद्धं श्रावण्या ग्रहायणी चैत्र्याश्वयुजी चेति सप्तपाकयज्ञसंस्था इति गौतमस्मृतौ च श्राद्धपाकयज्ञसंस्थासुपरि गणितत्वात् ॥ अमावास्यादि नियतं प्रोषिते सहचारिणी ॥ पत्यौ तु कारयेत् श्राद्धमन्येनापि ऋत्विगादिनेति ब्रह्मपुराणाच्च ॥ आदिशब्देन क्षयाहादिनियतसौत्रश्राद्धग्रहणं ॥ तस्मादग्निमान्प्रवासी स्वगृह एव ऋत्विगादिद्वारा ब्रह्मयज्ञवर्जं पंचमहायज्ञ दर्शश्राद्ध क्षयाहश्राद्धादि कुर्यादिति सिद्धम् ॥ हेमाद्रिपद्धतौ व्यासो विशेषमाह ॥ त्यक्ताग्नेः पार्वणं नैव नैकोद्दिष्टं कदाचन ॥ अत्यक्ताग्नेस्तु पिंडोक्तिस्त्वस्मात्संकल्प्य भोजयेदिति ॥ अत्यक्ता-

ग्निमधिकारिणं प्रत्येव पिंडोक्तिः ॥ श्राद्धोपदेश इत्यर्थः ॥ तेन प्रवासाभावेऽपि पुनराधाने सति गृह्याग्नेः पुनराधानं कृत्वैव श्राद्धं कार्यम् ॥ अन्यथा श्राद्धानधिकारात् पूर्णिमामावास्ययोस्तु साग्नेः पराग्निसिद्धान्नभोजनं निषिद्धमेव ॥ पराग्निपक्वं नाश्नीयात्पर्वणि प्रोषितोग्निमानिति वचनात्॥ दर्शे च पौर्णमासे च पराग्निपक्वभोजने ॥ आधानादिकृतं नश्येच्छ्रौतं स्मार्त्तं तथैव चेति वचनान्तराच्च ॥ अत्रान्येनाहितोग्निः पराग्निशब्देनाभिधीयते ॥ अतो लौकिकाग्निपक्वं न निषिद्धमिति केचित् ॥ अपरे त्वेवमाहुः ॥ स्वाहितात्परस्यैवाग्नेः पराग्निशब्देनाभिधानाल्लौकिकाग्निपक्वमपि निषिद्धमेवेति ॥ एवं च सति पराग्निपक्वनिषेधात्प्रवसत अग्निसान्निध्याभावेन पाकाभावादुपवासे प्राप्ते नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतमिति शांखायनगृह्ये प्रवसन्नोपवसेदिति छंदोग्ये चोपवासनिषेधात्कथं वर्त्तनीयमित्याकांक्षायां प्रवसन्नग्निमान्विप्रः पयोमूलफलादिभिः ॥ कालं नयेदशक्तौ तु विधिना पाकमाचरेदिति वचनेन पयोमूलफलादिभक्ष्यद्रव्यं विधीयते ॥ न च प्रवासे गृह्याग्न्यभावेन पाकाभावात्प्रवसन्नग्निमानिति वाक्ये पर्वपदाश्रवणाच्च पयोमूलादिना कालनयनं सार्वकालिकमिति वाच्यं ॥ तथा सति पराग्निपक्वं नाश्नीयादिति वाक्ये पर्वग्रहणस्य दर्शे च पौर्णमासे चेति वाक्ये दर्शादिग्रहणस्य च वैयर्थ्यापत्तेः ॥ तस्मात्पराग्निपक्वं नाश्नीयादित्ययं निषेधः पर्वण्येव प्रवर्त्तत इति केचिदाहुः ॥ अपरे त्वेवमाहुः ॥ नित्यपाकस्य गृह्याग्निसाध्यत्वात्प्रवासे च गृह्याग्न्यभावेन पाकाभावात्प्रवासे पर्वान्यकालेपि पाकं विनैव पयोमूलादिना कालनयनं कुर्यात् ॥ तदसामर्थ्ये तु पृष्ठोदिवि विधानेन पाकमपि कुर्यात् ॥ तदुक्तं प्रवसन्नग्निमान्विप्रः पयोमूलफलादिभिः ॥ कालं नयेदशक्तौ तु विधिना पाकमाचरेदिति ॥ यत्तु पराग्निपक्वं नाश्नीयादिति वचनं यच्च दर्शे च पौर्णमासे चेति वचनं तदुभयमपि विधिमतिक्रम्यापि ह्यागतः पराग्निपक्वभक्षणे प्रवृत्तं प्रतिदोषाधिक्यज्ञापनार्थमिति ॥ कंदुपक्वं तु न निषिद्धं ॥ शिष्टाचारात् ॥ तथा च त्रिकांडमंडनीयं पठन्ति ॥ इक्षू क्षीर विकारांश्च भ्राष्ट्र भ्रष्टान्यवांस्तथा ॥ फलमूलानि चाश्नीयात्पर्वणि प्रोषिताग्निमान् ॥ ( पर्वण्यप्रोषिताग्निमानिति पाठो वा ) पराग्निपक्वं नाश्नीयाद्विहाय गुडगोरसौ ॥ शाकपिण्याकसूक्त्वादि आमपद्यारफलादिकं ॥ सकृत्पर्वणि सर्पिषमद्धविष्यं लघुभोजनं ॥ न सायं नोपवासश्च सायं शाकास्तथैक्षवमिति ॥ सर्वाधानिनस्त्वौपासनाग्न्यभावाद् गृहेपि लौकिकाग्नावेव पाक इति न तस्य प्रवासे कश्चिद्विशेषः ॥ गृह्याग्नावदृष्टार्थविहितेन पाकेन वैश्वदेवादिदृष्टकार्ये सिद्धे न पुनस्तदर्थं पृथक् पाकाश्रयणं युक्तं ॥ न च दृष्टार्थस्यैव पाकस्य गृह्याग्नौ

नियमः ॥ असति दृष्टकार्ये पाकाभावप्रसंगात् ॥ नचेष्टापत्तिः ॥ पचनाग्नौ पचेदन्नं सूतके मृतकेपि वा ॥ अपचेन्नेकरात्रेण पुनराधानमर्हतीति यज्ञपार्श्वे वैश्वदेवाद्यभावेप्यदृष्टार्थतया पाककर्तव्यताया नियमतत्वात् ॥ यत्तु कश्चिदाह ॥ आशौचे वैश्वदेवानधिकारे तदर्थपाकस्यावसथ्ये विहितस्याभावाद्गृहस्थितेनापि साग्निना फलाहारादिकमेव कार्यमिति ॥ तन्न युक्तं ॥ आशौचे वैश्वदेवानधिकारेपि पचनाग्नौ पचेदन्नमिति यज्ञपार्श्ववचनेन नित्यपाकस्यादृष्टार्थतया विहितस्य पचनाग्नौ कर्तव्यताया नियमितत्वेन पाकसद्भावात् ॥ निरग्नेस्तु स्वात्मार्थं पाकनिषेधाशौचे वैश्वदेवाद्यभावात्तदर्थः पाको न प्राप्नोति ॥ अत एव लब्धक्रीताशना वा स्युरित्युक्तं ॥ एतदसंभवे तु कुटुंबार्थं पाकः करणीयः ॥ तच्छेषं स्वयं भुंजीयात् ॥ कुटुंबासन्निधाने तु फलाहारादिकमेवोचितमिति॥ इति साग्निकस्य पाकाग्निनिर्णयः॥

## ॥ अथ निरग्निकस्य पाकाग्निनिर्णयः ॥

अत्रैतच्चिन्त्यते किमिदं गृह्यसूत्रविहितं वैश्वदेवापरपर्यायं पंचमहायज्ञाख्यं कर्म गृह्याग्निमत एव स्यादुतानग्निमतोपीति ॥ तत्रैके आचारादर्शाचारचिन्तामणिकारादयः ॥ वैश्वदेवं तु कुर्वीत स्वशाखाविहितं तत इति व्यासेन स्वशाखाविहितस्यैव वैश्वदेवस्यानुष्ठेयत्वाभिधानादनग्निकं प्रतिस्वगृह्ये वैश्वदेवान्तरविधेरश्रवणाद्वैश्वदेवाकरणापत्त्या स्वगृह्यविहितमेवानग्निमतोपि वैश्वदेवकर्मेति ॥ यत्तु छंदोगपरिशिष्टे कात्यायनः ॥ अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च ॥ अनाहिताग्नेरप्येष युज्यते बलिभिः सहेति ॥ निरग्नेः प्रकारान्तरमाह तच्छंदोगविषयमिति मन्यन्ते ॥ तदेतद्भर्तृयज्ञगर्गकर्कोपाध्यायादयोऽपरे न क्षमन्ते ॥ गृह्यसूत्रविहितानां देवभूतपितृमनुष्योपपादानां चतुर्णां यज्ञानां पाकयज्ञत्वेन तेषु गृह्याग्निमत एवाधिकारात् ॥ तदुक्तं पारस्करगृह्ये ॥ चत्वारः पाकयज्ञा हुतोहुतः प्रहुतःप्राशित इति पंचसु बहिः शालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥ सेयं सूत्रत्रयी कर्कोपाध्यायादिभिर्व्याख्यातापि सुखेनार्थावबोधार्थं स्पष्टतया व्याख्यायते॥ पच्यतेऽन्नहमनेनेत्यस्मिन्निति वा करणव्युत्पत्त्याधिकरणव्युत्पत्त्या वा पाकः॥ अकर्त्तरि कारके च संज्ञायामिति घञ् ॥ पाकः पचनो गृह्य आवसथ्यो वैवाहिक उपासनः ॥ शाल इत्यनर्थान्तरं ॥ पाके गृह्ये आवसथ्येग्नौ यज्ञाः पाकयज्ञास्ते चत्वारश्चतुर्विधा भवन्तीत्यर्थः ॥ के ते पुनश्चत्वारः पाकयज्ञा इत्यपेक्षायामाह ॥ हुतोऽहुतः प्रहुतः प्राशित इति ॥ हूयत एवाग्नौ यस्मिन्कर्मणि न बलिप्रदानं सहुतः ॥ यथा सायं प्रातः कालीनमौपासनस्य परिचरणं देवयज्ञो पाककर्मादयश्च ॥ शांखायनगृह्येपि ॥ हुतोग्निहोत्रहोमेनेति ॥ अत्राग्निहोत्रशब्देन तत्साधनीभूताग्निसदृश औपासनोग्नि-

लेक्ष्यते ॥ नहि स्मार्त्तेऽग्निहोत्रहोमोऽस्ति ॥ अग्निहोमस्य श्रौतत्वात् ॥ तेनाग्निहोत्रे पाके औपासनाग्नौ यो होमः सोग्निहोत्रहोमस्तेन हुतः पाकयज्ञो भवतीत्यर्थः॥ एतेन देवयज्ञस्य पाकयज्ञत्वमुक्तं ॥ अहुतः ॥ न हूयतेऽग्नौ यस्मिन्कर्मणि सोऽहुतः पाकयज्ञः ॥ यथा भूतयज्ञसर्पबलिस्रस्तरारोहणमणित्रधानानि ॥ शांखायनगृह्येपि ॥ अहुतो बलिकर्मणेति ॥ बलिकर्मण्येत्येतत्स्रस्तरारोहणस्याप्युपलक्षकं ॥ होमाभावात् ॥ एतेन भूतयज्ञस्य पाकयज्ञत्वमुक्तं ॥ प्रहुतः प्रकर्षेण हुतः प्रहुतः॥ यत्र होमो बलिहरणं च॥ प्रकर्षश्च बलिप्रदानाधिक्यात् ॥ यथा पक्षादिश्रवणाकर्मादयः॥ यद्वा हुत एव पक्षादिश्रवणाकर्मादेरन्तर्भावः ॥ हुयते प्रधानतयाग्नौ स हुतः ॥ नचास्मिन्पक्षे बलिसंबंधस्य परिसंख्या ॥ प्रहुतशब्देनत्वनष्टकाकर्मपार्वणश्राद्धादिपित्र्यकर्मोच्यते ॥ प्रहर्षश्च होमपिंडदानभोजनादीतिकर्त्तव्यताविशेषात् ॥ शांखायनगृह्येपि ॥ प्रहुतः पितृकर्मणेति एतेन पितृयज्ञाख्य पित्र्यबलेरन्वाहार्यश्राद्धस्य च पाकयज्ञत्वमुक्तं ॥ अत एव गौतमेन सप्तपाकयज्ञसंस्थासु श्राद्धं परिगणितं ॥ अष्टकाः पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजी चेति सप्तपाकयज्ञसंस्था इति ॥ अत एव श्रीमद्भर्तृयज्ञोपाध्यायैः कर्कोपाध्यायैश्च यत् गृह्याग्निमत एव श्राद्धेऽधिकारो नानग्नेमत इत्यभिहितं ॥ तद्युक्ततरं तेनाग्निमतः प्रवासे श्राद्धं न भवति॥ किन्तु अग्निसन्निधावेव ऋत्विगादिद्वारा पत्न्या कारणीयं॥ इतरपाकयज्ञवदग्निसाध्यत्वात् ॥ प्रपंचितं चैतद्विस्तरतः प्राक् ॥ एवं च सति गृह्योक्तानां विकृतिश्राद्धानां सर्वेषां पार्वणश्राद्धविकृत्वेन प्रहुतपाकयज्ञत्वं सिद्धमेव ॥ तदुक्तं शांखायनगृह्यकारिकायां ॥ पित्र्यं यत्पिंडदानादि कर्म स प्रहुतो मखः ॥ यतो यत्किंचनश्राद्धमात्रपेत्प्रहुते तु तदिति ॥ यद्यपि ॥ नहि प्रहुतसंबंधः प्रेतश्राद्धेषु विद्यते ॥ कृतेषु तेषु शास्त्रेण पितृलोकाप्तिरिष्यत इति शांखायनगृह्यकारिकायां सपिंडीकरणपूर्वभावीना प्रेतश्राद्धानां प्रहुतपाकयज्ञत्वाभाव उक्तः ॥ सपिंडिकरणान्तानि प्रेतश्राद्धानि यानि वै ॥ तानि स्युर्लौकिके वन्हाविति शाट्यायनोऽब्रवीदिति सर्वनिबंधोदाहृतवचनेन प्रेतश्राद्धेषु लौकिकाग्नेर्विनियोगश्चोक्तः ॥ अतो न गृह्याग्निसाध्यानि प्रेतश्राद्धानि ॥ तथापि प्रेते वा गृहपतौ परमेष्ठीकरणमिति छंदो गृह्ये ॥ प्रेते वा गृहपतौ स्वयं ज्यायानिति शांखायनगृह्ये च गृहपतौ प्रेते सति एकादशाहश्राद्धात् प्राक् एकादेशेऽहनि गृह्याग्न्याधानस्य विहितत्वात् गृह्याग्न्याधानपूर्वकैवेतेषु प्रवृत्तिः ॥ यथाह छंदोगपरिशिष्टे कात्यायनः ॥ एतद्गृहपतौ प्रेते कुर्यादेकाशेहनि ॥ प्रागेवैकादशश्राद्धात्सद्योजागरणादिकं ॥ न तत्पूर्वं यतः प्रोक्तः .सपिंडनविधिः क्वचित् ॥ वृद्धिश्राद्धस्य लोपः स्यादुभयोरपि पक्षयोः ॥ श्येष्ठः कुर्यात्तथाधानं कनीयांश्च विवर्जयेत् ॥ सैकादशेन्हि

कुर्वीत द्वादशे वा विचक्षण इति ॥ रेणुकारिकायामपि ॥ एतद्गृहपतौ प्रेते कुर्यादेकादशेहनि ॥ प्रागेवैकादशश्राद्धाद्वृद्धिश्राद्धविवर्जितं ॥ एवं ज्येष्ठः समादध्यात् कनीयांश्च विवर्जयेत् ॥ एकादशेऽह्नि कुर्वीत द्वादशे वा विचक्षण इति ॥ एकादशाहेऽसंभवे द्वादशाहोप्येकादशाहश्राद्धकालत्वेनोक्तः कौर्मे ॥ तेन द्वादशेहन्यपि प्रागेवैकादशश्राद्धादित्यनुसंधेयं ॥ यत्तु यदहर्वा वृद्धिरापद्येतेति कात्यायनगोभिलादिसूत्रं वृद्धिनिमित्तकभूतकर्ममात्रोपस्थितौ सपिंडिकरणापकर्षविधायकं तदावसथ्याधानव्यतिरिक्तोपनयनादिसर्वकर्मविषयं बोध्यं ॥ छंदोगपरिशिष्टस्थकात्यायनवचनस्यान्यथाऽनुपपत्तेः ॥ यत्तु उशनसो वचनं॥ ततः सपिंडिकरणं वार्षिके मृतवत्सरे॥ आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरादिति तच्छ्रौताग्न्याधेयपरं ॥ सपिंडिकरणेतु गृह्योमत एवाधिकारः ॥ पिंडकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवांश्चेदिति गृह्यसूत्रे भर्तृयज्ञकर्कोपाध्यायादिभिर्भाष्यकारैः श्राद्धसूत्रे च कर्कोपाध्यायैस्तथैव निर्णीतत्वात् उक्तं चाभियुक्तैः ॥ सपिंडिकरणं साग्नेरग्निहोमानुरोधतः ॥ निरग्नेर्नाधिकारोस्ति होमाभावात्सपिंडने ॥ होमाधिकरणभूतस्याग्नेरभावेन होमासंभवादिति होमाभावादित्यस्यार्थः ॥ एकोद्दिष्टान्यनग्नेश्च होमाभावाद्भवन्ति हि ॥ उल्मुकस्य विचारो न भाष्यकारैः कृतो मनाक् ॥ लौकिकाग्नेर्निधानं स्यात्किंवा नैवोल्मुको भवेत् ॥ अथोच्यते स्मृतौ प्रोक्तं प्रेतश्राद्धेषु नोल्मुकः॥ तदावसथ्यके चाभ्युदये श्राद्धे भवेत्तु किं ॥ वस्तुतो भाष्यकाराणां मतेऽग्नौ हूयते यदा ॥ तदोल्मुकनिधानं स्यादेवं सर्वसमंजसमिति ॥ यत्तु ॥ आन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणं ॥ काम्यमभ्युदयेष्टम्यामेकोद्दिष्टं तथाष्टमं॥ चतुर्ष्वाद्येषु साग्नीनां वन्हौ होमो विधीयते॥ पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपीति॥ मिताक्षराहेमाद्र्युदाहृताश्वलायनगृह्यपरिशिष्टे साक्षादेकोद्दिष्टेऽग्नौकरणहोमाभावादेकोद्दिष्टशब्देन सपिंडीकरणं लक्ष्यते ॥ तेन साग्निनामपि सपिंडीकरणे विप्रस्य पाणावग्नौकरणहोम इत्युक्तं तच्छाखान्तरविषयमित्युक्तं श्राद्धहेमाद्रौ स्मृतिदर्पणे च ॥

"केचित्तु निरग्नेरपि सपिंडीकरणेऽस्त्येवाधिकारः"—सपिंडीकरणान्तानि प्रेतश्राद्धानि यानि वै ॥ तानि स्युर्लौकिके वन्हाविति शाट्यायनो ब्रवीदिति सर्वनिबंधोदाहृतवचनेन सपिंडीकरणसहितेषु सर्वेषु प्रेतश्राधेषु लौकिकाग्नेर्विनियोगस्य विहितत्वेन गृह्याग्नेर्विनियोगाभावात् ॥ एवं च सति सपिंडीकरणस्य लौकिकाग्निसाध्यत्वात्तदंगभूतः प्राप्नोत्यग्नौकरणहोमो लौकिकेऽग्नौ न कार्यः ॥ न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयत इति विशेषात् ॥ किं तर्हि अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति मनुवचनात्पित्र्यपंक्ति मूर्द्धन्यपि विप्रपाणावित्याहुः ॥

एवं च सति लौकिकाग्नौ होममात्र प्रतिषेधादुल्मुकस्य च निषेधाभावाल्लौकिको- ल्मुकं केचिदिच्छन्ति ॥ तन्न ॥ यत्र हि श्राद्धप्रयोगे होमार्थतया अग्नेरन्तर्भावो- ऽस्ति तत्रैवोल्मुकनिधानं न्याय्यं ॥ न च होमार्थतया अग्नेरन्तर्भावोऽत्रास्ति ॥ उल्मुकशब्दस्याग्न्येकदेशवाचित्वेनैकदेशीभूताग्न्यपेक्षायां होमार्थप्रकृताग्न्येकदेशग्रह- णस्योत्तराधंवत् न्यायत्वात् ॥ अतो न तत्रोल्मुकनिधानयुक्तं ॥ एवं निरग्नेः सपिं- डीकरणाधिकारं मन्यमानाः केचित्॥ सपिंडीकरणसहितानि प्रेतश्राद्धानि विहितका- लापकर्षपूर्वकं कृत्वा पुनरूनाब्दिकान्तान्यनुमासिकश्राद्धानि तथैव कृत्वा मातृ- पूजाभ्युदयिकश्राद्धपूर्वकमावसथ्याधानं गृहपतौ प्रेते सति पुण्याहे कर्त्तव्यं ॥इति॥

" यथाहोशनाः ॥ ततः सपिंडीकरणं वार्षिके मृतवत्सरे ॥ आधानाद्युपसंप्रा- प्तावेतत्प्रागपि वत्सरादिति ॥ शांखायनगृह्यकारिकायामपि ॥ रिक्थग्राही यथा ज्येष्ठः सपत्नीकोधिकारवान् ॥ प्रेते पितरि वा कुर्याज्ज्येष्ठः पुत्रोग्निधारणं ॥ सपिं- डयित्वापितरमविभक्तोनुजैरपीत्याहुः ॥ अत्र छंदोगपरिशिष्टस्थकात्यायनोक्त्यनु- सारिरेणुदिक्षीतोक्तिमनुसृत्यैव वाजसनेयिनः समाचरंतीत्यलं ॥

" प्राशितः "--यत्र प्राश्यते न होमो नापि बलिप्रदानं॥ यथा नृयज्ञो यथार्ह भिक्षुकानतिथींश्च संभजेरन्निति ॥ तथा ॥ सर्वासां पयसि पायसं श्रपयित्वा ब्रा- ह्मणान् भोजयेदिति ॥ शांखायनगृह्येपि ॥ प्राशितो ब्राह्मणे हुत इति ॥ एतेन मनुष्ययज्ञस्य पाकयज्ञत्वमभिहितं ॥ इति शब्दः प्रकारान्तरपरिग्रहे ॥ अस्ति हि पंच- मः प्रकारो ब्रह्मयज्ञतस्तस्य पाकयज्ञत्वव्युदासार्थं चत्वार इति ग्रहणं ॥ एवं चा- नग्निनापि ब्रह्मयज्ञः कर्त्तव्य एव ॥ अत्र भर्तृयज्ञभाष्यं ॥ उपदिश्यमाना एवैते च- त्वारो भवन्ति प्रकारवचनमप्रवृत्तिविशेषकारत्वादनर्थकमितिनानर्थकं ॥ प्रकारान्त- रसूचनार्थत्वात् ॥ चत्वारः प्रकारा उपदिष्टाः ॥ अस्ति हि पंचमः प्रकारः सनो- पदिष्टस्तत्सूचनार्थमेवैतत्सूत्रं ॥ कश्चासौ ब्रह्मयज्ञ इति तस्य विधेर्ब्राह्मणोपदिष्टत्वा- द् ॥ यथारहरहः स्वाध्यायोऽध्येयतव्य इति ॥ पंचसु बहिःशालायामिति सूत्रमं- डपप्रसंगे पूर्वं व्याख्यातं ॥ सेयं सूत्रत्रयी अग्निनिर्णयत्वं हि प्रवृत्ता ॥ तथाहि ॥ भगवता गृह्यसूत्रकृता तावद्गृह्यस्थालीपाकानां कर्मेत्यनेन गृह्याग्निसाध्यानि कर्माणि वक्तुं प्रतिज्ञातानि ॥ गृह्याग्न्युत्पत्त्यर्थं चावसथ्याधानमुक्तं ॥ तच्च दारकाले विहि- तं॥ दारकाल इत्यनेन वक्तव्यतया विवाहः प्रसक्तः ॥ तत्र च लौकिकोग्निरिष्यते॥ तत्प्रसंगेन कस्मिन्कर्मणि गृह्योग्निः कस्मिंश्च लौकिक इत्यग्निविवेकोऽपि वक्तव्य- स्तदर्थं चत्वारः पाकयज्ञा इत्यादिका सूत्रत्रयी समारभ्यते ॥ तत्र चत्वारः पाक- यज्ञा इत्यनेन पाकयज्ञनिष्ठं चातुर्विध्यं प्रतिज्ञाय हुतोऽहुत इत्यादिना हुतादिभेदेन

तदेवं प्रपंचितं ॥ पाकयज्ञः समाख्यातोऽन्यथाऽनुपपत्त्या च गृह्याग्नावेव पाकयज्ञानुष्ठानं गृह्याग्निमत एव पाकयज्ञेष्वधिकार इति प्रदर्शितं ॥ मनुनापीदमेव प्रदर्शितं ॥ वैवाहिकेग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि ॥ पंचयज्ञविधानं च पक्तिं चान्वाहिकीं गृहीति ॥ गृह्योक्तत्वेन पाकयज्ञानां गृह्यकर्मत्वात् गृह्याग्नावनुष्ठानमित्यर्थः ॥ वैवाहिको गृह्याग्निः ॥ एवं च विवाहादिषु गृह्यस्थालीपाकानां कर्मेति प्रतिज्ञावलात् प्राप्तस्य गृह्याग्नेर्निवृत्त्यर्थं पंचसु बहिः शालायामित्यादिना बहिःशाला विधानमुखेन लौकिकोग्निर्विधीयते ॥ अनया च सूत्रत्रय्यैतत्सिद्धं यद्विवाहादिपरिगणितेष्वेव कर्मसु लौकिकाग्निस्तदितरेषु सर्वेषु गृह्योक्तेषु कर्मसु वचनादृते गृह्योग्निर्भवतीति ॥

"तदेवं स्वगृह्यविहितानां देवभूतपितृमनुष्योपपादानां चतुर्णां यज्ञानां पाकयज्ञत्वात्तेषु गृह्याग्निमत एवाधिकारः सिद्धः"—अत एव देवयज्ञादीनां चतुर्णां सत्यपि प्रवासे गृह्य एवानुष्ठानमित्युक्तं ॥ न च समावर्त्तनानन्तरमथातः पंचमहायज्ञा इत्यादिना पंचमहायज्ञकथनं कृतविवाहस्याकृतावस्थाग्निपरिग्रहस्याकृतविवाहस्य वा पंचमहायज्ञेष्वधिकारसिद्ध्यर्थमिति वाच्यं ॥ न हि पंचमहायज्ञेष्वधिकारसिद्ध्यर्थं समावर्त्तनान्तरं पंचमहायज्ञाभिधानं ॥ केशान्तादूर्ध्वमपत्नीक उच्छिन्नाग्निरनग्निको प्रवासी ब्रह्मचारी चेति पृष्टोदिविविधानपरिशिष्टे केशान्तादूर्ध्वमपत्नीकस्योच्छिन्नाग्नेरनग्निको प्रवसोत्थानपरिशिष्टे च तदधिकारस्य विहितत्वात् ॥ नचानयोः परिशिष्टयोर्निर्मूलमित्याशंकनीयं ॥ गर्गोपाध्यायहरिहरादिभिः स्वस्वग्रंथे धृतत्वात् ॥ किंतु लौकिकाग्निसाध्येषु पूर्वं प्रक्रान्तत्वेन बुद्धिस्थत्वात् गृह्याग्निसाध्यकर्मणामेवोपस्थितेः समावर्त्तनानन्तरमभिधेययोर्विवाहावस्थाधानयोः पूर्वमभिहितत्वादभिधेयात्वेनावशिष्टत्वाच्च पंचमहायज्ञानामत्राभिधानं ॥ सूत्रस्याप्ययमर्थः ॥ अथ समावर्त्तनान्तरं यतः कृतविवाहस्य कृतावस्थस्य च पंचमहायज्ञेष्वधिकारः अत हेतोः पंचमहायज्ञाः देवयज्ञादयः पंच व्याख्यास्यन्त इति सूत्रशेषः ॥ अपरे त्विदं सूत्रमेवं व्याचक्षते ॥ अथ प्रातरौपासनाग्निपरिचरणानन्तरं प्रातर्होमानन्तरमिति यावत् ॥ अत इति भोजनकालप्रत्यासत्तेर्हेतोः ॥ पंचमहायज्ञाः देवयज्ञादयः पंच व्याख्यास्यंत इति ॥ भोजनकालप्रत्यासत्तिश्च ॥ प्रजापतिं वै भूतान्युपासीदन्निति प्रकृत्य अथैनं मनुष्याः प्रावृता उपस्थं कृत्वोपसीदंस्तानब्रवीत्सायं प्रातरोशनं प्रजावो मृत्युर्वोग्निर्वो ज्योतिरिति ॥ तथा ॥ तस्मात् सायं प्रातराश्येव स्यात्सयोहैवं विद्वान् सायं प्रातराशी भवति सर्वं है वायुरेति यदुह किंच वाचा व्याहरती तदुहैव भवतीति ॥ प्रातःशब्दश्चाष्टधा विभक्तस्यान्हः पंचमभागपरं ॥ तथा च दक्षः ॥ पंचमे तथा भागे संविभागो यथार्हतः ॥ देवपितृमनुष्याणां कीटानां चोपजीवनं ॥

संविभागं ततः कृत्वा गृहस्थः शेषभुग् भवेदिति ॥ सायं शब्दश्च सार्द्धप्रहरतो रात्रे-र्वाक् द्रष्टव्यः ॥ तदाह छंदोगपरिशिष्टे कात्यायनः ॥ ऋषिभिर्द्विरशनमुक्तं वि-प्राणां मर्त्यवासिनां ॥ सततं नित्यमहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्त-मिति ॥ अत्र पंचमहायज्ञा इत्युपक्रम्य चतुर्णां यज्ञानामनुष्ठानमुक्तं ॥ पंचमस्य ब्र-ह्मयज्ञस्य तु पंचमहायज्ञा इत्यनेन वक्तुमुपक्रान्तस्याप्यकथनमदोषः ॥ दर्भेषु दर्भपा-णिः स्वाध्यायं च यथाशक्त्यादावारभ्यवेदमिति स्नानविधिसूत्रे तर्पणात्प्रागुक्तत्वात्॥ तत्र चेत्कृतस्तदाऽत्र न कर्त्तव्यः ॥ तत्र चेन्नकृतस्तदात्र तेनैव विधिना कर्त्तव्यः ॥ विकल्पेन हि कालाः स्मर्यन्त इति ॥ तस्मात्सिद्धमेनदग्निमत एव गृह्योक्तं वैश्वदेवा-ख्यं कर्मेति ॥ यत्तूक्तं वाजसनेयिनो गृह्येऽनग्निकं प्रतिवैश्वदेवान्तरविधेरनुक्तत्वा-द्वैश्वदेवाकरणापत्तिरिति ॥ तन्न ॥ स्वगृह्ये निरग्निकं प्रतिवैश्वदेवान्तरविधेरविधाने-पिगर्गपद्धतिहरिहरभाष्यधृतपृष्ठोदिविविधानपरिशिष्टे प्रसवोत्थानपरिशिष्टे यज्ञ-पार्श्वपरिशिष्टे च तद्विधानात् ॥ इति ॥

" तथा च पृष्ठोदिविविधानपरिशिष्टं "—अथातो धर्मजिज्ञासा केशान्तादूर्ध्व-मपत्नीक उच्छिन्नाग्निरनग्निको वा प्रवासी ब्रह्मचारी चान्वग्निरिति ग्रामादग्नि-माहृत्य पृष्ठोदिवीत्यधिष्ठाप्य समितमिति द्वाभ्यामुपस्थानं व्याहृतिभिस्त्रिभिश्च सा-वित्रैः प्रज्वाल्यतां सवितुस्तत्सवितुर्विश्वानिदेव सवितरीति पुनस्त्वेति समिध्यपू-र्ववदक्षतैर्हुत्वा पाकं पचेत्तत्र वैश्वदेवं कुर्याद् ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपाया-नुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृत इत्यपस्पृश्य पूर्ववद्बलिकर्म नैवं कृते वृथा-पाको भवति न वृथापाकं पचेन्नवृथा पाकमश्नीयादत्र पिंडपितृयज्ञपक्षाग्राग्रयणानि कुर्यादिति ॥ अस्यार्थः ॥ अथ शब्दो गृह्यकल्पविहितपंचमहायज्ञानंतर्यप्रज्ञप्त्यर्थ ॥ अग्निमतो गृहस्थस्य तदधिकारात्तद्रहितस्याधिकारस्य विधेयत्वादत हेतोः कति-पयधर्मजिज्ञासा ॥ ज्ञातुमिच्छायां सुपां सुपो भवन्तीति सप्तमीस्थाने प्रथमा उच्यते॥ केशान्तादूर्ध्वमुपकुर्वाणः स्नातको वा अपत्नीकः ॥ अविवाहितपत्नीको मृत-पत्नीको वा ॥ उच्छिन्नाग्नि संस्थिताग्निर्वा ॥ अनग्निकः कृतदारसंग्रहोपि नि-मित्तवशादधिकाराभावेनऽनाहितावसथ्याग्निः॥ प्रवासी साग्निकश्चिकीर्षितपाकः॥ तदुक्तं ॥ प्रवसन्नग्निमान्विप्रः पयोमूलफलादिभिः ॥ कालं नयेदशक्तौ तु वि-धिना पाकमाचरेदिति ॥ पाकपात्रविधानादेव साग्निकस्य न प्रवासे वैश्वदेवः ॥ अत एव गर्गोपाध्यायैरुक्तं ॥ साग्नेः प्रवासे सति यावत्प्रवासं होमवैश्वदेवयोरभाव इति ॥ ब्रह्मचारी नैष्ठिकः ॥ ननु ब्रह्मचारिणः पाकविधानाभावाद्यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभाविति ॥ अतः कथमेतदुक्तं ॥ उच्यते ॥ पितृश्राद्धादौ त-

स्यापि पाकसंभवात् ॥ गर्गोपाध्यायस्तु ब्रह्मचारिणः स्वाग्निविच्छेदे सति अनेनैव विधिना अग्न्याहरणादि प्रज्वालनान्तं विधाय समिदाधानं कार्यं ॥ इदं चाग्न्याहरणं समिदाधानार्थं नित्यतयाग्निधारणस्य विधानाभावात् ॥ यत्तु तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजत इति पारस्करगृह्यं तत्तदहः संबंधिन्यां सायंकालीनाग्निपरिचर्यायामुपनयनाग्निनियामकं वेदितव्यं ॥ अयं विवेकः ॥ अपत्नीको छिन्नाग्न्यनग्निकानां त्रयाणां पाकपचनपूर्वकं वैश्वदेवार्थमग्न्याहरणं ॥ प्रवासी ब्रह्मचारिणोस्तु पाकार्थमेव न वैश्वदेवार्थं ब्रह्मचारिणो वैश्वदेवानधिकारात् ॥ प्रवासिनस्तु गृहे वैश्वदेवस्य कृतत्वेन पाकस्य वैश्वदेवविवर्जितत्वाभावे न चाभक्ष्यत्वाभावात् एकस्मिन्नहनि वैश्वदेवद्वयनिषेधाच्च ॥ ग्रामादग्निमिति लौकीकं न पुनः संस्कृतं ॥ पूर्ववदक्षतैर्हुत्वेति ॥ पूर्ववदित्यनेन गृह्योक्तं होममात्रं गृह्यते ॥ सच होमः सायं प्रातःकालीनस्तंत्रेण ॥ पूर्ववद्बलिकर्मेति ॥ मणिकाभावादुदकुंभसमीपे पर्जन्यादिभ्यो दानं॥ अद्भ्य उदकुंभ इति गौतमाभिधानात् ॥ उदपानसन्निधावित्यापस्तंबवचनाच्च ॥ शेषं निगदव्याख्यातं ॥ विवाहादूर्ध्वमावसथ्याधानात्पूर्वं पृष्टोदिवि विधानेनाभ्युदयिकमग्निं स्थापयित्वा नित्यहोमादिकं कुर्यादिति हरिहरः ॥ प्रवसोत्थानपरिशिष्टेपि ॥ अथ सम्राडिति होवाच भगवान्याज्ञवल्क्य उच्छिन्नाग्नीनां को विधिः स्यात्सहोवाच देवपितृमनुष्याणां निर्वापणार्थं पाकश्रपणं प्रसवार्थविधिं वक्ष्यामि ॥ विधानेनाग्निमुपसमाधाय ब्राह्मणानां न वृथा पाको भवति केशान्तादूर्ध्वमपत्नीकस्योच्छिन्नाग्नेरनग्निकस्य ग्रामादन्त्वग्निरित्यग्निमाहृत्य पृष्टोदिवीत्यधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वाल्य तत्सवितुस्तां सवितुर्विश्वानि देव सवितरीत्येवं प्रणीतो भवति ॥ पूर्ववदक्षतैर्हुत्वा पाकं श्रपयेत्तत्र वैश्वदेवं कुर्याद्ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृत इति पूर्ववद्बलिं हरेन्न वृथा पाको भवति गृहस्थो ब्रह्मचारी प्रवासी वा आमं भैक्ष्यमाहरेत्पक्षादिपिंडपितृयज्ञाग्रयणं चेति ॥ यज्ञपार्श्वे कात्यायनस्त्वन्यथाह ॥ अनाहिताग्निभिः कार्यो वैश्वदेवो यथाविधि॥ अभक्ष्यस्तु भवेत्पाको वैश्वदेवविवर्जित इत्युक्त्वा ॥ सभार्यो यो गृहीताग्निर्विधुरः स्नातकोपि वा ॥ व्याहृतीभिः समस्ताभिर्व्यस्ताभिश्च ततः परं ॥ हुत्वा तु शाकलैर्मंत्रैः प्राजापत्यं ततः परं ॥ स्विष्टकृच्च हुनेदंते देवयज्ञोयमीरितः ॥ भूतयज्ञं ततः कुर्यात्पर्जन्यादित्रिकं विना ॥ नित्यश्राद्धं निरग्नेः स्यात्साग्नेः पित्र्योबलिः स्मृतः॥ पितृभ्यो यमाख्यातोऽनग्नेर्वा पैतृकं बलिः॥ निर्णिज्य ब्रह्मयज्ञः स्यात्पंचमो मानुषो मत इति ॥ ज्योतिष्टोमे काष्ठशकलहोमे विनियुक्ताः देवकृतस्यैनसोत्रयजनमसीत्यापो मंत्राः शाकला उच्यन्ते ॥ एतेनाग्निमन्तं प्रतिवैश्व-

देवप्रकारद्वयमुक्त ॥ पृष्टोदिविविधानप्रसवोत्थानपरिशिष्टाभ्यामुक्त एकः॥ यज्ञपार्श्वपरिशिष्टोक्तश्चापरः ॥ एवं चोदाहृतपरिशिष्टानां स्वशाखीयत्वाद्वैश्वदेवं तु कुर्वीत स्वशाखाविहितं तत इति व्यासवाक्येन सह न विरोधः॥ केचन स्मृतीनां सर्वं शाखासाधारण्यात्स्मृत्युक्तमपि वैश्वदेवमनुष्ठेयं मन्यन्ते ॥ तत्र वसिष्ठः ॥ अनग्निकस्तु यो विप्रः सोन्नं व्याहृतिभिः स्वयं ॥ हुत्वा शाकलमंत्रैश्च शिष्टं भूतबलिं हरेदिति॥ शंखश्च ॥ अन्नं व्याहृतिभिर्हुत्वा तथा मंत्रैश्च शाकलैः ॥ अन्विभज्य च भूतेभ्यस्ततोश्नीयादनग्निमानिति ॥ व्यासः ॥ शाकलेन विधानेन जुहुयाल्लौकिकेऽनले ॥ व्यस्ताभिर्व्याहृतिभिस्तु समस्ताभिस्ततः परं ॥ षड्भिर्देवकृतस्येति मंत्रविद्भिर्यथाक्रमं ॥ प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः ॥ ॐकारपूर्वं स्वाहान्तं त्यागः स्विष्टविधानतः ॥ भुवि दर्भान्समास्तीर्य बलिकर्म समारभेत् ॥ विश्वेभ्यश्चैव भूतेभ्यः सर्वभूतेभ्य एव च ॥ भूतानां पतये चेति नमस्कारेण शास्त्रवित् ॥ दद्याद्बलित्रयं चाग्रे पितृभ्योपि स्वधा नमः ॥ पात्रनिर्णेजनं वारि वायव्यां दिशि निःक्षिपेत् ॥ उद्धृत्य षोडशग्रासमात्रमन्नं घृतोक्षितं ॥ इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेदिति ॥ गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः ॥ इति ॥

## ॥ अथाग्निमतः पंचमहायज्ञविचारः ॥

"तत्रादौ देवयज्ञः" तत्र महायज्ञानुष्ठानमन्वहं॥ प्रथमप्रयोगे आवसथ्याधानदिने मातृपूजापूर्वकमाभ्युदयिकश्राद्धमेकमेव पंचमहायज्ञार्थं ॥ वैश्वदेवादन्नादुद्धृत्य घृतेनाभिघारणं ॥ ॐ यद्देवा देवहेडनमित्यादिभिस्तिसृभिर्ऋग्भिर्मणिकोदकेन क्षुद्रदृष्टिपतनजनितदोषपरिहारार्थमुद्धृतान्नप्रोक्षणं ॥ कृतकुशोपग्रहेण पवित्रपाणिनाचम्य प्राणानायम्य देशकालयोः संकीर्तनान्ते पंचसूनार्जानतेनो निर्वहणपूर्वक नित्यकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पंचमहायज्ञैर्यक्ष्य इति संकल्पः कार्यः ॥ ततोऽग्निपूजनं ॥ संपूजयेत्ततो वह्निं दद्याच्चाहुतयः क्रमादिति मार्कंडेयात् ॥ तद्यथा॥ ॐ चत्वारि शृंगेति मंत्रेण वैश्वदेवे तु पावक इति स्मृतेः पावकनामानमग्निं ध्यात्वा ॐ एषोह देवः प्रदिशोनु सर्वा इति मंत्रेणाग्नेरावाहनं ॥ ॐ अग्नये नयेति मंत्रान्ते ॐ सनः पितेवेति मंत्रान्ते वा पावकनाम्ने वैश्वानराय नम इति गंधादिभिः पंचोपचारैरभ्यर्चनं ॥ ॐ मुखं यः सर्वदेवानां हव्यभुक् कव्यभुक् तथा ॥ पितृणां च नमस्तस्मै विष्णवे पावकात्मने इत्यग्निं प्रणमेत् ॥ ततो मणिकोदेन प्रदक्षिणमग्नेः पर्युक्षणं ॥ इतरथावृत्तिः ॥ दक्षिणं जान्वाच्य देवतीर्थेन सुसमिद्धेग्नौ पंचाहुतीर्जुहुयात् ॥ ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे० ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये० ॥

ॐ गृह्याभ्यः स्वाहा इदं गृह्याभ्यो० ॥ ॐ कश्यपाय स्वाहा इदं कश्यपाय० ॥ ॐ अनुमतये स्वाहा इदं अनुमतये०॥ एष पंचाहुतिको होमो देवयज्ञः॥ नात्र संस्रवप्राशनं॥

"अथ भूतयज्ञः"–ॐ पर्जन्याय० इदं पर्जन्याय० (एवं सर्वत्र) ॐ अद्भयो० ॐ पृथिव्यै० इति बलित्रयं प्राक्संस्थमुदक्संस्थं वा मणीकसमीपे दद्यात् ॥ ॐधात्रे० विधात्रे० इति बलिद्वयं द्वार्ययोः ॥ ॐ वायवे० इति प्रादक्षिण्येन प्रागादिप्रतिदिशं ॥ ततस्तेषामेव पुरस्तादुत्तरतो वा प्रत्येकं प्राच्यादिभ्यो दिग्भ्यो बलिचतुष्टयं दद्यात् ॥ तद्यथा ॥ ॐ प्राच्यै दिशे नमः इदं प्राच्यै० ( एवं सर्वत्र ) दक्षिणायै० प्रतीच्यै० उदीच्यै० ॥ ब्रह्मणे० अन्तरिक्षाय० सूर्याय० इति बलित्रयं प्राक्संस्थं बलिहरणदेशस्य मध्ये दद्यात् ॥ विश्वेभ्यो देवेभ्यो० विश्वेभ्यश्च भूतेभ्यो० ॥ इति बलिद्वयं तेषामुत्तरतः॥ ॐ उषसे० भूतानांपतये० इति बलिद्वयं तयोश्चोत्तरतः इति॥

"अथ पितृयज्ञः"–प्राचीनावीति दक्षिणाभिमुखो भूत्वा सव्यं जान्वाच्य ॐ पितृभ्यः स्वधानमः इदं० ॥ इति बलिं ब्रह्मादिबलित्रयस्य दक्षिणतः पितृतीर्थेन दद्यात् ॥ ततोऽपां स्पर्शनं च ॥ इति पितृयज्ञः ॥

"ततो यज्ञोपवीती" भूत्वा तत्पात्रं प्रक्षाल्य॥ ॐ यक्ष्मैतत्ते निर्णेजनं नमः॥ इदं यक्ष्मणे० इति पात्रनिर्णेजनं ब्रह्मादिबलीनामुत्तरापरस्यां दिशि निनयेत्॥ यथोक्तनानास्थानेषु गृहद्वारादौ बलिदानासंभवे तूक्तं छंदोगपरिशिष्टे कात्यायनेन ॥ एकत्र चेदविकृष्टा भवनीतरेतरा संसक्ताश्चेति ॥ गृहद्वारादौ यथोक्तस्थाने बलिदानासंभवेन एकत्र चेदेकस्मिन्नेवस्थाने यदा बलयो दीयन्ते तदा अविकृष्टा अव्यवहिताः इतरेतरा संसक्ताश्च परस्परसंलग्नाश्च दातव्या इत्यर्थः॥ अस्मिन्नपि पक्षेऽग्नेः पश्चिमतश्चतुरस्रे मंडले द्वारादिकं ( द्वारस्य कल्पना ज्ञेया वारुण्यां च विपश्चितैः॥ तत्रैव शाखयोर्मध्ये बलीशातातपोऽब्रवीदिति क्रियासारे ) प्रकल्प्य यथोक्तस्थाने बलिदानं कार्यं ॥ बलीनभिधायाह छंदोगपरिशिष्टे कात्यायनः ॥ पिंडवच्च पश्चिमाप्रतिपत्तिरिति ॥ पिंडवत्पिंडानां या प्रतिपत्तिः॥ पिंडांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेपि वेत्यनेन विहिता सैव बलीनां पश्चिमा द्वितीया प्रतिपत्तिरित्यर्थः॥ ततो बृहत्पराशरोक्तकल्पेन त्वमग्नेद्युभिरित्येकया आब्रह्मन्नित्येकया अद्यो व्यग्नेहविरित्येकया स्वरेण वर्णेन च यद्विहीनं तथैव हीनं क्रिययापि यच्च॥ तथातिरिक्तं मम तत्क्षमस्व ततस्तवाग्ने परिपूर्णमेतदिति बृहत्पराशरोक्तेन श्लोकेन चान्यैश्चाग्निप्रकाशकैर्मंत्रैरग्नेः प्रसादनं ॥ ॐ त्र्यायुषमिति चतुर्भिर्मंत्रैर्भस्मना त्रिपुंड्रधारणं इति ॥

"अथ ब्रह्मयज्ञः" तत्रासनोपरिन्यस्तेषु प्रागग्रेषु त्रिषु दर्भेषु वामाघ्रिमुत्तमं कृत्वा प्राङ्मुख कृत कुशोपग्रह उपविश्य छंदः पुरुषं शरीरे न्यसेत् ॥ तद्यथा ॥ ॐ

तिर्यग्बिलाय चमसा योर्ध्वबुध्नाय छंदः पुरुषाय नम इति शिरसि ॥ ॐ गौतमभरद्वाजाभ्यां नम इति चक्षुषोर्युगपत् ॥ ॐ विश्वामित्रजमदग्निभ्यां नम मंत्रावृत्त्या श्रोत्रयोः ॥ ॐ वसिष्ठकश्यपाभ्यां नम इति नासिकयोर्युगपत् ॥ ॐ अत्रये० वाचि ॥ गायत्र्यै छंदसे० अग्नये० शिरसि ॥ उष्णिहे छंदसे० सवित्रे० ग्रीवायां ॥ बृहत्यै छंदसे० बृहस्पतये० अनूके ( पृष्ठवंशः ) ॐ बृहद्रथंतराभ्यां० द्यावापृथिवीभ्यां० इति मंत्रावृत्त्या बाह्वोः ॥ ॐ त्रिष्टुभे छंदसे० इन्द्राय० मध्ये (मध्यमुदरं) ॐ जगत्यै छंदसे० आदित्याय० इति मंत्रावृत्त्या श्रोण्योः ॥ ॐ अतिछंदसे प्रजापतये० मेढ्रे ॥ ॐ यज्ञायज्ञियाय छंदसे० वैश्वानराय० पायौ ॥ ॐ अनुष्टुभे छंदसे० विश्वेभ्यो देवेभ्यो० इति मंत्रावृत्त्या ऊर्वोः॥ ॐ पंक्त्यै छंदसे० मरुद्भ्यो० इति मंत्रावृत्त्या जान्वोः ॥ ॐ द्विपदायै छंदसे० विष्णवे० इति मंत्रावृत्त्या पादयोः ॥ ॐ विछंदसे० वायवे० प्राणेषु ॥ ॐ न्यूनाक्षरा छंदसे० अद्भ्यो० इति हस्तद्वयविपर्यासेन मस्तकादिपादान्तं सर्वांगेषु॥ तत उपग्रहव्यतिरिक्तान् त्रीन् दर्भान् पाणिभ्यामादाय दक्षिणं करमुत्तरं कृत्वा दक्षिणे जानुन्यंजलिकरणं ॥ तत ऋष्यादिस्मरणं॥ तद्यथा ॥ ॐकारस्य परब्रह्मऋषिः गायत्रीछंदः अग्निपरमात्मा देवता महाव्याहृतीनां प्रजापतिऋषिः गायत्र्युष्णिक् गायत्री छंदांसि अग्निवायुसूर्या देवताः॥ तत्सवितुरिति विश्वामित्रऋषिः गायत्रीछंदः सविता देवता॥ इषेत्वेत्यादिकस्य खं ब्रह्मान्तस्य माध्यंदिनीयस्य वाजसनेयकस्य यजुर्वेदाम्नायस्य विवस्वान् ऋषिः गायत्र्यादीनि सर्वाणि छंदांसि ब्रह्मयज्ञे विनियोगः ॥ इत्यार्षादिस्मृत्वा प्रणवं व्याहृतीर्गायत्रीं चाम्नायस्वरेणाधीत्य इषेत्वोर्जेत्वेत्यादितो वेदमारभ्यानुवाकशो यजुःशो वा संहितां ॥ ब्राह्मणं चाध्यायशो वा प्रणवावसानं यथाशक्तिप्रत्यहमधीयानो मंत्रं ब्राह्मणं च समाप्य पुनरेवमेवारभ्य समापयेत् ॥ प्रणवव्याहृतिगायत्रीपूर्वकं तु प्रतिदिनं पठेत् ॥ एवं द्विवेदाध्यायी त्रिवेदी चतुर्वेदी वा एकैकं वेदमारभ्याधीत्य समाप्यान्यमारभ्याधीत्य समापयेत्॥ एवमेवेतिहासपुराणादीन्यपि ब्रह्मयज्ञसिद्धये जपेत्॥ जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेदिति याज्ञवल्क्येन पृथगभिधानात् ॥ तत ॐ ब्रह्मणे नम इति त्रिरुच्चार्य इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः॥ वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दन इति मंत्रेण विष्णवे समर्प्य ब्रह्मयज्ञार्थान् कुशानुत्तरतः प्रक्षिप्याचामेत् ॥ ब्रह्मयज्ञस्तु अमावास्यादिष्वनध्यायेष्वपि कर्तव्य एव ॥ नास्ति नित्येष्वनध्यायो ब्रह्मसत्रं हि तत्स्मृतमिति मनुस्मृतेः ॥ नित्यश्च ब्रह्मयज्ञः ॥ अहरहः स्वाध्यायमधीयीतेति श्रुतेः ॥ ब्रह्मयज्ञे तु द्वावेवानध्यायौ आत्माशुचिस्तदैकः ॥ देशोऽशुचिस्तदाऽपरः॥ तत्रानध्याये ब्रह्मयज्ञ अल्पीयान्मनसा च कर्त्तव्यः॥

सच स्वरप्रदर्शनपूर्वकं कर्त्तव्यः ॥ स्वरप्रदर्शनं तु हस्तेनैव ॥ हस्तेन ते इति प्रातिशाख्यसूत्रात् ॥ तत्र विशेषः ॥ सोन्नतंतुकरं कृत्वा सुव्यक्तांगुलिरंजितं ॥ स्वरविच्च स्वरं कुर्यात्प्रादेशगामिनमिति॥ तथा हस्तेन वेदं योधीते स्वरवर्णार्थसंयुतं॥ ऋग्यजुः सामभिः पूतो ब्रह्मलोके महीयते ॥ हस्तहीनं तु योधीते स्वरवर्णविवर्जितं॥ ऋग्यजुः सामभिर्दग्धो वियोर्नि चाधिगच्छति ॥ अशक्तौ तु गायत्रीजपमात्रं ॥ ब्रह्मयज्ञप्रसिद्धयर्थं गायत्र्येकां जपेत्ततः॥ तेन प्रीतिं परां याति देवदेवो जनार्दन इति वचनात्॥

"अथ मनुष्ययज्ञः"—एवं ब्रह्मयज्ञं विधाय तत्पूर्वं वा निर्णेजनान्तरं विष्णुपुराणोक्तमपि फलातिशयाय बलिदानं ॥ तद्यथा ॥ ततोन्यदन्नमादाय भूमिभागे शुचौ पुनः ॥ दद्यादशेषभूतेभ्यः स्वेच्छयातु समाहितः॥ ॐ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः ॥ प्रेताः पिशाचास्तरवः समस्ता येचान्नमिच्छन्ति मया प्रदत्तं ॥१॥ पिपीलिकाः कीटपतंगकाद्या बुभुक्षिता कर्मनिबंधबद्धाः॥ प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥२॥ येषां न माता न पिता न बंधुर्नचान्नसिद्धिर्न तथान्नमस्ति ॥ तत्तृप्तयेन्नं भुवि दत्तमेतत्प्रयान्तु तृप्तिमुदिता भवन्तु ॥३॥ भूतानि सर्वाणि तथान्नमेतदहं च विष्णुर्नयतोऽन्यदस्ति ॥ तस्मादहं भूतनिकाय भूतमन्नं प्रयच्छामि भवाय तेषां ॥४॥ चतुर्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसंघाः॥ तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदंते मुदिता भवन्तु ॥५॥ इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः॥ सर्वभूतोपकाराय गृही सर्वाश्रयो यतः ॥६॥ श्वचांडालविहंगानां भुवि दद्याच्चतो नरः॥ एतैः पंचभिरपि श्लोकैरेक एव बलिर्देय इत्याचारप्रदीपाचारादर्शाचारचिन्तामण्यादयः॥ इदं च बलिदानं पौराणत्वात्सर्वशाखासाधारणं ॥ अथ गोग्रासः ॥ सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ॥ प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातर इति ब्रह्मपुराणोक्तेन पंचभूते शिवे पुण्ये पवित्रे सूर्यसंभवे ॥ प्रतीच्छेमं मया दत्तं सौरभेयि नमोस्तुत इति नंदिपुराणोक्तेन वा मंत्रेण गवे देयः ॥ इदं गोभ्यः॥ ॐ ऐन्द्रवारुणाय वायव्यां याम्यां वै नैर्ऋतास्तथा॥ वायसाः प्रतिगृह्णन्तु भूमौ पिंड मयार्पितं ॥ १ ॥ इति मंत्रेण वायसेभ्यो गृहाद्बहिर्बलिदानं ॥ इदं वायसेभ्यः ॥ ॐश्वानौ द्वौ श्यामशवलौ वैवस्वतकुलोद्भवौ ॥ ताभ्यां पिंडं प्रयच्छामि स्यातामेतावहिंसकौ ॥ इति शूनां बलिदानं ॥ इदं श्वभ्यः॥ देवेभ्यस्तु हुतादन्नाच्छेषाद्भूतबलिं हरेत्॥ अन्नं भूमौ श्वचांडालवायसेभ्यश्च निक्षिपेत् ॥ इति याज्ञवल्क्येन श्वादिबलीनां पृथङ्निर्देशाद्भूतयज्ञबहिर्भावः ( विधिना वैश्वदेवहोमं कृत्वा तदवशिष्टेनान्नेन भूतेभ्यो बलिं हरेत् ॥ अन्नग्रहणमपक्वव्युदासार्थं॥ तदनन्तरं यथाशक्तिभूमावन्नं श्वचांडालवायसेभ्यो नि-

क्षिपेत् ॥ च शब्दात् कृमिपापरोगिपतितेभ्य इति मिताक्षरायां ) ततो गृहमागत्या-चम्य यतिब्रह्मचारिणोरुपस्थितौ वैश्वदेवादन्नादुद्धृत्याभिघार्य षोडशग्रासपरिमित-मन्नं स्वस्तीति वाचयित्वा उदकपूर्वकं इदमन्नं मनुष्याय हन्त त इति प्राजापत्यतीर्थेन ब्राह्मणाय दत्त्वा पुनर्जलं दद्यात् ॥ ततो यथार्हं भिक्षुकानतिथींश्च संभजेरन्निति ॥ यथार्हमिति उपकुर्वाणस्य ब्रह्मचारिणः अक्षारालवणादियतेस्तु मध्वादि अतिथीन-भ्यागतान् संभजेरन्निति बहुवचनमेकवचनस्यार्थे ॥ स्वागतान् अन्नदानादिना तर्पयेदित्यर्थः ॥ ततो बालज्येष्ठा गृह्या यथार्हमश्नीयुः॥ बाला अनुपनीताः॥ ज्येष्ठाः स्थवीराः ॥ गृह्याः स्ववासिनीगर्भिण्यातुरकन्यकाभृत्यादयः ॥ हिताभिरुचिताद्य-श्नीयुः ॥ पश्चाद्गृहपतिः पत्नी चाश्नीयात् ॥ दंपत्योः परस्परमनियमे प्राप्ते पत्न्याः पूर्वो गृहपतिरश्नीयात् ॥ कुतः ॥ तस्माद् स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नी-यादिति श्रुतेः ॥ तस्मात्स्वादन्नात् ॥ उ एवार्थे॥ यद्यदिष्टं अभिरुचितं तद्गृहपति-रश्नीयात्कदा ॥ अतिथिभ्य आशितेभ्यः अनन्तरं पूर्वश्च पत्न्या इति ॥ इति गृह्या-ग्निमत्कर्तृकगृह्योक्तवैश्वदेवप्रयोगः ॥

## ॥ अथ निरग्निकर्तृकपृष्टोदिविविधानोक्तवैश्वदेवप्रयोगः ॥

गृहस्वामिनो मरणादेकादशाहे गृहज्येष्ठस्य पंचमहाधिकारः सिद्धस्तत्साधनी-भूतो गृह्याग्निश्च यस्य नास्ति तस्येदं प्रकारान्तरमुच्यते एकादशाहे पंचभूसंस्कारा-न्कृत्वा अन्वग्निरित्यस्य पुरोधा ऋषिः त्रिष्टुप् छंदोग्निर्देवता अग्न्याहरणे विनियोगः॥ ॐ अन्वग्निरुषसामित्यादिना आततंथेत्यन्तेन ग्रामादग्नेराहरणं ॥ निद्यगृहादाहृतश्चे-द्भूमौ निधाय प्रज्वाल्य ततोपि द्वितीयस्थाने प्रज्वाल्य ततो गृहीत्वा ॥ पृष्टोदिवीति कुत्स ऋषिः त्रिष्टुप् छंदोग्निर्देवताऽग्निनिधाने विनियोगः ॥ ॐ पृष्टोदिवीत्यनया संस्कृतदेशे प्रतिष्ठापनं ॥ समितमितिद्वयोः प्रजापतिर्ऋषिः ऊष्णिगुपरिष्टाद् बृहत्यौ छंदांसि चित्योरन्यावग्नीदेवते अग्न्युपस्थाने विनियोगः ॥ ॐसमितं सकल्पेथां संवांमनांसीति द्वाभ्यामुपस्थानं ॥ महाव्याहृतीनां प्रजापतिर्ऋषिः यजुः अग्निवायु-सूर्या देवताः तां सवितुरित्यस्याः कण्वऋषिस्त्रिष्टुप् छंदः सविता देवता ॥ तत्स-वितुरित्यस्या विश्वामित्र ऋषिः गायत्रीछंदः सविता देवता विश्वानि देव सवितरि-त्यस्याः श्यावाश्वऋषिः गायत्रीछंदः सविता देवता अग्निप्रज्वालने विनियोगः ॥ ॐ भूर्भुवः स्वरिति तिसृभिर्महाव्याहृतिभिः तां सवितुस्तत्सवितुर्विश्वानिदेव सवित-रिति तिसृभिर्ऋग्भिश्च प्रज्वालनं ॥ पुनस्त्वेति प्रजापतिर्ऋषिस्त्रिष्टुप् छंदोग्निर्देवता-ग्निसमिन्धने विनियोगः ॥ ॐ पुनस्त्वेत्यनयासमिंधनं ॥ प्रज्वलितस्यापि पुनरि-

धनप्रक्षेपेण प्रदीप्तकरणं समिंधनं ।। अथ तस्मिन्नग्नौ सायंप्रातर्होमस्तंत्रेण।। धारितश्चेत्प्रातर्होममात्रं ।। ततस्तस्मिन्नग्नावान्वहिकपाकश्रपणं ।। अन्नमुद्धृत्याभिघारणं ।। पंचमहायज्ञाश्च ।। तत्र वैश्वदेवे विशेषः ।। अनुमतये स्वाहेत्यनन्तरं ॐ विश्वेभ्यो देवेभ्यः स्वाहा इदं० ॐ अग्नये स्विष्टकृते स्वाहा इदम० ।। इत्याहुतिद्वयमधिकं होतव्यं ।। ततः पूर्ववद्बलिकर्म ।। तत्रोदकुंभसमीपे पर्जन्यादिभ्यो दानं ।। इह मणिकाभावादिति विशेषः ।। अन्यत्सर्वं पूर्ववत् ।। अत ऊर्ध्वमनेनैव विधिना यावज्जीवं धारणं कर्त्तव्यमित्याहुः ।। शान्ते चाग्नौ अनेनैव विधिनाग्न्याहरणमिति ।। अस्मिन्नग्नौ पिंडपितृयज्ञपक्षाद्याग्रयणादि कर्त्तव्यं ।। श्रवणाकर्मादि तु न कर्त्तव्यं ।। तस्मिन्नग्नौ एकादशाहश्राद्धाद्यौर्ध्वदेहिकं कर्म कर्त्तव्यं ।। यस्तु सपिंडीकरणान्तानि प्रेतश्राद्धानि यानि वै तानि स्युर्लौकिके वन्हाविति शाट्यायनोऽब्रवीदिति वाक्ये लौकिकाग्निशब्दः स ग्रामाग्निपरो न पुनः पारिभाषिको लौकिकाग्निपरः ।। अग्निमतः प्रवासे पाकश्रपणे विशेषः ।। अन्वग्निरिति पूर्वमग्न्याहरणं ।। पृष्ठोदिवीत्यनया संस्कृतदेशे प्रतिष्ठापनं ।। समितं संवांमनांसीति द्वाभ्यामुपस्थानं ।। ॐ भूर्भुवः स्वरिति तिसृभिर्महाव्याहृतिभिस्तां सवितुस्तत्सवितुर्विश्वानि देव सवितरिति त्रिभिश्च सावित्रैः प्रज्वालनं ।। पुनस्त्वेति समिंधनं ।। पाकश्रपणं ।। ब्राह्मणार्थमन्नोद्धरणं ।। ततो भोजनमिति ।। होमवैश्वदेवयोरभावस्तस्य प्रवासं यावत् ।। ब्रह्मचारिणोपि पितृश्राद्धादौ पाकोपस्थितौ एवमेव पाकश्रपणं गर्गोपाध्यायस्तु यदि ब्रह्मचारिणोपि स्वकीयाग्निविच्छेदस्ततोऽनेनैव विधिनाग्न्याहरणादि समिन्धनान्तं ।। अग्न्याहरणं तु समिदाधानार्थं ।। पाकस्य तु निवृत्तिस्तस्येत्याह ।। तदयुक्तं ब्रह्मचारिणः समिदाधानार्थं ।। हि नित्यतयाग्निधारणस्य गृह्यकल्पे विधानाभावात्।। एतत् पृष्ठोदिविविधानं ।। एवं कृते वृथापाको न भवति ।। वृथापाकश्रपणं न कर्त्तव्यं ।। वृथा पाकाशनं च न कर्त्तव्यमिति ।। इति ।।

## ।। अथ निरग्निकर्त्तृकयज्ञपार्श्वोक्तवैश्वदेवप्रयोगः ।।

तत्रादौ देवयज्ञः ।। वैश्वदेवादन्नादुद्धृत्य घृतेनाभिघारणं ॐ यद्देवा देवहेडनमित्यादिभिस्तिसृभिः कूष्मांडीभिर्ऋग्भिः क्षुद्रदृष्टिनिपतनजनितदोषपरिहारार्थमुद्धृतान्नप्रोक्षणं ।। कृतकुशोपग्रहः ।। पवित्रपाणिः कर्ताचम्य त्रीन्प्राणायामान्कृत्वा देशकालयोः संकीर्त्तनान्ते मम पंचसूनाजनितपापक्षयपूर्वकनित्यकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं यज्ञपार्श्वोक्तविधिना पंचमहायज्ञैर्यक्ष्य इति संकल्पं कुर्यात् ।। स्थंडिले पंचभूसंस्कारान्कृत्वा लौकिकाग्नेः स्थापनं ॐ चत्वारी शृंगेत्यग्निं ध्यात्वा ॐ एषोह देव इत्यनयाग्नेरावाहनं ।। ॐ सनः पितेवेति मंत्रान्ते ॐ अ-

ग्नेनयेतिमंत्रान्ते वा पावकनाम्ने वैश्वानराय नम इति गंधादिभिः पंचोपचारैरभ्य-र्चनं ॥ ॐ मुखं यः सर्वदेवानां हव्यभुक् कव्यभुक् तथा ॥ पितृणां च नमस्तस्मै विष्णवे पावकात्मने ॥ इति नमस्कृत्य प्रदक्षिणमग्नेः पर्युक्षणं ॥ इतरथावृतिः ॥ दक्षिणं जान्वाच्य देवतीर्थेन सुसमिद्धेऽग्नौ जुहुयात् ॥ तद्यथा ॥ ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये० ॥ ॐ भूः स्वाहा इदमग्नये०॥ ॐ भुवः स्वाहा इदं वायवे०॥ ॐ स्वः स्वाहा इदं सूर्याय० ॥ ॐ देवकृतस्यैनसोवयजनमसि स्वाहा ॥१॥ ॐ मनुष्यकृतस्यैनसोवयजनमसि स्वाहा ॥ २ ॥ ॐ पितृकृतस्यैनसोवयजनमसि स्वाहा ॥ ३ ॥ ॐ आत्मकृतस्यैनसोवयजनमसि स्वाहा ॥ ४ ॥ ॐ एनस एनसोवयजनमसि स्वाहा ॥५॥ ॐ यच्चाहोमेनोविद्वांश्चकारयच्चाविद्वांस्तस्य सर्वस्यैनसो वयजनमसि स्वाहा ॥६॥ इदमग्नय इति षण्णां त्यागः ॥ ॐ प्रजापतये स्वाहा इदं०॥ अग्नये स्विष्टकृतेस्वाहा इदम० ॥ इत्ययं द्वादशाहुतिहोमो देवयज्ञः ॥

" अथ भूतयज्ञः"–तत्र पर्जन्यादित्रिकवर्जं भूमौ बलिहरणं ॥ ॐ धात्रे नमः इदं० ॥ विधात्रे इति बलिद्वयं द्वारदेशशाखामूलदेशे दद्यात् ॥ ॐ वायवे० इति बलिं प्रदक्षिण्येन प्रागादि प्रतिदिशं दद्यात् ॐ प्राच्यै दिशेनमः इदं प्राच्यै दिशे०॥ दक्षिणायै दिशे० प्रतीच्यै दिशे० उदीच्यै दिशे० ॥ इति बलिचतुष्टयं प्राच्यादिदिक्षु ॥ ॐ ब्रह्मणे० अन्तरिक्षाय० सूर्याय० इति बलित्रयं पाक्संस्थं बलिहरणदेशस्य मध्ये दद्यात् ॥ ॐ विश्वेभ्यो देवेभ्यो० ॥ ॐ विश्वेभ्यश्च भूतेभ्यो० ॥ इति बलिद्वयं तेषामुत्तरतः ॥ ॐ उषसे० भूतानां पतये० इति बलिद्वयं तयोरुत्तरतश्च

" अथ पितृयज्ञः"–प्राचीनावीती दक्षिणाभिमुखो भूत्वा सव्यं जान्वाच्य ॐ पितृभ्यः स्वधानम इदं पितृभ्य नम इति बलिं ब्रह्मादिबलित्रयस्य दक्षिणतः पितृतीर्थेन दद्यात् ॥ ततोऽपः स्पर्शनं ॥ ॥ इति पितृयज्ञः ॥

" अथ नित्यश्राद्धविचारः "–तत्रादौ यज्ञोपवीती भूत्वा तत्पात्रं प्रक्षाल्य ॐ यक्ष्मैतत्ते निर्णेजनं नमः इदं यक्ष्मणे० ॥ इति पात्रनिर्णेजनं ब्रह्मादिबलीनामुत्तरापरस्यां दिशि निनयेत्॥ अथवा नित्यश्राद्धं॥ श्राद्धं वा पितृयज्ञः स्यात्पित्र्योबलिरथापिवेति छंदोगपरिशिष्टे कात्यायनेन पित्र्यबलिनित्यश्राद्धयोरन्यतरेण पितृयज्ञसिद्ध्यभिधानात् ॥ गृह्याग्निमतस्तु पित्र्योबलिरेव न नित्यश्राद्धं ॥ यतः पारस्करगृह्ये पित्र्यबलेरेव नित्यतया श्रवणात्तेनैव पितृयज्ञसिद्धेः॥ नित्यश्राद्धं निरग्नेः स्यात्साग्नेः पित्र्योबलिः स्मृतः॥पितृयज्ञे यमाख्यातोऽनग्नेर्वापैतृको बलिरिति यज्ञपार्श्वे कात्यायनोक्तेश्च ॥ यत्तु शांखायनगृह्यकारिकायां नित्यश्राद्धस्य पाकयज्ञत्वमुक्तं तत्पाकयज्ञत्वेपि वचनान्नित्यश्राद्धं निरग्निनापि कर्त्तव्यमित्यनवद्यं ॥ तत ॐ त्वम

ग्नेयुभिरित्येकया ॥ ॐ आब्रह्मन्नित्येकया ॥ ॐ अहाव्यग्नेहविरित्येकया ॥ स्वरेणं वर्णेन च यद्विहीनं तथैव हीनं क्रिययापि यच्च ॥ तथातिरिक्तं मम तत् क्षमस्व ततस्तवाग्ने परिपूर्णमेतत् ॥ इति श्लोकेन चाग्नेः प्रसादनं ॥ अन्यैरप्यग्निप्रकाशकमंत्रैश्च ॥ ॐत्र्यायुषमिति चतुर्भिर्मंत्रैर्भस्मना त्रिपुंड्रधारणम् ॥ इति ॥

"अथ ब्रह्मयज्ञः"—पूर्वं न कृतश्चेदत्र यथाशक्तिपूर्ववद् ब्रह्मयज्ञः ॥ इति ॥

"मनुष्ययज्ञः"—ब्रह्मयज्ञात्पूर्वं वा निर्णेजनानन्तरं वक्ष्यमाणमंत्रैरिच्छया बलिदानं ॥तद्यथा॥ ॐ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः॥ प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तं ॥१॥पिपीलिका कीटपतंगकाद्या बुभुक्षिताः कर्मनिबंधबद्धाः॥ प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु॥२॥ येषां न माता न पिता न बंधुर्न चान्नसिद्धिर्न तथान्नमस्ति॥ तत्तृप्तयेऽन्नं भुवि दत्तमेतत्प्रयान्तु तृप्तिं मुदिता भवन्तु ॥३॥ भूतानि सर्वाणि तथान्नमेतदहं च विष्णुर्नयतोन्यदस्ति ॥ तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषां ॥४॥ चतुर्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसंघाः॥ तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवंत्विति पंचभिरपि श्लोकैरेक एव बलिर्देयः ॥ अत्र वा ब्रह्मयज्ञः ॥ अथ गोग्रासः ॥ ॐ सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातर इति ब्रह्मपुराणोक्तमंत्रेण गवे देयः ॥ ॐ पंचभूते शिवे पुण्ये पवित्रे सूर्यसंभवे॥ प्रतीच्छेमं मया दत्तं सौरभेयि नमोस्तुते ॥ इति नंदिपुराणोक्तमंत्रेण वा इदं गोभ्यः ॥ अथ वायसेभ्यः ॥ ॐ ऐन्द्रवारुण० इति मंत्रेण गृहाद्बहिर्बलिदानं ॥ अथ श्वबलिः ॥ ॐ श्वानौ द्वौ० ॥ ॐ श्वभ्यां नम इत्यन्तेन मंत्रेण देयः इदं श्वभ्यां ॥ ततो गृहमागत्याचम्य यतिब्रह्मचारिणोरुपस्थितौ वैश्वदेवादन्नादुद्धरणं ॥ अभिघारणं ॥ ॐ स्वस्तीतिवाचयित्वा उदकपूर्वकमिदमन्नं मनुष्याय हंतते इति प्राजापत्यतीर्थेन ब्राह्मणाय दत्त्वा पुनरुदकदानम् ॥ ततो यथार्हमतिथीन् संभोज्य स्वयं भुंजीत ॥ इति मनुष्ययज्ञः ॥

## ॥ अथ स्मृत्युक्तवैश्वदेवप्रयोगः ॥

तत्र विशेषः ॥ ॐभूः स्वाहा ॥ ॐभुवः स्वाहा ॥ ॐस्वः स्वाहा॥ इति महाव्याहृतिभिर्व्यस्ताभिर्हुत्वा ॐ भूर्भुवः स्वः स्वाहेति समस्ताभिर्जुहुयात् ॥ ततो देवकृतस्यैनसोवयजनमसि स्वाहेत्याद्याः स्विष्टकृदन्ता अष्टावाहुतीर्जुहुयात्॥ ॐ धात्रे० ॐ विधात्रे० इति बलिद्वयं द्वारदेशशाखामूलदेशे दत्त्वाग्नेः पश्चादुपविश्य ॐ विश्वेभ्यो देवेभ्यो० सर्वेभ्यो भूतेभ्यो० भूतानां पतये नम इति बलित्रयं प्राक्संस्थमुदक्संस्थं वा दद्यादेवं पंचैव बलीन् दद्यादिति देवयज्ञभतयोर्विशेषः ॥ इति ॥

## ॥ अथ वैश्वदेवोपयोगीनिर्णयः ॥

तत्रांगिराः ॥ शालाग्नौ तु पचेदन्नं लौकिके वापि नित्यशः ॥ यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयत इति॥ यदर्थमुध्धृतो ह्यग्निः कृतश्चार्थो यथाविधि ॥ कृतकर्मापवृत्तस्तु हुतोग्निर्लौकिकः स्मृत इति वचनात् पारिभाषिक एवात्र लौकिको न पुनर्ग्रामाग्निः ॥ अपवृत्तकर्मालौकिकोऽर्थसंयोगादिति कात्यायनेन तस्मिन्नेवाग्नौ लौकिकशब्दप्रयोगात् ॥ अन्यत्र तु ग्रामाग्निना चेदिति ॥ तूष्णीं ग्रामाग्निनानेतरमिति ॥ अन्वग्निरिति ग्रामादग्निमाहृत्येति गार्हपत्येनुगते ग्रामाग्निमाहृत्येत्यादौ ग्रामाग्निपदप्रयोगाच्च ॥ आचारादर्शे मदनपारिजाते च शातातपः ॥ वैदिके लौकिके वापि हुतोच्छिष्टे जले क्षितौ ॥ आहृत्योन्मृज्य जुहुयात्पंचसूनापनुत्तय इति ॥ वैदिके आवसथ्येग्नौ ॥ तदभावे हुतोच्छिष्टे अन्येनान्यहोमं कृत्वेत्युक्तेः॥ तदभावे लौकिके ग्रामाग्नौ पात्रान्तरकरणमाहरणं ॥ गृह्याग्नेस्त्वग्न्युद्बोधनमाहरणं ॥ उन्मार्जनं भस्मापाकरणं ॥ मनुः ॥ पंचसूना गृहस्थस्य चुल्हिपेषण्युपस्करः ॥ कंडनी चोदकुंभेति बद्ध्यते यांस्तु वाहयन् ॥ तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ॥ पंचक्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनामिति ॥ कीटादीनां धमापणेन चुल्ही ॥ पेषणेन पतितप्राणिवधादिना पेषणी ॥ क्षेपणादिना मार्जनी ॥ अवहननेन कंडनी ॥ सकीटजलाहरणेनोदकुंभं ॥ एते पंच गृहस्थस्य सूनाः ॥ सूना प्राणिवधस्थानं तत्सदृशाः ॥ वधजन्यदोषहेतुत्वात् ॥ अत एवैतान् वाहयन् व्यापारयन् सूना दोषैः संबद्ध्यत इत्यर्थः ॥ उपस्करः संमार्जनी ॥ भांडकुंडादि गृहोपस्करणमित्येके ॥ तासामित्यादिना एतत्पापक्षयार्थं पंचमहायज्ञा इत्युक्तं ॥ तथा स एवा पंचैतान्यो महायज्ञान्नहापयति शक्तितः ॥ सगृहेपि वसन्नित्यं सूनादोषैन लिप्यत इति ॥ एतच्चार्थवादमात्रं ॥ ततः पंचमहायज्ञान्कुर्यादहरहर्द्विज इति सुमन्तुवाक्ये अहरहर्भूतेभ्यो बलिं हरेदिति शतपथश्रुतौ चाहरहरिति वीप्सया तेषां नित्यत्वावगमात् ॥ शंखोऽपि ॥ पंचयज्ञविधानं च गृही नित्यं न हापयेदिति अथवाऽर्थवादान्सूनाजनितपापक्षयोऽपि फलं॥ एवं च स्वर्गापवर्गयोः सिद्धिं पाकयज्ञैः प्रचक्षतः इति व्यासवाक्यादपि फलान्तरं बोध्यं ॥ प्रत्येकमपि फलमाह हारीतः ॥ यद्देवेभ्यो जुहोति देवलोकं तेनाभिजयति यत्पितृभ्यः पितृलोकं तेन यत्स्वाध्यायमधीते ऋषिलोकं तेन॥ यद्भूतेभ्यो बलिं हरति भूतलोकं तेनेति। एतेन पुरुषार्थत्वमुक्तं भवति वैश्वदेवस्य मनुरपि पुरुषार्थत्वमेवाह॥ वैश्वदेवे तु निर्वृत्ते यद्यन्यो तिथिराव्रजेत् तस्मादन्नं यथाशक्ति प्रदद्यान्नबलिं हरेदिति ॥ वैश्वदेवानन्तरमतिथिपूजायां कृतायां द्वितीयो

ऽतिथिर्यद्यागच्छति अन्नं च पक्वं नास्ति तदा पुनः पाकं कृत्वा तस्मै दद्यान्न बलिं हरेद्वैश्वदेवं न कुर्यादित्यर्थः ॥ यद्यन्नसंस्कारार्थत्वं वैश्वदेवस्य स्यात्तदा पुनः करण निषेधो न युज्यत इति ॥ मिताक्षरायामप्येवं ॥ अतश्च पाकसंस्कारार्थत्वं निरस्तं ॥ पाकसंस्कारार्थत्वे तु पाकभावे वैश्वदेवाभावप्रसंगात्॥ केचित्तु यस्य चाग्नौ न क्रियते यस्य चाग्रं न दीयते ॥ अभोज्यं तद्भवेदन्नं भुक्त्वा तूपवसेदहरिति मिताक्षरायां लिखितेन तु वैश्वदेवाभावेऽन्नस्याभोज्यत्वाभिधानादन्नसंस्कार्थतापि प्रतीयते ॥ तेन वैश्वदेवस्योभयार्थत्वं स्विष्टकृद्वदेकस्यैव गुणकर्मत्वं प्रधानकर्मत्वं चांशभेदेनाविरुद्धमित्याहुः ॥ तेनादृष्टार्थविहितस्यैव पाकस्य वैश्वदेवे विनियोगः ॥ वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयादिति ॥ वैश्वदेवादित्यन्नं व्यपदिश्यते ॥ विश्वेदेवादेवताकबलिसंबंधात् ॥ यद्यपि देवतान्तरमप्युक्तमस्ति तथाप्येकदेशेन व्यवहारः ॥ अत एव होमेऽप्यस्मिन्वैश्वदेवपदं ॥ अग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति गौतमादिकल्पे होमे च विश्वेदेवसंबंधात् ॥ वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहेति सूत्रेषु पुरोडाशकपालेनेतिवद्वैश्वदेवार्हस्यैव पाकस्य विनियोगान्तरमिति ॥ कृते वैश्वदेवे अन्नोपघाते सति पुनः पाकस्तु लौकिकाग्नावेव न गृह्ये ॥ तदाहापरार्के बौधायनः ॥ अचोदिते पाकेन कृतेनोद्धरणेन वा ॥ लौकिकोग्निः स विज्ञेयः पुनराधानमर्हतीति ॥ मदनपारिजाते श्लोककात्यायनः ॥ उद्धृत्य हविरासिच्य हविष्येण घृतादिना॥ स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेदिति हविष्येण घृतादिना उद्धृतं हविरासिच्यते न हविषा जुहुयादित्यर्थः ॥ घृताभावे दध्याद्यक्तं हविर्जुहुयात् ॥ तथा च व्यासः जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितं ॥ दध्यक्तं पयसाभ्यक्तं तदभावेंभसापि वेति ॥ हविष्याभावे चतुर्विंशतिमते विशेषो दर्शितः ॥ अलाभे येन केनापि फलशाकोदकादिभिः॥ पयोदधिघृतैः कुर्याद्वैश्वदेवं स्रुवेण तु ॥ हस्तेनान्नादिभिः कुर्यादद्भिरंजलिना जले इति ॥ अत्रापरो विशेषः परिशिष्टे ॥ शाकं वा यदि वा पत्रं मूलं वा यदि वा फलं॥ संकल्पयेद्यदाहारे तेनाग्नौ जुहुयादपीति ॥ पयः प्रभृतिद्रवद्रव्याणां होमः स्रुवेणेत्युक्तं ॥ चर्वादिकठिनद्रव्याणां तु विशेषोऽभिहितः ॥ परिशिष्टे ॥ उत्तानेन तु हस्तेन अंगुष्ठाग्रेण पीडितं ॥ संहतांगुलिपाणिस्तु वाग्यतो जुहुयाद्धविरिति ॥ हविष्येष्वपि मुख्यद्रव्यमाह कात्यायनः॥ हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ॥ माषकोद्रवगौरादीन् सर्वालाभेपि वर्जयेदिति ॥ गौराः गौरसर्षपाः ॥ आदिशब्देन कोद्रवचणकमाषमसूरकुलत्थचीनकवर्जमिति शंखलिखितोक्तं परिगृह्यते॥ आपस्तंबः॥ न क्षारलवणो होमो विद्यते तथा परान्नसंसृष्टस्य चाहविष्यस्य च होम उदीचीनमुष्णं भस्मापोह्य तस्मिन् जुहुयात्तद्

हुतमहुतं चाग्नौ भवतीति॥ क्षारलवणपरान्नसंसृष्टेनाहविष्येणाग्नौ होमो न कार्यः॥ अपि तूष्णं भस्माग्न्यायतनादुत्तरतोऽपोह्य तस्मिन् होतव्यं ॥ उष्णं भस्मेत्यंगारमिश्रितं भस्मेत्यर्थः ॥ अत एव बौधायनः॥ अंगारान् भस्ममिश्रांस्तु उद्धृत्योत्तरतोऽनलात् ॥ जुहुयाद्वैश्वदेवं तु यदि क्षारादिमिश्रितमिति ॥ तथा ॥ परोक्षमन्नमसंस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षयेत्तदेवपवित्रमित्याचक्षत इति ॥ अधिश्रयणं पुनरग्नेरुपरि स्थापनमात्रमन्नसहितस्य वैश्वदेवपात्रस्य ॥ अधिश्रित्य संस्कृतं कृत्वा प्रोक्षयेदित्यन्वयः ॥ एते पंचमहायज्ञा अन्वहं सकृदेव कर्त्तव्याः ॥ अहरहर्भूतेभ्यो बलिं हरेदित्यादिकया य एवं विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वाध्यायोध्येतव्य इत्यन्तया श्रुत्या अथातः पंचमहायज्ञा इत्यादिना भगवतापारस्कराचार्येण च सायं प्रातः शब्दानुपादानेनैवान्वहं पंचमहायज्ञविधानात् ॥ औपासनस्य परिचरणमस्तमितानुदितयोदितिवद्विशेषानभिधानाच्च ॥ यदि हि भगवतः पारस्कराचार्यस्य सायं प्रातः पंचमहायज्ञानुष्ठानमभीष्टं स्यात्तर्हि अथातः सायं प्रातः पंचमहायज्ञा इत्येवसूत्रं प्रणीतं स्यात् ॥ तस्मात्स्वगृह्यानुसारेण वाजसनेयिभिरन्वहं सकृदेवैते कर्त्तव्याः ॥ अग्नये स्वाहा ॥ धर्माय स्वाहेत्यादि षडाहुतीर्जुहोति ॥ एष वैश्वदेवः संतिष्ठते नमो रुद्राय पशुपतय इत्यादिभिर्बलिहरणमित्येतत्संतिष्ठते ॥ देवेभ्यः स्वाहेत्यग्नौ जुहोत्येष देवयज्ञः संतिष्ठते ॥ पितॄनुद्दिश्यैकं ब्राह्मणं भोजयेद्वपि वा दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य तेषु पिंडं ददाति पितृभ्यः स्वधास्त्विति॥ अपि वाऽपस्तत्पितृयज्ञः संतिष्ठते॥ उत्तरेणाग्निं शुचौ देशे प्रागग्रान् दर्भान् संस्तीर्य गंधपुष्पधूपदीपैरलंकृत्य बलिमुपहरति भूतेभ्यो नम इति तद्भूतयज्ञः संतिष्ठते ॥ मनुष्ययज्ञार्थमतिथिं भोजयेदपि वा हंतकारं ब्राह्मणेभ्यो ददाति मनुष्येभ्यो हंतेति मनुष्ययज्ञः संतिष्ठत इति मदनपारिजाते बौधायनसूत्रे वैश्वदेवबलिहरणानन्तरमग्रं दत्त्वा देवयज्ञार्थमुद्धृतान्नाद्देवेभ्यः स्वाहेत्येकामाहुतिमग्नौ जुहुयुः ॥ पितृयज्ञार्थमपि वैश्वदेवबलिहरणशिष्टादन्नात्प्राचीनावीतिनो दक्षिणतोऽग्नेः पितृतीर्थेन पितृभ्यः स्वधास्त्विति बलिं हरेयुः ॥ भूतयज्ञार्थं वैश्वदेवशिष्टान्नादेवोत्तरतोऽग्नेर्देवतीर्थेन बलिमुपहरेयुर्भूतेभ्यो नम इति मनुष्ययज्ञार्थमतिथिं भोजयेदतिथ्यभावे संकल्पितं दद्युरिति मदनपारिजाते आपस्तंबपरिशिष्टे च ब्रह्मयज्ञव्यतिरिक्तेभ्यो महायज्ञेभ्यो वैश्वदेवबलिहरणयोः पृथग्विधानाद्बौधायनापस्तंबादीनामपि महायज्ञाः दिवैव भवन्ति न रात्रौ ॥ वैश्वदेवबलिहरणे तु सायंप्रातर्भवतः ॥ यथाह मदनपारिजाते जमदग्निः ॥ वैश्वदेवं तथा रात्रौ कुर्याद्बलिहृतिस्तथा ॥ महतः पंच यज्ञांस्तु दिवैवेत्याह धर्मवित्तिति ॥ अस्माकं वाजसनेयिनां तु गृह्ये पारस्कराचार्यै-

महायज्ञेभ्यो वैश्वदेवबलिहरणयोः पृथक्त्वेनानुक्तत्वादाद्यैश्चतुर्भिर्यज्ञैरनुष्ठितैरेव वैश्व-देवबलिहरणयोः सिद्धिरवगम्यते ॥ मदनपारिजाते बह्वृचगृह्येपि ॥ देवपितृभूत-मनुष्यब्रह्मयज्ञाः पंचमहायज्ञा आद्याश्चत्वार एव वैश्वदेविकं बलिकर्म चेत्याहुरिति ॥ तेन महायज्ञवैश्वदेवकर्मणोरेकत्वाद्वाजसनेयिनां वैश्वदेवाख्यं कर्म दिवैव भवति न रात्रौ ॥ अत एवोक्तं यज्ञपार्श्वे कात्यायनेन ॥ अग्निमाननग्निमान्कुर्यादिमांस्तु प्र-त्यहं सकृत् ॥ अन्यथा प्रत्यवायी स्याद्रौरवं नरकं व्रजेदिति ॥ स्मृतिरत्नावल्यां हरिहरभाष्ये च वचनं॥ न हंततिं न होमं च न स्वाध्यायं न तर्पणं॥ नैकः श्राद्धद्वयं कुर्यात्समानेहनि कुत्रचिदिति ॥ हंततिर्मनुष्ययज्ञः ॥ होमो वैश्वदेवः ॥ स्वाध्यायो ब्रह्मयज्ञः ॥ तर्पणं पितृयज्ञः ॥ यत्तु मदनपारिजाते ॥ धर्मविन्नाचरेत्स्नानमान्हिकं तु पुनः पुनः ॥ तर्पणं ब्रह्मयज्ञं च वैश्वदेवं च नाचरेदिति विष्णुपुराणवचनमुदाहृ-त्य वैश्वदेवाख्यं कर्म दिवा द्विस्तथा रात्रावपि द्विर्न कर्तव्यमित्युक्तं तद्यस्यां शाखायां सायं प्रातर्वैश्वदेव उक्तस्तद्विषयं ॥ तर्पणं नित्यतर्पणं न पुनः पितृयज्ञः ॥ यत्तु छं-दोगपरिशिष्टे कात्यायनेन ॥ सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च ॥ अन-श्नतापि सततमन्यथा किल्बिषी भवेदित्युक्तं तच्छंदोगविषयं ॥ नचास्य वचसो वाजसनेयिशाखासाधारण्यं ॥ अग्निमाननग्निमान्कुर्यादिति पूर्वोक्तयज्ञपार्श्वपरिशि-ष्टस्थकात्यायनवचनेनैव प्रत्यहं सकृत्पंचमहायज्ञविधानेन साधारण्यस्य वक्तुम-शक्यत्वात् ॥ न च छंदोगयज्ञपार्श्वपरिशिष्टस्थयोः कात्यायनवाक्ययोरेकवा-क्यता संभवति ॥ प्रत्यहं सकृत्करणं प्रत्यहं सायंप्रातः करणयोर्मिथः विरो-धात् ॥ किंच ॥ अकरणं विहिताद्विपरीतकरणं चेत्युभयमप्यन्यथा शब्दाभिधेयं ॥ अतश्च सायं प्रातर्वैश्वदेवकरणे विहितवैपरीत्यकरणात्प्रत्यवायी स्यादीत्यर्थकादन्य-था प्रत्यवायी स्यादित्युत्तरार्द्धादपि पंचमहायज्ञावृत्तेः प्रतिषेधोऽवगम्यते ॥ तस्मा-त्साधूक्तं वाजसनेयिभिः प्रत्यहं सकृदेष पंचमहायज्ञा कर्त्तव्या इति यद्येवं तर्हि श्रुतिस्मृतिविहितं सायं कालीनं द्वितीयं भोजनं कथं सिद्ध्येत् स्वात्मार्थं पाक-निषेधादिति चेत् ॥ सत्यं ॥ ब्राह्मणादिभ्यो भिक्षादिदानार्थत्वेन पाकस्य स्वात्मार्थत्वाभावात्तन्निषेधाप्रवृत्तेः ॥ सायंकालीनभोजनपाकस्तु लौकिकाग्नावेव न गृह्ये ॥ अचोदितेन पाकेन कृतेनोद्धरणेन वा॥ लौकिकोग्निः स विज्ञेयः पुनराधा-नमर्हतीति बौधायनवचनात् ॥ यत्तु सायं प्रातर्वैश्वदेवः कर्त्तव्यं इति छंदोगपरिशि-ष्टमुदाहृत्याचारादर्शकृता उक्तं ॥ सायमिति पुनः पाके सति ॥ तथा च विष्णुपु-राणं ॥ पुनः पाकमुपादाय सायमप्यवनीपते॥ वैश्वदेवनिमित्तं तु पत्न्या सार्द्धं बलिं हरेत् ॥ तत्रापि श्वपचादिभ्यस्तथैवान्नापवर्जितमिति ॥ मनुरपि ॥ सायंत्वन्नस्य

सिद्धस्य पत्न्यमंत्रं बलिं हरेदिति तेन पुनः पाकाभावेन सायं वैश्वदेव इति ॥ तद्युक्तं ॥ अनश्नतापि सततमन्यथा किल्बिषी भवेदिति नित्यतया श्रवणविरोधात् ॥ पुनः पाकमुपादयेति त्वनुवादः ॥ वैश्वदेवार्थत्वेनार्थप्राप्तत्वात्तस्य ॥ नहि पुनः पाकोपादानाभावे सति वैश्वदेवः सिद्ध्यति॥ तस्मात्प्रातरिव सायमपि छंदोगादीनां नित्यो वैश्वदेव इति दिक् ॥ इति वैश्वदेवोपयोगीनिर्णयः ॥

## ॥ अथ जीवत्पितृकस्य संस्कर्त्तुर्नांदीश्राद्धदेवतानिर्णयः ॥

निरूपितं प्रसक्तानुप्रसक्तं॥ अधुना प्रकृतोपयोगी जीवत्पितृकस्य संस्कर्त्तुर्नांदीश्राद्धदेवतानिर्णयः प्रस्तूयते ॥ तत्र कात्यायनः ॥ वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत इति॥ सन्यस्ते जीवतीत्यर्थः॥ अत्र वृद्धौ तीर्थे चेत्यनेकनिमित्तसमावेशे वाक्यभेदादर्द्धमन्तर्वेदीतिवद् द्वितीयादिपदैर्जीवत्पित्रधिकारिकं श्राद्धमात्रं लक्ष्यते॥ छंदोगपरिशिष्टे कात्यायनोपि॥ पितुः पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिरिति ॥ यत्तु प्रेतेभ्यो ददातीत्युपक्रम्य न जीवन्तमपि ददातीति श्रुतेरिति कात्यायनसूत्रं तत्पिंडपितृयज्ञादिविषयं ॥ बहृचगृह्यपरिशिष्टे तु ॥ नांदीश्राद्धं प्रकृत्योक्तं॥ महत्सु पूर्वेद्युस्तदहरल्पेषु तदिदमेके मातृणां पृथक् कुर्वन्त्यथ पितृणामथ मातामहानामिति त्रितयमिच्छन्ति तस्माज्जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां जीवन्त्यां मातामहस्यैव कुर्यादिति ॥ महत्सु उपनयनादिषु अल्पेषु पुंसवनादिषु ॥ पृथग् दिनभेदेन पूर्वान्हादि कालभेदेन वा ॥ ॥ त्रितयं श्राद्धत्रयं भिन्नप्रयोगमित्याशयः॥ तथा च गार्ग्यः ॥ मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकं ॥ मातामहं चोत्तरे वृद्धौ श्राद्धत्रयं स्मृतमिति ॥ तदा शातातपः ॥ पूर्वान्हे मातृकं श्राद्धं मध्यान्हे पैतृकं तथा ॥ ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमिति ॥ एके इच्छन्तीति परिशिष्टोक्त्या सह प्रयोगः स्वाभिमतत्वेन सूचितः ॥ उक्तश्चानुकल्पत्वेन वृद्धमनुना ॥ अलाभे भिन्नकालानां नांदिश्राद्धत्रयं बुधः॥ पूर्वेद्युरेवै प्रकुर्वीत पूर्वान्हे मातृपूर्वकमिति॥ एवं जीवत्पितृकं प्रत्यपि तीर्थ इव श्राद्धत्रयप्राप्तौ विषयविशेषेऽपवादार्थमुच्यते ॥ तस्मादिति ॥ तत्र पार्वणद्वयेनैव नांदीश्राद्धफलसिद्धिरित्याशयः ॥ एवं जीवन्मातृपितृकस्य मातामहश्राद्धेनैव तत्सिद्धिरित्याशयेनोक्तं तस्मादित्यादि ॥ एतच्चोपलक्षणार्थं ॥ जीवत्पितृमातामहस्य मातृपार्वणेनैव तत्सिद्धिरित्यपि बोध्यं ॥ यद्वर्गाद्यो जीवति तत्पार्वणातिरिक्तपार्वणानुष्ठाने नांदीश्राद्धफलसिद्धिरित्यत्र तात्पर्यस्य वाक्यभेदभयेन तस्मादित्यादिग्रंथे स्त्रीकर्तुमुचितत्वात् ॥ एवं च सति मृतपितृकजीवन्मातृमातामहस्य पितृपार्वणमात्रेण नांदीश्राद्धसिद्धेः साधकतया सकलदाक्षिणात्यस्वीकृतेन पितृवर्गे मातृवर्गे तथा

मातामहस्य च जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेदिति शास्त्रेण संवादलाभात्॥ एवं च सति येभ्य एव पिता दद्यादिति शास्त्रेण पितुः पितृपार्वणं परिशिष्टबलेन च स्वमात्रादिपार्वणं समुच्चयेन कार्यमित्यन्ततानुचितं ॥ तस्यां जीवन्त्यां मातामहस्यैव कुर्यादिति पारिजाताद्यनेकग्रंथसंमतपाठैवकारविरोधाच्च ॥ न गिरा गिरेति ब्रूयादितिवदर्थप्राप्तेतरनिवृत्त्यनुवादतया तत्स्वीकारेणात्र ह्येवावपंतीतिवत् श्रौतपरिसंख्यांगीकारगौरवस्याप्यनापत्तेश्च ॥ तं वर्गं तु परित्यजेदिति शास्त्रविरोधाच्च ॥ येभ्य एवेति शास्त्रस्य परिशिष्टस्य च पारिजातोक्तव्यवस्थाविरोधापत्तेश्च ॥ तथाहि तत्रोक्तपरिशिष्टमुदाहृत्य तत्संवादितया सपितुः पितृकृत्येषु अधिकारो न विद्यते ॥ न जीवन्तमतिक्रम्य किंचिद्दद्यादिति श्रुतिरिति कातीयवचनमुदाहृत्य पितृकृत्येषु पितामहादिसंबंधेषु श्राद्धेष्वित्यर्थ इति व्याख्यायकेषुचिदेव तदपवादत्वेन उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ॥ तीर्थे ब्राह्मण आयाते षडैते जीवतः पितुरिति मैत्रायणीयपरिशिष्टमुदाहृतं ॥ तदधिकारे च येभ्य एव पिता दद्यादित्येतत्समानार्था विष्णुस्मृतिरुदाहृता ॥ पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात्पितरि पितामहे च येषां पितामह इति ॥ ततश्च बह्वृचपरिशिष्टस्य सुतसंस्कारविषयत्वान्न जीवन्तमतिक्रम्येत्येतत्तद्विषयं ॥ मैत्रपरिशिष्टस्य तु तदतिरिक्तविषयत्वाद्येभ्य एव पिता दद्यादित्येतत्तद्विषयमित्येवं व्यवस्था प्रतीयत इति वार्त्रघ्नी वृधन्वत्योरिव समुच्चयासंभवः॥ नच मैत्रपरिशिष्टस्य सुतसंस्कारविषयत्वमस्तीति शंक्यं ॥ उद्वाहशब्दस्य कर्तुर्द्वितीयविवाहपरत्वात् ॥ नांदीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः ॥ अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नांदीकमिति वचनात् ॥ न च पुत्रजननिमित्तकमपि संस्कारांगं तीर्थे इव तत्रापि पुरुषार्थस्यैव विधानात् ॥ न च जीवद्वर्गत्रयाद्यसुतसंस्कारेष्वपि येभ्य एव पिता दद्यादित्येतत्स्वीकार आवश्यक इति शंक्यं ॥ पितरि पितामहे च प्रपितामहे च जीवति नैव कुर्यादिति विष्णूक्तरीत्या लोपस्यौचित्यप्रतीतेः ॥ एतदपवादमप्यनन्तरं वक्ष्यामः ॥ यत्तु पारिजातोक्तव्यवस्थादूषणाय स्मृतिरत्नावल्यामुक्तं॥ बह्वृचपरिशिष्टस्य बह्वृचविषयत्वान्मैत्रायणीयस्य तच्छाखिविषयत्वान्न व्यवस्थान्तरं कल्पनीयमिति ॥ तन्न ॥ आश्वलायनपरिशिष्टे सुतसंस्कारेष्विति श्रवणात्परिशिष्टान्तरे च तद्भिन्नकर्मणामेव श्रवणात्कर्मभेदेन व्यवस्थाया अत्र कल्प्यत्वात् शब्दानारूढशाखाभेदव्यवस्था कल्पनस्यैवाप्यत्वात् होलाकाधिकरणन्यायबाधितत्वाच्च यत्तु पारिजाते ॥ न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः ॥ येभ्य एव पिता कुर्यात्तेभ्यः कुर्वीत साग्निकः॥ पितामहेप्येवमेव कुर्याज्जीवति साग्निकः ॥ साग्निकोपि न कुर्वीत जीवति प्रपितामह इति सुमन्तुवचनान्मैत्रायणीयपरिशिष्टोक्तविषयेष्वपि जीवत्पितृकस्य साग्नेरेवाधिकारो

न निरग्नेरिति प्रतिपादितं तदुद्वाहपुत्रजननिमित्तकनांदीश्राद्धव्यतिरिक्ततीर्थश्राद्धादिविषयं ॥ अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि ॥ येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणमित्याचारमदनरत्नोदाहृतहारीतवचनेन सुमन्तुवाक्यापवादात् ॥ साग्निरत्र श्रौताग्निमान् स्मार्त्ताग्निमांश्च तदितरो निरग्निरित्यपि तत्रैवोक्तं अतश्च निरग्नेर्जीवत्पितृकस्य तीर्थश्राद्धादौ नाधिकार इति सिद्धं ॥ यत्तु तत्रैवोक्तं॥ येभ्य एव पिता दद्यादित्यत्र येभ्य इति पितुः पित्रादय एव परामृश्यन्ते नतु मात्रादयो मातामहादयश्च ॥ न जीवन्तमतिक्रम्य किंचिद्दद्यादित्यादि शास्त्रेण तावत्पितृपार्वणमेव निषिद्धयते ॥ तत्रैव जीवतोतिक्रमसंभवात् ॥ प्रमीतस्वमात्रादिकेन स्वमात्राद्युद्देशेन श्राद्धकरणे तदभावात् ॥ प्रतिप्रसवार्थस्य च येभ्य इति शास्त्रस्य निषेधसमानविषयत्वौचित्यात् ॥ किंच ॥ येभ्य इत्युक्तवाक्ये पितुर्मात्रादिग्रहणे तत्समानार्थे विष्णुवाक्येपि तदापद्येत॥ तच्चेत्थं पठचते ॥ पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात्पितरि पितामहे च जीवति येषां पितामहः ॥ पितरि पितामहे प्रपितामहे च जीवति नैव कुर्याद्यस्य पिता प्रेतः स्यात्स पित्रे पिंडं निधाय पितामहात्परं द्वाभ्यां दद्याद्यस्य पितापितामहश्च प्रेतौ स्यातां स ताभ्यां पिंडं दत्वा प्रपितामहात्परं द्वाभ्यां दद्यात् ॥ मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ॥ मंत्रो येन यथान्यायं शेषाणां मंत्रवर्जितमिति ॥ अत्र च प्रमीतमातृमातामहोपि जीवत्पितृकः पितुःपित्रादीनिव तदीयानेव मात्रादीन् मातामहादींश्चोद्दिश्य श्राद्धं कुर्यादिति चेत्प्रथमवाक्ये विवक्षितोऽर्थः स्यात्तदा येषां पितामहः कुर्यातेषां कुर्यादिति सानुषंगें द्वितीयवाक्ये तथैव विवक्षापद्येत ॥ ततश्च स्वीयानां मात्रादीनां मातामहादीनां पितुर्मात्रादीनां मातामहादीनां च प्रमीतानां परित्यागेन पितामहस्य मात्रादीन् मातामहादींश्चोद्दिश्योद्वाहपुत्रजननादौ जीवत्पितृपितामहस्य श्राद्धानुष्ठानमापद्येत ॥ तथा मातामहानामप्येवमित्यतिदेशाज्जीवन्मातामहस्य स्वीयानां पैतृकाणां पैतामहानां च मात्रादीनां मातामहादीनामनादरेण मातामहसंबंधिनो मात्रादीन्मातामहादींश्चोद्दिश्य तदनुष्ठानं स्यादिति प्रथममेव वाक्यं पितुः पित्रादिपार्वणस्यैव प्रापकमिति स्वीकृत्य जीवत्पितृकस्तेन सह स्वीयानामेव मात्रादीनां मातामहादीनां च श्राद्धं कुर्यादिति स्वीकर्त्तुमुचितमिति ॥ तन्न ॥ यतो येभ्य एव पिता दद्यादीदृशार्थकानां सर्वेषां विष्णुस्मृत्यादिवाक्यानां प्रतिप्रसवत्वं तदैव घटते ॥ यदा न जीवन्तमतिक्रम्येत्यादीनां जीवत्पितृकं प्रति पितुः पित्राद्युद्देश्यकपार्वणनिषेधपरत्वं भवति ॥ न चैतत् ॥ प्रतिप्रसवत्वाभिमतवाक्यभिन्नस्य तादृशपार्वणप्रापकस्य निषेधापेक्षितस्याभावात् ॥ तत्तच्छ्राद्धविधिषु पित्रादिशब्दानां ससंबंधिकत्वमहिम्ना कर्त्तुः पित्रादीनामेव प्रतीत्या तादृशपार्वणप्राप्तेरनाशंक्यत्वात् ॥ निषेधस्य प्रेतेभ्यो ददाति ॥ प्रेतेभ्य एव निपृणीयादिति पिंडपितृयज्ञप्रकरणस्थकात्यायनाश्वला-

यनोक्तितुल्यप्रवृत्तिकेन जीवमानेन देयं स्याद्यस्माद्भरतसत्तम ॥ तस्माज्जीवत्पिता कुर्याद् द्वाभ्यामेव न संशय इति भविष्यपुराणवचनेन प्राप्तस्य मृतपुंद्वयमात्रोद्देश्यकप्रदानस्य निषेधकयोपपत्तेः ॥ शक्यते च हारीतवचनस्यानग्निकं प्रतिमात्रादिविषयेऽपि प्रतिप्रसवत्वं वक्तुमनायासेन ॥ तस्यापि वृद्धितीर्थादौ मैत्रायणीयप्राप्तस्य सुमन्तुवचनेन निषिद्धत्वात् ॥ यत्तु जीवत्पितृपितामहेन पितामहमात्राद्युद्देशेन श्राद्धानुष्ठानं स्यादित्युक्तं तन्नानिष्टं ॥ पितुर्मात्राद्युद्देशेनेव तदुद्देशेनापि प्रमाणसिद्धस्य तदनुष्ठानस्य स्वीकर्त्तुमुचीतत्वात् ॥ यत्तु मातामहानामप्येवमित्यतिदेशमूलकमनिष्टोपादनं तत्तदर्थाज्ञानविजृंभितं ॥ अत्र हि मातामहानां श्राद्धं पितृपार्वणवत्कर्तव्यमुचितमंत्रोह्युक्तमित्यतिदिश्यते ॥ इत्थमतिदेशेन च यथा विसर्जनान्तान्यंगान्यतिदिश्यन्ते तथाऽव्यवहितपूर्वग्रंथोक्तक्रमेणैकद्व्यादिजीवननिमित्ताव्युत्क्रममरणनिमित्ता च पितृपार्वणगता देवता व्यवस्थापि॥ अंगत्वाविशेषात् ॥ नचैवं मात्रादिश्राद्धं पितृपार्वणांगं ॥ येनातिदिश्येत ॥ न च विष्णुस्मृतिव्याख्यातारोऽपि मातामहानामप्येवमिति वचस इतरेति कर्त्तव्यतातिदेशपरतामिवोक्तविधदेवताव्यवस्थातिदेशपरतां मन्यमाना अपि मात्रादिपार्वणातिदेशपरतां मन्यन्ते ॥ मन्यन्ते च येषां पिता कुर्याद्येषां पितामह इत्यनयोर्मात्रादिमातामहादिपार्वणगोचरतामपि॥ युक्तं चैतत् ॥ येषामिति यच्छब्देन पितृकर्तृकश्राद्धोद्देश्यतायाः पुत्रकर्त्तृकश्राद्धोद्देश्यत्वव्याप्यत्वप्रतीतेः ॥ यत्कृतकं तदनित्यमितिवत्॥ येभ्य एव पिता दद्यादिति यच्छब्दोपबध्यैव कारेण वीप्स्याप्रतीतेश्च ॥ यमेव धार्त्तराष्ट्रं तु भीमसेनोभ्यवेक्षते॥ क्षणमात्रेण तं हन्ति व्याघ्रो मृगगणं यथेतिवत्॥अतो येभ्य एव पिता दद्यादीदृशशास्त्रानुसारिण्यनुष्ठाने पितृकर्त्तृकश्राद्धोद्देश्य पितृमातृमातामहाद्युद्देश्यकश्राद्धत्रयस्य कर्त्तव्यतान्नपुत्रेणात्मीयमात्राद्युद्देशेन श्राद्धसंभवः ॥ न चाश्वलायनपरिशिष्टानुसारिण्यनुष्ठाने पितुः पित्राद्युद्देशेन तत्संभव इति प्रागेव विदितं ॥ अतस्तदुभयार्थसमुच्चयोक्तिः साहसमात्रं॥ अस्तु वा विष्णुस्मृतेर्येभ्य एव पिता दद्यादित्यस्य च सुतसंस्कारसाधारण्यं तथाप्याश्वलायनशाखिभिस्तत्परिशिष्टोक्त एव पक्षः संभवे कर्त्तुमुचितो नतूक्तसमुच्चयः बह्वल्पं वा स्वगृह्योक्तमिति स्मृतेः॥ कुलपरंपरया तत्वेन यदि तच्छाखिनोपि विष्णुस्मृत्युक्तमाचरन्ति॥ आचरन्तु नाम ॥ नतूक्तसमुच्चयः परंपरायातोऽस्ति ॥ स्मृतिकौस्तुभेप्येवं॥ इति जीवत्पितृकस्य संस्कर्तुर्नान्दीश्राद्धदेवता निर्णयः॥

" अथ सुतसंस्कारे प्रवासादिना पितृकर्त्तृकत्वासंभवनिमित्त कर्त्रन्तरं प्रतिनान्दीश्राद्धदेवतानिर्णयः ॥

तत्र छंदोगपरिशिष्टे कात्यायनः॥ स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु॥ पिण्डानोद्वाहनात्तेषां तस्याभावेतु तत्क्रमादिति ॥ ओद्वाहनादित्याङभिविधौ॥ तेनो-

द्वाहं विवाहमभिव्याप्य सुतसंस्कारकर्मसु पिता स्वपितृभ्यः पिंडान् दद्यात्॥ तदुपलक्षितमाभ्युदयिकं श्राद्धं कुर्यादित्यर्थः॥ उद्वाहोत्र पूर्वोभिमतः ॥ द्वितीये तु पितरि जीवत्यपि स्वकर्तृकत्वात् ॥ तथा च स्मृतिः ॥ नांदीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः॥ अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नांदीकमिति॥ तस्याभावे तु तत्क्रमादिति ।। तस्य पितुः प्रवासादिनाऽभावे तु तेष्वेव कर्मसु तन्निमित्तः पित्रसंनिधिनिमित्तो योधिकारिक्रमः असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैरिति शास्त्रावगतस्तेन क्रमेण तेषां पूर्वसंस्कृतानां मध्ये ज्येष्ठभ्रात्रादिःकुर्वन् स्वपितृभ्यो दद्यात् ॥ समावर्त्तनस्यापि विवाहात्प्राचीनसुतसंस्कारत्वाज्जीवत्पितृकसमावर्त्तने पिता स्वपितृभ्यो दद्यात् ॥ अजीवत्पितृकस्तु पूर्वसंस्कृतभ्रात्रसंभवे स्वयमेव स्वपितृभ्यो दद्यात् ॥ उपनयनेन कर्माधिकारसत्त्वात् ॥ विवाहेप्येवमेव द्रष्टव्यमिति पारिजाते व्याख्यातं ॥ अत्र च पितुर्ज्जीवत्पितृकस्य च ज्येष्ठभ्रात्रादेश्च तथा द्विविधस्य शास्त्रान्तरे श्राद्धीयदेवतात्वेन येऽवगताः पित्रादयो मात्रादयो मातामहादयश्च तेषामेव स्वपितृभ्य इति निर्देशः ॥ स्वेज्यत्वस्य षष्ठ्यर्थत्वात् ॥ जीवत्पितृकेन स्वजनकाद्युद्देश्यकश्राद्धानुष्ठानस्य बाधितत्वात् ॥ अत एव समावर्त्तनस्य माणवकर्तृकत्वेपि तदंगभूतनांदीश्राद्धे पितुस्तदभावे ज्येष्ठभ्रात्रादेरप्राप्तकर्तृत्वप्रापणादिना वचनस्यार्थवत्त्वमित्याशयेन तदुपन्यास इति बोध्यं ॥ अजीवत्पितृक इति जीवदसंनिहितपितृकस्याप्युपलक्षणं ॥ स्वपितृभ्य इति च पूर्ववत् ॥ आद्यस्येज्या जनकादय एव नत्वाश्वलायनपरिशिष्टोक्तरीत्या पितृपार्वणत्यागेन मात्रादयः ॥ समावर्त्तनस्यात्मसंस्कारत्वेन सुतसंस्कारत्वाभावात् ॥ हेमाद्रिणात्वक्षराखढमप्राप्तविधिं दर्शयितुं व्याख्यान्तरमकारि ॥ पित्र्यभावे अन्यो यः कश्चित्संस्कारं कुर्यात्स तत्क्रमात्तं पितरमारभ्य सस्कार्यस्य पितृणां यः क्रमस्तेन क्रमेण दद्यान्नतु स्वीयेभ्यः पितृभ्यः ॥ तस्मात्पितृव्याचार्यमातुलादयः संस्कारस्योपनेयादिरेव पितृः श्राद्धं दद्युर्न स्वपितृभ्य इत्यत्र पारमार्थिकः पक्षो विधीयते ॥ अन्यथा स्वपितृभ्य इत्यस्यानुषंगकल्पनाया अन्याय्यत्वात्पितृव्यादीनामपि पितृवत्स्वपितृभ्यो दानाविशेषे स्वपितृभ्यः पिता दद्यादित्यस्यानर्थक्यापत्तेः ॥ पितुः पितृव्यादिषु वैलक्षण्यद्योतकशब्दानुपपत्तेः ॥ उपनेयस्य प्रदेयकन्यायाश्च मुख्याधिकारित्वेन तदीयपित्रादीनामिज्यत्वौचित्याच्च ॥ महार्णवोदाहृते गर्भाष्टमे वर्षे ब्राह्मण आत्मानमुपानयेदित्यादि बुधस्मृत्यादि वाक्ये णिजन्तमुपनयनशब्दं व्याचक्षाणैरपरार्कादिभिरुपपादितं चोपनेयकन्ययोरेवोपनयनादौ मुख्याधिकारित्वमिति ॥ अयमेव प्रकारः पितृव्यकर्तृकविवाहे बोध्यः॥ न तत्र मानाभावः ॥ पित्र्यभावे नामकरणे वक्ष्यन्त्यापद्शङ्खस्मृतौ अन्यो वा कुलवृद्ध इत्यस्यां नामकरणप्रभृतिसंस्कारविषयतया हेमाद्रिणैवोक्तत्वादिति ॥ अत्रापि पित्र्यभावो द्वेधा ॥ मरणेन प्रवासा-

दिना वा ॥ पितरमारभ्येत्यपि इज्यत्वेनेज्योपलक्षणत्वेन वा ॥ संस्कार्यस्येति षष्ठी-क्रमनिरूपितसंबंधार्था संस्कार्य्यं प्रति समावर्त्तनादौ इज्यदेवताक्रमो यो विहित इ-त्यर्थः ॥ अत एवेज्यत्वमुपनेयादिति षष्ठ्यर्थः॥ ततश्चाजीवत्पितृकस्योपयनं कुर्वन् मातुलादिस्तदीयजनकादीनुद्दिश्यैव कुर्यात् ॥ जीवत्पितृकस्य तु जनकस्य जन-कादीन् ॥ न तु परिशिष्टानुसारेण केवलान्मर्मातानपि संस्कार्यमात्रादीन् ॥ संस्का-र्यं प्रति स्वसंस्कारे समावर्त्तनादौ कर्त्तव्ये तासामुक्तरीत्येज्यत्वाप्राप्तेः ॥ अत उप-नयने समावर्त्तन इव संस्कार्यस्यैव यदाधिकारः स्यात्तदा संस्कार्यस्य नांदीश्राद्ध-देवताया औचित्यायतास्ता एवोद्दिश्य मातुलादिर्नांदीश्राद्धं कुर्यादिति तात्पर्या-र्थः ॥ स्मृतिरत्नावल्यांतु बह्वृचपरिशिष्टे इत्युपन्यस्य समावर्त्तनान्तं पिता दद्यान्मृते पितरि मातापि तथैव कारयेदुभयाभावे भ्रात्रादयोपि तथैव कुर्य्युः संस्कार्यस्य यः पिता तस्य मातरः पितरो मातामहाश्चेति ॥ अपरे संस्का-र्यस्यैव मातृप्रभृतयो भवन्तीति मन्यन्ते ॥ पूर्वस्मिन्पक्षे पितुरेवाधिकारानुवृत्तिरु-पनयनात्पूर्वं नियमेन मृतस्यापि सत्रवत् ॥ तथा च छंदोगानामुपग्रंथसूत्रकृता सत्रविषये सुब्रह्मण्यायां यजमाननामग्रहणमधिकृत्योक्तं ॥ दीक्षिते प्रेते प्रेतस्यैव पूर्वपुरुषैः सह नामानि गृह्णीयुरिति ॥ अस्यायमर्थः ॥ असौ यजत इत्यादि यद्यज-माननामग्रहणं मृतस्यापि तस्यैव गृह्णीयात्॥ न नेदिष्ठिनः न संनिहितस्य दिक्षितस्ये-त्यर्थः॥एवं मातापितृभ्यः स्वद्रव्येण श्राद्धं कृत्वा बालकं संस्कुर्यात् ॥ अकरणे मम प्रत्यवायः स्यादितीत्थं मन्यते यः स एवाधिकारी नतु बालस्याधिकारः ॥ न चे-त्थं शास्त्रमस्तिस्वयमात्मानं संस्कुर्यादिति ॥ यदा गर्भाधानानन्तरं पिता मृतस्तदा कथमजातस्य पुंसवनादावधिकार इत्येतद्विचार्यानुष्ठेयमित्युक्तं ॥ एतदनुसारेणैव स्वपितृभ्यः पिता दद्यादिति वचनं श्राद्धकाशिकाकृता व्याख्यातं ॥तथाहि ॥ त-स्य पितुरभावे तेषां पितुर्मात्रादीनामेव नवानां तत्क्रमाद्येन क्रमेण पित्रा दत्तं तेनैव क्रमेणाधिकारी ज्येष्ठभ्रात्रादिरपि मृते पितरि दद्यादिति ॥ तदेतद्धेमाद्र्याद्यनेकनिबं-धविरोधादभियुक्तैरनाहृतमित्यलं भूयसा ॥

श्रीशंभोश्चरणद्वंद्वमाधाय हृदयांबुजे ॥ उद्धवस्य तनूजेन काशिपुरनिवासिना ॥ १ ॥
रचितोऽनन्तदेवेन सर्वकर्मांगनिर्णयः॥ गुरवस्तेन तुष्यन्तु विद्वांसश्च तदा मयि ॥२॥

॥ इति श्रीसूर्यपुरनिवासिना भीतडाखेडावालविप्रजातीयेन द्विवेद्युपनामकपरशुरामात्मजेन जगन्नाथशर्मणा संशोधिते श्रीरुद्रकल्पद्रुमे परिभाषापरिच्छेदः

॥ समाप्तः ॥

# ॥ अथ सर्वकर्मसाधारणांगप्रयोगपरिच्छेदः ॥२॥

भवानीशिवयोः सूनुं विघ्नव्यूहविदारणम्॥ ढुंढिराजमहं वंदे भक्तकल्पमहीरुहम् ॥१॥ वंदे श्रीदक्षिणामूर्त्तिं सच्चिदानंदविग्रहम्॥गौरिभूषितवामांगाविधिवाग्विष्णुसेवितम्॥२॥ श्रीगुरोश्चरणौ नत्वा सर्वं कर्मांगकर्मणाम् ॥ उद्धवस्य तनूजोहं कुर्वे पद्धतिमुत्तमाम् ॥३॥ विविधाः पद्धती बुंध्वा संप्रदायं सतां तथा॥माध्यंदिनीयविधिनाशोधयंतुधियाबुधाः॥४॥

अथ सर्वेषां श्रौतानां गार्ह्याणां स्मार्तानां च कर्मणां साधारणांगानां गणेशपूजादीनां स्वस्तिवाचनान्तानां पद्धतिरुच्यते । महत्सु कर्मसु पूर्वेद्युरल्पेषु तु तस्मिन्नहनि पूर्वाह्णे निर्णेजनांत पंचमहायज्ञांतकृतनित्यक्रियेण सपत्नीकेन संस्कार्येण यजमानेन स्वासने प्राङ्मुखेनोपवेशनम्॥ पादौ हस्तौ च प्रक्षाल्य द्विराचमनम् त्रिःप्राणानायम्य देशकालौ संकीर्त्य करिष्यमाणामुककर्मांगतया मंगलस्नानं करिष्य इति संकल्पः कार्यः । ततो यथाचारं मंगलवाद्यघोषपुरःसरं वृद्धसुवासिनीभिर्नीराजनपूर्वकं सर्वौषधीसर्वगंधचूर्णयुक्तेन तिलामलकादिना सुगंधितैलेन वा उद्वर्त्तस्नानम् । इदमेव मंगलस्नानमित्यभिधीयते ॥ ततो द्विराचमनम् । अहते ( इषद्धौतं नवं श्वेतं सदशं यंत्रधारितम्। अहतं तत् विजानीयात्सर्वकर्मसु पावनम्। वाससी परिधत्ते । अमौत्रधत्ते वा। ॐ परिधास्यै इति मंत्रेण परिधानीयम्। ॐ यशसामाद्येतिउत्तरीयं च । पत्नीत्वमंत्रं । प्रतिवस्त्रं स्मार्तविधिना द्विराचमनं । पत्नीतुयथोक्तं । वारणादि यज्ञियदारुनिर्मिते सोत्तरच्छदे शुद्धपीते बद्धत्रिकच्छेन यज्ञोपवीतिना दक्षिणपार्श्वे बद्धशिखेन शिखाभिन्नबद्धकेशेन यजमानेन प्राङ्मुखेनोदङ्मुखेन वा उपवेशनम् । तद्दक्षिणतः पत्न्या च ॥ तद्दक्षिणतः संस्कार्येण च ॥ सव्ये कुशोपग्रहः ॥ दक्षिणे पवित्रोपग्रहः करद्वये वा कुशोपग्रहः पवित्रोपग्रहो वा । स्मार्तविधिनाचम्य त्रीन्प्राणायामान्कृत्वा त्रिमात्रं प्रणवमुच्चार्य लक्ष्मीनारायणादीन्देवान्प्रणमेत् ॥ तद्यथा ॥ ॐ लक्ष्मीनारायणाभ्यांनमः। ॐ भवानीशंकराभ्यांनमः। ॐ वाणीहिरण्यगर्भाभ्यांनमः। ॐ शचीपुरन्दराभ्यांनमः। ॐ मातृपितृचरणकमलेभ्योनमः। ॐ कुलदेवताभ्योनमः। ॐ इष्टदेवताभ्योनमः । ॐ गुरुभ्योनमः । ॐ सर्वेभ्यो ब्राह्मणेभ्योनमः । ॐ सिद्धिबुद्धिसहिताय श्रीगणेशायनमः । इति प्रणम्य । ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः॥ लंबोदरश्च विकटो विघ्ननाशो गणाधिपः॥१॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥२॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते॥३॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥४॥ अभीप्सितार्थसिध्यर्थं पूजितो यः सुरासुरैः ॥सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥५॥ वक्रतुंडमहा-

कायसूर्यकोटिसमप्रभ ॥ ॥ अविघ्नं कुरु मे देव सर्वकार्येषु सिद्धिद ॥६॥ सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गौरी नारायणि नमोस्तुते ॥७॥ स्मृते सकलकल्याणभाजनं यत्र जायते ॥ पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥८॥ सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ॥ येषां हृदिस्थो भगवान्मंगलायतनो हरिः ॥९॥ सर्वेषु कालेषु समस्तदेशेष्वशेषकार्येषु तथेश्वरेश्वरः॥ सर्वैः स्वरूपैर्भगवाननादिर्ममास्तु मांगल्यविवृद्धये हरिः॥१०॥ तदेव लग्नं सुदिनं तदेव ताराबलं चंद्रबलं तदेव ॥ विद्याबलं दैवबलंतदेव लक्ष्मीपते तेंऽघ्रियुगं स्मरामि ॥ ११ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरः श्यामो हृदयस्थो जनार्दनः ॥१२॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः तत्र श्रीर्विजयो भूतिर्ध्रुवानीतिर्मतिर्मम ॥१३॥ सर्वेष्वारंभकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशंतु नः सिद्धिं ब्रह्मेशानजनार्दनः ॥ १४ ॥ इति श्लोकपाठः ॥

## ॥ अथ प्रधानसंकल्पः ॥

ततो दक्षिणेन पाणिना कुशकुसुमयवजलादानम्॥ देशकालयोः संकीर्तनम् ॥ तत्र वाक्यं श्राद्धखंडे हेमाद्रिणा प्रदर्शितम् ॥ ॐ इह पृथिव्यां जंबूद्वीपे भारतवर्षे कुमारिकाखंडे आर्यावर्तैकदेशे अविमुक्तक्षेत्रे ( मणिकर्णिका ) आनंदवने गौरीमुखे त्रिकंटकविराजिते भागीरथ्याः पश्चिमे तीरे इत्यादिदेशं समनुकीर्त्य ॐ ब्रह्मणो द्वितीये परार्द्धे श्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमस्य कलियुगस्य प्रथमचरणे बौद्धावतारे विक्रमशके अमुकावान्तरयुगेऽमुकयुगावयवे वर्तमानेऽमुकनाम्नि संवत्सरेऽयने ऋतौ मासे पक्षे तिथौ वारे नक्षत्रे योगे करणे रौद्राद्यमुककालेऽमुकराशिस्थिते चन्द्रेऽमुकराशिस्थिते सवितरि अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एव गुणविशिष्ठे देशे काले च अमुकसगोत्रोऽमुकशर्माहं मम सुतस्य सुतायाः वाऽश्वोऽद्यवाऽमुकसंस्कारं करिष्ये। तदंगत्वेन मंडपदेवताप्रतिष्ठा मातृपूजा वसोर्द्धाराऽयुष्यजपाभ्युदयिकश्राद्धस्वस्तिवाचनानि करिष्ये । तत्रादावमुककर्मणो निर्विघ्नफलसिद्ध्यये गणपतिपूजां करिष्य इत्यंतरंगत्वपक्षे संकल्पः ॥ बहिरंगत्वपक्षे तु मम सुतस्य सुतायाः वा करिष्यमाणामुकसंस्कारांगतया मंडपदेवताप्रतिष्ठा मातृपूजा वसोर्द्धाराऽयुष्यजपाभ्युदयिकश्राद्धस्वस्तिवाचनानि करिष्ये ॥ तत्रादावमुककर्मणो निर्विघ्नफलसिद्ध्यये गणपतिपूजां करिष्य इति संकल्पः । अथवा मम सुतस्य सुतायाः वा करिष्यमाणामुकसंस्कारस्य निर्विघ्नफलसिद्ध्यये गणपतिपूजां करिष्ये ॥ इत्येवं सर्वेषां पृथक्पृथक् संकल्पः । यत्र तु मंडपाभावे तदंगभूता

मंडपदेवताप्रतिष्ठा नास्ति तत्र तु संकल्पवाक्येन मंडपदेताप्रतिष्ठापदोल्लेखः॥ भ्रातृपितृव्यादेस्तु ममास्य भ्रातुरिति भगिन्या इति वा । भ्रातुः सुतस्य भ्रातुः कन्याया वा इति । मम भगिन्याः सुतस्येति भगिन्याः कन्याया इति वा ऊहेन संकल्पः प्रधानसंकल्पस्तु सर्वं विधाय तद्दिने श्वो वा कार्यः॥पट्टे मृन्मयपीठे वा रक्तवस्त्राच्छिन्नेऽरुणाक्षतैर्विरचिताष्टदलपद्मोपरि गणपतिस्थापनम् ॥

## ॥ अथ गणपतिपूजनप्रयोगः ॥

गणानांत्वेत्यस्य प्रजापतिर्ऋषिः यजुर्गणपतिर्देवता गणपतिस्थापने ( अर्चने ) विनियोगः । ॐ गणानांत्वेति मंत्रमुच्चार्य सिद्धिबुद्धिसहितं सांगं सायुधं सवाहनं सपरिवारं गणपतिमावाहयामीत्यावाह्य स्थापयामीति स्थापनम् ॥ गर्भधमित्यन्तो गणानांत्वेति मंत्रो माध्यंदिनानाम्। वसो ममेत्यंतो काण्वानाम् । शाखाद्वयेपि कंडिकाया उक्तप्रतिकांतत्वात् । सर्वत्र स्मार्ते कर्मणि मंत्रावसाने बोधकप्रमाणाभावे प्रतीकोयात्तमंत्रस्य कंडिकांतत्वात् तथा रेणुकारिकायाम्। गृह्यकर्मसु येमंत्रा ज्ञेयाः स्वाध्यायपाठतः॥ किंच मध्यमवृत्या तेन द्रुता न विलम्बिता॥ अथवा॥ सिद्धिबुद्धिसहितमित्याद्युक्त्वा गणपतिमावाहयामीत्यावाह्य स्थापयामीति स्थापनम्। अथवा। हेहेरम्ब त्वमेह्येहि ह्यंबिकात्र्यम्बकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभपितः प्रभो ॥ नागास्य नागहारस्त्वं गणराजचतुर्भुजः ॥ भूषितः स्वायुधैर्दंतपाशांकुशपरश्वधैः॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः॥ इहागत्य गृहाण त्वं पूजायागं च रक्ष मे। इति पौराणमंत्रं वा उच्चार्य सिद्धिबुद्धिसहितं सांगं सायुधं सवाहनं सपरिवारं महागणपतिमावाहयामीत्यावाह्य स्थापयामीति स्थापनम्॥ ततो गणानां त्वेत्यस्यार्षादिकं पूर्ववत्स्मृत्वा अर्चने विनियोगः॥ ॐ गणानांत्वेति मंत्रं सिद्धिबुद्धिसहिताय सांगाय सायुधाय सवाहनाय सपरिवाराय महागणपतये नम इत्यंतमुच्चार्य इदमासनं समर्पयामीत्येवमर्थसरूपेण वचसा आसनपाद्यार्घ्याचमनीयस्नानाचमनीयवस्त्राचमनीययज्ञोपवीताचमनीयगंधपुष्पधूपदीपनैवेद्याचमनीयतांबूलप्रणामप्रदक्षिणानीराजनदक्षिणादानान्तैः षोडशभिरुपचारैरभ्यर्चनम् ॥ तत्र गंधदाने ससिंधूरं चंदनं रक्तचंदनं च दद्यादिति विशेषः । यद्वा। उक्तमंत्रवाक्याभ्यां गंधपुष्पधूपदीपनैवेद्यलक्षणैः पंचभिरुपचारैरभ्यर्चनम् । अस्मिन् पक्षे न दक्षिणा॥ केचित् गणेशांबिकयोः पूजामाचरंति । सा चैवम् । ॐ गणानांत्वेति मंत्रेण तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि। तन्नो दंती प्रचोदयात्। इति गणेशगायत्र्या च गणपतिपूजा ॥ ॐ जातवेदस इति मंत्रेण सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी प्रचोदयादिति अंबिकागायत्र्या चांबिका पूजा ॥ अर्घपात्रे गंधरक्तचंदनपुष्पदूर्वाक्षतप्रक्षेपः । नालिकेराद्यन्यतमफलस्य च ॥ ॐ रक्ष रक्ष

गणाध्यक्ष त्र्यक्ष त्रैलोक्यरक्षक॥ भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ द्वैमातुरकृपासिंधो षाण्मातुराग्रजप्रभो॥ वरदस्त्वंवरं देहि वांछितं वांछितार्थदं । गृहाणार्घ्यमिमं देव सर्वदेवनमस्कृत । अनेन फलदानेन फलदोस्तु सदा ममेत्यंते सिद्धिबुद्धिसहिताय सांगाय सायुधाय सवाहनाय सपरिवाराय महागणपतयेनमः फलार्घ्यं समर्पयामीति मंत्रवाक्याभ्यां फलार्घदानम्। ॐ विघ्नेश्वराय वरदाय सुरप्रियाय लंबोदराय सकलाय जगद्धिताय॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ २ ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः॥ नमस्ते रुद्ररूपाय करिरूपाय ते नमः॥ विश्वरूपाय भूपाय नमस्ते ब्रह्मचारिणे ॥ भक्तप्रियाय देवाय नमस्तुभ्यं विनायकं ॥ लंबोदर नमस्तुभ्यं सततं मोदकप्रिय ॥ अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥ त्वां विघ्नशत्रुदलनेतिच सुंदरेति भक्तप्रियेति सुखदेति फलप्रदेति ॥ विद्याप्रदेत्यघहरेति च ये स्तुवंति तेभ्यो गणेश वरदो भवनित्यमेवेति प्रार्थना॥ लंबोदर नमस्तुभ्यमिति श्लोकेन वक्रतुंड महाकायेति श्लोकेन वा प्रार्थना ॥ समाचारात्कृतांजलिना देशकालयोः संकीर्तनांते मयाचरिते गणपतिपूजनविधौ यन्यूनं यथातिरिक्तं तत्परिपूर्णमस्त्वित्युक्ते अस्तु परिपूर्णमिति प्रतिवचनम् ॥ अनेन गणपतिपूजनेनामुककर्मणो निर्विघ्नफलसिद्धिरस्त्वित्युक्ते अस्तु निर्विघ्नफलसिद्धिरिति प्रतिवचनम्। इति ॥

## ॥ अथ मंडपदेवताप्रतिष्ठाविधिः ॥

तद्यथा ॥ पूर्वाह्णे सपत्नीकेन धृतमांगलिकवेषेण शुभासने उपवेशनम् । आचम्य प्राणानायम्येष्टदेवतागुर्वादीन्नत्वा दक्षिणेन पाणिना कुशकुसुमयवजलादानम्। देशकालयोः संकीर्तनांते अस्याः अमुकनाम्न्याः कन्यायाः करिष्यमाणविवाहांगत्वेनामुकनाम्नःकुमारस्य करिष्यमाणोपनयनाद्यंगत्वेन वा मंडपदेवताप्रतिष्ठां करिष्ये। तदंगत्वेन स्वस्तिवाचनं करिष्य इति संकल्पः॥ वक्ष्यमाणेन विधिना कलशस्थापनम्। चतुर्णां ब्राह्मणानां गंधाक्षतपुष्पतांबुलफलदक्षिणादिभिः पूजनम् । स्वस्तिवाचनं यथोक्तम् ॥। दूर्वाशमीपल्लवकुशपल्लवानामाम्रादिप्रशस्तवृक्षपत्रवेष्टितानां रक्तसूत्रेण पंचधा वेष्टनम् ॥ आग्नेयकोणस्थमंडपस्तंभोपरि नंदिनी नामकं वेष्टितं स्थापयित्वा तत्र नंदीन्याः पूजनम् ॥ तच्चेत्थम् ॥ ॐ भूर्भुवः स्वः नंदिन्यै नमः नंदिनीं आवाहयामीत्यावाह्य स्थापयामीति स्थापनम् ॥ ॐ मनोजूतिरिति मंत्रांते नंदिनीसुप्रतिष्ठिता भवेति प्रतिष्ठा । ॐ नंदिन्यै नम इत्यासनार्घाचमनांतोपचारैरभ्यर्चनम् ॥ ॐ आपोहिष्ठेति त्र्यृचेन नंदिन्यै नम इत्यंतेन स्नानोपचारार्थं प्रोक्षणं ॥

ॐ नंदिन्यैनम इत्याचमनादिपुष्पांतोपचारैरभ्यर्चनम्। ॐ दधि क्राव्ण इति दध्ना। ॐ कांडात्कांडादिति दूर्वाभिश्चाभ्यर्चनम् ततो धूपादिपूजाशेषं समाप्य मंत्रहीनमिति प्रार्थयेत् । ततो नैऋत्यवायव्येशानस्तंभेषु मंडपमध्योपरि भागे काष्ठचक्रे क्रमेण नलिनी मैत्रा उमा पशुवर्द्धिनी नामकवेष्टितानि स्थापयित्वा पूर्ववद्पूजनम्।। ततो मनोजूतिरिति मंत्रांतेऽमुककर्ममंडपः सुप्रतिष्ठितो भवेति मंडपप्रतिष्ठा । अमुककर्ममंडपाय नम इति गंधादिभिः पंचोपचारैर्मंडपपूजा । मंडपे स्थापितदेवताप्रीत्यर्थं यथा शक्तिब्राह्मणान् भोजयिष्य इति ब्राह्मणभोजनसंकल्पः । मयाचरिते मंडपदेवता प्रतिष्ठाविधौ यन्न्यूनं यदतिरिक्तं तत्सर्वं परिपूर्णमस्त्विति ब्राह्मणान्प्रति प्रश्नः।। अस्तु परिपूर्णमिति प्रतिप्रश्नः ।। शिष्टास्तु मंडपार्थं स्तंभमेवारोपयन्ति, तद्यथा ।। ॐ देवस्यत्वेत्यभ्रिमादत्ते । ॐ इदमहं रक्षसामित्यवटं परिलिखति । ॐ मावो रिखत्खनितेति खनति । ॐ सिंचंति परिषिंचंतीति तस्मिन्नवटे अप आसिंचति । ॐ यवोसीति यवानावपति । ॐ दर्भसिद्धार्थकाँस्तूष्णीमावपति ।। ॐ काण्डात्कांडादिति दूर्वा। ॐ दधिक्राव्ण इति दधि ॐ याः फलिनीरिति फलम् ॐ हिरण्यगर्भ इति हिरण्यं चावपति।। ॐ उच्छ्रयस्व वनस्पतइति मंत्रेण रक्तसूत्रत्वमदनफलसमन्वितं स्तंभोत्थापनम् । ॐ ऊर्ध्वऊषुण इत्यवटे आरोपणम् । ॐ स्थिरो भवेति समंतता पांसुभिः पूरणेन स्थिरीकरणम्। तस्मिन्स्तंभे मनोजूतिरिति मंत्रांते मंडपदेवताः सुप्रतिष्ठिता वरदा भवंत्विति प्रतिष्ठा । ॐ मंडपदेवताभ्यो नम इति पंचोपचारैरभ्यर्चनम्। मंडपदेवताप्रीत्यर्थं यथाशक्तिब्राह्मणान्भोजयिष्य इति संकल्पं कृत्वा मयाचरिते मंडपदेवताप्रतिष्ठाविधौ० परिपूर्णमस्त्विति ब्राह्मणान् प्रतिप्रश्नः ॥ अस्त्विति प्रतिप्रश्न इति । अत्र शिष्टाचार एव शरणं । यत्तु आभ्युदयिकश्राद्धान्ते मंडपदेवताप्रतिष्ठामाचरंति तच्छ्राद्धखंडहेमाद्रिरेणुकदीक्षितकृत पारस्करगृह्यकारिकादिसकलग्रंथविरुद्धं शिष्टाचारविरुद्धं चेत्युपेक्ष्यम् । मंडपदेवताप्रतिष्ठा तु सीमंतोन्नयनान्नप्राशनचूडाकरणोपनयनवेदारंभकेशांतसमावर्त्तनविवाहेषु कार्या। तत्रैव मंडपसत्वात् ।। तदुक्तं पारस्करगृह्ये ।। पंचसु बहिः शालायां विवाहे चूडाकरण उपनयने केशांते सीमन्तोन्नयन इति गृहाद्बहिः।। बाह्या शालाबहिः शाला।। तस्यां बहिः शालायां बाह्ये मंडपे इत्यर्थः। अत्र विवाहादिपदैर्विवाहादीन्येव कर्माणि बहिः शालायां विवक्षितानि । अतश्च विवाहाद्यंगभूतं मातृपूजनपूर्वकमाभ्युदयिकं श्राद्धं मधुपर्कः कन्यादानं च गृह्यशालायामेव कर्तव्यं न बहिः शालायाम् । अत एव पित्रा प्रत्तामादाय गृहीत्वा निःक्रामतीति गृहान्निष्क्रमणमुक्तम् । विवाहश्च पश्चात् अग्नेर्वधूवरयोरुपवेशनादिवरदानांतो बहिः शालायाम् । अतएव चतुर्थीकर्मण्यपररात्रेऽभ्यंतरतोऽग्निमुपसमाधाये

त्यभ्यंतर शालाविहिता । चूडाकरणइत्यन्नप्राशनोलक्षणम् । उपनयन इतिं ब्रह्मा-देशोपलक्षणं ॥ केशान्त इति समावर्त्तनस्नानोपलक्षणं ॥ वासुदेवहरिहरादिभि-रन्नप्राशनादिषु यतो बहिः शाला उक्तास्ति । मंडपस्तंभनिवेशनं तु वृषाद्राशि-त्रयस्थिते सूर्ये आग्नेयां कार्यम् । सिंहाद्राशित्रये ईशान्यां । वृश्चिकाद्राशित्रये वाय-व्याम्। कुंभाद्राशित्रये नैर्ऋत्याम् अन्यासु दिक्षु व्युत्क्रमेण राहोर्मुखं मध्यं पुच्छं च तिष्ठ-ति । अतस्तत्र स्तंभनिवेशनमनुचितम्॥ यदाह विश्वकर्मा॥ वेद्यां वृषाद्गृहे सिंहात्रिकं मीनात्सुरालये॥ ईशानतो व्यस्तगत्या पृष्टिस्तस्य शुभावहेति । तस्य राहोर्वृषादित्र-ये सूर्ये सति ईशानदिशि मुखम् । अग्रे व्यस्तगत्या विलोममित्यर्थः॥ पृष्टिः पृष्ठदिक् अग्नेयी शुभा॥ यत्तु उक्तम् ॥ शिल्पशास्त्रे विश्वकर्मणा ॥ कन्यासिंहे तुलायां भुज-गपतिमुखं शंभुकोणेग्निखातं वायव्ये स्यात्तदास्यं मकरधनुरलावीशखातं वदन्ति ॥ कुंभे मीने च मेषे निर्ऋतिदिशि मुखं वायुकोणे हि खातं वन्हेः कोणे मुखे वै वृषमिथुनगते कर्कटे रक्ष खात इति। तद्गृहविषयम्॥ गृहे सिंहादित्युक्तत्वात् ॥इति॥

## ॥ अथ मातृपूजनप्रयोगः ॥

तत्र गंधपुष्पाग्रोदकनैवेद्यादिसकलपूजोपकरणानामुपकल्पनम् ॥ कुशकुसुमयव-जलपाणिना ॐ इहेत्यादिदेशकालयोः संकीर्तनांते करिष्यमाणामुक कर्मांगतया मा-तृपूजां करिष्ये । इति संकल्पः ॥ रक्तवस्त्रास्तृतपीठे रजतस्फटिकादिमयीषु प्र-तिमासु लिखितप्रतिमासु वाय व पुंजेषुवा सगणाधिपानां गौर्यादिचतुर्दशमातृणां दक्षि-णोपक्रमाणामुदगपवर्गाणां प्रत्यगुपक्रमाणां प्रागपवर्गाणां वा स्थापनम् ॥ तद्यथा ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितं सांगं सायुधं सवाहनं सपरिवारं गणपतिमावाह-यामीत्यावाह्य स्थापयामीति पीठे पुष्पाक्षतैर्गणपतिस्थापनम् । ॐ भूर्भुवः स्वः गौरी मावाहयामीत्यावाह्य स्थापयामीति पीठे गौरीस्थापनम् । एवमेव पद्मादीनां स्था-पनम् । पद्मामावाहयामि स्थापयामि । २ । शचीमावाहयामि स्थापयामि । ३॥ मे-धामावाहयामि स्थापयामि ॥४॥ सावित्रीमावाहयामि स्थापयामि ॥५॥ विजया-मावाहयामि स्थापयामि ॥६॥ जयामावाहयामि स्थापयामि ॥७॥ देवसेनामावाह-यामि स्थापयामि ॥८॥ स्वधामावा० ॥९॥ स्वाहामावा० ॥१०॥ धृतिमावा० ॥११॥ पुष्टिमावा० ॥१२॥ तुष्टिमावा० ॥१३॥ ततः प्रणवव्याहृतिपूर्वकं द्वितीयां तं नामसंकीर्त्यात्मकुलदेवतास्थापनम् ॥१४॥ यथाचारभट्टारिकामावाहयामि स्था पयामीति । प्रतिष्ठाकांडे हेमाद्रौ तु सगणाधिपानां चतुर्दशमातृणां स्थापने पौराणि-का मंत्रा उक्तास्तैर्वा प्रणवपूर्वकस्थापनम् ॥ तद्यथा समीपे मातृवर्गस्य सर्वविघ्नहरं

सदा ॥ त्रैलोक्यपूजितं देवं गणेशं स्थापयाम्यहम् ॥ १ ॥ हिमाद्रितनयां देवीं वरदां भैरवप्रियाम् ॥ लंबोदरस्य जननीं गौरीमावाहयाम्यहम्॥२॥ पद्माभां पद्मवदनां पद्मनाभोरसि स्थिताम्॥ जगत्प्रियां पद्मवासां पद्मामावाहयाम्यहम्॥३॥ दिव्यरूपां विशालाक्षीं शुचिकुंडलधारिणीम्। रत्नमुक्ताद्यलंकारां शचीमावाहयाम्यहम्॥४॥ विश्वस्मिन्भूरिवरदां जरां निर्जरसेविताम्॥ बुद्धिप्रबोधिनीं सौम्यां मेधामावाहयाम्यहं॥५॥ जगत्सृष्टिकरीं धात्रीं देवीं प्रणवमातृकां॥वेदगर्भां ज्ञानमयीं सावित्रीं स्थापयाम्यहं॥६॥ सर्वास्त्रधारिणीं देवीं सर्वाभरणभूषितां॥ सर्वदेवनुतां ध्यातां विजयां स्थापयाम्यहं॥७॥ सुरारिमथिनीं देवीं देवानामभयप्रदां ॥ त्रैलोक्यवंदितां देवीं जयामावाहयाम्यहम् ॥ ॥८॥ मयूरवाहनां देवीं खड्गशक्तिधनुर्धरां ॥ आवाहये देवसेनां तारकासुरमर्दिनीम् ॥९॥ अग्रे कापि पितृभ्यो वैकल्पार्थं या प्रतिष्ठिता ॥ पितॄणां तृप्तिदां देवीं स्वधामावाहयाम्यहं ॥१०॥ हविर्गृहित्वा सततं देवेभ्यो या प्रयच्छति॥ तां दिव्यरूपां परमां स्वाहामावाहयाम्यहं ॥११॥ सर्वहर्षकरीं देवीं भक्तानामभयप्रदाम् ॥ हर्षोत्फुल्लास्यकमलां धृतिमावाहयाम्यहं ॥१२॥ पोषयन्तीं जगत्सर्वं स्वदेहप्रभवैर्नरैः ॥ शाकैः फलैर्जलैरन्नैः पुष्टिमावाहयाम्यहम् ॥१३॥ भावैराराधितां देवीं सदा संतोषकारिणीं ॥ प्रसादसुमुखीं देवीं तुष्टिमावाहयाम्यहं ॥१४॥ पत्तने नगरे ग्रामे विपिने पर्वते गृहे ॥ नानाजातिकुलेशानीं दुर्गामावाहयाम्यहम् ॥ १५ ॥ अत्रावसरे क्षेत्रपालस्थापनमुक्तं प्रतिष्ठाकांडे हेमाद्रौ॥ अतश्च पूर्ववदेव तस्य स्थापनं। मातॄणां पुरतो हृष्टःसदा खेलति बालवत् ॥ सर्वदुष्टहरं क्षेत्रपालं च स्थापयाम्यहमिति प्रणवपूर्वकेन हेमाद्र्युक्तमंत्रेण वा वैदिकमंत्रेण वा॥ नमोस्तु सर्पेभ्य इति वैदिकः क्षेत्रपाल मंत्र इति त्राशिष्टचाम्॥ नहि स्पश्रमविदन्निति काशीदीक्षितपद्धतौ । यो भूतानामधिपतिरिति मदनरत्ने। इदं च क्षेत्रपालस्थापनं येषां कुलाचारे वर्त्तते तेषामेव नत्वन्येषाम् । अत्रावसरे केचिन्मातामहकुलदेवतां स्थापयति । तेन तस्या अपि पूर्ववद्देवस्थापनम् । मातामहकुलदेवता तु मातृपूजाकर्तुः पितुरेव न संस्कार्यस्येति शिष्टसंप्रदायः । एवमभ्यतमेष्वधिष्ठानेष्वावाह्यस्थापयित्वा चूडाकरणोपनयनविवाहेषु त्रिषु संस्कारेषु यथाचारं मातृभांडस्थापनम् । ॐ भूर्भुवः स्वः मातृभाण्डमावाहयामीति क्वचित्सीमंतोन्नयनेपि मातृभांडस्थापनमाचरंति । ॐ मनोजूतिरितिप्रतिष्ठापितस्यैव मंत्रस्यावृत्त्या गणपतिः सुप्रतिष्ठितो भव गौरी सुप्रतिष्ठिता भवेत्येवं सर्वासां प्रत्येकं प्रतिष्ठां कुर्यात् । ततस्तत्तन्नाममंत्रैः प्रणवादिचतुर्थी नमोन्तैः सर्वासां पूर्वोक्तैः षोडशोपचारैरर्घपाद्याचमनीयमधुपर्कपुनराचमनीयगंधपुष्पधूपदीपनैवेद्यलक्षणैर्दशोपचारैर्वापदार्थानुसमयेनाभ्यर्चनम् ॥ तत्रायं प्रयोगः॥ सिद्धिबुद्धिसहिताय सांगाय सायुधाय सपरिवाराय

महागणपतये नमः आवाहनं समर्पयामि । एवमिदमासनं समर्पयामि । इदं पाद्यं समर्पयामि । एषोर्घः । इदमाचमनीयम् । मधुपर्कः ॥ इदमाचमनीयम् पयसा गणपतिं स्नपयामि। दध्ना गणपतिं स्नपयामि । आज्येन गण०। मधुना गण०। शर्करया गण०। इदं स्नानं सम०। इदं पुनराचमनीयं स०। इदं रक्तं वासः। इदं वस्त्राचमनीयं। इदं यज्ञोपवीतं । इदं यज्ञोपवीताचमनीयं। इदंरक्तगंधानुलेपनं । इमानि पुष्पाणीतिपुष्पांजलित्रयं। एष धूपः । एषदीपः। इदं नैवेद्यं । इदं नैवेद्याचमनीयं । इदं तांबूलं । ॐ गणपतये नम इति प्रणामः। इमाः प्रदक्षिणाः। इदं नीराजनम्। एष पुष्पांजलिः। इयं दक्षिणा । नमस्कारः अथवैवमर्चनम् । ॐ गणानां त्वेति मंत्रांते सिद्धिबुद्धिसहिताय सांगाय सायुधाय सवाहनाय सपरिवारायमहागणपतये नमः एष अर्घः। इदं-पाद्यं । इदमाचमनीयं । एष मधुपर्कः । इदं पुनराचमनीयम् । इदमनुलेपनं । इमानि पुष्पाणि । एष धूपः । एषदीपः । इदं नैवेद्यं । इदं नैवेद्याचमनीयं । इदं तांबूलमिति। एवं गणपतिं संपूज्यैवमेव गौरीं पूजयेत् । एवमेवपद्मादीनां सर्वासां पूजनम्॥ ॐ गौर्यैनमः ॥ ॐ पद्मायै नमः ॥ ॐ शच्यै नमः ॥ ॐ मेधायै० ॥ ॐ सावित्र्यै० ॐ विजयायै० ॥ ॐ जयायै० ॐ देवसेनायै० ॥ ॐ स्वधायै० ॥ ॐ स्वाहायै० ॥ ॐ धृत्यै ॐ पुष्टयै० ॥ ॐ तुष्टयै० ॥ ॐ आत्मकुलदेवतायै० ॥ ॐ क्षेत्रपालाय० ॥ ॐ मातामहकुलदेवतायै० ॥ ॐ मातृभाण्डाय० ॥इति॥ एताश्च पदार्थानुसमयेन पूज्या इति नारायणभट्टकृतरुद्रपद्धतौ काशिदिक्षितकृतग्रहयज्ञपद्धतौ रुद्रपद्धतौ च ॥ आदित्यादिग्रहपूजापि पदार्थानुसमयेनैवेति मदनरत्ने शांतिमयूखे दानमयूखे च । अत्र निर्वापवत्पूजैव पदार्थो नत्वेकैकोपचार समर्पणं पदार्थः ॥ । तस्य मुष्टिवत्पदार्थावयवत्वात् । अथ मातृणां गणदेवतात्वपक्षमाश्रित्य समुदितपूजने तु मातरः क्रमशो हस्तेन संस्पृश्य प्रणवं व्याहृतिं चोच्चार्य गौर्याद्याः कुलदेवतान्तामातरः संबुद्धयन्ता उच्चार्य गणपतिक्षेत्रपालमातृभांडसहिताः इहागच्छतेत्यावाह्य इह तिष्ठतेति स्थापयेत् । तत्रेत्थं प्रयोगः । ॐ भूर्भुवः स्वः गोरिपद्माशचीमेधासावित्रीविजयाजया ॥ देवसेनास्वधास्वाहाधृतिपुष्टितुष्टिआत्मकुदेवताः गणपति क्षेत्रपालमातृभाण्डसहिताः ॥ इहागच्छत इह तिष्ठतेति । ॐ मनोजूतिरिति मंत्रांते गौर्याद्या मातरो गणपतिक्षेत्रपालमातृभाण्डसहिताः सुप्रतिष्ठिता भवन्त्विति समुदितानां प्रतिष्ठा । ॐ गौर्यादिभ्यो मातृभ्यो क्षेत्रपालमातृभांडसहिताभ्यो नम इत्यर्चनमिति विशेषः ॥ क्षेत्रपालमातृभांडयोः स्थापनाद्यभावे क्षेत्रपालमातृभांडपदोच्चारणाभावः । मातृणां प्रत्येकं देवतात्वपक्ष एव युक्ततरः । ततः समाचारात्कृतांजलिना देशकालयोः संकीर्तनांते मया आचरिते सगणाधिपमातृपूजनविधौ यन्न्यूनातिरिक्तं तत्परिपूर्णमस्त्वित्युक्तेऽस्त्विति प्रतिवचनम् ॥ इति मातृपूजनम् ॥

## ॥ अथ वसोर्द्धाराप्रयोगः ॥

तत्र कुशकुसुमयवजलपाणिना ॐ इहेत्यादिदेशकालयोः संकीर्तनांते करिष्यमाणामुककर्मांगतया सप्तकृत्वः पंचकृत्वो वा वसोर्द्धारां करिष्ये । इति संकल्पः ॥ ॐ वसोः पवित्रमसि शतधारमित्यादिना सुप्वेत्यंतेनमंत्रेण कस्मिंश्चित्पात्रस्थेन विलीनेन सगुडेन घृतेन मातृणां सन्निहितकुडयलग्ना दक्षिणाद्युत्तरापवर्गाः पश्चिमादिप्रागपवर्गा वा नातिनीचोच्छ्रिताः पंच सप्त वा वसोर्द्धाराः॥ तिस्रो नव वा धाराः कार्या इत्युक्तं प्रतिष्ठाकाण्डे हेमाद्रौ सगुडेन सघृतेन वसोर्धाराः कार्या इत्युक्तं मदनरत्ने दानकाण्डे। ॐ कामधुक्ष इत्येतावता मंत्रेण शिष्टाचारप्राप्तेनोर्ध्वभागे समाचाराद्गुडेनैकीकरणम् । तत्रैव कुंकुमादिना यथाचारं बिन्दुकरणेनालंकरणं च । ॐ मनोजूतिरितिमंत्रावृत्या प्रतिधारं क्रमेण श्रीलक्ष्मीधृतिमेधास्वाहाप्रज्ञासरस्वतीनां पृथग्पृथग्प्रतिष्ठा ॥ तत्र प्रयोगः ॥ ॐ मनोजूतिरिति मंत्रांते श्रीः सुप्रतिष्ठा भवेति । लक्ष्म्यादीनामप्येवम् । ॐ श्रीलक्ष्मीधृतिमेधास्वाहाप्रज्ञासरस्वतीभ्योनम इति पूर्वोक्तैर्दशोपचारैर्युगपत्पूजनम्॥ पंचधारापक्षे प्रज्ञासरस्वत्यौ विहायान्यासां पूजनम्। ॐ वसोर्द्धारादेवताभ्यो नम इति वा पूजनम् ॥ तत्र चंदनार्थे कुंकुमम् । दूर्वारुणानि च पुष्पाणि । गुडधूपः । घृतदीपः । गुडसर्पिभ्यां नैवेद्यमिति विशेषः । अथ यदंगत्वेन भोदेवाः पूजिता विधिमार्गतः॥ कुर्वंतु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम्। इति मंत्रेण प्रार्थना। मयाचरिते वसोर्द्धारादेवतापूजनविधौ यन्यूनं यथातिरिक्तं तत्परिपूर्णमस्त्विति यजमानेनोक्ते अस्त्विति प्रतिवचनम्॥ वसोर्द्धाराकरणं तु कात्यायनानामेव नान्येषाम्। अथामंगल्यनाशार्थमायुष्यसूक्तजपं करिष्य इति संकल्पः ॥ आयुष्यं वर्चस्यमिति त्र्युचस्य दक्षऋषिः उष्णिक् शक्करीत्रिष्टुपछंदांसि हिरण्यं देवता जपे विनियोगः॥ ॐ आयुष्यं वर्चस्यमिति त्र्युचस्य जपः । हेमाद्रिस्त्वानो भद्रा इत्यादीनां जपमाह । एतेषामप्यायुषि हितत्वात् ॥ आनोभद्रा इत्यादीनां गौतमऋषिः आद्याः पंचजगत्यः स्वस्तिन इत्यस्य विराट् पृषदश्वा इत्यस्य जगती भद्रं कर्णेभिरित्याद्यास्तिस्रस्त्रिष्टुभः विश्वेदेवा देवता शान्त्यर्थे जपे विनियोग इति स्मृत्वा जपेदिति ।

## ॥ अथाभ्युदयिकश्राद्धप्रयोगः सपिण्डकः ॥

तच्च यज्ञोपवीतिना प्राङ्मुखेनोदङ्मुखेन वा प्राक्संस्थमुदक्संस्थं वा प्रदक्षिणोपचारेणन्वाचितदक्षिणजानुना देवतीर्थेन प्रागग्रैरुदगग्रैश्च ऋजुदर्भैः स्वाहाकारेण च कर्तव्यम्॥तेनात्र प्रकृतिप्राप्ताः प्राचीनावित्यादयो धर्मा न भवंति। तस्यायं विधिः॥ तत्रोपकरणानामुपकल्पनम् । उक्तपक्षाणामन्यतमपक्षावधारणम् । विहिताप्रतिषिद्ध

ब्राह्मणामंत्रणम् ॥ तत्र ॥ सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदः॥ पंचैतान्विस्तरो हंति तस्मान्नेहेत विस्तरमिति । यस्माद् ब्राह्मणबाहुल्याद्दोषो बहुतरो भवेत्॥ श्राद्धनाशो मौननाशो श्राद्धतंत्रस्य विस्मृतिरिति हेमाद्रौ कूर्मपुराणब्रह्मपुराणादिवाक्यैर्ब्राह्मणविस्तरप्रतिषेधात् शिष्टसमाचाराच्चाष्टब्राह्मणपक्षमाश्रित्य प्रयोगोऽभिधीयते॥ तत्र त्रेधाविभक्तस्यास्याह्नः प्रथमे भागे पूर्वाह्णे प्रक्षालितपाणिपादेन कृतकुशोपग्रहेण स्वाचान्तेन यजमानेन प्रातः कृतलौकिकनिमंत्रणानां सुस्नातानां शुचीनां आचान्तानां पवित्रपाणिनामष्टानां ब्राह्मणानां आहूतानां बहिरूपक्लृप्ते गोमयोपलिप्ते पश्चिममंडले स्वागतं वः सुस्वागतं न इति प्रश्नोत्तरपूर्वकं प्रागग्रास्तृतकुशेषूदक्संस्थेष्वासनेषु प्राङ्मुखानां दक्षिणोपक्रमाणामुदक्संस्थानां चतुर्णां ब्राह्मणानामुपवेशनम् । ततो दक्षिणमंडले स्वागतं वः । सुस्वागतं न इति प्रश्नोत्तरपूर्वकं उदगग्रास्तृतकुशेषु प्रत्यक् संस्थेष्वासनेषूदङ्मुखानां प्रागुपक्रमाणां प्रत्यगपवर्गाणां चतुर्णां ब्राह्मणानामुपवेशनम्॥ अथवा ॥ दैवे पित्र्ये च ये विप्रास्तेषां सर्वेषां प्राङ्मुखानामुपवेशनम् । एवं पक्षद्वयेपि वाजसनेयिभिराद्यपक्ष एव कात्यायनसंमत इत्याश्रयणीयः ॥ वैश्वदेविकब्राह्मणसन्निधौ स्वासने यजमानेनोदङ्मुखेनोपवेशनम् । अथाचम्य त्रिःप्राणानायम्य । कुशकुसुमयवजलान्यादाय देशकालयोः संकीर्तनांते अमुकगोत्राः नान्दीमुखाः पितृपितामहप्रपितामहाः अमुकामुकशर्माणः सपत्नीकाः अमुकगोत्राः नान्दीमुखाः मातामहप्रमातामहवृद्धप्रपितामहाः अमुकामुकशर्माणःसपत्नीकाः एतानुद्दिश्य करिष्यमाणामुककर्मांगतया सत्यवसुसंज्ञकविश्वेदेवपूर्वकं सपिंडकमाभ्युदयिकं श्राद्धं युष्मदनुज्ञया करिष्य इति संकल्पः। प्रत्येकं संकल्पपक्षे कार्यः। अथ पातितदक्षिणजानुना यज्ञोपवीतिना प्राङ्मुखानामाद्ययोर्विप्रयोर्जानुनी उपस्पृश्य अद्येह नान्दीमुखानां पितृपितामहप्रपितामहानां कर्तव्यामुककर्मांगाभ्युदयिकश्राद्धांगे सत्यवसूविश्वेदेवकृत्ये भवंतौ आमंत्रये इति तांबूलं दत्वाऽमंत्रणम् । आमंत्रितौ स्व इति प्रतिवचनम्॥ तत उत्तरयोर्विप्रयोर्जानुनी संस्पृश्य अद्येह नांदीमुखानां मातामहप्रमातामहवृद्धप्रमातामहानां कर्तव्यामुककर्मांगाभ्युदयिकश्राद्धांगे सत्यवसूविश्वेदेवकृत्ये भवंतावामंत्रये इति ताम्बूलं दत्वाऽमंत्रणम् । आमंत्रितौ स्व इति प्रतिवचनम् ॥ तंत्रं वा वैश्वदेविकं तत्रैवं प्रयोगः। नान्दीमुखानां पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां कर्त्तव्यामुककर्मांगाभ्युदयिकश्राद्धांगे सत्यवसूविश्वेदेवकृत्ये भवंताविति ॥ अथ प्राङ्मुखेनोदङ्मुखानामाद्ययोर्विप्रयोर्जानुनी संस्पृश्याद्येहामुकसगोत्राणां नांदीमुखानां पितृपितामहप्रपितामहानाममुकामुकशर्मणां सपत्नीकानां कर्तव्यामुककर्मांगाभ्युदयिकश्राद्धे भवंतावामंत्रये इति तांबूलं द-

त्वाऽमंत्रणम्। आमंत्रितौ स्व इति ताभ्यां प्रत्युक्ते अपरयोर्विप्रयोर्जानुनी उपस्पृश्या-धेहामुकसगोत्राणां नांदीमुखानां मातामहप्रमातामहवृद्धप्रमातामहानां अमुकामुक-शर्मणां सपत्नीकानां कर्तव्यामुककर्मांगाभ्युदयिकश्राद्धे भवंतावामंत्रये इति तांबूलं दत्वाऽमंत्रणम् ॥ आमंत्रितौ स्व इति प्रतिवचनम्॥ अक्रोधनैः शौचपरैः सततं ब्रह्म-चारिभिः। भवितव्यं भवद्भिश्च मया च श्राद्धकारिणेति सर्वेषां युगपन्नियमश्रावणम्। अथवेत्थं निमंत्रणम् ॥ उदङ्मुखः प्राङ्मुखानामाद्ययोर्विप्रयोर्जानुनी संस्पृश्य ॐ दैवेक्षणः क्रियतामिति कर्ता (देवकार्ये भवद्भ्यां क्षणो नाम व्यापाररहिता स्थितिः क्रि-यतामित्यर्थः। क्षणशब्दो निर्व्यापारस्थित्यर्थेऽस्ति। क्षण इति प्रथमान्तं कर्म। भवद्भ्या-मिति तृतीयांतः कर्ता। क्रियतामिति कर्मणि प्रत्ययः ) ॐ तथेति विप्रौ। प्राप्नु-तां भवंताविति कर्ता। प्राप्नुवाव इति विप्रौ। एवमेवोत्तरयोर्विप्रयोरामंत्रणम्। तं-त्रं वा वैश्वदेविकम्। अस्मिन्पक्षे वैश्वदेविकौ द्वावेव ब्राह्मणौ। ततः प्राङ्मुख उद-ङ्मुखानामाद्ययोर्विप्रयोर्जानुनी आलभ्य। अमुकसगोत्राणां नान्दीमुखाणां पितृपि-तामहप्रपितामहानां अमुकामुकशर्मणां सपत्नीकानां कर्तव्यामुककर्मांगाभ्युदयिकश्रा-द्धे क्षणः क्रियतामिति कर्ता। ॐ तथेति विप्रौ। ॐ प्राप्नुतामिति कर्ता। प्राप्नुवाव इति विप्रौ। ततोऽपरयोर्विप्रयोर्जानुनी आलभ्य। अमुकसगोत्राणां नांदीमुखानां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सपत्नीकानां कर्तव्यामुकक-र्मांगाभ्युदयिकश्राद्धे क्षणः क्रियतामित्यादि ॥ अक्रोधनैः शौचपरैः सततं ब्रह्मचा-रिभिः॥ भवितव्यं भवद्भिश्च मया च श्राद्धकारिणेति सर्वान् विप्रान् प्रतितंत्रेण नियम-श्रावणम्॥ अथोदङ्मुखेन ॐ सत्यवसुविश्वेदेवाः इदं वः पाद्यमित्युक्त्वा वैश्वदेविक-विप्रपादेष्वंजलिना सकुशकुसुमयवजलप्रक्षेपपूर्वकं पादप्रक्षालनम्। सत्यवसुविश्वदेवाः एषवो गंधः। इमानि वः पुष्पाणीत्येवं गंधादिनाभ्यर्चनम्। ॐ सत्यवसुविश्वेदेवाः एषवोऽर्घइति संभृतयवकुसुमगंधोदकपात्रेण प्रदक्षिणं विप्रपादेष्वर्घदानम्। एवं द्वितीय-वैश्वदेविकविप्रपादेषु पाद्यदानपूर्वकं पादप्रक्षालनम्। गंधादिनाभ्यर्चनं पादार्घदानंच। अथ प्राङ्मुखेनामुकगोत्र नांदिमुख पितः अमुकशर्मन् सपत्नीक अमुकगोत्र नांदी-मुख पितामह अमुकशर्मन् सपत्नीक अमुकगोत्र नांदीमुख प्रपितामह अमुकशर्मन् सपत्नीक इदंवः पाद्यमित्युक्त्वा विप्रपादेष्वंजलिना सकुशकुसुमयवजलप्रक्षेपपूर्वकं पा-दप्रक्षालनम्। एषवो गंधः। इमानि वःपुष्पाणीत्येवं गंधादिनाभ्यर्चनं। पाद्यवत्पि-त्रादीनुच्चार्य एषवोऽर्घ इति संभृत यवकु सुमगंधोदकपात्रेणविप्रपादेषु प्रदक्षिणमर्घदा-नम् ॥ एवंमातामहादिब्राह्मणयोः पाद्यदानं पादप्रक्षालनं गंधादिना पूजनं पादा-र्घदानंच॥ स्वपादयोः [illegible] मिति प्रति विप्रं वदन्नु-

दकदानेन मंडलादुत्तरतो ब्राह्मणादीन् द्विराचम्य स्वस्यापि द्विराचनम् । श्राद्धदेशे द्विजानां प्रवेशनम् । स्वस्य च । सव्यहस्तेनासनमुपस्पृश्य दक्षिणेन विप्रस्य दक्षिणं हस्तं निरंगुष्ठमुपगृह्य ॐ भूर्भुवः स्वः समाध्वमिति प्रतिविप्रं वदन् प्राङ्मुखानां दक्षिणोपक्रमाणां उदगपवर्गाणां चतुर्णां वैश्वदेविकब्राह्मणानां ॐ सुसमास्महे इति उक्तवतां पूर्वाग्रास्तृतकुशासनेषु क्रमेणोपवेशनम् । एवमेवोदङ्मुखानां प्रागुपक्रमाणां प्रत्यगपवर्गाणां पित्रादिवर्गसंबंधिचतुर्णां ब्राह्मणानां ॐ भूर्भुवःस्वः समाध्वमिति प्रतिविप्रं वदन्नुदगग्रास्तृतकुशासनेषु ॐ सुसमास्महे इत्युक्तवतां क्रमेणोपवेशनम् ।। प्रतिब्राह्मणं श्राद्धापवर्गस्थायिदीपस्थापनम्।। अथ श्राद्धकर्तुः स्वासने प्राङ्मुखस्योदङ्मुखस्य वोपवेशनम् । त्रीन्प्राणायामान्कृत्वासप्रणवव्याहृतिपूर्विकायाः सावित्र्यास्त्रिर्जपः । द्वारदेशे दिक्षु विदिक्ष्वध ऊर्ध्वं च सर्वत्र तूष्णीं यवावकीरणम् । ततो यवकुशान्वितानां परिहितवस्त्रोत्तरदेशानां वामकटिसंलग्नवस्त्रबहिर्भागेन संवेष्टयावगूहनाख्यं नीविबंधनम् । अथांजलिं च बध्वा ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमोनम इति त्रिर्जपः ।ॐ पुंडरीकाक्षाय नम इति पुंडरीकाक्षस्मरणम् । कुष्मांडमंत्रसूक्तेन कुर्यात्तोयाभिमंत्रणम् । अन्नानि प्रोक्षयेत्तेन तेनैव श्राद्धमाचरेत् ।। इति श्राद्धकाशिकायां कात्यायनोक्तेः । शिष्टाचारात्स्वदक्षिणभागे कर्मसौकर्यार्थमद्भिश्चमसपूरणम् । समाचाराद् दूर्वादधियवचंदनकुशानां तत्र प्रक्षेपः । ॐ यद्देवा इति तिसृभिः कुष्मांडीभिर्ऋग्भिर्दर्भैरालोडयन् तज्जलाभिमंत्रणम् । ॐ दुष्टदृष्टिनिपातादिदूषितः पाकः पूतो भवत्विति सकुशैः कर्मपात्रजलैः पाकप्रोक्षणम् । आभ्युदयिकश्राद्धोपहाराः शुचयो भवंत्युपकरणप्रोक्षणम् । कुशकुसुमयवजलानि दक्षिणकरेणादाय इहेत्यादिदेशकालौ संकीर्त्य अमुकगोत्राः नांदीमुखाः पितृपितामहप्रपितामहाः अमुकामुकशर्माणः सपत्नीकाः अमुकगोत्राः नांदीमुखाः मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकशर्माणः सपत्नीकाः एतानुद्दिश्य करिष्यमाणामुककर्मांगतया सदैवसपिंडमाभ्युदयिकं श्राद्धं युष्मदनुज्ञया करिष्य इति संकल्पः।। यद्वा। देशकालयोः संकीर्तनांते करिष्यमाणामुककर्मांगतया सपिंडाभ्युदयिकं श्राद्धं युष्मदनुज्ञया करिष्य इति संकल्पः। ॐ कुरुष्वेति विप्रैः प्रत्युक्तः।। ॐ सत्यवसुविश्वेदेवा इदंवः आसनं इत्युदङ्मुखेन सयवं ऋजुकुशयुग्मात्मकं प्रागग्रासनं प्रत्येकं वैश्वदेविकविप्रासनोपरि दक्षिणतः सव्यहस्तविधृते विप्रकरे उदकमासिच्य दद्यात् । तत अमुकगोत्र नांदीमुख पितः अमुकशर्मन् सपत्नीक अमुकगोत्र पितामह नांदीमुख अमुकशर्मन् सपत्नीक अमुकगोत्र नांदीमुख प्रपितामहामुकशर्मन् सपत्नीक इदं वः आसनं इति प्राङ्मुखेन सयवं ऋजुकुशयुग्मात्मकमुदगग्रासनं प्रत्येकं

पित्र्यविप्रासनोपरि दक्षिणतः सव्यहस्तविधृते विप्रकरे उदकमासिच्य दद्यात् । एवमेव मातामहानामासनदानम् । तदेतदासनदानं समाचारात्वस्तुतस्त्वासनस्य दानाभाव एव । प्रागास्तरणादुपवेशस्यादृष्टार्थत्वप्रसंगात् । कुशोत्तरे तिलास्तीर्णे आसने लोहवर्जिते । दाता च स्वासने पूते विप्रानावेशयेत्सुधीरिति देवलोक्तेः ।। आसनेषूपक्लृप्तेसु बर्हिष्मत्सु पृथक्पृथक् । उपस्पृष्टोदकान्सम्यक् द्विजांस्तानुपवेशयेदिति मनूक्तेश्च । तस्मात्पूर्वमासनेषु कुशानास्तीर्य विप्रानुपवेशयेदिति । माध्यंदिनाचारविदामग्रणीरशेषन्यायवितर्कोपाध्यायोप्येवमाह । अथोदङ्मुखेन दक्षस्य प्रजापतेर्दुहितरि विश्वायां धर्माद्विश्वेदेवाः सत्यसंपन्ना इति वैश्वदेविकीमुत्पत्तिमनुस्मरता सांजलिना ॐ सत्यवसू विश्वान्देवानावाहयिष्य इति वैश्वदेविकविप्रपंक्तिमूर्द्धन्यस्य सर्वेषां वा प्रश्नः । ॐ आवाहयेति प्रतिप्रश्नः ।। ॐ विश्वेदेवासआगतेत्यनयाचावाहनम् ।। ब्राह्मणपुरतः प्रादक्षिण्येन यवावकीरणम् । ॐ विश्वेदेवाः शृणुतेममित्यस्याः सस्वरं जपः । वैश्वदेविकया उत्पत्तेश्चाज्ञाने तु ॐ आगच्छंतु महाभागा विश्वेदेवा महाबलाः। ये यत्र विहिताः श्राद्धे सावधाना भवंतु ते । इत्यस्य मंत्रस्य जपः । विप्रानेकत्वेऽपि न प्रतिविप्रमावाहनावृत्तिः । सकृदावाहनेनैवानेकब्राह्मणाधिष्ठाने देवताध्यासनसंभवात् । आवाहनादूर्ध्वं तु प्रतिब्राह्मणं देवताध्यासनादुपाधिभेदेन देवताभेदात्सन्निपत्योपकारकमर्घादिकं प्रतिविप्रमावर्तनीयम् । सन्निपत्योपकारकेष्वावृत्तिमंतरेण ब्राह्मणांतरे कार्यासिद्धेः विश्वेदेवाः शृणुतेममित्यादि मंत्रजपस्त्वावाहनोत्तरकालमपि क्रियमाणो नावर्तते आरादुपकारकत्वात् ।।सकृज्जपेनैव तज्जपसाध्या इष्टसिद्धेः।। तत ॐ नांदीमुखान्पितॄनावाहयिष्य इति प्राङ्मुखः कृतांजलिः पित्र्यमातामहविप्रपंक्तिमूर्द्धन्यौ वा सर्वान्पृच्छति वा ।। ॐ आवाहयेति तैरनुज्ञातम् ।। ॐ उशंतस्त्वेत्यनयावाह्य प्रदक्षिणं विप्रपुरतो यवावकीरणम् । ॐ आयंतुनः इत्यस्याः सस्वरं जपः ।। पितामहादिपदैर्मातामहादिपदैश्च पितॄनावाहयिष्य इत्यादौ पितृशब्दस्य न विपरिणामः । सकृदभिधेनानूहितेन पितॄनावाहयिष्य इति अनेनैव सर्वेषां प्रकाशनसिद्धेः। कथं पितृभावोपाधिकस्य पितृशब्दस्य प्रमीतमात्राणां पित्रादीनां मातामहादीनां मातृभ्रातृपितृव्यादीनां सर्वेषां वाचकत्वात्सर्वसाधारणत्वेनानूह्यत्वात् पितृभ्यो दद्यात् । पितॄनावाहयिष्ये। पितॄन्हविषा अत्तवे । आयंतु नः पितरः । अत्र पितरः । अमी मदन्त पितरः । नमो वः पितरोरसाय एतद्वः पितरः स्वधास्थ तर्पयत मे पितॄन् इत्यादौ श्रुतस्य पितृशब्दस्य पितृभावोपाधिकत्वात् । सूत्रानुरूपमेतत् । अत एव हेमाद्रिः । आभ्युदयिकखंडे कात्यायनोक्तमुपन्यस्यास्यार्थं इत्युक्त्वा पितॄनावाहयिष्य इत्यस्य स्थाने नांदीमुखान्पितॄनावाहयिष्य इति प्रयोग इत्युक्तत्वात् ।

एवमेव कर्कहलायुधविष्णुमिश्रभाष्येषु आवाहनादि वाग्यतः कर्ता भवेत् । अप उप-स्पर्शनात् । ब्राह्मणेभ्यो भोजनानंतरं सकृदूसकृदपो दद्येत्युदकदानमुपस्पर्शनम् ॥ आमंत्रिताश्चैवम्। वाग्यमलोपे तु वैष्णवमंत्रजपो विष्णुस्मरणं वा प्रायश्चित्तम्। अथो-दङ्मुखो वैश्वदेविकार्घपात्रं प्रागग्रमासाद्य तस्मिन्पात्रे प्रागग्रयोः पवित्रयोर्निधानम् । ॐ शन्नोदेवीरिति मंत्रेण देवपात्रे देवतीर्थेनोदङ्मुखेनापो निषेकः॥ ॐ यवोसि सो-मदेवत्यो गोसवो देवनिर्मितः ॥ प्रयत्नमद्भिः प्रक्तः पुष्ट्या नांदीमुखान् पितॄन्लोका-न्प्रीणाहि नः स्वाहेति मंत्रेण तस्मिन्नेव पात्रे यवनिक्षेपः॥ समाचारात्तूष्णीं गंधपुष्प-प्रक्षेपः ॥ अथ समाचारात्कृतांजलिना देवार्घपात्रसंपत्तिरस्त्विति देवब्राह्मणान्प्रति-प्रश्नः ॥ अस्तु देवार्घपात्रसंपत्तिरिति तैः प्रत्युक्तिः । अथ प्राङ्मुखः प्रतिवर्गं त्रीणि त्रीण्यर्घपात्राणि प्रत्यगुपक्रमाणि प्रागग्राणि प्रागपवर्गाणि दक्षिणसंस्थान्यासाद्य प्र-तिपात्रं द्वे द्वे प्रागग्रे पवित्रे निदध्यात् । ततः ॐ शन्नोदेवीरिति मंत्रावृत्त्या देवतीर्थेन पित्रादिषट्पात्रेषु प्राङ्मुखेनापामासेकः ॐ यवोसि सोमदेवत्य इति मंत्रावृत्त्या तेषु पात्रेषु यवप्रक्षेपः । समाचारात्तूष्णीं प्रतिपात्रं गंधपुष्पप्रक्षेपः । समाचारात्कृतांज-लिना पित्रर्घपात्रसंपत्तिरस्त्वित्युक्ते अस्तु पित्रर्घपात्रसंपत्तिरिति प्रतिवचनम् । एवं मातामहार्घपात्रसंपत्तिरस्त्वित्यादि० ॥ ततः स्वाहार्घ्या इति देवब्राह्मणपुरस्ताद्देवार्घ-पात्रमासाद्यैवं तत्तद्ब्राह्मणपुरस्तात्तत्तदर्घपात्रासादनम् ॥ अथोदङ्मुखेन द्वितीयदेव-ब्राह्मणहस्ते प्रथमदेवविप्रकरनिवेशनम् । तत्र देवार्घपात्रस्थयोः प्रागग्रयोः पवित्रयो-र्निवेशनम् ॥ अर्घपात्रादानम् ॥ ॐ या दिव्या आपः पयसा इत्यादि सुहवा भवं-त्वित्यंतं मंत्रमुच्चार्य सत्यवसू विश्वेदेवाः एषवोऽर्घ इत्यर्घदानम् । पुनस्तत्करात्पवित्र-योरादानम् । मातामहसंबंधी वैश्वदेविकद्वितीयविप्रकरे प्रथमविप्रकरनिवेशनम् । तत्र तयोरेवपवित्रयोस्तथैव निधानम् ॥ ॐ या दिव्या इति मंत्रेण तेनैवार्घपात्रेण तथैवार्घदानम् । ततः प्राङ्मुखेन पितृवर्गद्वितीयविप्रकरे प्रथमविप्रकरनिवेशनम् । तत्र प्रागग्रयोः पित्रर्घस्थयोः पवित्रयोर्निधानम् । अर्घपात्रादानम् ॥ ॐ या दिव्या इति मंत्रान्ते अमुकगोत्र नांदीमुख पितः अमुकशर्मन् सपत्नीक एषतेऽर्घ इति पित्रेऽ-र्घदानम् ॥ ततः पितामहार्घपात्रस्थयोः पवित्रयोस्तत्रैव निवेशनम् । ॐ या दिव्या इति मंत्रांते अमुकगोत्र नांदीमुख पितामहामुकशर्मन् सपत्नीक एषतेऽर्घ इति पिता-महायार्घदानम् । ततः प्रपितामहार्घपात्रस्थयोः पवित्रयोः प्रागग्रयोस्तत्रैव निवेशनम्॥ अर्घपात्रादानम् । ॐ या दिव्या इति मंत्रान्ते अमुकगोत्र नान्दीमुख प्रपितामह अ-मुकशर्मन् सपत्नीक एषतेऽर्घ इति प्रपितामहायार्घदानम् । मातामहानामप्येवम् । स्थातरत्नावलीकारस्तु ज्येष्ठात्तरकरान्युग्मान् कराग्राग्रपवित्रकान्कृत्वाऽर्घ्यः संप्रदात-

भ्यो नैकैकस्यात्र दीयत इति छंदोगपरिशिष्टवचनं छंदोगविषयमित्याह । तेनैतन्मते-प्रथमोपवेशितविप्रकरे पवित्रे निवेश्यार्घं दत्वा तत्करात्पवित्रे आदाय तद्देवतासंबंधि-द्वितीयविप्रकरे पवित्रे निवेश्य तेनैवार्घपात्रेणार्घदानम् । एवमेकदेवतासंबंधेन यावंतो ब्राह्मणास्तावता हस्तेषु तत्पात्रगतोर्घःप्रतिपाद्यः । तत्र च प्रतिब्राह्मणं मंत्रावृत्तिः । प्रथमे पित्रर्घपात्रे सपवित्रे पितामहादिपात्रस्थानां संस्रवाणामवादीनां समवनयनम् । ॐ आपः शिवाः शिवतमा इति मंत्रेण केनचिद्यजमानशिरस्याभिषेकः कार्यः। पुत्र-कामश्चेत्तदा संस्रवेण स्वमुखांजनम् । ॐ क्षुधंतां लोकाः पितृषदनाः इति एतावता मंत्रेणोदकेन पित्र्यब्राह्मणदक्षिणपार्श्वे किंचिद्दूरेऽसंचरप्रदेशेऽभ्युक्षणम् । प्रागग्राणां दर्भाणां तत्र निधानम् । ॐ पितृभ्यः स्थानमसीति प्रथमार्घपात्रं न्युब्जं तदुपरि नि-धाय तस्योपरि अर्घपवित्रैःसह स्वधावाचनीयसंज्ञकानां त्रयाणां प्रागग्राणां कुशानां निधानम् । हलायुधोपाध्यायानां मतमेतत् । कर्कोपाध्यायमते तु अर्घदाने विनियुक्त पवित्राणामन्यत्र विनियोगाभावादर्घदाने विनियुक्तपवित्रवर्जं स्वधावाचनीयकुशनि-धानम् ॥ अथ गंधपुष्पधूपदीपवाससां दैवपूर्वं ब्राह्मणेभ्यो दानं तच्चेत्थं । ब्राह्मणेषु प्रत्येकं गंधादिकं संनिधाप्य कुशकुसुमयवजलादानम्॥ ॐ सत्यवसुविश्वेदेवाः इमा-नि गंधपुष्पधूपदीपवासांसि वो नमः॥ इति संकल्प्य भूमौ जलप्रक्षेपः कार्यः। अमु-कगोत्र नांदीमुख पितः अमुकशर्मन् सपत्नीक अमुकगोत्र नांदीमुख पितामह अमुक-शर्मन् सपत्नीक अमुकगोत्र नांदीमुख प्रपितामहामुकशर्मन् सपत्निक इमानीत्याद्यु-क्त्वा यथाविभागं वः स्वाहा नमः। इति संकल्पं कृत्वा भूमौ जलं प्रक्षिपेत् । माता-महानामप्येवम् ॥ इदं वो ज्योतिः सुज्योतिरित्युक्त्वा समाचारादस्याभ्युदयिकश्रा-द्धांगभूतदेवपित्र्यब्राह्मणार्चनविधौ यन्न्यूनं यथातिरिक्तं तत्परिपूर्णमस्त्विति पंक्तिमूर्द्ध-न्यस्य सर्वेषां वा प्रश्नः ॥ अस्त्विति प्रतिप्रश्नः ॥ द्विराचमनम् ॥ द्विजाग्रपतितानां-यवादीनां निरसनम् । ॐ यथाचक्रायुधो विष्णुस्त्रैलोक्यं परिरक्ष्यति । एवं मंडलभ-स्मैतत्सर्वभूतानि रक्षत्विति मंत्रेण विप्राग्रेषु नीवारचूर्णैः गौरमृत्तिकया जलेन भस्म-ना वा चतुःकोणं मंडलकरणम् ॥ तेषु मंडलेषु भोजनभाजननिधानम् ॥ तत्समीपे भूमावेव व्यंजनपात्रनिधानं । अथ ताम्रादिपात्रे पृषदाज्याभिघारितोदनस्योद्धरणम्॥ अग्नौ करिष्य इति पंक्तिमूर्द्धन्यस्य सर्वेषां वा प्रश्नः ॥ ॐ कुरुष्वेति प्रतिप्रश्नः ॥ दक्षिणेन पाणिनाहुतिपर्याप्तोदनग्रहणम्॥ ॐ अग्नये कव्यवाहनाय स्वाहा । ॐ सो-माय पितृमते स्वाहेति मंत्राभ्यां क्रमेणावसथ्याग्नावाहुत्योर्हस्तेनैव होमः ॥ इदमग्नये-कव्यवाहनायेदं सोमाय पितृमते इति द्वयोस्त्यागौ॥ अयमग्नौकरणहोमः सुतसंस्कारां-गाभ्युदयिकश्राद्धेपि स्वगृह्येऽग्नावेव कर्तव्यः ॥ अनग्निप्रतां तु सर्वत्र पित्र्यपंक्तिमूर्द्ध-

न्यविप्रपाणावग्नौकरणहोमः । तत्रायं विशेषः ॥ जलाभ्युक्षिते दक्षिणपाणावग्नितीर्थे सकुशे होमः । इतरत्सर्वं पूर्ववत् । एतच्चाग्नौकरणान्नं विप्रैः परिवेक्ष्यमाणेन सर्वेणान्नेन मिश्रीकृत्वा भोजनसमाप्ते भोक्तव्यं न तु पृथक् ॥ ( अन्नं पाणितले दत्तं पूर्वमश्नंत्यबुद्धयः । पितरस्तेन तृप्यंति शेषान्नं न लभंति ते ॥१॥ यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् । मिश्रीभावेन भोक्तव्यं पृथक् भावो न विद्यते ॥ २ ॥ इति ) निरग्निकस्य नागरस्य तु नाग्नौकरणं नागरखंडे निषेधात् ॥ अथ हुतशेषं पात्रांतरे-पिंडार्थमवशिष्य दैवपूर्वं सर्वविप्रपात्रेषु हुतशेषदानम् । ततः स्वस्तिकाकृतिभ्यामधोमुखाभ्यां पाणिभ्यां वैश्वदेविकविप्रपात्रमालभ्य । ॐ पृथिवी ते पात्रमिति मंत्रजपः। ॐ इदं विष्णुरित्यनया विष्णुदेवतया ऋचा ॐ विष्णो हव्य रक्षेति वैष्णवेन यजुषा वा द्विजांगुष्ठमधोमुखमनखमन्नेऽवगाह्यैव द्वितीयविप्रपात्रालंभो विप्रांगुष्ठावगाहनंच ॥ एवं मातामहवर्गसंबंधिवैश्वदेविकविप्रपात्रयोरप्यालंभांगुष्ठावगाहने । ततः पितृवर्ग-संबंधि विप्रपात्रं पूर्ववदालभ्य ॐ पृथिवीत इति मंत्रजपः । वैष्णव्यर्चा यजुषा वा तथैवान्ने विप्रांगुष्ठावगाहनम् ॥ ॐ अपहता इति ब्राह्मणाग्रतःप्रादक्षिण्येन यवावकीरणम् ॥ अप उपस्पर्शनम्॥ एवं द्वितीयविप्रपात्रं संस्कृत्यैवमेव मातामहवर्गसंबंधि विप्रपात्रयोः संस्कारः कर्तव्यः ॥ ततो दैवपूर्वं सर्वविप्रपात्रेषु परिवेषणं तच्च वामहस्तान्वारब्धेन दक्षिणेन पाणिना सौवर्णदर्व्यादि पात्रैरेव कार्यम्॥ पात्राभावे पर्णेन कुशेन वा वामकरमंतर्द्धाय परिवेषणम् । नतु कदाचित्केवलेन करेण । भक्ष्यभोज्यफलमूलादि यत्किंचिच्छ्राद्धार्थमुपकल्पितं तत्सर्वमप्यविस्मरणेन किंचित्किंचित्सर्वविप्रपात्रेषु पृथग्पृथग्परिवेषणीयम् । विप्रैश्च परिवेषणप्रभृति अन्नविकिरणपर्य्यंतं वामपाणिना पात्रं धारणीयम् । कण्डूयनावसरे दक्षिणहस्तेन पात्रं धृत्वा वामहस्तेन कंडूयनादिकायम् ॥ अथान्नसंकल्पं कुर्यात् ॥ तद्यथा ॥ ऋजुकुशकुसुमयवजलानि दक्षिणेन पाणिना गृहीत्वा वामहस्तेन वैश्वदेविकविप्रपात्रद्वयमालभ्य ॐ सत्यवसूविश्वेदेवाः इदमन्नं सोपस्करं परिविष्टं परिवेक्ष्यमाणं युग्मब्राह्मणतृप्तिपर्यंतं अमृतरूपेण वःस्वाहा नम इति भूमौ पात्रसमीपे संकल्पजलप्रक्षेपः । एवं मातामहवर्गसंबंधि वैश्वदेविकविप्रपात्रद्वयमालभ्यान्नसंकल्पः ॥ अथ ऋजुकुशकुसुमयवजलानि दक्षिणेन पाणिनादाय वामेन पाणिना पितृवर्गसंबंधि विप्रपात्रद्वयमालभ्य ॐ अमुकगोत्र नांदीमुखपितः अमुकशर्मन् सपत्नीक । अमुकगोत्र नांदीमुख पितामह अमुकशर्मन् सपत्नीक । अमुकगोत्र नांदीमुख प्रपितामह अमुकशर्मन् सपत्नीक इदमन्नं सोपस्करं परिविष्टं परिवेक्ष्यमाणं युग्मब्राह्मणतृप्तिपर्यंतं अमृतरूपेण यथाविभागं वः स्वाहा नम इति भूमौ पात्रसमीपे संकल्प्य जलप्रक्षेपः ॥ एवं मातामहवर्गसंबंधि विप्रपात्रद्वयमालभ्य पित्रा-

दिवन्माता महादीनुच्चार्यान्नसंकल्पः कार्यः ॥ विप्रान्नयोः सान्निध्याभावेन तस्मिन्काले भोजनासंभवे इदमन्नमित्यस्य स्थाने दास्यमानमन्नं सोपस्करमित्येवं वक्तव्यम् ॥ अत्र हुतशेषदानादि अन्नसंकल्पांतपदार्थानां यः क्रम उक्तः स एव कात्यायनसूत्रानुसारि कर्कहलायुधादीनां भाष्यकाराणां पद्धतिकाराणां च संमतः हेमाद्रिकृतकात्यायनसूत्रव्याख्यासंमतश्च॥ अथ दैवपूर्वं ब्राह्मणेभ्यः सकृत्सकृदपोदानम् ॥ यथासुखं जुषध्वमित्युक्त्वा विप्रभोजनम्॥ विप्रैश्च सर्वे भोजननियमा विधेयाः॥ केवलं भूमौ बलिहरणमेव न कार्यम् । तत्र महादोषश्रवणात् ॥ वैश्वदैविकैरपि न कार्यमिति हेमाद्रिस्मृतिरत्नावल्यादयः ॥ वैश्वदेविकानां विहितत्वात्तैः कार्यमिति श्राद्धकाशिकाऽशार्कादयः ॥ अश्नत्सु ब्राह्मणेषु प्रणवव्याहृतिपूर्विकायाः गायत्र्यास्त्रिः सकृद्वा जपः ॥ ॐ कृणुष्वपाज इति पंचर्चामुग्नेष्ट्वेति यजुर्वर्जं राक्षोघ्नीनाम् ॥ ॐ सहस्रशीर्षा इति षोडशर्चस्य पुरुषसूक्तस्य च । ॐ आशुः शिशान इति द्वादशर्चस्याप्रतिरथस्य च॥ अन्येषां पवित्राणां रुद्रादीनां च ॥ अथातृप्तेष्वश्नत्स्वेव विप्रेषु सर्वव्यंजनोपेतान्नस्य सजलयवस्यैकपात्रे स्थापनम् ॥ उच्छिष्टपित्र्यमुख्यब्राह्मणपुरतो हस्तमात्रात्परतो भूमौ सयवोदकनिषेकः ॥ ब्राह्मणानामग्रत इति कर्कः पंक्तिमूर्द्धन्यस्योत्तरतो रत्निमात्रे इति हेमाद्रिः ॥ तदुपरि पूर्वाग्रकुशास्तरणम् ॥ तस्यैवान्नस्य दक्षिणेन पाणिनाऽदानम् ॥ ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिम्॥ इति मंत्रेण प्रागग्रास्तृतकुशोपर्यन्नविकीरणम् । यत्तु । सोमपाश्चैव ये देवा यज्ञभागविवर्जिताः॥ तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविके ॥ इति हेमाद्रौ गोभिलोक्तेन मंत्रेणान्नविकीरणमत्राचरन्ति । तन्न । यतश्छंदोगानां दैवपित्र्यविप्रपुरतोद्वयोरन्नविकिरणयोः प्रकृतौ विहितत्वेन तेषामेव प्रकृतावस्य सोमपा इत्यस्य मंत्रस्य विकिरं वैश्वदेविके इति मंत्रलिंगाद्वैश्वदेविकविप्रपुरतो विहितान्नविकिरिणशेषत्वाद्विकृतावाभ्युदयिकेऽतिदेशस्तथैव प्राप्तत्वाच्च ॥ अतश्च पित्र्यविप्रपुरतो विहितान्नविकिरणशेषत्वं सोमपा इति मंत्रस्य नास्ति ॥ तेनाभ्युदयिके पित्र्यविप्रपुरत एव सोमपा इति मंत्रेणान्नविकिरिणमित्याचरणमयुक्तम् ॥ वाजसनेयिनां तु प्रकृतौ पित्र्यविप्राग्रत एवान्नविकिरणस्य विहितत्वेन तच्छेषस्यैवाग्निदग्धा इति मंत्रस्य विकृतावतिदेशेन प्राप्तत्वात्तेनैवान्नविकिरणं युक्तम्॥ अत एव ढोढूमिश्रपद्धतौ मदनरत्ने दानखंडे चाग्निदग्धा इति मंत्रेणान्नविकिरणमुक्तम् ॥ तूष्णीं वान्नविकिरणम्॥ मंत्रस्य सूत्रकृतानुपदिष्टत्वात् ॥ तत उपग्रहकुशत्यागपूर्वकमाचमनम्॥ पुनः कुशोपग्रहः ॥ तृप्तेषु विप्रेषु विप्रेभ्यो देवपूर्वमपोशानार्थं सकृत्सकृदपोदानम् ॥ अत्र कर्तुर्ब्राह्मणानां च [illegible] इति केचित्॥ सप्रणवव्याहृतिपूर्विकाया गायत्र्यास्त्रिः सकृद्वा जपः॥

नात्र मधुमतीनां जपः।। निषेधात्।। ॐ मधुमधु मध्वित्यस्य यजुषस्तु जपो भवत्येव। पूर्वकाले निषेधादुत्तरकाले निषेधाभावादित्युक्तम् ।। नारायणवृत्तौ दानखंडे मदनरत्ने च।। ॐ संपन्नमिति सर्वान्ब्राह्मणान्प्रतिप्रश्नः ।। ॐ सुसंपन्नमिति प्रतिप्रश्नः।। एकस्मिन्पात्रे पिंडार्थं सर्वविधस्य व्यंजनोपेतस्यान्नस्योद्धरणम्।। शेषमन्नं किं क्रियतामिति पंक्तिमूर्द्धन्यस्य सर्वेषां वा प्रश्नः।। इष्टैः सह भुज्यतामिति प्रतिप्रश्नः।। पिंडार्थान्नस्य हुतशेषेण दधिवदराक्षतैश्च मिश्रणम्।। आदाय बहिःशालायां गमनम्।। गोमयोपलिप्ते देशे अन्वाचित दक्षिणजानुना प्राङ्मुखेनोदङ्मुखेन वोपवेशनम् ।। ततः पिंडदानम् ।। तद्यथा ।। अपहता असुरा इति मंत्रेण पूर्वाग्राया उदगग्राया वा लेखायाः स्फ्येनाग्रेणोल्लेखनम् । स्फ्याभावे कुशैरुल्लेखनम् ।। तद्दक्षिणतस्तथैव द्वितीयलेखाया उल्लेखनम् । लेखाया उदगग्रत्वे प्रथमलेखायाः प्राच्यां द्वितीयलेखोल्लेखनम्। अप उपस्पर्शनम्। ये रूपाणीति मंत्रावृत्या लेखयोः परस्तादुल्मुककरणम्। केचिद्दृष्टार्थत्वादुल्मुकमेकमिच्छन्ति तत्वासुदेवगर्गहरिहरादिग्रन्थविरुद्धम्।। इदं चोल्मुकनिधानमग्निमत एव । उल्मुकशब्दस्याग्न्येकदेशवाचित्वेनैकदेशि भूताद्यपेक्षायां होमार्थप्रकृताग्न्येकदेशग्रहणस्योत्तरार्द्धवन्न्याय्यत्वादनग्निमतस्तादृशस्याग्नेरभावात् ।। अथाप उपस्पर्शनम्।। अमुकगोत्र नांदीमुख पितः अमुकशर्मन् सपत्नीक अवनेनिक्ष्व इत्येवं सयवोदपात्रेण देवतीर्थेन प्रथमलेखा ।। मूलेऽवनेजनम् । अमुकगोत्र नांदीमुख पितामहामुकशर्मन् सपत्नीक अवनेनिक्ष्व ।। अमुकगोत्र नांदीमुख प्रपितामहामुकशर्मन्सपत्नीक अवनेनिक्ष्वेवं पितामहप्रपितामहयोरपि लेखा मध्यग्रयोरवनेजनम् ।। एवमेव मातामहप्रमातामहवृद्धप्रमातामहानां द्वितीयलेखायां मूलमध्याग्रेषु क्रमेणावनेजनम् ।। उपमूललूनकुशानां लेखाद्वयोपर्यास्तरणम् ।। दधिबदराक्षतमिश्रौदनपयानां बिल्वपरिमाणानां षट्पिंडानां निर्माणम् । एकपिंडस्यादानम् । अमुकगोत्र नांदीमुख पितः अमुकशर्मन् सपत्नीक एतत्ते अन्नं स्वाहा नम इति देवतीर्थेन रेखामूले पिंडदानम् । इदं नांदीमुखाय पित्रे त्यागः । अमुकगोत्र नान्दीमुख पितामहामुकशर्मन् सपत्नीक एतत्ते अन्नं स्वाहा नमः। अमुकगोत्र नांदीमुख प्रपितामहामुकशर्मन् सपत्नीक एतत्ते अन्नं स्वाहा नम इत्येवं पितामहप्रपितामहयोर्लेखामध्याग्रयोर्देवतीर्थेन पिंडदानम् । इदं नांदीमुखाय पितामहायेदं नांदीमुखाय प्रपिता महायेति क्रमेण द्वयोस्त्यागौ। एवमेव द्वितीयलेखायां मूलमध्याग्रदेशेषु मातामहादिभ्यः पिंडदानम् । इदं नांदीमुखाय मातामहायेदं नान्दीमुखाय प्रमातामहायेदं नांदीमुखाय वृद्धप्रमातामहायेति त्रयाणां क्रमेण त्यागाः ।। पितृपिंडाधारदर्भमूलेषु प्रपितामहादूर्ध्वं लेपभुग्भ्यो हस्तावघर्षणेन लेपोन्मार्जनम् ।। तेन हि हस्तलेपभाजां

तृप्तिरिति स्मरणात् । इदं च पिंडदानं कृताचमनेषु ब्राह्मणेषु वा कार्यम् ॥ आचांतेष्वित्येक इति वचनात्। अथ करौ प्रक्षाल्याचनम्। ॐ अत्र पितर इति मंत्रस्य पित्रादिपिंडाभिमुखेन कृतांजलिना सस्वरं जपः । प्रदक्षिणं परावृत्योदङ्मुखेनासून्नियम्याचमनादुपवेशनम् । तेनैव यथापरावर्त्तनम् । ॐ अमीमदंतेति सस्वरं जपः। पूर्ववदुदपात्रेण देवतीर्थेन तदीयतदीयपिंडोपरि पिंडमूले वा पित्रादीनां मातामहादीनां च अवनेजनम् । नीविविसर्जनं च । ॐ नमोवः पितरो रसायेत्यादिभिर्मंत्रैर्घोरशोषवर्जं षडंजलिकरणम्।। घोरशोषमंत्रसंबंधिनावंजलि मंत्रप्रतिषेधात् तूष्णीमत्र भवतः।। नमो वः पितरो रसायेति प्रथमोंजलि मंत्रः।। द्वितीयोंजलिस्तूष्णीम्।। ॐ नमो वः पितरो जीवायेति तृतीयः॥ ॐ नमो वः पितरः स्वाहायै इति चतुर्थः।। पंचमस्तूष्णीम् ॥ ॐ नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो व इति षष्ठः ॥ ॐ गृहान्न इति सस्वरं जपः।। ॐ एतद्व इति मंत्रेण पिंडोपरि त्रयाणं त्रयाणं रक्तसूत्राणमूर्णानां वात्रदशानां बहुत्वविशिष्टानां पंचाशद्वर्षादूर्ध्वमुत्तरे वयसि स्वहृदयलोम्नां वा प्रतिपिंडप्रदानम् ।। ॐ ऊर्जं वहंतिरिति मंत्रेण स्वधापदे स्वाहापदोहितेनावनेजनोदपात्रस्थावशिष्टजलस्य पिंडमूले निषेक इति हलायुधभाष्ये हेमाद्रिनिबंधे श्राद्धकाशिकायां ढोढूमिश्रपद्धतौ च ॥ नात्रोर्ज्जमित्यपोनिषेक इति हेमाद्रिपद्धतौ ॥ नात्र मंत्रावृत्तिः । एकपदेनैव सर्वप्रकाशनसंभवात् ॥ रक्तगंधरक्तपुष्पधूपदीपनैवेद्यतांबूलफलादिभिः पिंडपूजनम् ॥ अमुकगोत्र नांदीमुख पितः अमुकशर्मन् सपत्नीकामुकगोत्रनांदीमुख पितामहामुकशर्मन् सपत्नीकामुकगोत्र नांदीमुख प्रपितामहामुकशर्मन् सपत्नीक इमानि गंधपुष्पधूपदीपद्राक्षामलकाद्रकमूलयत्रपूगफलतांबूलादीनि वः स्वाहा नमः।। एवं मातामहानाम्॥ समाचारात्पिंडदानतदर्चनविधौ यन्न्यूनं यथातिरिक्तं तत्परिपूर्णमस्त्विवति प्रश्नः।। अस्तु परिपूर्णमिति प्रतिप्रश्नः। एवं पिंडदानं समाप्याचमनम् ॥ ब्राह्मणानाचामय्य सर्वेषामत्रावसरे वाग्विसर्ग इति अन्ये इति बहवः ॥ ॐ सुप्रोक्षितमस्त्विवति मंत्रेण श्राद्धभूमेः कर्मपात्रोदकेन प्रोक्षणम् ॥ प्राचीनपवित्राणामुच्छिष्टसंस्पृष्टतया विप्रैः परित्यक्त्वा तेभ्य उपग्रहार्थं पवित्रसमर्पणम् ॥ दैवपूर्वं ब्राह्मणेभ्य उदकादिदानम् ॥ इदमुदकादिदानं देवे सव्येनपित्रे त्वपसव्येनेति कर्कः।। तद्यथा।। ॐ शिवा आपः संत्विति जलस्य । ॐ सौमनस्यमस्त्विवति पुष्पाणाम् ॥ ॐ अक्षतं चारिष्टं चास्त्विवति अक्षतानाम् ॥ अत्र संत्वस्त्विवति यथाक्रमं प्रतिवचनम् ॥ अस्मिन्नुदकादिदाने हेमाद्रौ श्राद्धकाशिकायां च मंत्रांतराण्युक्तानि ॥ तद्यथा ॥ अपां मध्ये स्थिता देवाः सर्वमप्सुप्रतिष्ठितम्॥ ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवंतु मे ॥१॥ इत्युदकदानम् ॥ लक्ष्मीर्वसति पुष्पेषु

लक्ष्मीर्वसति पुष्करे॥ लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं सदास्तु म इति पुष्पदानम्॥२॥ अक्षतं चास्तु मे पुण्यं शांतिः पुष्टि र्धृतिस्तु मे॥यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा ममेत्य-क्षतदानम्॥३॥ विप्रैस्तु हस्तदत्तानां उदकपुष्पाक्षतानां शुचौ देशे प्रक्षेपः कार्यः। चिर-धारणप्रयोजकभाविकार्याभावात्॥ ॐ अस्माकं दीर्घमायुरस्तु॥ ॐ शांतिरस्तु॥ ॐ पुष्टि-रस्तु ॥ ॐ तुष्टिरस्तु॥ ॐ वृद्धिरस्तु ॥ ॐ यद्यच्छ्रेयस्तदस्त्वित्येतैर्मंत्रैः प्रतिमंत्रं यज-मानेन कर्मपात्रोदकेन स्वमूर्द्धनि समाचारादभिषेकः॥ यत्पापं तत्प्रतिहतमस्त्विति भू-मौ जलप्रक्षेपः॥ ॐ द्विपदचतुष्पदेभ्यः शांतिर्भवत्विति पाठमात्रम् ॥ अस्त्विति स-र्वत्र प्रतिवचनम्॥ॐ नांदीमुखाः पितरः प्रीयंतामिति मंत्रेण क्षीरयवकुशजलानां पि-त्रादिसर्वब्राह्मणहस्तेषु तंत्रेणाक्षय्योदकदानम् ॥ नात्र मंत्रावृत्तिः ॥ एकपदेनैव सर्वप्रकाशनसंभवात् ॥ ॐ अघोराः पितरः संत्विति कृतांजलिना यजमानेन ब्राह्म-णान्प्रतिप्रश्नः ॥ ते च पुष्पाक्षतदानपूर्वकं संत्विति प्रतिप्रश्नं कुर्युः ॥ एवं सर्वत्र ॥ ॐ गोत्रं नो वर्द्धतामिति कर्ता ब्रूयात्॥ ॐ वर्द्धतामिति विप्राः प्रतिब्रूयुः॥ ॐ दाता-रो नोभिवर्द्धतामिति कर्ता ॥ ॐ अभिवर्द्धन्तामिति विप्राः ॥ एवं सर्वत्र ॥ ॐ वेदा-श्च नोभिवर्द्धताम् ॥ ॐ अभिवर्द्धताम् ॐ सन्ततिर्नोभिवर्द्धताम्॥ ॐ अभिवर्द्धताम्॥ ॐ श्रद्धा च नो माव्यगमत्। ॐ मागात्॥ ॐ बहुदेयं च नोस्तु । अस्त्वित्येवमाशिषां ग्रहणम् ॥ इति हेमाद्याद्यः। कर्कोपाध्यायादयस्तु । ॐ गोत्रं नो वर्द्धतामिति यज-मानेनोक्ते वर्द्धतामिति विप्राः प्रतिब्रूयुः ॥ ततः ॐ दातारो नोभिवर्द्धतां वेदाः संत-तिरेव च॥ श्रद्धा च नो माव्यगमद्बहुदेयं च नोस्त्विति मंत्रं यजमान उदाहरेत्॥ अ-स्त्विति प्रतिवचनमित्येवमाशिषां प्रतिग्रहणमित्याहुः ॥ मदनरत्नेप्येवम् ॥ हेमा-द्रिस्तु अतिथींश्च लभेमहि॥ लभध्वम्॥ याचितारश्च नः संतु॥ मा च याचिष्मकंचन। मायाचेथाः ॥ एताः सत्याशिषः संतु ॥ संत्वित्याशीर्वचनान्यधिकान्याह ॥ अथ न्युब्जपात्रोपरि स्थापितकुशानर्घपवित्रैः सह वाऽदाय पित्रादिपिंडपंक्तेरुत्तरतः पिंडोप-रि वा प्रागग्राणां तेषामास्तरणम्॥ ॐ नांदीमुखान् पितॄन्वाचयिष्य इति पंक्तिमूर्द्ध-न्यस्य सर्वेषां वा प्रश्नः॥ वाच्यतामिति तैरनुज्ञातः ॐ नांदीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयंतामिति मंत्रमुदाहरेत् । ततः ॐ प्रीयंतामिति विप्रैरुच्यमाने ॐ ऊर्ज्जं वहंतीरिति मंत्रेण स्वधापदे स्वाहापदोपहितेना-स्तृतकुशेष्ववनेजना वशिष्टानां कर्मपात्राद्गृहीतानां वाऽपां निषेकः॥ हेमाद्रिस्तु नांदी-मुखान्पितॄन् स्वाहां वाचयिष्य इति पृष्ट्वा वाच्यतामित्यनुज्ञातो नांदीमुखाः पितर इति मंत्रं पठेत् । तत ॐ अस्तु स्वाहेतिविप्रैरुच्यमाने ऊर्जमित्यपो निषिंचेदित्याह॥ अथ न्युब्जमर्घपात्रमुत्तानं कृत्वा ब्राह्मणेभ्यो द्राक्षामलकार्द्रमूलयवनिष्क्रयभूतदक्षि-

णादानम् ।। तद्यथा ।। अमुकामुकगोत्राभ्याममुकामुकशर्मभ्यां ब्राह्मणाभ्यां भवद्भ्यां कृतैतत्सत्यवसु वैश्वदेविककर्मप्रतिष्ठार्थं इमां द्राक्षामलकार्द्रकमूल्यवनिष्क्रयभूतां दक्षिणां विष्णुदैवतां संप्रददे नममेति वैश्वदेविकेभ्यो दानम् ॥ अमुकामुकगोत्राभ्याममुकामुकशर्मभ्यां ब्राह्मणाभ्यां भवद्भ्यां नांदीमुखानां पित्रादीनां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमामित्याद्युच्चार्य संप्रददे नममेति पैतृकेभ्यो दानम्॥ एवं मातामहसंबंधिभ्यामपि।। उत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्यात् ब्राह्मणेभ्य इति कात्यायनोक्तिः ॥ त्वाप्रत्ययतः प्रक्रांतोपक्रममृतेऽन्यकर्मानवकाशात् । सलिलं नामगोत्रेण दद्यात्शक्त्या च दक्षिणाम् ।। स्वस्तिवाचनकं कुर्यात् पिंडानुधृत्य भक्तितः ॥ इति मात्स्यवाक्याच्च दक्षिणादानानंतरमेव पिंडोत्थापनमिति ढोढूमिश्रादयः।। अतश्च हस्ताभ्यामेकैकं पिंडमुधृत्य पात्रे प्रत्यवधायावघ्राणम् ॥ सकृदाच्छिन्नानामावसथ्याग्नौ प्रक्षेपः।। उल्मुकयोश्च।। ॐ विश्वेदेवाः प्रीयंतामिति ब्रूतेति वैश्वदेविकान्विप्रान्प्रतिप्रश्नः ।। ॐ विश्वेदेवाः प्रीयंतामिति प्रतिप्रश्न ॥ अत्रावसरे पिंडोत्थापनमिति हेमाद्रिः ॥ विप्रभोजनभाजनानि चालयित्वाद्भिः संचरभूमिप्रोक्षणम् । ॐ स्वस्ति भवंतो ब्रूवंत्विति विप्रान्प्रतिप्रश्नः ॥ स्वस्तीतितैरुक्ते ॐ देवताभ्य इति त्रिर्जपः समाचारात्कृतांजलिना देशकालयोः संकीर्तनान्ते आभ्युदयिकश्राद्धविधौ यन्न्यूनं यथातिरिक्तं तत्परिपूर्णमस्तु ।। मंत्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः ।। श्राद्धं संपूर्णतां यातु प्रसादात् भवतां मम ।। यत्कृतं तत्सुकृतमस्तु ।। यदकृतं तद्विष्णुप्रसादात् ब्राह्मणवचनाच्च सर्वं परिपूर्णमस्त्विति वक्तव्यम् ॥ अस्त्विति विप्राः प्रतिब्रूयुः ॥ यज्ञादिसमाप्तौ यज्ञे यन्न्यूनं तस्मै त उपयत्तेऽतिरिक्तं तस्मै ते नम इति श्रुतेः संस्थामंत्रजपलिंगात् ॥ ॐ वाजे वाजेवत बाजिन इत्यादिना देवयानैरित्यंतेन मंत्रेण पित्रादि ब्राह्मणौ कुशाग्रेण स्पृशन् विसृज्यैवमेव मातामहादिब्राह्मणयोर्विसर्जनम् ततस्तेनैव मंत्रेण वैश्वदेविकब्राह्मणयोर्विसर्जनम् ॥ अथ ब्राह्मणानग्रतः कृत्वा ॐ आमावाजस्येति मंत्रणासीमांतमनुगमनम् ।। ब्राह्मणान्प्रदक्षिणीकृत्य गृहप्रवेशः ।। उच्छिष्टमार्जनम् । आचमनं । सर्वथा ब्राह्मणालाभे तु दर्भवटून् ब्राह्मणस्थाने परिकल्प्य यथास्थानं निवेश्य निमंत्रणादिविसर्जनांतं प्रैषानुप्रैषसंयुक्तं सकलं श्राद्धं यथाविधि कार्यम् इयांस्तु विशेषः। न नियमश्रावणं तस्य दृष्टार्थत्वात् ॥ अनुप्रैषाः स्वयंकार्याः।। हुतशेषे स्वांगुष्ठावगाहनम्। हुतशेषसंस्कारत्वात्॥ परिविष्टान्नं तु ब्राह्मणाय वा गवे देयम् ॥ तदभावे अप्सु प्रक्षेपणीयम् नाचांतेषूदकादिदानम् । नाशिषां प्रतिग्रहणम् । प्रैषानुप्रैषरूपत्वेति तत्प्रतिग्रहणस्य ब्राह्मणसकाशाद्वेवोचितत्वात् । न दक्षिणादानम् । ब्राह्मणोद्देशेन विहितत्वात् । देवतोदे-

शेन दक्षिणादानपक्षे तु, भवत्येव दक्षिणादानम् । अस्मिन्पक्षे अन्नवद्दक्षिणायां अपि श्राद्धभोजनकर्त्तरि ब्राह्मणे प्रतिपत्तिः ॥ दक्षिणादाने देवतोद्देशपक्षः शाखान्तरपरः ॥ दर्भबटूनां प्राङ्मुखोदङ्मुखता दर्भाग्रस्य मुखकल्पनया ज्ञेयेति श्राद्धखंडहेमाद्रौ ढोढूमिश्रपद्धतौ च स्पष्टम् ॥ दर्भबटूनिर्माणे च न दर्भसंख्यानियमः । तदुक्तं छंदोगपरिशिष्टे कात्यायनेन । यज्ञवास्तुनि मुष्ट्यां च स्तम्बे दर्भबटौ तथा ॥ दर्भसंख्या न विहिता विष्टरास्तरणेषु चेति ॥ दर्भचटौ तथेति क्वचित्पाठः ॥ पंचाशता भवेद् ब्रह्मा तदर्द्धेन तु विष्टरः॥ इति परिशिष्टे ब्रह्मविष्टरादौ दर्भसंख्याविहितास्ति । अतश्च दर्भसंख्यायाः संभवासंभवाभ्यां व्यवस्थितो विकल्प इति नारायण वृत्तौ ॥ इति श्रीमद्द्विवेदी परशुरामात्मजेन जगन्नाथशर्मणा संशोधिते श्रीरुद्रकल्पद्रुमे आभ्युदयिकश्राद्धपद्धतिः समाप्तिमगमत् ॥

## ॥ अथाभ्युदयिके देवतानिर्णयः ॥

तत्र कात्यायनसूत्रम् ॥ आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे इति प्रकृत्य नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहाः वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ अत्रहि पूर्वाह्णरूपकालैक्यात्प्रयोगैक्येन षट् दैवतमाभ्युदयिकं श्राद्धमुक्तं षण्णामुपादानात् ॥ नांदीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहोच्यतामिति छंदोगसूत्रे वसिष्ठेन तथैवोक्तम् ॥ छंदोगपरिशिष्टे कात्यायनेनापि ॥ आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ॥ षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेदित्यनेन षट् दैवत्यं आभ्युदयिकं श्राद्धमुक्त्वा । प्रागग्रेष्वथ दर्भेषु आद्यमामं अपूर्ववत्॥ अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥ द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ॥ मातामहप्रभृतींस्तु एतेषामेव वामत इत्यनेन प्रयोगैक्यं तत्र प्रदर्शितम् । नहि प्रयोगभेदे पित्रादीनां वामतो मातामहादीनामवनेजनं संभवति । आद्यं पितरं द्वितीयं पितामहं तृतीयं प्रपितामहम् ॥ स्वेन भर्त्रा समं भुंक्ते माताश्राद्धं सुधासमम् ॥ पितामही च स्वेनैव स्वेनैवप्रपितामहीति बृहस्पतिनापि स्वभर्त्रादिभिः सहैव प्राशस्त्येन मातृभ्यः श्राद्धदानमुक्तम् ॥ न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ॥ स्वभर्तृपिंडदानाच्च तृप्तिरासां यतः स्मृता इति छंदोगपरिशिष्टे कात्यायनेन मातृभ्यः पृथक्त्वेन श्राद्धप्रदानस्य प्रतिषिद्धत्वाच्च ॥ पिंडपितृयज्ञवत् स्त्रीभ्यश्चेत्यन्वष्टकावदाभ्युदयिके विशेषोपदेशाभावाच्च सूत्रे विशेषोपदेशाभावेपि ॥ अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ॥ मातुः श्राध्धं पृथक् शस्तमन्यत्र पतिना सहेति स्मृत्यंतरे विशेष उक्त एवेति चेन्न॥ नांदामुखाः पितरः पितामहा इत्यादिसूत्रविरोधात् ॥ षड्भ्यः पितृ-

भ्य इति । प्रागग्रेष्वथ दर्भेष्विति पूर्वोक्तकात्यायनवचनविरोधात् ॥ कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ॥ प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्थितिरिति छंदोगपरिशिष्टे कात्यायनोक्तवचनांतरविरोधाच्च ॥ कर्षूसमन्वितमन्वष्टकाश्राद्धं तचैकपार्वणमेव छंदोगानां विहितम् ॥ शेषेषूक्तव्यतिरिक्तेषु श्राद्धेषु ॥ उक्तव्यतिरिक्तत्वेनाभ्युदयिकेपि षट् पिंडा इत्यर्थः ॥ तस्माद्वाजसनेयिभिच्छंदोगैश्च षट् दैवतमेवैकप्रयोगमाभ्युदयिकं श्राध्धं कर्तव्यम् । यत्तु अन्वष्टकासु वृध्धौ चेति स्मृत्यन्तरवाक्यं तत् शाखान्तरविषयम् ॥ यानि तु "मातृश्राध्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ॥ ततो मातामहानां च वृध्धौ श्राद्धत्रयं स्मृतमिति ॥ मातृश्राध्धं तु पूर्वाह्णे मध्याह्ने पैतृकं तथा ॥ ततो मातामहानां च वृध्धौ श्राद्धत्रयं स्मृतमित्यादि" हेमाद्र्यादिनिबंधधृतैः शातातपगार्ग्यादिस्मृतिवाक्यैः कालभेदाद्भिन्नप्रयोगाणि त्रीणि श्राद्धान्युक्तानि तानि येषां सूत्रे आभ्युदयिके विशेषतः पार्वणत्रयविधिरस्ति पार्वणद्वयत्रययोर्विध्यभावो वास्ति तच्छाखान्तरविषयाणि ॥ यदपि ॥ अलाभे भिन्नकालानां नांदीश्राद्धत्रयं बुधः ॥ पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकमिति वृद्ध मनुवचनं तदपि शाखान्तरविषयम् ॥ यत्र हि मात्रादिश्राद्धत्रयविधिः कालत्रयेस्ति तत्रैवानुकल्पतया कालैकत्वेन विधिर्युक्तः ॥ नहि कात्यायनसूत्रादौ कालत्रये मात्रादिश्राद्धत्रयविधिरस्ति ॥ कोकिलमतानुसारिभिरपि षड् दैवत्यमेवाभ्युदयिकं श्राध्धं कर्तव्यम् । तत्रैकं पितृपार्वणं मातृमातामहप्रमातामहोद्देशेनापरमिति तेषां विशेषः ॥ पुत्रिकापुत्रस्याप्येवम् । तदाह छंदोगपरिशिष्टे कात्यायनः ॥ मातुः प्रथमतः पिंडं निर्वपेत्पुत्रिकासुतः॥ द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुरिति॥ नांदीमुखाः पितरः पितामहा इत्यादिना भगवताऽचार्येण पित्रादीनामनुलोमक्रमो विहितः ॥ बौद्धायनसूत्रे छंदोगसूत्रे चाप्येवम् ॥ मातापितामही चैव तथैव प्रपितामही पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ॥ एते नैवार्चनीयाः स्युः पितरोभ्युदये द्विजैः ॥ इत्याश्वलायनस्मृतावनुलोमक्रमाभिधानादाश्वलायनानामप्यनुलोमक्रम एवेति पारिजातस्मृतिकौस्तुभादयः ॥ यत्तु ॥ नांदीमुखे विवाहे च प्रपितामहपूर्वकम् । नामसंकीर्तयेद्विद्वानन्यत्र पितृपूर्वकमिति वृद्धवसिष्ठवचनं प्रतिलोमक्रमविधायकं तद्येषां सूत्रे वृद्धि श्राद्धेऽनुलोमप्रतिलोमक्रमयोरनुपदेशप्रतिलोमक्रमोपदेशो वास्ति तच्छाखाविषयम् ॥ आथर्वणानां तु पिंडपितृयज्ञदर्शश्राद्धादौ सर्वत्र प्रतिलोमक्रम एव तद्गृह्ये उक्तोऽस्ति ॥ छंदोगपरिशिष्टे कात्यायनः॥ स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ॥ पिंडानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् । इति ॥ ओद्वाहनादित्याङ् अभिविधौ ॥ तेन तेषां सुतानामुद्वाहं विवाहमभिव्याप्य पिता स्वपितृ-

भ्यः स्वपित्रादिभ्यो मातामहादिभ्यश्च पिंडान्दद्यात् । तदुपलक्षितमाभ्युदयिकं श्राद्धं कुर्यादित्यर्थः॥ उद्वाहोत्र पूर्वोभिमेतः॥ द्वितीये तु पितरि जीवति अपि स्वकर्तृकत्वात् ॥ तथा च स्मृतिः ॥ नांदीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः ॥ अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नांदिकम् ॥ इति ॥ प्रथमेपि विवाहे कर्त्रंतराभावे वर एवाभ्युदयिकं श्राद्धं कुर्यादिति प्रयोगपारिजाते । तत्राजीवत्पितृकः स्वपित्रानुद्दिश्याभ्युदयिकं कुर्यात् ॥ जीवत्पितृकादिस्तु पितुः पितामहादेर्वा पित्रादीन्मातामहादींश्चोद्दिश्याभ्युदयिकं कुर्यादिति विशेषः ॥ तस्याभावे तु तत्क्रमादिति ॥ तस्य पितुरभावे पितृव्याचार्यमातुलादिर्यत्संस्कारं कुर्यात्स तत्क्रमात्तं पितरमारभ्य संस्कार्यस्य यः पितॄणां क्रमस्तेन क्रमेण दद्यादित्यर्थः ॥ जीवदसन्निहित पितृकत्वे तु संस्कार्यस्य पितुः पित्रादिभ्यो मातामहादिभ्यश्च दद्यादिति ॥ आभ्युदयिकश्राद्धकर्तुर्मातर्येव जीवंत्यां मृतायाः तस्याः सपत्न्या सपत्नीकत्वगुणकीर्तनम् ॥ एवं पितामही प्रपितामह्योरन्यतर जीवने उभयोर्जीवने च । सपत्न्यभावे च न सपत्नीकत्वगुणकीर्तनम् ॥ मातामहे जीवति तत्पार्वणलोपः । द्वाग्लोपात् ॥ तदुक्तं । पितृवर्गे मातृवर्गे तथा मातामहस्यच ॥ जीवेत्तु यदि वर्गाद्यस्तं वर्जेतु परित्यजेत् ॥ तदा पितृपार्वणेनैवाभ्युदयिकश्राद्धसिद्धिः ॥ पितृजीवनेप्येवं प्रसक्ते विशेष उक्तश्छंदोगपरिशिष्टे कात्यायनेन॥ वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत इति ॥ अत्र वृद्धौ तीर्थे चेत्यनेकनिमित्तसमविशेषवाक्यभेदादर्द्धमंतर्वेदीतिवद्वृद्धितीर्थादिपदैर्जीवत्पित्रधिकारीकं श्राद्धमात्रं लक्ष्यते । येभ्य एवेति यच्छब्दोपवद्धैवकारस्य यदेवविद्यया करोतीतिवद्वीप्सार्थकत्वात् येभ्यो येभ्यःपिता दद्यात्तेभ्यस्तेभ्यः पुत्रो दद्यादित्यर्थः ॥ तेन जीवत्पितृकः स्वपितुः पित्रादीन्मातामहादींश्चोद्दिश्याभ्युदयिकं श्राद्धं कुर्यात् ॥ मृतमातामहस्यापिजीवत्पितुर्न मातामहाद्युद्देशः ॥ पितृपितामहयोर्जीवने तु पितामहस्य पित्रादीन्मातामहादींश्चोद्दिश्याभ्युदयिकं कुर्यात् ॥ तदुक्तं विष्णुस्मृतौ ॥ पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात् पितरि पितामहे च जीवति येषां पितामह इत्यत्र कुर्यात्तेषां कुर्यादित्यस्यानुषंगः ॥ पित्रादीनां त्रयाणां जीवने तु पितृपार्वणलोपः । पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यादिति विष्णुस्मृतेरित्युक्तम् । स्मृतिकौस्तुभे । यत्तु कल्पतरौ हलायुधभाष्ये चोक्तम् ॥ त्रयाणां जीवनेपि प्रपितामहस्य पित्रादीन् मातामहादींश्चोद्दिश्याभ्युदयिकं कुर्यात् ॥ पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखाह्येते पितरः संप्रकीर्तिताः ॥ तेभ्यः पूर्वतरा ये च प्रजावंतः सुखैषिणः । तेतु नांदीमुखा नांदीसमृद्धिरिति कथ्यत इति

ब्रह्मपुराणवचनस्य जीवत्पित्रादीति कर्तृकवृद्धिश्राद्धविषयत्वात् ॥ यत्तु पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यादिति विष्णुस्मृतिवचनं तज्जीवत्पितादिपिककर्तृकतीर्थश्राद्धादिविषयमिति तन्न । अस्य ब्रह्मपुराणवचनस्य तत्प्रकरणपठितत्वात्प्रौष्ठपदीश्राद्धविषयत्वेन हेमाद्र्यादिभिर्निर्णीतत्वात् ॥ अतस्तस्य जीवत्पितादिपितृकर्तृकाभ्युदयिकविषयत्वाभावात्स्मृतिकौस्तुभकृतोक्तमेव साधु ॥ व्युत्क्रममृते तु श्राद्धप्रकारो विष्णुस्मृतावभिहितः ॥ यस्य पिता प्रेतः स्यात्सपित्रे पिंडं निधाय पितामहात्परं द्वाभ्यां दद्यात् । यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिंड दत्वा पितामहपितामहाय दद्यात् ॥ यस्य पितामहः प्रेतः स्यात् स तस्मै पिंडं निधाय प्रपितामहात्परं द्वाभ्यां दद्यादिति ॥ अजीवत् पितृप्रपितामहो जीवत्पितामहः पितापितृप्रपितामह तत्पितृनुद्दिश्य पितृपार्वणं कुर्यात् ॥ नांदीमुखपितः नांदीमुखपितुः पितामह नांदीमुखपितुः प्रपितामह इदं वः पाद्यमिति प्रयोगः ॥ एवं प्रपितामहमात्रजीवने पितृपितामहतत्पितामहानुद्दिश्य पितृपार्वणं कुर्यात् । नांदीमुख पितः नांदीमुखपितामह नांदीमुखपितुः प्रपितामह इदं वः इति प्रयोगः ॥ पितृप्रपितामहयोर्जीवने तु पितामहं प्रपितामहस्य पितृपितामहौ चोद्दिश्य पितृपार्वणं कुर्यात् । नांदीमुख पितामह नांदीमुखप्रपितामहस्य पितः नांदीमुखप्रपितामहस्य पितामह इदं व इति ॥ पितामहप्रपितामहयोर्जीवने तु पितरं पितामहस्य पितामह प्रपितामहौ चोद्दिश्य तत् पार्वणं कुर्यात् ॥ नांदीमुखपितः नांदीमुखपितामहस्य पितामह नांदीमुखपितामहस्य प्रपितामह इदं वः इति ॥ एवमजीवन्मातामहस्य प्रमातामह जीवने नांदीमुख मातामह नांदीमुख मातामहस्य पितामह नांदीमुखमातामहस्य प्रपितामह इदं व इति प्रयोगः ॥ वृद्धप्रमातामहजीवने तु नांदीमुख मातामह नांदीमुखप्रमातामह नांदीमुखमातामहस्य प्रपितामह इदं व इति॥ तयोरुभयोर्जीवने तु नांदीमुख मातामह नांदीमुखमातामहस्य पितामह नांदीमुखमातामहस्य प्रपितामह इदं वः॥ इति श्रीमद्द्विवेदी परशुरामात्मजजगन्नाथशर्मणा संशोधिते श्रीरुद्रकल्पद्रुमे आभ्युदयिकश्राद्धदेवतानिर्णयः ॥

## ॥ अथाभ्युदयिकश्राद्धे पिण्डदानप्रतिषेधः ॥

उक्तं च सपिंडकं श्राद्धम् । तत्प्रसंगादिदानीं क्वचित्पिंडदानप्रतिषेधोऽभिधीयते ॥ स्मृतिरत्नावल्यां स्मृत्यन्तरे॥ विवाहमौंजीबंधोर्ध्वं वर्षार्द्धं वर्षमेववा ॥ पिंडान्सपिंडा नो दद्युः सपिंडीकरणं विनेति ॥तत्रैव॥ विवाहव्रतचूडासु वर्षमर्द्धं तदर्द्धकम्॥ पिंडदानं न कर्तव्यं ज्ञातीनामृद्धिमिच्छतेति ॥ तथा तत्रैव ॥ वृद्धिमात्रे तथान्यत्र

पिंडदाननिराक्रिया ॥ इति ॥ कार्ष्णाजिनीरपि ॥ मौंजीबंधाद्विवाहाच्च वर्षार्द्धं वर्षमेव वा॥ पिंडान्सपिंडा नो दद्युः सपिंडीकरणादृते ॥ इति ॥ अत्र च सपिंडीकरणग्रहणं तत्पूर्वभावीनां प्रेतश्राद्धानामुपलक्षणार्थम्॥ विपक्षे निंदापि श्रूयते॥ स्मृतिरत्नावल्याम् ॥ वृद्धौ पिंडान्विनिर्वाप्य पुनःपिंडान्ददाति यः॥ गोत्रवृद्धिविघाती स्यात् नरकं प्रतिपद्यत इति ॥ एवं सर्वत्र निषेधे प्राप्ते क्वचिदपवादमाह । बृहस्पतिः ॥ महालये गयाश्राद्धे मातापित्रोः क्षयेहनि ॥ कृतोद्वाहोपि कुर्वीत पिंडनिर्वपणं सुत इति॥ महालयशब्देनात्र कालविशेषो देशविशेषश्चेत्युभयमपि गृह्यते ॥ विशेषाश्रवणादिति-स्मृतिरत्नावलीकारः ॥ दिवोदासीये बृहस्पतिः॥ तीर्थे संवत्सरे प्रेते पितृयामे महालये ॥ पिंडदानं प्रकुर्वीत युगादिभरणीमघेति ॥ स्मृतिरत्नावल्याम् ॥ पित्रोः क्षयाहे यज्ञे च पितृयज्ञे महालये । गयायां पिंडदानस्य न कदाचिन्निराक्रिया । इति ॥ यज्ञः सोमयागः ॥ पितृयज्ञश्चातुर्मास्यांतर्गता पित्र्येष्टिः ॥ पिंडपितृयज्ञश्च वचनमंतरेण पिंडदाननिवृत्तिर्नास्तीत्यभिहितम् ॥ विना वचनं पिंडदानाकरणे प्रतिषेधोच्यते॥ पिंडैर्विना नहि श्राद्धमपवादादृते क्वचित् । पिशाचमन्यथा तत्स्याद्विधिहीने कृते सति ॥ इति ॥ अत्र प्रसंगात्तर्पणे क्वचित्तिलनिषेधोप्यभिधीयते ।' तत्र मरीचिः॥ विवाहे चोपनयने चौले सति यथाक्रमम्॥ वर्षमर्द्धं तदर्द्धं च नेत्याहुस्तिलतर्पणमिति॥ वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणमिति स्मृत्यर्थसारः ॥ गार्ग्यः ॥ भानौ भौमे त्रयोदश्यां नंदाभृगुमघासु च॥ पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणमिति ॥ मरीचिः ॥ सप्तम्यां रविवारे च ग्रहे जन्मदिने तथा ॥ भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥ पक्षयोरुभयो राजन् सप्तम्यां शनिसंध्ययोः ॥ विद्यापुत्रकलत्रार्थी तिलान्सप्तसु वर्जयेत् ॥ इति ॥ स्कांदे काशीखण्डे ॥ रवौ शुक्रे त्रयोदश्यां सप्तम्यां निशि संध्ययोः ॥ श्रेयोर्थी ब्राह्मणो जातु न कुर्यात्तिलतर्पणम् ॥ इति ॥ अयंच प्रतिषेधो वाजसनेयिभिन्नपरः ॥ ततोऽपसव्यं तिलमिश्रमिति कात्यायनीयस्नानसूत्रे तिलमिश्रमित्यनेनैव तिलप्राप्तौ एकैकस्य तिलैर्मिश्रान् त्रींस्त्रीन्दद्याज्जलांजलीनिति सत्रे पुनस्तद्ग्रहणे स्मृत्युक्तप्रतिषिद्धदिनेष्वपि तर्पणे तिलनिवृत्तिर्माभूदित्येतेन कैश्चिदुक्तं श्राद्धांगतर्पणे कर्त्तव्ये तद्दिने नित्यतर्पणं तिलरहितं कार्यमित्युक्तं तन्निरस्तमिति हरनाथादयः ॥ एतदर्थमिति हरिहरादिभिर्व्याख्यातत्वात् ॥ कठाः काण्वाश्च जाबाला ये च वाजसनेयिनः । सतिलं तर्पणं कुर्युर्निषिद्धेषु दिनेष्वपीति मरीचिवचनाच्च ॥ काण्वजाबालयोर्वाजसनेयिगणांतःपातित्वाद्वाजसनेयिग्रहणेनैव तदुपादाने सिद्धे पुनस्तदुपादानमत्यादरार्थम्॥ अयं च तर्पणे तिलप्रतिप्रसवः शुक्लतिलविषयः॥ श्रेयोर्थी ब्राह्मणो जातु न कुर्यात्तिलतर्पणमिति ॥ तिलान्प्रतिषिध्य तत्रैवाग्रे यदि

कुर्यात्ततः कुर्याच्छुक्लैरेव तिलैः कृतीति स्कंदपुराणात् ॥ तीर्थतर्पणेपि तिलनिषेधो न प्रवर्त्तते॥ तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके॥ निषिद्धेपि दिने कुर्यात्तर्पणं तिलमिश्रितमिति त्रिस्थलीसेतौ वचनात्॥इत्याभ्युदयिके श्राद्धे पिंडदानप्रतिषेधवचनानि॥

## ॥ अथाभ्युदयिकमामश्राद्धम् ॥

आमश्राद्धं प्रकर्तव्यं वृद्धौ नांदीमुखे सदा॥ पाकेन वा बहिः शाले सोदनं बदरं दधि ॥ इति ॥ श्राद्धकाशिकायां याज्ञवल्क्येन वृद्धावपि पाक्षिकामश्राद्धविधानात् । आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि॥ आमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमेदिति त्रिस्थलीसेतौ कात्यायनेन चापदि पुत्रजन्मनि चामश्राद्धविधानात्तदिह निरूप्यते॥ तत्र हेमाद्रौ पराशरस्मृतिविष्णुपुराणवाराहपुराणेषु ॥ असमर्थोन्नदानस्य धान्यमात्रं स्वशक्तितः॥ प्रदद्यात्तु द्विजातिभ्यः स्वल्पामपि च दक्षिणामिति ॥ अस्यायमर्थः ॥ पक्वान्नाभावे श्राद्धयोग्यान्नप्रकृतिभूतं यवगोधूमतंदुलादिधान्यमेव विश्वान्देवान्पितृंश्चोद्दिश्य पक्वान्नवत्त्यक्त्वानिमंत्रितद्विजेभ्यः समर्पयेत्॥ तत्र धान्यस्य साक्षाददननीयत्वाद्भोजनाभावे तत्संबिधिनो धर्मालुप्तप्रयोजना अपोशानादयो लुप्यन्ते ॥ तदुक्तम्॥ तृप्तप्रश्नोवगाहश्च जुषप्रश्नो यथासुखम्॥ आमश्राद्धे भवेन्नैतदपोशानं च पंचमम् ॥ इति ॥ अवगाहोंगुष्ठनिवेशनम् ॥ अश्यत इत्याशः ॥ धान्यविशेषणेन चाशशब्देनैतत्सूच्यते ॥ यत्स्थानं गत्वा तैर्ब्राह्मणैस्तद्धान्यमशनयोग्यं कृत्वा भोक्तव्यं न तु कार्यान्तरे विनियोक्तव्यमिति । अन्यथाऽशमित्यनर्थकं स्यात् ॥ अस्य कर्तृविशेषेऽपवादमाह ॥ व्यासः॥ हिरण्यमामं श्राद्धीयं लब्धं यत्क्षत्रियादितः॥यथेष्टं विनियोज्यं स्याद्भुंजीयात् ब्राह्मणः स्वयम् ॥ इति ॥ क्षत्रियादितः क्षत्रियवैश्यमूर्द्धावसिक्तादिभ्यः। अत्र यद्यपि यथेष्टं विनियोज्यमिति सामान्येनोक्तं तथापि श्राद्धादौ न विनियोज्यं देवतोद्देशेन त्यक्तस्य पुनर्देवतांतरोद्देशेन त्यागस्यायुक्तत्वात् ॥ अतो लौकिके भोजने क्रियादौ वा लौकिकेपि श्रुतिस्मृतिविहिते दक्षिणादानादौ नित्यनैमित्तिके विनियोज्यमित्यवगंतव्यम् ॥ ब्राह्मणा तु लब्धं स्वयमेवेति नियम्यते ॥ अत्र यावत्प्रतिगृहीतं तावत्स्वयमेव भोज्यमिति नियमो न मन्तव्यः ॥ किन्तु तृप्तिपर्यंतं स्वयं भुक्त्वाऽन्यस्य श्राद्धशेषोचिताप्रतिपत्तिः कर्तव्येति निश्चेतव्यम् ॥ शूद्रात्तु प्रतिगृहीतं कस्मिंश्चिदपि नित्यनैमित्तिके न विनियोज्यम् । किं तु स्वकीये परकीये वा भोजनएवोपयोज्यमित्युक्तं हेमाद्रौ षट्त्रिंशन्मते॥ आमं शूद्रस्य यत्किंचिच्छ्राद्धिकं प्रतिगृह्यते ॥ तत्सर्वं भोजनायालं नित्ये निमित्तिकेन चेति॥ अत्र प्रदेयधान्यपरिमाणमाह ॥ व्यासः ॥ आमं ददन्तु कौंतेय दद्यादामं चतुर्गुणमिति॥ चतुर्गुणमित्येके-

कब्राह्मणतृप्तिपर्याप्तान्नसिद्धिसमर्थाद्धान्यचतुर्गुणम् ॥ तावतैकैकस्मै ब्राह्मणाय दद्यादित्यर्थः॥ अशक्तौ पक्षान्तरमपि तेनैवोक्तम्॥ आमं दद्द्धि कौंतेय आमं तद्द्विगुणं भवेत ॥ त्रिगुणं चतुर्गुणं वापि नत्वेकगुणमर्पयेदिति॥ अत्रोत्तरोत्तरपक्षस्य मुख्यत्वं। एवमप्यशक्तौ सपमप्यामं दद्यादित्युक्तं त्रिस्थलीसेतौ॥ आमश्राद्धेति कर्तव्यतामाह ॥ हेमाद्रौ व्यासः ॥ सिद्धान्नेन विधिर्यः स्यादामश्राद्धेप्यसौ विधिः ॥ आवाहनादिसर्वं स्यात्पिंडदानं च भारत॥ दद्याद्यश्च द्विजातिभ्यः शृतं वाशृतमेवच॥ तेनाग्नौकरणं कुर्यात् पिंडांस्तेनैव निर्वपेदिति ॥ आवाहनादीत्यादि शब्देनार्घोपि गृह्यते ॥ तथाच तत्रैव भविष्यपुराणे ॥ आवाहनं भवेत्कार्यमर्घदानं तथैव च ॥ एष एव विधिर्यत्र यत्र श्राद्धं प्रवर्त्तत इति ॥ हेमाद्रौ कूर्मपद्मपुराणयोः॥ आमेन वर्त्तयेन्नित्यं ब्राह्मणो व्यसनान्वितः । तेनाग्नौकरणं कुर्यात्पिंडांस्तेनैव निर्वपेदिति ॥ त्रिस्थलीसेतौ उशनाः ॥ आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा॥ हस्तेग्नौकरणं कुर्याद्ब्राह्मणस्य विधानत इति ॥ यत्तु । आमश्राद्धमनंगुष्ठग्नौकरणवर्जितम् ॥ तृप्तप्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवमिति ॥ श्राद्धकाशिकायामाचारतिलके॥ आमश्राद्धेग्नौकरणनिषेधकं वचनम् ॥ यच्चावाहनाग्नौ करणं विकिरं पात्रपूरणम्॥ तृप्तप्रश्नं न कुर्वीत आमे हेमे कदाचनेति । तत्रैव धर्मप्रदीपे ॥ आवाहनाग्नौकरणानां निषेधकं वचनं तत्तीर्थशास्तिनिमित्तामश्राद्धविषयम् ॥ पिंडदाने पक्षान्तरमप्युक्तं हेमाद्रौ त्रिंशन्मते ॥ आमश्राद्धं यदा कुर्यात् पिंडदानं कथं भवेत्॥ गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा॥ पिंडान्दद्याद्यथालाभं तिलैः सह विमत्सर इति ॥ अत्र गृहपाकसक्तुपायसानां यथालाभं व्यवस्था ॥ यत्तु । आमेन पिंडान्दद्याद्यो विप्रान्पक्वेन भोजयेत्॥ पक्वेन कुरुते पिंडान्विप्रेष्वामं प्रयच्छति ॥ तावुभौ मनुजौ प्रोक्तौ नरकार्हौ न संशय इति वचनं तदमावास्याश्राद्धविषयमित्युक्तं ॥ श्राद्धकाशिकायां त्रिस्थलीसेतौच ॥ विकिरादिकमप्यामद्रव्येणैव कर्तव्यम्॥ तदाह प्रचेताः ॥ आमश्राद्धमदः पिंडास्तथाग्नौ करणंच यत् ॥ तद्यथातत्रतेनैव यत्किंचिच्छ्राद्धिकं भवेदिति॥ यत्किंचिद्यदन्यदपि विकिरादि तदपि तेनैव कर्तव्यमित्यर्थः। आमश्राद्धे केषांचिन्मंत्राणामूहोपि कार्यः ॥ तदाह मारिचिः ॥ आवाहने स्वधाकारे मंत्रा ऊह्या विसर्जने । अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृत इति ॥ आवाहने पितॄन्हविषा अत्तवे इति मंत्रे अत्तवेतिपदस्थाने स्वीकर्तव्य इति पदोहः॥ स्वधाकारे नमो वः पितर इष इति मंत्रे इष इति पदस्थाने आमद्रव्यायेत्यूहः ॥ एतच्च वाजसनेयिभिन्नविषयम् ॥ वाजसनेयिशाखास्वस्य मंत्रस्य समाम्नायाभावात्॥ विसर्जने वाजे वाजेवतेतिमंत्रे तृप्ता इति क्त प्रत्ययस्थाने तृप्यतेति लोट्प्रत्ययोहः कार्यः ॥ यद्यपि पूयति वा एतद् चोक्षरं यदेनदूह-

तीति सुच्यूहो निषिद्धस्तथापि वाचनिकोयमूहः । एत्रमेतदन्नमित्येवमादावेवतदाम मित्याद्यूहः कार्यः।। अन्यकर्मणि तु विष्णो हव्य रक्षेत्यादौ नोह इति वाक्यार्थः ।। वस्त्रदक्षिणादि आमश्राद्धेपि देयमेव ।। सिद्धान्नेन विधिर्यः स्यादामश्राद्धेप्यसौ विधिरिति वचनात् ।। इत्यामश्राद्धम् ।।

## ।। अथाभ्युदयिके हेमश्राद्धम् ।।

तत्र हेमाद्रौ व्यासः ।। द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।। हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वलेति ॥ हेमश्राद्धस्य क्वचिदपवादः षट्त्रिंशन्मते ।। अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ॥ हेमश्राद्धं प्रकुर्वीत वर्जयित्वा क्षयेहनीति ।। इह स्मृत्यन्तरपुराणांतरेषु यत्र यत्रामश्राद्धं विहितं तत्र तत्र विधीयमानं हेमश्राद्धं चामद्रव्यासंभवे एवेति व्याख्येयम् ।। अत एवाह मरीचिः ।। आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान् ।। धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषेति ।। एवं ह्यामद्रव्यहेम्नोरष्टदोषदुष्टो न विकल्पः ।। अन्नप्रकृतिभूतत्वेन श्राद्धविधावंतरंगस्य धान्यस्य सति संभवे बहिरंगाद्धेम्नः पूर्वमुपादानं चानुगृहीतं भवति । पुत्रजन्मनिमित्ते पक्कामयोरन्नयोः सद्भावेपि हेमश्राद्धमेवेति हेमाद्रिः।। अतएव संवर्त्तः ।। पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नेव बुद्धिमान् । न पक्केन न चामेन कल्याणान्यभिकामयन्निति ॥ धान्याच्चतुर्गुणेनैवेति ॥ आमश्राद्धे यावदेकैकस्मै ब्राह्मणाय धान्यं दीयते तावच्चतुर्गुणं यावता हिरण्येन न लभ्यते तावदेकैकस्मै ब्राह्मणाय हेमश्राद्धे हिरण्यं देयमित्यर्थः ।। इह ये शक्तितारतम्यालोचनयाऽमश्राद्धे धान्यद्वैगुण्यादिपक्षाः प्रतिपादितास्तदनुसारेणैव हेम्नो प्रमाणभेदोऽनुक्त एवार्थाद्गम्यते ।। धर्मस्त्वाह।। आमंतु द्विगुणं प्रोक्तं हेम तद्वच्चतुर्गुणं ।। अन्नाभावे द्विजातीनां ब्राह्मणस्य विधीयत इति ।। एकैकब्राह्मणतृप्तिपर्याप्तान्नसमर्थं धान्यं यावता हिरण्येन लभ्यते तावच्चतुर्गुणं हेम एकैकस्मै ब्राह्मणाय देयमित्यर्थः अनेन द्विगुणधान्याद्द्विगुणं हेम प्रदेयमित्युक्तं भवति ।। शूद्रश्राद्धे प्रतिगृहीतं धान्यं नित्यनैमित्तिकेन विनियोज्यमित्यभिप्रायोक्तम्।। षट्त्रिंशन्मते ।। हिरण्यं तत्पुनः श्राद्धे गृहीतं नैव दुष्यति।। तेन नित्यक्रियाः कार्या हिरण्यं नान्नमुच्यत इति ।। पिंडदानप्रकारोपि भविष्योत्तर एव प्रदर्शितः ।। गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ।। पिंडदानं प्रकुर्वीत हेमश्राद्धे कृते सदेति ।। षट्त्रिंशन्मते ।। नामंत्रेणाग्नौ करणं विकिरो नैव दीयते।। तृप्तिप्रश्नोपि नैवात्र कर्तव्यः केनचिद्भवेदिति ।। अत्रामहेमश्राद्धयोः प्रयोगस्तु निषिद्धपदार्थवर्जं विशेषविधिविशिष्टः पूर्वोक्त एव ज्ञेयः ॥ विशेषविधिनिषेधयोः शेषाभ्यनुज्ञाफलकत्वात् ।। इति ।।

## ॥ अथाभ्युदयिके संकल्पश्राद्धम् ॥

यद्यपि दधिबदराक्षतमिश्राः पिंडा इति सूत्रे पिंडपदोपादानस्यापिंड कर्त्युदासार्थत्वेन हेतुना संकल्पश्राद्धं कात्यायनानां न भवतीत्यभिहितं प्राक् तथापि॥ समग्रं यस्तु शक्तोऽतिकर्तुं नैवेहपार्वणं अपि संकल्पविधिना काले तस्य विधीयत इति हेमाद्रौ संवर्त्ते नाशक्तं प्रतिसंकल्पश्राद्धविधानात् ॥ अथवा वृध्यनंतरं पिंडदाननिषेधं प्रकृत्य " वृद्धिमात्रे तथान्यत्र पिंडदाननिराक्रिया " इतिस्मृतिरत्नावलीधृतवचनेन वृद्ध्यनंतरभाविनि वृद्धावपि पिंडदानस्य प्रतिषिद्धत्वात्तादृशस्थले पिंडनिषेधान्यथानुपपत्याऽभियुक्तैः संकल्पश्राद्धानुष्ठानस्यैवौचित्येन स्वीकारात् ॥ अथवा॥ अनग्निको यदा विप्र उच्छिन्नाग्निरथापि वा ॥ तदा वृद्धिषु सर्वासु सांकल्पं श्राद्धमाचरेदिति हेमाद्रौ त्रिशन्मते ॥ अनग्निकोच्छिन्नाग्निकर्तृकासु सर्वासु वृद्धिषु संकल्पश्राद्धस्यैव विहितत्वात् ॥ अथवा ॥ पिंडनिर्वपणं कुर्यान्नवा कुर्याद्विचक्षणः॥ वृद्धिश्राद्धे महाबाहो कुलधर्ममवेक्ष्य हीति भविष्यवचने सपिंडसंकल्पश्राद्धयोःकुलाचारपरत्वेन विधानात्तदिह निरूप्यते ॥ तत्र हेमाद्रौ संवर्त्तः पात्रे भोज्यस्य चान्नस्य त्यागः संकल्प उच्यते ॥ तत्प्रयुक्तो विधिर्यस्तु यत्तेन व्यपदिश्यते ॥ तावन्मात्रेण संबंधश्राद्धं सांकल्पमुच्यत इति ॥ भविष्ये ॥ अग्नौकरणमर्घं चावाहनं चावनेजनम्॥ पिंडश्राद्धेत्र प्रकुर्वीत पिंडहीने निवर्तते ॥ पिंडनिर्वापरहितं यत्र श्राद्धं विधीयते ॥ स्वधावाचनलोपोस्ति विकिरस्तु न लुप्यते ॥ अक्षय्यदक्षिणास्वस्ति सौमनस्यं यथास्थितिरिति ॥ धर्मप्रदीपे ॥ आवाहनं तथार्घं वै अग्नौ करणमेवच॥ अक्षय्यापोस्यविकिरं पिंडहीने विवर्जयेदिति ॥ तथा ॥ न चाग्नौकरणं कुर्यान्नार्घदानं कथंचन ॥ न पिंडकल्पनाश्राद्धे विकिरान्नं नचोत्सृजेदिति स्मृत्यन्तरे ॥ त्यजेदावाहनं चार्घमग्नौ करणमेव च ॥ पिंडांश्च विकिराक्षय्ये श्राद्धे संकल्पसंज्ञके ॥ आपस्तंबसूत्रेपि ॥ संकल्पश्राद्धेऽर्घावाहनाग्नौकरणपिंडस्वधावाचनानि वर्जयेदिति ॥ पिंडहीनश्राद्धशब्दः संकल्पश्राद्धपर्यायः ॥ अर्घत्वाविशेषात् पादार्घोप्यत्र निषिद्ध एवेति केचित् ॥ केचिदावाहनसाहचर्यात् कचिदग्नौकरणसाहचर्याच्चहस्तार्घ एव निषिद्धः पादार्घस्तु भवत्येवेत्यपरे॥ उदाहृतवाक्येषु समंत्रस्यावाहनस्य निषेधो नत्वावाहनस्वरूपस्य तदभावे देवपितृसंबंधाभावे प्रसंगादिति हेमाद्रिः॥ अन्येतु वाचनिकत्वावाहनस्यैव निषेधं मन्यंते ॥ नत्वावाहने विनियुक्तमंत्रमात्रस्य ॥ शिष्टाचारोप्येवम् ॥ विकिराक्षय्योदकदानयोर्विहितप्रतिषिद्धत्वादिकल्पः ॥ स्मृतिरत्नावल्याम् ॥ आवाहनाग्नौकरणं विकिरं पात्रपूरणम् ॥ पिंडहीने न कर्तव्यमेतत् छात्रे चतुष्टयमिति॥ श्राद्धकाशिकायां त्विदं वचनमन्यथा पठित्वा वचनान्तरं श्राद्धांतरवि-

षयत्वेन व्यवस्थितमस्ति ॥ तथाहि ॥ पिंडहीनेपि कर्तव्यं विकिरं पात्रपूरणं । अग्नौकरणमर्घं चेत्येतच्छ्राद्धे चतुष्टयम् ॥ वर्जने पिंडहीनेपि सर्वं मर्घादिकं भवेत्॥ कुशान्स्थाप्य स्वधा कुर्यात्क्षिपेदग्नौ जलेपि चेति॥ यत्तु ॥ संकल्पं तु यदा कुर्यादिति वचनं तच्छ्राद्धान्तरविषयमिति ॥ अत्र स्मृतिरत्नावलीकारः ॥ केचित्पिंडहीनेपि कर्तव्यमिति पठंति तद्वचनांतरविरुद्धत्वादुपेक्षणीयम् ॥ तथाहि ॥ अर्घं दत्वा नमः कुर्यात्पिंडदानावनेजने ॥ आसुरं तद्भवेच्छ्राद्धं निराशैः पितृभिर्गतैः ॥ तथान्यत्रापि ॥ संकल्पं तु यदा कुर्यान्नकुर्यात्पात्रपूरणम्॥ नावाहनं नाग्नौकरणं पिंडांस्तत्र निवर्त्तयेदिति ॥ तस्मात्सत्सु पिंडेष्वावाहनादि चतुष्टयमनुष्ठेयं नान्यथेत्याहुः ॥ प्रयोगरत्नकारिकादयोप्येतन्मतावलंबनेन प्रयोगोपनिबंधनं कृतवन्तः॥ शिष्टा अप्येवमाचरन्तीति ॥ अग्नौकरणनिषेधादेव पात्रालंभस्यापि निषेध एव ॥ हुतशेषदानानंतरं हि तस्य विहितत्वात् ॥ अमृतेऽमृतं जुहोमीति मंत्रलिंगाद्धुतशेषस्यैव परामर्शाद्धुतशेषसंस्कारोयमिति तदभावे पात्रालंभाभाव इति निश्चीयत इति हलायुधभाष्यात् ॥ उष्णं स्विष्टमन्नं दद्यादित्येनन पात्रालंभोत्तरकालं परिवेषणविधाने हुतशेषव्यतिरिक्तभोजनार्थान्नसंस्काराभावाच्चेति दिक् ॥

## ॥ अथ संकल्पश्राद्धप्रयोगः ॥

यद्यपि नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति कात्यायनसूत्रम् ॥ नांदीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहोच्यतामितिछन्दोगसूत्रे ॥ षड्भ्यः पितृभ्यस्तदनुभक्त्या श्राद्धमुपक्रमेदिति छंदोगपरिशिष्टे कात्यायनेन च पार्वणद्वयात्मकमेवाभ्युदयिकं श्राद्धमुक्तं तथापि बहूनामाचारात्कात्यायनादिसूत्रविरुद्धेनापि पार्वणत्रयेण सांकल्पेन विधिनाऽभ्युदयिकश्राद्धप्रयोग उच्यते॥ तत्रादावग्निमता गृह्येग्नौ निर्णेजनांताः पंचमहायज्ञाः कर्तव्याः॥ निरग्निना तु प्रसवोत्थानपरिशिष्टपृष्ठोदिविविधानाभ्यां चोक्तेन विधिना कर्तव्याः ॥ अस्यासंभवेतु यज्ञपार्श्वपरिशिष्टोक्तेन स्मृत्यन्तरोक्तेनवा शाकलोक्तेन विधानेन कर्तव्याः ॥ ततो गणपतिपूजनाद्यायुष्यजपान्तं कर्म कर्तव्यम्॥ तद्यथा ॥ कृतनित्यक्रियस्य सपत्नीकस्य संस्कार्यस्य कृतकुशोपग्रहस्य स्वाचांतस्य कर्तुः स्वासन उपवेशनम् ॥ त्रीन्प्राणायामान्कृत्वा त्रिमात्रप्रणवोच्चारणम् ॥ ॐ लक्ष्मीनारायणाभ्यांनमः । ॐ भवानीशंकराभ्यांनमः । ॐ वाणीहिरण्यगर्भाभ्यांनमः ॐ शचीपुरंदराभ्यांनमः ॐ मातृपितृचरणेभ्योनमः ॐ कुलदेवताभ्योनमः । ॐ इष्टदेवताभ्योनमः । ॐ श्रीगुरुभ्योनमः । ॐ सर्वेभ्योब्राह्मणेभ्योनमः । ॐ श्रीगणेशायनमः । ॐ सुमुखश्चैक-

दंतश्चेत्यादिश्लोकान्पठित्वा । सकुशयवकुसुमजलं दक्षिणेन पाणिना गृहीत्वा । ॐ इह पृथिव्यामित्यादि एवंगुणविशिष्टे देशे काले चेत्यंतमुक्त्वा अमुकगोत्रोऽमुकशर्माहं मम सुतस्य श्वो वाद्यामुकसंस्कारं करिष्ये॥ तदंगत्वेन मंडपदेवताप्रतिष्ठा मातृपूजा वसोर्द्धाराऽयुष्यजपाभ्युदयिकश्राद्धं स्वस्तिवाचनानि करिष्ये । तत्रादावमुककर्मणोनिर्विघ्नफलसिद्धिबुद्धिकामो गणपतिपूजां करिष्ये॥ ॐ गणानांत्वा० गर्भधम् । सिद्धिबुद्धिसहितं सागं सायुधं सवाहनं सपरिवारं गणपतिमावाहयामि स्थापयामि ॥ ॐ गणानान्त्वा० गर्भधं । सिद्धिबुद्धिसहिताय सांगाय० वाहनाय सपरिवाराय सायुधाय गणपतयेनमः आवाहनं समर्पयामि । एवं मासनंसम० ॥ पाद्यं सम० ॥ अर्घ्यं सम०॥ आचमनीयं स०॥ स्नानं सम०॥ स्नानाचमनीयं सम०॥ वस्त्रं स०॥ वस्त्राचमनीयं सम०॥ यज्ञोपवीतं स०॥ यज्ञोपविताचमनीयं स० ॥ गंधं स० ॥ पुष्पाणि स० ॥ धूपंस० ॥ दीपंस० ॥ नैवेद्यंस० ॥ नैवेद्याचमनीयंस० ॥ तांबूलंस० ॥ नमस्कारान्स० ॥ प्रदक्षिणंस० ॥ नीराजनंस० ॥ पुष्पांजलीन्स० ॥ दक्षिणांस० ॥ गणानांत्वेतिमंत्रवाक्ययोः प्रत्युपचारमावृत्तिः ॥ अर्धपात्रे गंधपुष्पदूर्वाक्षतान्फलंच-प्रक्षिप्य पात्रं गृहीत्वा । गणानांत्वा० । ॐ रक्षरक्षगणाध्यक्ष० फलदोस्तु सदा मम ॥ सिद्धिबुद्धिसहिताय सांगाय सायुधाय सवाहनाय सपरिवाराय गणपतये नमः फलार्घं समर्पयामि ॥ ततःप्रार्थना ॥ विघ्नेश्वराय वरदाय० सर्वकार्येषु सर्वदेति संप्रार्थ्य ॥ मयाचरिते गणपतिपूजनविधो यन्न्यूनं यथातिरिक्तं तत्परिपूर्णमस्त्विति विप्रान्प्रतिप्रश्नः अस्तु परिपूर्णमिति प्रतिप्रश्नः॥ अनेन गणपतिपूजनेनामुककर्मणो निर्विघ्नफलसिद्धिरस्तु । इत्युक्तेऽस्तु निर्विघ्नफलसिद्धिरिति प्रतिवचनं ॥ ॥ इति गणपतिपूजा ॥

"अथ मंडपार्थं स्तंभरोपणम्"॥ तद्यथा॥ ॐ देवस्यत्वेत्यभ्रिमादत्ते॥ ॐ इदमहंरक्षसामित्यवटं परिलिखति॥ॐ मावोरिखत्खनितेति खनति॥ ॐ सिंचंति परिषिंचंतीति तस्मिन्नवटे अप आसिंचति॥ ॐ यवोसीति यवानावपति॥ दर्भसिद्धार्थकांस्तूष्णीमावपति॥ ॐ कांडात्कांडादिति दूर्वा॥ ॐ दधिक्राव्ण इति दधि॥ ॐ याःफलिनीरिति फलं॥ ॐ हिरण्यगर्भ इति हिरण्यम्॥ ॐ उच्छ्रयस्व वनस्पत इति मंत्रेण रक्तसूत्रबद्धमदनफलसमन्वितं स्तंभोत्थापनम् ॥ ॐ ऊर्ध्वऊषुण इत्यवटे रोपणम् । ॐ स्थिरोभवेति समंततो मृत्पूरणेन स्थिरीकरणं । तस्मिन्स्तंभे ॐ मनोजूतिरिति प्रतिष्ठा। मंडपदेवताः सुप्रतिष्ठिता भवंत्विति प्रतिष्ठा ॥ ॐ मंडपदेवताभ्यो नम इति तस्मिन्स्तंभे षोडशभिः पंचभिर्वोपचारैरभ्यर्चनम् ॥ मंडपदेवताप्रीत्यर्थं यथाशक्ति ब्राह्मणान्भोजयिष्ये इति संकल्पः॥ मयाचरिते मंडपदेवताप्रतिष्ठाविधौ यन्न्यूनं यथातिरिक्तं तत्परिपूर्णमस्त्विति प्रश्नः ॥ अस्त्विति प्रतिप्रश्नः॥ इति मंडपदेवता प्रतिष्ठा ॥

अथाक्षतपुंजेषुप्राग्संस्थमुदकसंस्थंवा मातृस्थापनम् ॥ तद्यथा ॥ ॐ भूर्भुवःस्वः गणपतिमावाहयामि॥ ॐ भूर्भुवःस्वः गौरिमावाहयामि स्थापयामि॥ एवं सर्वत्र॥ पद्मामा०॥शचीमा० ॥ मेधामा०॥ सावित्रीमा०॥ विजयामा०॥ जयामा० ॥ देवसेनामा० स्वधामा० ॥ स्वाहामा० ॥ धृतिमा० ॥ पुष्टिमा० तुष्टिमा० ॥ आत्मनःकुलदेवतामा० ॥ मातामहकुलदेवतामा० ॥ १६ ॥ मातृभाण्डसत्वे ॐ भूर्भुवःस्वः मातृभाण्डमावाहयामि स्थापयामीति ॥ ॐ मनोजूतिरिति प्रतिष्ठा ॥ गौर्याद्या कुलदेवतान्तामातरो गणपतिसहिताः सुप्रतिष्ठिता भवंत्विति प्रतिष्ठा ॥ मातृभांडसत्वे गणपतिमातृभांडसहिता इति प्रयोगः ॥ ॐ गौर्यादिभ्यः कुलदेवताभ्यो मातृभ्यो गणपतिसहिताभ्यो नम इत्यर्चनम् ॥ मातृभांडसत्वे गणपतिमातृभांडसहिताभ्यो नम इति प्रयोगे विशेषः॥ मयाचरिते गणाधिपमातृपूजाविधौ यन्न्यूनं यथातिरिक्तं तत्परिपूर्णमस्त्वित्युक्ते अस्त्विति प्रतिवचनम् ॥ इति मातृपूजा ॥

"अथ वसोर्द्धाराः" ॐ वसोः पवित्रमसि शतधारमित्यादिना शतधारेण सुप्वेति मंत्रेण घृतेन पंचसप्त वा वसोर्द्धाराः कर्तव्याः॥ ॐ कामधुक्ष इत्येतावता मंत्रेणोर्ध्वभागेनैकीकरणम्॥ कुंकुमादिना यथाचारं बिंदुकरणेनालंकरणम्॥ ॐ मनोजूतिरिति प्रतिष्ठा। वसोर्धारादेवताः सुप्रतिष्ठिता भवन्त्विति प्रतिष्ठा ॥ ॐ श्रीर्लक्ष्मीधृतिमेधास्वाहाप्रज्ञासरस्वतीभ्यो नम इति युगपदर्चनम्॥ अथवा ॥ वसोर्द्धारादेवताभ्यो नम इत्यर्चनम्॥ ॐ यदंगत्वेन भो देवाः पूजिता विधिमार्गतः॥ कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवमिति प्रार्थना ॥ मयाचरिते वसोर्द्धारादेवतापूजाविधौ यन्न्यूनं यथातिरिक्तं तत्परिपूर्णमस्त्विति प्रश्नः ॥ अस्तु परिपूर्णमिति प्रतिप्रश्नः॥ ॐ आयुष्यं वर्चस्यमितितिसृणामृचां जपः ॥ ॥ अथाभ्युदयिकम् ॥ ब्राह्मणवदासनेषु कौशचटुनिवेशनम् ॥ ततो निमंत्रणम् ॥ तद्यथा ॥ ॐ दैवेक्षणः क्रियताम् ॥ ॐ तथा प्राप्नुतां भवन्तौ ॥ प्राप्नवाव ॥ अमुकगोत्राणां नांदीमुखीनां मातृपितामहीप्रपितामहीनां अमुक्यमुकीदेवीनां कर्तव्यामुककर्मांगाभ्युदयिकश्राद्धे क्षणः क्रियताम् ॥ ॐ तथा ॥ प्राप्नुतां भवंतौ प्राप्नवाव ॥ अमुकगोत्राणां नांदीमुखानां पितृपितामहप्रपितामहानाममुकामुकशर्मणां कर्तव्यामुककर्मांगाभ्युदयिकश्राद्धे क्षणः क्रियतामित्यादि ॥ अमुकगोत्राणां नान्दीमुखानां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां सपत्नीकानां कर्तव्यामुककर्मांगाभ्युदयिकश्राद्धे क्षणः क्रियतामित्यादि ॥ ॐ सत्यवसुविश्वेदेवाः इदंवः पाद्यं पादप्रक्षालनं एषवो गंधः ॥ इमानि वः पुष्पाणि॥ ॐ सत्यवसू विश्वेदेवाः एषवोर्घः ॥ अमुकगोत्रे नांदीमुखी मातः अमुकीदेवी ॥ अमुकगोत्रे नांदीमुखी पितामही अमुकदेवी । अमुकगोत्रे नांदीमुखी

प्रपितामही अमुकीदेवी । इदं वः पाद्यं पादप्रक्षालनं । एषवो गंधः । इमानि वः पुष्पाणि ॥ अमुकगोत्रे नांदीमुखी मातः अमुकीदेवि । अमुकगोत्रे नांदीमुखी पितामहि अमुकी देवि । अमुकगोत्रे नांदीमुखी प्रपितामहि अमुकदेवि । एषवोऽर्घः॥ अमुकगोत्र नांदीमुखपितः अमुकशर्मन् । अमुकगोत्र नांदीमुख पितामह अमुकशर्मन् । अमुकगोत्र नांदीमुख प्रपितामहामुकशर्मन । इदं वः पाद्यं पादप्रक्षालनम् । एषवो गंधः । इमानि वः पुष्पाणि । अमुकगोत्र नांदीमुख पितः अमुकशर्मन् । अमुकगोत्र नांदीमुखपितामहामुकशर्मन । अमुकगोत्रनांदीमुखप्रपितामहामुकशर्मन् । एषवोऽर्घः॥ अमुकगोत्र मातामहामुकशर्मन् । अमुकगोत्र प्रमातामहामुकशर्मन् । अमुकगोत्रवृद्ध प्रमातामहामुकशर्मन् सपत्नीक इदं वः पाद्यं पादप्रक्षालनं। एषवो गंधः॥ इमानि पुष्पाणि । अमुकगोत्र नांदीमुख मातामहामुकशर्मन् । अमुकगोत्र प्रमातामहामुकशर्मन् । अमुकगोत्र नांदीमुख वृद्धप्रमातामहामुकशर्मन सपत्नीक एषवोऽर्घः॥ त्रीन्प्राणानायम्य सप्रणवव्याहृतिपूर्विकायाःसावित्र्यास्त्रिर्जपः ॥ ॐ देवताभ्यश्चेति त्रिर्बद्धांजलिना जपः॥ ॐ पुंडरीकाक्षाय नम इति पुंडरीकाक्षं स्मृत्वा । स्वदक्षिणभागे कर्मपात्रपूरणम् । तत्र दूर्वादधियवगंधपुष्पकुशप्रक्षेपः ॥ ॐ यद्देवा देवहेडनमिति त्र्यृचेन तदुदकाभिमंत्रणम् ॥ आभ्युदयिकश्राद्धोपहारा शुचयो भवंत्विति सकुशैः कर्मपात्रजलैरुपकरणप्रोक्षणम् । कुशकुसुमयवजलान्यादाय देशकालौ संकीर्त्य। अमुकगोत्राः नांदीमुख्यः मातृपितामही प्रपितामह्यः अमुक्यमुकि देव्यः अमुकगोत्राः नांदीमुखः पितृपितामहप्रपितामहाः अमुकामुकशर्माणः अमुकगोत्राः मातामहप्रमातामह वृद्धप्रमातामहाः अमुकामुकशर्माणः सपत्नीकाः एतानुद्दिश्य करिष्यमाणामुककर्मांगतया सत्यवसूविश्वदेवपूर्वकं सांकल्पेन विधिनाऽभ्युदयिकं श्राद्धं युष्मदनुज्ञया करिष्य इति प्रश्नः ॥ ॐ कुरुष्वेति प्रतिप्रश्नः॥ ॐ सत्यवसू विश्वेदेवाः इदंवः आसनम् ॥ अमुकगोत्रे नांदीमुखी मातः अमुकदेवि । अमुकगोत्रे नांदीमुखि पितामहि अमुकदेवि । अमुकगोत्रे नांदिमुखि प्रपितामहि अमुकदेवि । इदंवः आसनम् ॥ अमुकगोत्र नांदीमुखपितः अमुकशर्मन् । अमुकगोत्र नांदीमुख पितामह अमुकशर्मन् । अमुकगोत्र नांदीमुख प्रपितामह अमुकशर्मन । इदंवः आसनम् ॥ एवं मातामहानां सपत्नीकानामासनदानं ॥ ततो गंधादिदानम् ॥ ॐ सत्यवसूविश्वेदेवाः यथादत्तं गंधाद्यर्चनं वः स्वाहा नमः ॥ अमुकगोत्रे नांदिमुखिमातः अमुकदेवि । अमुकगोत्रे नांदीमुखि पितामहि अमुकदेवि ॥ अमुकगोत्रे नांदीमुखि प्रपितामहि अमुकदेवि यथादत्तं गंधाद्यर्चनं यथाविभागं वः स्वाहा नमः अमुकगोत्र नांदीमुखपितः अमुकशर्मन् । अमुकगोत्र नांदीमुखपितामहामुकशर्मन् । अमुकगोत्र नांदीमुख प्रपितामहा-

मुकशर्मन् । यथादत्तं गंधाद्यर्चनं वः स्वाहा नमः ॥ एवं मातामहानां सपत्नीकानाम् ॥ इदं वो ज्योतिः सुज्योतिरित्युक्त्वा । आभ्युदयिकश्राद्धांगभूतदैवपित्र्यब्राह्मणार्चनविधौ यन्न्यूनं यथातिरिक्तं तत्सर्वं परिपूर्णमस्त्विति प्रश्नः ॥ अस्तु परिपूर्णमिति-प्रतिप्रश्नः ॥ द्विराचमनं ॥ अथान्नसंकल्पः ॥ ॐ सत्यवसूत्रिश्वेदेवाः युग्मब्राह्मण-तृप्तिपर्यन्तं दास्यमानं सोपस्करमन्नममृतरूपेण वः स्वाहा नमः अमुकगोत्रे नांदिमुखिमातः अमुकदेवि । अमुकगोत्रे नांदिमुखि पितामहि अमुकिदेवि । अमुकगोत्रे नांदिमुखि प्रपितामहि अमुकदेवि । युग्मब्राह्मणतृप्तिपर्यन्तं दास्यमानं सोपस्कर-मन्नममृतरूपेण यथाविभागं वः स्वाहा नमः ॥ अमुकगोत्र नांदीमुखपितः अमुकशर्मन् । अमुकगोत्र नांदीमुख पितामहामुकशर्मन् । अमुकगोत्र नांदीमुख प्रपितामहामुकशर्मन्। युग्मब्राह्मणतृप्तिपर्यन्तं दास्यमानं सोपस्करमन्नममृतरूपेण यथाविभागं वः स्वाहा नमः ॥ एवं मातामहानां सपत्नीकानाम् ॥ ॐ नांदीमुखाः पितरः प्रीयन्तामिति ब्रूहीति मंत्रेण मात्रादिवर्गसंबंधि सर्वविप्रहस्तेष्वेकतंत्रेण क्षीरयवजलानां दानम् ॥ इदं अक्षय्योदकदानं वैकल्पिकम् ॥ ॐ विश्वेदेवाः प्रीयन्तामिति ब्रूतेति प्रश्नः ॥ ॐ विश्वेदेवाः प्रीयंतामिति प्रतिप्रश्नः ॥ कृतस्य सांकल्पेन विधिनाऽभ्युदयिकश्राद्धस्य विधौ यन्न्यूनं यथातिरिक्तं तद्विष्णोः प्रसादाद्ब्राह्मणवचनाच्चत्परिपूर्णमस्त्विति प्रश्नः ॥ अस्त्विति प्रतिप्रश्नः ॥ ॐ वाजेव्वाजेवतेत्यादिना देवयानैरित्यंतेन मंत्रेण पितृपूर्वं विसर्जनम् ॥ आचमनम् ॥ एवमाभ्युदयिकश्राद्धं विधाय पुत्रविवाहे पूजितमातृसंन्निधौ मांगल्यतिलककरणमित्युक्तम् ॥ कुंकुमादिना वरस्य मांगल्यतिलकं कृत्वा कुलदेवता वृद्धादिमान्यजनप्रणतितेन कारयित्वा वरदक्षिण-हस्ते मदनफलसमन्वितरक्तसूत्रात्मकं कंकणं ॐ यदाबध्नन्निति मंत्रेण बध्नीयात् ॥ कन्याविवाहे तस्या दक्षिणहस्त एव वलयपरिधानानंतरं कंकणं बध्नीयादित्यविच्छिन्नः परंपरयातः शिष्टाचारः ॥

## ॥ अथ हविर्निर्णयः ॥

प्रदेयस्यान्नादेरपरोक्षत्वे इदमन्नमिति प्रयोगः ॥ परोक्षत्वे दास्यमानमिति ॥ अन्नासंभवे आममिति ॥ तच्चतुर्गुणं त्रिगुणं द्विगुणं समं वा ॥ आमासंभवे हिरण्य-मिति वा ॥ हिरण्यासंभवे भोजनपर्याप्तान्ननिष्क्रयद्रव्यमिति वा ॥ प्रदेयस्यान्नस्य परोक्षत्वे आमस्य हिरण्यस्य भोजनपर्याप्तान्ननिष्क्रयस्यच प्रदेयत्वे पात्रालंभांऽगुष्ठावगाहनापोशानदानयथासुखं जुषध्वमिति प्रश्नाऽश्नत्सुजपपुनरपोशानदानानाम-

भावः ॥ इतिहविर्निर्णयः॥ विप्रालाभे कुशवटवः ॥ तदुक्तम् ॥ अभावे ब्राह्मणस्यैव कौशः कार्यो वटुः प्रियेति॥ अस्मिन् पक्षे निमंत्रणादयो धर्माः सर्वेपि कुशवटावेव ब्राह्मणशब्दव्यवहारात्कार्याः ॥ यथा कुंडपाय्यग्निहोत्रेऽग्निहोत्रधर्माः तथा च समुद्रकरधृतभविष्यद्वचनम् ॥ ब्राह्मणानामसंपत्तौ कृत्वा दर्भमयान्द्विजानिति ॥ गौडनिबंधे तु॥ तदभावे कुशमयं स्थापयित्वा निमंत्रयेत् इति कुशवटोर्वाचनिकं निमंत्रणमुक्तम्॥ विप्राभावे त्रिः सकृद्वा गायत्री मधुमती मधुमंत्रस्य जपाभाव इति ढोढूमिश्रपद्धतौ विप्रेभ्यो नियमश्रावणम् ॥ स्वागतप्रश्नः ॥ श्राद्धदेशे विप्रोपवेशनम् ॥ पाकप्रोक्षणम् ॥ आवाहनम् ॥ अर्घदानम् ॥ न्युब्जपात्रनिधानम् ॥ अग्नौकरणम् ॥ हुतशेषदानम् ॥ पात्रालंभः॥ अंगुष्ठावगाहनम् ॥ यवविकिरणम् ॥ आपोशानार्थोदकदानम् ॥ यथासुखं जुषध्वमिति प्रश्नः ॥ अश्नत्सुजपः ॥ विकिरदानं ॥ उपगृहीतकुशत्यागान्यकुशोपग्रहौ ॥ आचमनं ॥ सकृत्सकृदपोदानं ॥ गायत्री मधुमती मधुमंत्रजपः ॥ तृप्तप्रश्नः ॥ शेषान्नाभ्यनुज्ञाप्रार्थनम् ॥ लेखाकरणाद्युर्जमित्यपोनिषेकांतं पिंडदानम् ॥ विप्रेषूदकादिदानम् ॥ आशिषां प्रतिग्रहणम् ॥ स्वधावाचनीयकुशास्तरणस्वधावाचनप्रश्न स्वधावाचानोर्जमित्यपो निषेकाः॥ उत्तानपात्रकरणम्॥ दक्षिणादानं ॥ विप्रानुगमनमित्येतानि संकल्पश्राद्धे विप्रान्नयोः परोक्षत्वेन कर्तव्यानि ॥ अपरोक्षत्वे तु विप्रेभ्यो नियमश्रावणं स्वागतप्रश्न श्राद्धदेशे विप्रोपवेशनपाकप्रोक्षणापोशानार्थोदकदानं यथासुखं जुषध्वमिति प्रश्नाश्नत्सुजपवैकल्पिकविकिरप्रदानपक्षे उपगृहीतकुशत्यागान्यकुशोपग्रहं द्विराचमनं सकृत्सकृदपोदानं त्रिः सकृद्वा गायत्रीजपमधुमंत्रजपतृप्तप्रश्नशेषान्नाभ्यनुज्ञाप्रार्थना विप्रेषूदकादिदानाशिषां प्रतिग्रहणं दक्षिणादानविप्रानुगमनानि संकल्पश्राद्धेपि कर्तव्यानि॥इतिश्रीमद्द्विवेदी उद्धवात्मजद्विवेदी अनंतदेवकृते रुद्रकल्पद्रुमे सर्वकर्मसाधारणांगपरिच्छेदे सांकल्पेनविधिना आभ्युदयिकश्राद्धप्रयोगः॥

## ॥ अथाश्वलायनानामाभ्युदयिकश्राद्धदेवतानिर्णयः ॥

अथाश्वलायनगृह्यपरिशिष्टाद्यनुसारेण स्मृतिकौस्तुभकृतनिर्णीताभ्युदयिकश्राद्धदेवतानिर्णयः ॥ तत्र तावत्सुतसंस्कारांगभूतवृद्धिश्राद्धेऽजीवत्पितृमातृमातामहः पितास्वपित्राद्युद्देश्यकं पार्वणत्रयं कुर्यात् । मातर्येव जीवंत्यां तत्पार्वणलोपः । मातामह एव जीवति तत्पार्वणलोपः । तदा पार्वणद्वयेनैवाभ्युदयिकश्राद्धसिद्धिः । मातृमातामहजीवने पितृपार्वणेनैव तत्सिद्धिः । अजीवत्पितृप्रपितामहो जीवत्पितामहः पितापितृपितामहवत्पितृनुद्दिश्य पितृपार्वणं कुर्यात् । नांदीमुखपितः नांदीमुखपितुः पितामह नांदीमुखपितुः प्रपितामह इदंवः पाद्यमिति प्रयोगः एवं पितामह प्रपितामहयोर्जीवने पितरं प्रपितामहस्य पितामहप्रपितामहौ चोद्दिश्य तत्पार्वणं कुर्यात् । पि-

तामहमात्रजीवने पितृपितामहतत्पितामहानुद्दिश्य पितृपार्वणं कुर्यात् । नांदीमुखपितः नान्दीमुखपितामह नांदीमुखपितुः प्रपितामह इदंवः इति प्रयोगः एवं नांदीमुखपितः नांदीमुखपितामहस्य पितामह नांदीमुखपितामहस्य प्रपितामह इदंव इति । अजीवन्मातृकस्य पितामह्या एव जीवने नांदीमुखीमातः नांदीमुखीपितुः पितामही नांदीमुखीपितुः प्रपितामही इदंव इति मातृपार्वणे प्रयोगः ॥ प्रपितामह्या एव जीवने तु नांदीमुखीमातः नांदीमुखीपितामही नांदीमुखीपितुः प्रपितामही इदंव इति॥ पितामही प्रपितामह्योर्जीवने तु नांदीमुखीमातः नांदीमुखी पितामहस्य पितामही नांदीमुखी पितामहस्य प्रपितामही इदंव इति ॥ इदंच पितामही प्रपितामही सपत्न्योर्मृतयोर्देवतात्वसंभवे ताभ्यां सहैव पार्वणं कार्यम् ॥ एवं मातामहपार्वणे मुख्यमातामह्यादिषु जीवतीषु तत्सपत्नीभिः सपत्नीकत्वगुणोपपत्तिर्नतु सपत्नमात्रापार्वणनिर्वाहः ॥ परिशिष्टविरोधात् ॥ एवमजीवन्मातामहस्य प्रमातामहजीवने नांदीमुखमातामह नांदीमुखमातामहस्य पितामह नांदीमुखमातामहस्य प्रपितामह इदं व इति प्रयोगः वृद्धप्रमातामहजीवने तु नांदीमुखमातामह नांदीमुखप्रमातामह नांदीमुखमातामहस्य प्रपितामह इदं व इति॥ तयोरुभयोर्जीवने तु नांदीमुखमातामह नांदीमुखमातामहस्य पितामह नांदीमुखमातामहस्य प्रपितामह इदं व इति। अथ जीवत्पितृकोऽजीवन्मातृमातामहश्च पितामातृमातामहपार्वणद्वयमेव सुतसंस्कारारंभे कुर्यात् । केचित्तु सुतसंस्कारांगवृद्धिश्राद्धेपि जीवत्पितृको मृतमातृमातामहपिता एभ्य एव पिता दद्यादिति वाक्यबलेन पितुः पार्वणं बह्वृचपरिशिष्टबलेन च स्वमात्रादिपार्वणं समुच्चयेन कुर्यादित्याहुः । तन्न । तस्माज्जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां जीवत्यां मातामहस्यैव कुर्यादिति बह्वृचपरिशिष्टविरोधात् ॥ मातर्यपि जीवत्यां मातामहपार्वणमेव कुर्यात् । मातामह एव जीवति मातृपार्वणमेव देवरहितं कुर्यात् ॥ मातृश्राद्धं तु युग्मैः स्यात् अदैवं प्राङ्मुखैः पृथगिति श्राद्धहेमाद्युदाहृतवचनेन पूर्वाह्णादि कालभेदेन पार्वणत्रयानुष्ठानपक्षे पार्वणांतरासाहित्येन क्रियमाणे मातृश्राद्ध इत्रोक्तविधमातृश्राद्धेऽपि तादृशादैवत्वबोधनात् ॥ त्रिष्वपि जीवत्सु पितुर्मात्रादिनुद्दिश्य पार्वणत्रयं कुर्यात् ॥ बाधकपरिशिष्टाप्रवृत्तौ विष्णुस्मृतेर्निःशंकं प्रवृत्तेः ॥ एवं स्वस्य द्वितीयादि विवाहांगत्वेनाभ्युदयिकं कुर्वन् जीवत्पितृकः स्वमात्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् ॥ मातरि जीवति तत्पार्वणलोपः ॥ मातामहे जीवति तत्पार्वणलोपः ॥ जीवत्पितृकस्तु मृतमातृमातामहोपि स्वपितुर्मात्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् । नांदीमुखि पितुर्मातः नांदीमुखि पितुः पितामहि नांदीमुखि पितुः प्रपितामहि इति मातृपार्वणे प्रयोगः ॥ एवं पितृमातामहपार्वणे प्रयोगः ॥

एवंपितृमातामहपार्वणयोरपि प्रयोगो बोध्यः।। जीवत्पितृपितामहस्तु पितामहस्य मात्रादीन् पित्रादीन् मातामहादींश्चोद्दिश्याभ्युदयिकं कुर्यात्तदोक्तवाक्येषु पितुरित्यस्यस्थाने पितामहस्य निर्देशः । त्रयाणां जीवने तु पितृपार्वणलोपः । सुतसंस्कार इव स्वीयमात्राद्युद्देश्यकपार्वणद्वयेनैवाभ्युदयिकश्राद्धसिद्धिः ॥ नित्यवन्नांदीमुख श्राद्धविधिनैव लोपशास्त्रसहकृतेन तत्प्रापणादिति स्मृतिकौस्तुभे ॥ एवं प्रथमविवाहेपि कर्त्रंतराभावे पारिजातकोक्तरीत्या वर एवाभ्युदयिकं श्राद्धं कुर्वनजीवत्पितृकः स्वपित्रादीन् उद्दिश्य जीवत्पितृकादिस्तु पितुः पितामहादेर्वा पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् । तत्राजीवत्पितृकस्य न स्वस्येति संबंधकीर्तनम् ॥ ससंबंधिकत्वमहिम्नैव पित्रादिषु विशेषसिध्धेः ॥ अदृष्टार्थवत्कीर्तनस्य नांदीश्राध्धे निषेधात् ॥ अत एव परकीयपित्राद्युद्देश्यकवृद्धिश्राद्धविशेषलाभार्थस्य पितुरित्यादेः संबंधकीर्तनस्य न निषेधः ॥ यदा तु पितृव्यमातुलादिः कन्याविवाहं कुमारस्योपनयनमुपनीतस्य प्रथमविवाहं वा कुर्यात्तदा संस्कार्यस्याजीवत्पितृकत्वे तत्पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् । सोदरज्येष्ठभ्रातुः प्रयोगे न विशेषः ॥ तदीयपित्रादीनां संस्कार्यपित्रादिभिरभेदात् । सापत्नज्येष्ठस्तु मातृपार्वणे नांदीमुखी संस्कार्यस्य मातः पितामही प्रपितामहीति प्रयोगं कुर्यात् ॥ एवं संस्कार्यस्य मातामहप्रमातामहवृद्धप्रमातामहाश्च सपत्नीका ज्ञेयाः ॥ पितृव्यादयस्तु सर्वपार्वणेषु संस्कार्यस्येति सविशेषणप्रयोगं कुर्यात् ॥ संस्कार्यस्य जीवत्पितृकत्वे संस्कार्यपितुः पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात्॥ तस्य संस्कार्यस्य पितुर्जीवत्पितृकत्वे तदीयमात्रादीन्मातामहादींश्चोद्दिश्य पार्वणत्रयं कुर्यात् ॥ मात्रादिजीवने निमित्तो विशेषः पूर्ववद्बोध्यः ॥ मुख्यस्य यथा प्राप्तकार्ये मुख्यकर्तृणां प्रवृत्तौचित्यात् ॥ एवमात्मीकृत्यसवर्णेन परकीयान्तु कन्यकाम् । धर्मेण विधिना दातुः समगोत्रेपियुज्यत इतिस्कांदवचनात् ॥ अनाथां कन्यकां दत्वा सदृशे वाधिके वरे । द्विगुणं फलमाप्नोति कन्यादाने यदीरितमिति वचनाद्वा केनापि हेतुना कन्यां दातुमशक्नुवता दानाधिकारिणात्वं कन्यादानं कुर्विति प्रार्थनाद्वा यः परकीयां कन्यां दातुमिच्छति सोपि संस्कार्यकन्यायाः पित्रादीनुद्दिश्य तस्याः जीवत्पितृकत्वे तदीयमात्राद्युद्देश्यकपार्वणानुष्ठानं यथासंभवं कुर्यात् ॥ दत्तककन्यायास्तु विवाहं कुर्वन् प्रतिगृहीता स्वपित्रादीनुद्दिश्यैव पितृवन्नांदीश्राद्धं कुर्यात् ॥ दत्तककन्याया असंभवशंका च निराकृता दत्तकनिर्णये स्मृतिकौस्तुभे ॥ दत्तकपुत्रस्तु यदि लब्धबीजिरिक्थस्तदोभौ पितरौ पितामहौ प्रपितामहौ चोद्दिश्य कुर्यात् । एवं मातृपार्वणे मातामहपार्वणे च बोध्यम् ॥ यदि तु बीजिरिक्थग्रहणेऽधिकार्यंतरसंभवात् । गोत्ररिक्थे जनपितुर्न भजेद्दत्रिमः सुत इति

शास्त्रादलब्धतद्रिक्थस्तदा प्रतिगृहीतकुलसंबद्धपित्राद्युद्देश्यकमेव कुर्यात् ॥ पिंडदो रिक्थहारी च पूर्वाभावे परः पर इति पिंडदानरिक्थग्रहणसाहचर्यस्यौत्सर्गिकत्वात्॥ एवं चानेकसंस्कार्यविषयानेकसंस्काराणां सहानुष्ठानं यत्र न निषिद्धं तदंगभूताभ्युदयिकश्राद्धदेवतानामभेदश्च ॥ तत्र गणशः क्रियमाणानामेकस्यान्मातृपूजनम् ॥ वृद्धिश्राद्धं च तंत्रं स्याद्धोमस्तु स्यात्पृथक् पृथक् । इति स्मृत्यर्थसारवचनानुष्ठानं बोध्यम् ॥ ॥इति श्रीमद्द्विवेद्यद्धवात्मजानंतदेवविरचिते रुद्रकल्पद्रुमे सर्वसाधारणांगपरिच्छेदे आभ्युदयिकश्राद्धे देवतानिर्णयः ॥

## ॥ अथ स्वस्तिवाचनप्रयोगः ॥

तत्र तन्निमित्तानि विधानरत्नमालायाम् ॥ पुण्येहनि तु संप्राप्ते विवाहे चौलके तथा ॥ व्रतबंधे च यज्ञादौ तथा च यज्ञकर्मणि ॥ १ ॥ गृहारंभे धनप्राप्तौ तीर्थाभिगमने तथा ॥ नवग्रहमखे शांतावद्भुतेषु तथैव च ॥२॥ गृहप्रवेशने चैव ग्रामस्याभिनिवेशने ॥ गजबंधे तुरंगाणां दासादीनां च संग्रहे ॥ ३ ॥ अन्यस्मिन् चैव सर्वस्मिन् शुभे कर्मणि चोदिते ॥ वाचनीया द्विजाः सर्वे वेदशास्त्रपरायणाः॥ ४ ॥ इति ॥ व्यासोपि ॥ संपूज्य गंधमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् ॥ धर्मकर्मणि मांगल्ये संग्रामाद्भूतदर्शने ॥ इति ॥ गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि॥ वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ॥ इति निर्णयसिंधौ त्रिकांडमंडनोक्तेः । एवं मातृपूजापूर्वकं आभ्युदयिकं श्राद्धं कृत्वा प्रधानकर्मादौ स्वस्तिवाचनं कार्यम्॥ अत एव हेमाद्रौ दानखंडे वृद्धिश्राद्धमुपन्यस्य पुण्याहवाचनमुपन्यस्तम् ॥ धान्यपर्वतदाने तु दानदिवसात्पूर्वेद्युःपूर्वाह्णे कृतस्नानादिनित्यक्रियो यजमानः अमुकपर्वतदानमहं श्वः करिष्य इति कृतसंकल्पो वृद्धिश्राद्धमाभ्युदयिकं विधाय पूर्ववत् पुण्याहवाचनं कुर्यादिति स्पष्टमेवोक्तम्॥ मदनरत्ने दानखंडेप्येवम् ॥ तत्र तावत् कलशस्थापनप्रकारमाह रुद्रपद्धतिकृत्परशुरामः ॥ कलशस्थापनं कार्यं कमलेष्टदलेमले॥ उदकुंभं समानीय रुद्रकुंभवदर्चितम् ॥ भूमिं भूरसि संप्रार्थ्याजिघ्रेचेत्यंबुजे न्यसेत् ॥ महीद्यौर्वारिणापूर्य याः ओषधीः क्षिपौषधीः हिरण्यगर्भऋक् द्रव्यमश्वत्थेवेतिपल्लवान् ॥ पूर्णादर्वीत्यृचा पूर्णं धान्यं धान्यमसीति च । याः फलिनीः फलं तस्मिन्नुपरिष्टान्निधापयेत् ॥ सुजातो ज्योतिषा वासो युग्मेन परिवेष्टयेत् ॥ पंच रत्नानि मध्येऽस्येत्परिवाजयता ऋचा ॥ एवं कलशमापूर्येति ॥ हारीतोपि ॥ गोमयेनोपलिप्योर्व्यां रंगवल्लियाचर्येत् ॥ प्रस्थधान्योपरि स्थाप्यं पूर्णं हि कलशद्वयम्॥ दक्षिणे चोत्तरे चैव उत्तरे तु निधापयेत् ॥ पात्रमक्षतपूर्णं तु फलपुष्पसमन्वितमिति ॥ अत्र धान्यशब्देन ( वसिष्ठः । सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ॥ आमं वितुषमि-

त्युक्तं खिन्नमन्नमुदाहृतम् ॥ सतुषद्रव्यमभिधीयते ॥ तेन तस्यैव विधानम् ॥ क-श्चित्तु धान्यमसि धिनुहि देवानिति तंडुलेष्वपि धान्यशब्दप्रयोगात्तेषां विधानं इत्याह॥ तदयुक्तम् ॥ लक्षणायां मानाभावात् । धान्यमसि धिनुहि देवानित्यत्र त्वस्ति ल-क्षणायां मानमित्यूहविचारावसरे दर्शितं नवमे । उत्तरे तु निधापयेदिति वचनादुत्तर-कलश एव पूर्णपात्रं विधाय तत्र वरुणपूजां कुर्यादिति ॥ परशुरामेण तु एकस्यैव कलशस्य स्थापनमुक्तम् ॥ एतदनुसारी शिष्टाचारोपि । कलशद्वयस्थापनं तु दाक्षि-णात्या एवाचरंति । कलशलक्षणं तु दानहेमाद्रौ विष्णुधर्मे । हैमं वा राजतं वापि ताम्रं मृन्मयजं तु वा ॥ अकालमव्रणं चैव सर्वलक्षणसंयुतम् ॥ पंचाशांगुलवैपुल्य-मुत्सेधे षोडशांगुलम् ॥ द्वादशांगुलकं मूलं मुखमष्टांगुलंस्मृतमिति॥ पंच च आशाश्च पंचदश । आशा दिशा दश ॥ मध्यदेशे तिर्यङ्मानेन पंचदशांगुल इत्यर्थः। अथवा। बाह्यप्रदेशे वलयाकृतिना सूत्रेण मीयमानो मध्यस्थाने पंचदशांगुल इत्यर्थः ॥ कलां कलां गृहीत्वा वै देवानां विश्वकर्मणा॥ निर्मितोयं सुरैर्यस्मात्कलशस्तेन उच्यत इति॥ हारितः॥ सूत्रेण वेष्टितं कुंभमपां पूर्णं सुभूषितम् ॥ मृत्ताम्रादिमयं भूमौ रत्नगर्भं सम-र्चितम् ॥ सिततंडुलपूर्णेन पात्रेण पिहिताननमिति । तेनात्र सिततंडुलग्रहणात्तैरेव पात्रपूरणम् ॥ अन्यत्र शान्त्यादौ तु " सुवर्णं राजतं वापि ताम्रं मृन्मयमेव वा ॥ व्रीह्यादिपूर्णं त्वादध्यात्कुंभोपरि पिधानकमिति " संग्रहवचनाद्व्रीह्यादिभिः परिपूर्ण-मिति निष्कर्षः। तथा । तीर्थोदकेन चापूर्य कलशं तु विचक्षणः॥ गजाश्वरथवाल्मीक-संगमात्हृदगोकुलात् ॥ मृदमानीय विप्रेन्द्र सर्वौषधिसमन्वितमिति ॥ कलशे क्षिपेदि-ति शेषः॥ यद्वा ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात् संगमात् हृदात् ॥ राजद्वाराच्च गोष्ठाच्च मृदमानीय निःक्षिपेदिति ॥ अपरार्के वृद्धवशिष्ठः ॥ वाला च शंखपुष्पीच कुष्ठं चैव वचा तथा ॥ नागकेसरपूर्णे च सर्वौषधिगणो भृगो ॥ इति ॥ छंदोगपरि-शिष्टे तु ॥ कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचंदने ॥ वचा चंपकमुस्ते च सर्वौषध्यो दश स्मृता इति ॥ महार्णवे तु ॥ मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ॥ शठी चंपकमुस्तेच सर्वौषधिगणः स्मृत इति ॥ तालपर्णीतु दैत्यागं कुष्टी मुरा इत्यमरः ॥ व्याधिः कुष्ठं पारिभाव्यं व्याप्यं पालकमुत्पलमित्यमरः ॥ कालानुशार्यवृद्धाश्मपुष्प-शीतशिवानि तु ॥ शैलेयमित्यमरः ॥ शटी गंधमूली षड्ग्रंथिके इत्यपि ॥ कर्चूरो-पिपलाश इत्यमरः ॥ कुरविंदो मेघनामा मुस्ता मस्तकमस्त्रियामित्यमरः ॥ तथा ॥ पंचभंगसमायुक्तं फलवस्त्रयुगान्वितम् ॥ पंचरत्नसमायुक्तं पूर्णपात्रयुतं तथेति ॥ भंगाः पल्लवाः ॥ तेच ॥ अश्वत्थोदुंबरो जंबू चूतन्यग्रोधपल्लवाः ॥ पंचभंगा इति प्रोक्ताः सर्वकर्मसु शोभना इति ॥ पंचरत्नमुक्तं निर्णयसिंधौ व्रतरत्ने कालिकापुराणे ॥ क-

नकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पंचरत्नानि सर्वत्र कवयो विदुरिति ॥ कुलिशं हीरकं ॥ मदनरत्ने सौरपुराणे विष्णुधर्मोत्तरेच॥ सुवर्णं रजतं मुक्ता राजावर्त्तः प्रवालकम् ॥ पंचरत्नमिति ख्यातं नारदेन महर्षिणा इत्युक्तम् ॥ गोडा अप्येवम् ॥ निर्णयसिंधौ व्रतरत्ने । अभावे पंचरत्नानां हेम सर्वत्र योजयेदिति । कलशे निक्षिप्य पंचत्वचस्तत्रैव । न्यग्रोधः पिप्पलः प्लक्षो जंबूचूततरूद्भवाः॥ रुवति भीम इत्यृचा घटे पंचत्वचः क्षिपेदिति ॥ सर्वौषधीनां सप्तमृदां च नात्र निक्षेपः ॥ तेनात्र गंधपुष्पपंचपल्लवपंचरत्नादि निधाय तदुपरि तंडुलपूर्णे पूर्णपात्रे वरुणावाहनं कुर्यादिति शिष्टा इत्युक्तम्॥ श्रीरामकल्पद्रुमे॥ तेन वरुणपूजनस्य दक्षिणात्यैरेवानुष्ठीयमानत्वाद्येषां वरुणपूजने नास्ति शिष्टाचारस्तैर्वरुणपूजनं नैव कार्यम् ॥ अत एव परशुरामकारिकायां नोक्तम् ॥ ततः कलशस्य मुखे विष्णुरित्यादिमंत्रैः कलशे देवानावाह्य संपूज्य देवदानवसंवादे इत्यादिभिर्मंत्रैः प्रार्थनां कुर्यात् ॥ तदुक्तं प्रयोगपारिजाते ॥ एवमेताः समावाह्य कलशे देवतास्ततः ॥ एतन्मंत्रस्थितान्देवान्संपूज्य प्रार्थयेत् क्रमात् इति ॥ अथ अवनिकृतजानुमंडल इत्यादिना हेमाद्रिमदनरत्नदानखंडादावुक्तं स्वस्तिवाचनं कुर्यात् ॥ पुण्याहवाचने विप्रा युग्मा वेदविदः शुभाः ॥ यज्ञोपवीतिनः शस्ता प्राङ्मुखाः स्युः पवित्रिणः ॥ गंधपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः इति । शस्ता इत्यनेन स्मृत्युक्तवर्ज्यविप्रातिरिक्ताः ॥ वर्ज्यास्तु विधानरत्नमालायाम् ॥ न तत्र कुनखी काणो हीनांगो विकलस्तथा ॥ क्षयरोगी च कुष्ठी च शावदंतोऽभिशापकः ॥ वंध्यश्च विधुरो वापि क्रूरस्तु खलसेवकः ॥ नकवृत्तिश्च दंभी च हेतुको ज्ञानदुर्बलः ॥ सहोपपत्तिरुन्मत्तो व्यसनी सोमविक्रयी ॥ कन्याविक्रयकृद्वाजीविक्रयी पिशुनोऽनृतः ॥ लोकदुष्टो पराधीनो राजद्रोहपरायणः ॥ एते चान्ये च विप्राः स्युर्न वाच्याः स्वस्तिवाचने तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः ॥ तिष्ठेद्वार्चायिता तेषां दक्षिणस्यामुदङ्मुख इति शौनकवचनाद्ब्राह्मणाःप्राङ्मुखाः ॥ कर्तातूदङ्मुखः ॥ आश्वलायनस्तु । प्राङ्मुखान्गंधाद्यैः संपूज्य स्वयं प्राङ्मुखस्तानुदङ्मुखान् स्वस्ति वाचयेदित्याह । ततो दीर्घा नागा नद्यो गिरय इत्यादि वदेत् । ततः शांतिपुष्टिवृद्धिऋध्याद्यान् पंचदश शद्बानस्तुशद्बान्तानुच्येरन् ॥ पंचदशैव वदेयुरिति सांप्रदायिकाः ॥ यत् पापं तत्प्रतिहतमस्त्वित्याद्यपि वदेयुरिति हेमाद्रिमदनरत्नादयः ॥ कारिकायां पुण्याहं स्वस्तिमृद्धिं च भवत्पूर्वं ब्रुवंत्विति ॥ प्रणवाद्यं त्रिराचष्टे भवदादि विना परे इति ॥ तथा ॥ पुण्याहादेस्त्रिरभ्यासे मंद्रमध्योच्चनिःस्वनम् ॥ आश्रयेरन्निमे सर्वे यथागमपरंपरेति ॥ आगमशब्देनागमज्ञा आ-

चार्या उच्यन्ते ॥ तथा वक्तारश्च चतुर्थ्यंतं तत्तन्नामोक्तिपूर्वकम् ॥ स्वस्तीति च प्रतिब्रूयुरथ सर्वेपि ते द्विजाः । तेन नमः स्वस्ति स्वाहित्यादिना स्वस्तियोगे चतुर्थी विधानादमुककर्मणे स्वस्ति भवन्तो ब्रुवन्त्विति वदेत् ॥ तत्रापि । स्वस्ति भवंतो ब्रुवन्तु । स्वस्तिरित्येवं पुंलिंगः स्वस्तिशब्दः प्रयोज्यः ॥ दृष्टश्च स्वस्तिर्विघनः स्वस्तिरित्यादौ पुल्लिंगः स्वस्ति शब्दप्रयोग इति केचित् ॥ तन्न ॥ कारिकायाम् ॥ स्वस्ति इति च प्रतिब्रूयुरित्यव्ययरूपस्यैव स्वस्तिशब्दस्य प्रयोगात् ॥ प्रत्युक्तिविषेये भेदस्तृतीये त्वृध्यतामिति ॥ तुर्ये श्रीरस्त्विति ब्रूयादस्तु श्रीरिति च द्विजाः ॥ परशुरामोपि ॥ कृत्वैवं वरणं पूर्वं वाच्यं पुण्याहवाचनम् ॥ अध्वर्युरुदकुंभं तं प्राक् स्थापितं फलान्वितम् ॥ समादाय समुत्थाय प्रैषवीत् प्रैषमुच्चरेत् ॥ यं कृत्वा सर्ववेदादिक्रियाः सर्वाः सुशोभनाः प्रवर्त्तंते तमोंकारमादि कृत्वात्र पुण्यदम् ॥ पुण्याहं वाचयिष्येहं वाच्यतां वाऽन्योदिते ॥ मनः समाधीयतामित्यध्वर्योः प्रैष एषकः ॥ समाहितमनसः स्मः ॥ प्रतिप्रैषोयमृत्विजां ॥ प्रसीदंतु भवंतोथ प्रसन्नाः स्मस्तथा मिथः ॥ शांतिरस्तु तथा पुष्टि स्तुष्टिर्वृध्यादि विंशतिः ॥ प्रैषान्ब्रूते प्रतिप्रैषानस्त्विति ब्रुवते तु ते ॥ तदनु त्रिस्त्रिरेकैकं पुण्याहादि चतुष्टयम् ॥ प्रातर्मध्यतृतीयैस्त्रिः सवनैरुत्तरोत्तरैः ॥ प्राहास्य यजमानस्य गृहे पुण्याहमृत्विजः ॥ भवंतोत्र ब्रुवंत्येवं पुण्याहं च ब्रुवन्ति ते ॥ तद्वत्कल्याणमृद्धिं च स्वस्ति त्रिस्त्रिः पृथक्पृथक् ॥ पुनस्त्वाथ यथेमामृक् सत्रस्य स्वस्तिनः क्रमात् ॥ पठितव्या ऋचः प्रांते पुण्याहादिचतुर्ष्वपि ॥ ब्राह्मं पुण्यं महर्यच्च सृष्ट्युत्पादनकारकम् ॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् ॥ ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥ सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता ॥ संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥ स्वस्तिर्या चाविनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं स्वस्ति तां च ब्रुवन्तु नः ॥ इत्युक्त्वा स्वासनेऽध्वर्युराहास्य वाचनस्य च॥ पूर्णार्थं दक्षिणा स्वाहा विप्रेभ्यः प्रतिपद्यताम्॥ यष्टुस्तिलकमारोप्य वर्द्धापनमथाशिषः ॥ दत्वा दत्वाथ ताम्बूलानीति ॥ अत्र च पुण्याहवाचनानन्तरं कल्याणवाचनं स्वस्ति ऋद्धिर्विपर्यासो ब्राह्मं पुण्यमित्यादयो मंत्राश्चाधिका पुण्याहादिचतुर्षु उद्गाते वेत्याद्या ऋचो यथाक्रमं प्रान्ते पठितव्याः श्रीवाचनं च नोक्तम् इति विशेष उक्तः ॥ एतत् सर्व हेमाद्र्यादि सर्वनिबंध विरुद्धमप्यन्यत्रादृश्यमानमपि बहुभिराहृतम् ॥ यत्तु प्रैषोऽध्वर्यूकर्तृकत्वमुक्तं तद्वैकल्पिकम् ॥ तेन स्वकर्तृकत्वे स्वयं प्रैषाः कार्याः ॥ ततः पुरंध्रयो नीराजनादिमंगलं कुर्युः। ब्राह्मणाश्चाभिषिंचेयुः॥ तत्र पत्नी वामभागे॥ सर्वेषु धर्मकार्येषु पत्नी दक्षि-

णतः स्थिता ॥ विप्रपादक्षालने अभिषेके च वामत इति संस्कारकौस्तुभवचनात्॥ विप्रपादक्षालनं तु पित्र्यकर्मणि विहितम् ॥ तदुक्तम् ॥ वामे पत्नी त्रिपु स्थाने पितृणां पादशौचने ॥ रथारोहणकाले तु ऋतुकाले सदा भवेदिति ॥ इदं च स्वस्तिवाचनं आदिमध्यावसानेषु कार्यं ॥ आदावंते च मध्ये च कुर्याद् ब्राह्मणवाचनम् इति वचनादित्येके ॥ स्वस्तिवाचनमेवं तु सर्वेषामृद्धिकारकम् ॥ आदावंतेच कर्तव्यमिति यज्ञविदां मतमिति शौनकत्वादादावंतेच कार्यमित्यन्ये ॥ अपरे तु वैदिके तांत्रिके चादौ ततः पुण्याह इष्यत इति॥ पुण्याहवाचनं शस्तमादौ स्यात्सर्वकर्मसु ॥ नाकृत्वैतद्बुधःकुर्यात्सर्वकर्माणि मानव इत्याद्याश्वलायनवचनाद्दादावेव कार्यमित्याहुः॥ अत्र कुलदेशाचारतो व्यवस्था ॥ अथ हेमाद्रिमदनरत्नदानखंडादावुदाहृतं बह्वृचपरिशिष्टं परशुरामकारिकां शिष्टसमाचारं चानुसृत्य स्वस्तिवाचनप्रयोग उच्यते॥

अथ प्रयोगः ॥ तत्र सपत्नीको यजमानः कृतकुशोपग्रहः कलशस्थापनप्रदेशात्पश्चिमे युग्मान्ब्राह्मणान्विशुद्धान् प्राङ्मुखान्दक्षिणतो वोदङ्मुखानुपवेश्य सोत्तरच्छदे शुद्धपीठे स्वयमुदङ्मुखः प्राङ्मुखो वोपविश्य स्वदक्षिणे संस्कार्यमुपवेश्य कुशकुसुमयवजलपाणिना देशकालयोः संकीर्तनान्ते करिष्यमाणामुककर्मांगतया स्वस्तिवाचनं करिष्ये ॥ इति संकल्पः कार्यः ॥ स्वपुरतो शुद्धायां भूमौ पंचवर्णैस्तंदुलैर्वाऽष्टदलकरणम् ॥ ॐ भूरसीति तत्र भूमिस्पर्शः॥ आजिघ्रकलशमिति तस्मिन्नष्टदले कलशनिधानम् ॥ ॐ वरुणस्योत्तंभनमिति वारिणा कलशपूरणम् ॥ ॐ या ओषधीरिति कलशे सर्वौषधीप्रक्षेपः ॥ ॐ हिरण्यगर्भ इति हिरण्यस्य च ॥ ॐ कांडात्कांडादिति दूर्वाया इति केचित् ॥ ॐ अश्वत्थेव इति पंचपल्लवानां च ॥ ॐ परिवाजपतिरिति पंचरत्नानां च ॥ ॐ पूर्णा दर्वीति तंडुलैः पूर्णस्य पूर्णपात्रस्य कलशे निधानं ॥ ॐ याः फलनीरिति नालिकेराद्यन्यतमफलस्य पूर्णपात्रोपरि स्थापयेत् ॥ ॐ सुजातो ज्योतिषेति वासोयुग्मेन कलशवेष्टनं ॥ ॐ मनोजूतिरिति मंत्रान्ते कलशः सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठा ॥ अत्र केचित्तत्वायामीति मंत्रेणावाहनपूर्वकं वरुणं कलशे पूजयन्ति ॥ तद्यथा ॥ ॐ तत्वायामीति मंत्रमुच्चार्य अस्मिन् कलशे वरुणमावाहयामीत्येवं कलशे वरुणावाहनं ॥ ॐ मनोजूतिरिति मंत्रान्ते अस्मिन्कलशे वरुणः सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठा॥ तत्त्वायामीति मंत्रेण वरुणाय नम इत्येव मंत्रेण गंधादिभिः पंचोपचारैरभ्यर्चनं॥ ततः कलशे विष्णवादीनामावाहनं॥

" अथ कलशप्रार्थना "—ॐ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ॥ मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा ॥ ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अंगैश्च सहिताः सर्वे कलशन्तु

समाश्रिताः ॥ अत्र गायत्री साबित्री शान्तिपुष्टिकरी तथा॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारका इति ॥ ॐ विष्ण्वादिदेवेभ्यो नम इति कलशे विष्ण्वादीन् संपूज्य प्रार्थयेत् ॥ ॐ देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोसि तदा कुंभ विधृतो विष्णुना स्वयं ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वंच प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव॥ सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदेति ॥ एवं कलशं संपूज्य स्वस्तिवाचनार्थं ब्राह्मणवरणं कुर्यात् ॥

" अथ विप्रवरणं "—अमुकगोत्रं अमुकामुकप्रवरं अमुकशर्माणं ब्राह्मणं स्वस्तिवाचनार्थं त्वामहं वृणे इत्येवं चतुर्णां वरणं ॥ तेषां गंधपुष्पादिभिरभ्यर्चनं ॥ भोजनदानं दक्षिणादानं च ॥ प्राङ्मुखानां ब्राह्मणानामुपवेशनं ॥ उदङ्मुखेन यजमानेनोपवेशनं ॥ अथावनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णपूर्णं कलशं धारयित्वा आशिषः प्रार्थयन्ते॥ ॐ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुः प्रमाणेन पुण्याहं दीर्घमायुरस्तु ॥ अस्त्विति विप्राः प्रतिब्रूयुः ॥ ॐ शिवा आपः सन्तु ॥ सौमनस्यपुष्पमस्तु ॥ अक्षतं चारिष्टं चास्तु इति त्रिभिर्मंत्रैः क्रमादुदककुसुमाक्षतानां विप्रहस्तेषु दानं ॥ ॐ गंधाः पान्तु सुमंगल्यं चास्तु ॥ पुष्पाणि पान्तु सौश्रियमस्तु॥ अक्षताः पान्तु आयुष्यमस्तु ॥ तांबूलानि पान्तु ऐश्वर्यमस्तु ॥ दक्षिणाः पान्तु बहुदेयं चास्तु ॥ अत्र गंधाः पान्त्वित्यादिभिर्मंत्रपूर्वार्द्धैर्युग्मान् ब्राह्मणान् गंधादिभिः पूजयेत् ॥ ॐ सुमंगल्यं चास्त्वित्यादीनि मंत्रोत्तरार्द्धानि ब्राह्मणाः प्रतिब्रूयुः ॥ ॐ दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चायुष्यं चास्तु ॥ अत्रास्त्विति विप्रैर्वक्तव्यं ॥ ॐ यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारंभाः शुभाः शोभनाः प्रवर्त्तन्ते ॥ तमहमोंकारमादिं कृत्वा ऋग्यजुः सामाशीर्वचनं बहुऋषिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये इति विप्रान् प्रतिप्रश्नः ॥ ॐ वाच्यतामिति प्रतिप्रश्नः ॥ ॐ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदा सनरस्य प्रयंसत् ॥ द्रविणोदा वीरवती मिषन्नो द्रविणोदारासते दीर्घमायुः ॥१॥ सविता पश्चात्तात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥२॥ नवो नवो भवति जायमानोन्हां केतुरुष सामेत्यग्रं ॥ भागं देवेभ्यो विदधात्यायन् प्रचंद्रमास्ति रते दीर्घमायुः ॥३॥ उच्चादिवि द-

क्षिणावन्तो अस्थुर्ये अश्वदाः सहते सूर्येण ॥ हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्त आयुः ॥४॥ इत्येता ऋचः पुण्याहे ब्रूयात् ॥ ॐ व्रत नियम तपस्वाध्याय क्रतुदमदानविशिष्टानां सर्वेषां मनः समाधीयतामिति ब्रूयात् ॥ ॐ समाहितमनसः स्मः इति ब्राह्मणाः प्रतिब्रूयुः ॥ ॐ प्रसीदन्तु भवन्तः इति कर्त्ता ॥ प्रसन्नाः स्म इति विप्राः ॥ अथ सर्वे संहत्येमानि वाक्यानि वदेयुः ॥ ॐ शान्तिरस्तु पुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु शिवं कर्मास्तु कर्मसमृद्धिरस्तु वेदसमृद्धिरस्तु शास्त्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसंपदस्तु अरिष्टनिरसनमस्तु यत्पापं तत्प्रतिहतमस्तु यच्छ्रेयस्तदस्तु उत्तरे कर्मण्यऽविघ्नमस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु॥ ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्तां ॥ तिथिकरणमुहूर्त्तनक्षत्रसंपदस्तु ॥ तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्तां ॥ तिथिकरणे मुहूर्त्ते स नक्षत्रे सग्रहे सदैवते प्रीयेतां ॥ दुर्गापांचल्यौ प्रीयेतां ॥ अग्निपुरोगा विश्वेदेवाः प्रीयन्तां ॥ इन्द्रपुरोगा मरुद्गणाः प्रीयन्तां ॥ वसिष्ठपुरोगाः ऋषिगणाः प्री० ॥ माहेश्वरीपुरोगा उमामातरः प्रीयन्तां ॥ अरुन्धती पुरोगा एकपत्न्यः प्रीयन्तां॥ विष्णुपुरोगाः सर्वे देवाः प्रीयं० ब्रह्मपुरोगाः सर्वे वेदाः प्रीयं० ब्रह्म च ब्राह्मणाश्च प्रीयं० श्री अंबिकासरस्वत्यौ प्रीयेतां ॥ श्रद्धामेधे प्रीयेतां॥ भगवती कात्यायनी प्रीयतां ॥ भगवती माहेश्वरी प्रीयतां ॥ भगवती ऋद्धिकरी प्रीयतां ॥ भगवती वृद्धिकरी प्रीयतां ॥ भगवती पुष्टिकरी प्रीयतां ॥ भगवती तुष्टिकरी प्रीयतां ॥ भगवन्तौ विघ्नविनायकौ प्रीयेतां ॥ सर्वाः कुलदेवताः प्रीयन्तां ॥ सर्वाः ग्रामदेवताः प्रीयं० सर्वा इष्टदेवताः प्रीयं० ॥ हताश्च ब्रह्मद्विषः ॥ हताश्च परिपंथिनः ॥ हताश्च विघ्नकर्त्तारः ॥ ॐ सर्वे शत्रवः पराभवं यान्तु ॥ शाम्यन्तु घोराणि ॥ शाम्यन्तु पापानि ॥ शाम्यन्त्वीतयः ॥ शुभानि वर्द्धन्तां ॥ शिवा आपः सन्तु ॥ शिवा ऋतवः सन्तु॥ शिवा अग्नयः सन्तु ॥ शिवा आहुतयः सन्तु॥ शिवा ओषधयः सन्तु ॥ शिवा वनस्पतयः सन्तु ॥ शिवा अतिथयः सन्तु ॥ अहोरात्रे शिवे स्यातां॥ ॐ शन्नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु शन्न औषधयः प्रतिधीयतां॥ शन्नो द्यावा पृथिवीशं प्रजाभ्यः शन्न एधि द्विपदेशं चतुष्पदे ॐ निकामे निकामेन योगक्षेमो नः कल्पतां॥ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहु केतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्तां ॥ ॐ भगवान्नारायणः प्रीयतां॥ ॐ भगवान् पर्जन्यः प्री० भगवान् स्वामी महासेनः प्रीय० ॥ ॐ पुण्याहकालान् वाचयिष्य इति ब्राह्मणान् प्रतिप्रश्नः ॥ ॐ वाचयतामिति प्रतिप्रश्नः ॥ ॐ उद्गातेव शकुने सामगायसि ब्रह्मपुत्र इव सवनेषु शंससि ॥ वृषेव वाजी शिशुमति रपीत्या सर्वतो

नः शकुने भद्र मावद विश्वतो नः शकुने पुण्यमावद ॥ इति मंत्रमुक्त्वा ॐ पुनन्तु मां देव जना इति पुनस्त्वादित्या रुद्रा वसव इति वा मंत्रं पठित्वा ॐ ब्राह्मं पुण्यं महर्यच्च सृष्ट्युत्पादनकारकं ॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ इति चोच्चार्य भो ब्राह्मणाः मम सकुटुंबस्य सपरिवारस्य गृहेमुककर्मणः पुण्याहं भवन्तो ब्रुवन्त्वित्यत्येवं क्रमान्मंद्रमध्यमोच्चस्वरैरुत्तमस्वरेण वा त्रिर्ब्रूयात् ॥ ॐ पुण्याहमिति विप्रास्तथैव त्रिः प्रतिब्रूयुः ॥ ॐ अपाः सोममस्तमिन्द्र प्रयाहि कल्याणीर्जाया सुरणं गृहे ते ॥ यत्रारथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावदित्युक्त्वा ॐ यथेमां वाचमिति मंत्रं पठित्वा ॥ पृथिव्यामुध्धृतायां तु यत्कल्याणं पुरा कृतं ॥ ऋषिभिः सिद्धगंधर्वैस्तत्कल्याणं ब्रुवन्तु न इति चोक्त्वा भोब्राह्मणाः मम० कल्याणं भवन्तो ब्रुवन्त्वित्येवं पूर्ववद्वदेत् ॥ ऋद्ध्यामस्तोमं सनुयाम वाजमानो मंत्रं सरथे होपयातं ॥ यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ ॐ सत्रस्य ऋद्धिरिति ॥ सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता ॥ संपूर्णा सुप्रभावा सा ऋद्धिं तां च ब्रुवन्तु नः ॥ मम सकुटुंबस्य० ऋद्धिं भवन्तो ब्रुवन्त्विति ॥ ॐ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ॥ बृहस्पतिः सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ ॐ स्वस्ति न इन्द्रो वृद्ध० ॥ अविनाशाय या स्वस्ति पुण्यकल्याणवृद्धिदा ॥ विनायकप्रीया नित्यं स्वस्ति तां च ब्रुवन्तु नः ॥ भोब्राह्मणाः मम० अमुककर्मणे स्वस्ति भवन्तो ब्रुवन्तु ॥३॥ अमुककर्मणे स्वस्तीत्येवं पूर्ववत्त्रिः प्रतिब्रूयुः ॥ ॐ श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो दधाति॥ श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ॥ मनसः काममिति चोक्त्वा ॥ क्षीरोदधिसमुद्भूताः मथ्यमाने महोदधौ ॥ विष्णोश्चैव प्रिया नित्यं श्रियं तांच ब्रुवन्तु नः ॥ भोब्राह्मणाः मम० श्रीरस्त्विति भवन्तो ब्रुवन्तु ॥३॥ अस्तु श्रीरिति च पूर्ववत्त्रिः प्रतिब्रूयुः ॥ इत्येवं श्रीवाचनं हेमाद्रौ दानखंडे आश्वलायनगृह्यकारिकायां चोक्तं ॥ तत ॐ पुण्याहसमृद्धिस्तु ॥ भगवान् प्रजापतिः प्रीयतामिति ब्रूयात् ॥ इति ॥

## ॥ अथाभिषेकमंत्राः ॥

अथ प्राङ्मुखस्य यजमानस्य वामतः पत्न्या उपवेशनं ॥ उदङ्मुखास्तिष्ठन्तो ब्राह्मणाः सदूर्वादर्भपल्लवपाणयो वक्ष्यमाणमंत्रैर्हस्तस्थितकलशपातितपात्रोदकेन सपरिवारस्य यजमानस्य मूर्द्धन्यभिषेकं कुर्युः ॥ मंत्रास्तु ॥ ॐ आपोहिष्ठेति तिस्रः ॥ ॐ त्रातारमिन्द्रमित्येका पंचेन्द्रसंज्ञका॥ ॐ वरुणस्योत्तंभनमित्येका पंचवारुणसंज्ञकाः॥ ॐ समुद्रायत्वेत्येका ॥ ॐ पुनन्तुमेति नव ॥ ॐ आप्यायस्वेत्येका ॥ ॐ पंचनद्य

इत्येका ॥ ॐ शिरोमेश्रीरिति चतस्त्रः ॥ ॐ देवस्यत्वेति तिस्रः ॥ ॐ सोमस्यत्वे-त्येका ॥ अन्येपि स्वशाखोक्तमंत्रा ग्राह्याः ॥ ॐ सुरास्त्वामभिषिचन्तु ब्रह्मविष्णु-महेश्वराः ॥ वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ आखंडलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा॥ वरुणः पवनश्चैव धना-ध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥ कीर्त्तिर्ल-क्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः॥ बुद्धिर्लज्जावपुः शान्तिस्तुष्टिः कान्तिश्च मा-तरः ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ एतास्त्वामभिषिंचन्तु राहुके-तुश्च तर्पिताः ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मुनयो गावो देवमा-तर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः॥ अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च ॥ औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सा-गराः शैलास्तीर्थानि जलदा नदाः ॥ एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥ इति पौराणमंत्रैश्चाभिषेकं कुर्युः ॥ ॐ अमृताभिषेकोस्त्वित्यभिषेकान्ते वक्तव्यं ॥ केचिद-त्राभिषेकं न कुर्वन्ति ॥ अस्य स्वस्तिवाचनस्य पूर्णतासिद्ध्यर्थमिमां हिरण्यदक्षिणां विप्रेभ्यः स्वाहा संपद्यन्तां नममेत्युक्त्वा विप्रेभ्यो दक्षिणादानं ॥ यजमानस्य तिल-ककरणं ॥ सुवासिनीभिश्च वर्द्धापननीराजनाशीः प्रयोगनूतनवस्त्रदानादिमंगलं यथा-चारं कार्यं ॥ इति श्रीमद् द्विवेदी परशुरामात्मजेन जगन्नाथशर्मणा संशोधिते रुद्र-कल्पद्रुमे शिष्टाचारानुसारी स्वस्तिवाचनप्रयोगः ॥

## ॥ अथ बह्वृचगृह्यपरिशिष्टोक्तस्वस्तिवाचनप्रयोगः ॥

"तत्रादौ शौनकोक्तप्रयोगः" अर्चिता ब्राह्मणाः सम्यग् गंधमाल्यैः सद-क्षिणैः ॥ तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः ॥ तिष्ठेद्वाचयिता तेषां द-क्षिणस्यामुदङ्मुखः ॥ बिभ्रत्कुंभमपां पूर्णं पिहिताननमर्चितं ॥ अयं वाचयितुर्बाहुं दक्षिणं तु समाश्रितं॥ तिष्ठत्युदङ्मुखाः सम्यक् संस्कार्यास्तत्र तत्रतु ॥ मन इत्या-दिकं मंत्रं पूर्वं वाचयिता वदेत्॥ समाहितेत्यादीतरे मंत्र ब्रूयुरर्चिता ब्राह्मणाः पुनः॥ शान्तिपुष्ट्यर्द्धिविप्राद्याः पंचदशैव तु ॥ अस्तु शद्धान्तमुच्चैरन्वाचयित्वा तथापरैः॥ आशीर्वादानथान्यांश्च विविधानपि वाचयेत् ॥ अतो देवा अवन्तु नः सूक्तं वैष्णव-मुत्तमं ॥ द्रविणोदाः सवितेति नवो विद्युन्नवेति च ॥ आत्वदस्त्वमित्युक्त्वा पुण्याहं वाचयेत्ततः ॥ वाचयित्वा यथाशक्ति सर्वाणि द्विजसत्तमैः ॥ प्रस्तुते देवतायास्तु होमं कुर्याद्विचक्षणः ॥ तस्या नाम गृहीत्वाथ प्रीयतामिति चोच्यतां ॥ पुण्याहं स्व-स्तिमृद्धिं च भवत्पूर्वं ब्रुवन्त्विति ॥ प्रणवाद्यं त्रिराचष्टे भवदादिविनापरे ॥ पुण्या-हादेस्त्रिरभ्यासे मन्द्रमध्योत्तमस्वनं ॥ आश्रयेरन्निमे सर्वे यथागमपरं परं ॥ प्रत्युक्ति-

विषये भेदा तृतीये ऋद्धयतामिति ॥ वक्तारो ब्रूयुरस्त्युच्चैरतिविस्पष्टमेव च ॥ पुण्याहशब्दमुक्त्वा तु स्वस्तिन इत्यृचं जपेत् ॥ स्वस्तिशब्दं तथोक्त्वा च ऋध्यामेति ऋचं वदेत्॥ ऋद्धिं भवन्तो ब्रुवन्तु ऋद्धयतामित्यथो वदेत्॥ आपोहिष्ठेतितिसृभिः शन्नोदेवीत्यृचैकया ईशानाचार्याणां पंचशुद्धवत्यघमर्षणं ॥ तरत्समंदीसूक्तं तु सर्वपापापनोदनं ॥ पवस्वसोममित्यादि ऋग्भिः प्रोक्ष्य समंततः ॥ पुण्याहं वाचयित्वैवं सर्वकल्याणवान् भवेत् ॥ स्वस्तिवाचनमेवं तु सर्वेषामृद्धिकर्मणां ॥ आदावन्ते च कर्त्तव्यमिति यज्ञविदां मतमिति ॥ जयन्तेन कारिकाकारेण ॥ अर्चिता इत्यारभ्य तथापरैरित्यन्तं ग्रंथमित्थमेव पठित्वा प्रस्तुते देवताया इत्यारभ्य तृतीये ऋद्धयतामित्यन्तं पठितं ततः आप इत्यादिभिः शान्तिं ततः कुर्युः समाहिता इति पठित्वाऽन्त्यश्लोकः पूर्ववदुक्तः ॥ बह्वृचपरिशिष्टे ॥ अथ स्वस्तिवाचनमृद्धिपूर्ते ऋद्धिर्विवाहान्ता अपत्यसंस्काराः प्रतिष्ठोद्याने पूर्त्ते तत्कर्मणश्चाद्यन्तयोः कुर्याच्छुचिः स्वलंकृतो वाचयिता तथाभूते सद्मनि मंगलसंभारान् संभृत्य युग्मान् ब्राह्मणान् प्रशस्तान् लक्षणसंपन्नान् गंधादिभिरभ्यर्च्य दक्षिणया तोषयेरथ ते प्राङ्मुखाः प्रसन्ना दर्भपाणयस्तिष्ठेयुर्दक्षिणतो वाचयितोदङ्मुखः संस्कार्या वाचयितुर्दक्षिणं पार्श्वमभितिष्ठेयुरथ वाचयिता दर्भपाणिरपां पूर्णं कुंभं स्वर्चितं सपल्लवमुखं धृत्वा तिष्ठन्समाहितो मनः समाधीयतामिति ब्राह्मणान् ब्रूयात्समाहितमनसः स्म इति प्रतिब्रूयुः ॥ प्रसीदन्तु भवन्त इति वाचयिता प्रसन्नास्म इतीतरे अथ सर्वे संहत्य शांतिपुष्टिस्तुष्टिवृद्धिरविघ्नमारोग्यं स्वस्ति शिवं कर्म कर्मसमृद्धिः धर्मसमृद्धिः पुत्रसमृद्धिर्वेदसमृद्धिः शास्त्रसमृद्धिः धनधान्यसमृद्धिरिष्टसंपदित्येतानि पंचदशास्त्वंतानि वाक्यान्युक्त्वा तन्नाम्ना कर्मदेवता प्रीयतामिति ब्रूयुरथ वाचयिता पूर्वं तत्तल्लिंगान्मंत्रान् पठित्वा त्रिस्त्रिर्मंद्रमध्योच्चस्वरैः पुण्याहं भवन्तो ब्रुवन्तु स्वस्ति भवन्तो ब्रुवन्तु ऋद्धिं भवन्तो ब्रुवन्त्विति ब्रूयात्तेपि तथा प्रत्येकं प्रतिब्रूयुरोमृद्धयतामित्यृद्धौ ब्रूयुरथ प्राङ्मुखमासीनं सामात्यं कर्त्तारं ब्राह्मणाः सपल्लवा दर्भपाणयः शान्तिपवित्रलिंगाभिर्ऋग्भिः सिंचेयुः पुरंध्रयो नीराजनादिमंगलानि कुर्वन्तीति ॥ अस्यार्थः ॥ अथेति अथ शब्दोऽधिकारार्थः ॥ पाठादेवानन्तर्यसिद्धेः ॥ ततश्च स्वस्तिवाचनं वक्तुमधिक्रियत इत्यर्थः ॥ तच्च ऋद्धिपूर्ते भवति॥ ऋद्धिपूर्तशब्दयोरप्रसिद्धार्थत्वात्स्वयमेव व्याचष्टे॥ ऋद्धिर्विवाहान्ता इत्यादिना ॥ तत्कर्मणश्चाद्यन्तयोः कुर्यादिति तस्य चिकीर्षितस्य कर्मणः आदिश्चान्तश्चाद्यन्तौ तयोराद्यन्तयोश्च कुर्यादिति ॥ चकारः समुच्चयार्थोभिन्नक्रमे च तथाभूते सद्मनीति स्वलंकृते सद्मनीत्यर्थः ॥ प्रशस्तान् लक्षणसंपन्नान् गंधादिभिरभ्यर्च्येति ॥ प्रशस्तान् स्मृत्युक्तश्राद्धभोजनप्रतिग्रहादिरहितानित्यर्थः ॥

तथा चोक्तं॥ यत्किंचिच्छ्राद्धिकं भुक्त्वा प्रतिगृह्य च वाऽशुचिः॥ अब्राह्मणश्च पुण्याहेनर्हः स्यादिति मे मतिरिति ॥ यद्यप्यत्रैव ब्राह्मणपूजनं कार्य्यमिति प्रतीयते॥ तथापि कुंभस्य प्रणामान्तपूजां विधाय ब्राह्मणपूजनं कार्यं ॥ अथ शब्देन बद्धक्रमभक्त्या पदार्थोक्तिसमये स्वर्चितमिति कुंभविशेषणस्यान्यथानुपपत्तेः ॥ पुण्याहवाचनक्षत्रे च गंधादिदक्षिणान्तानां दानसमये शिवा आपः सन्त्वित्यादीनां बहुदेयं च नोस्त्वित्यन्तानां वाचनमुक्तं बौधायनेन ॥ कारिकाकृज्जयन्ताभ्यां तु ब्राह्मणपूजनं प्रसिद्धमेवेति वाक्यवाचनमपि नादत्तं पंचदशास्त्वन्तानीति ॥ अत्र पंचदशैतानीत्युक्तिर्न्यूनाधिकोक्ति व्यावृत्यर्था ॥ अत एव कारिकादौ पंचदशैवेत्युक्तं ॥ तन्नाम्ना कर्मदेवता प्रीयतामिति ब्रूयुरिति कर्मदेवता आह बौधायनः ॥ अथातः पुण्याहदेवता व्याख्यास्यामः॥ पुण्याहवाचयिष्यन्नामगृह्णीयादसौ प्रीयतामिति विवाहस्याग्निरौपासनस्याग्नि सूर्यप्रजापतयः स्थालीपाकस्याग्निर्गर्भाधानस्य ब्रह्मापुंसवनस्य प्रजापतिः सीमन्तस्य धाता विष्णुवलेः सविता जातकर्मणो मृत्युर्नामकर्मणः सविता तस्यान्ते प्रजापतिरुपनिष्क्रमणस्य सविता तस्यान्ते विचिक्रियाण्यन्नप्राशनस्य सविता चोक्तस्य केशिनस्तस्यान्ते प्रजापतिरुपनयनस्येन्द्रः श्रद्धामेधे अन्ते विसर्गे सुश्रवाः पुनरुपनयनस्याग्निरथ्यादि ब्रह्मचर्यव्रतमाचरेत्तस्मिन्नपापहोमे सविता समावर्त्तनस्य श्रीरिंद्रो वा शूलगवस्येशानः प्रत्यवरोहणस्य सवितोपाकर्मणि व्रतेषु च सविता वास्तुहोमस्य वास्तोष्पतिरन्ते प्रजापतिरहुतहोमस्येन्द्रो ते प्रजापतिरायुष्य होमस्याग्निरायुष्मान्नक्षत्रहोमस्य नक्षत्रेषूक्तमष्टमीप्रदोषस्येशान आग्रयणस्याग्रयणदेवता सर्पवलेः सर्पा एकोद्दिष्टस्यान्ते प्रजापतिस्तडाकानां वरुणो यक्षवलेर्यक्षग्रहशांतिहोमस्यादित्यादिनवग्रहानागारितं होमे ब्रह्मादयः प्रीयतामित्येवमेवान्येषां होमानां याज्यानुवाक्ययोर्देवतासौ प्रीयतामिति कूपतडागान्ते प्रधानोदकान्ते प्रजापतिः कूष्मांडहोमस्याग्न्यादयश्चांद्रायणस्याग्न्यादयोग्निष्टोमस्येंद्र एवमन्येषु कर्मसु प्रजापतिरिति॥ अन्यत्रापि ॥ प्रधानदेवताया तु स्याच्चिकीर्षितकर्मणः॥ असाविति तु तां ब्रूयात्संदेहे तु प्रजापतिमिति॥ अथवार्चयेतांपूर्ववत्तत्तल्लिंगा मंत्रान्पठित्वेति ॥ पुण्याहादिलिंगान्मंत्रानित्यर्थः॥ तत्तल्लिंगानिति बहुवचनांस्त्रीस्त्रीन्मंत्रान्पठेत् ॥ तेच ऋग्यजुःसामाशीरित्येकवाक्यतया वेदत्रयोक्ताः॥ अत एव बहुवचनस्य त्रिषु मंत्रेषु पठितेषु चरितार्थत्वान्नाथर्ववैदिका मंत्राः पठनीयाः ॥ केचित्तु ऋग्यजुः सामाथर्वाशीरिति पठन्ति तद्धेमाद्र्यादि सर्वनिबंधविरुद्धं ॥ मंद्रमध्योच्चस्वरैरिति ॥ अयं च मंद्रादित्रिविधः स्वरो वैकल्पिकः ॥ पुण्याहादेस्त्रिरभ्यासे मंद्रमध्योच्चनिस्वनं ॥ आश्रयेरंनिमे सर्वे यथागमपरंपरामिति शौनकीये वैकल्पिकत्वेन मंद्रादिस्वरोपदेशात् ॥ पुण्याहं

भवन्तो ब्रुवन्त्वित्यादि पारिजात धृतशौनकीये वाक्यवाचनं विधायोक्त ॥ कृत्वा-थ दक्षिणं जानुं पातयित्वा महीतले ॥ उदङ्मुखो जपेत्सूक्तं श्रद्धयेत्येवमादिक-मिति ॥ अतो देवा इत्यादीनां श्रद्धयेत्यादिसूक्तस्य च शोनकीयपाठ एव क्वचिद सत्वात्परिशिष्टावप्यस्य विधेरनित्यत्वात्तल्लिंगान्मंत्रान्पठित्वेति परिशिष्टे स्वधृत शौनकीये चोद्गाते वेति तिसृणामृचां पाठेन तद्विवरणमालोच्य पारिजाते प्रयोग काले याज्यया यजतीत्यादेराचारप्राप्तवाक्यानामनादरः कृतः ॥ ॐ पुण्याहमि-ति वाचनान्ते चोक्तं ॥ ततः स्वस्तिन इंद्रेति ऋग्त्वं ब्रूयुः सहोभये ॥ ततो वाच-यिता पूर्वमों स्वस्तीत्यभिधाय तु ॥ पश्चाद्भवन्त इति ब्रुवन्त्विति च भाषते ॥ ॐ स्वस्तीति तथा वान्ये प्रतिब्रूयुरतः परं ॥ पारिप्सितं चतुर्थ्योक्त्वा कर्म वाचयिता ततः ॥ स्वस्तीत्याद्यं ब्रुवन्त्वन्तं पूर्ववत्समुदीरयेत् ॥ वक्तारश्च चतुर्थ्यन्तं तत्तन्ना-मोक्तिपूर्वकं स्वस्तीति च प्रतिब्रूयुरिति ॥ ऋद्धिवाचनान्ते च ॥ ततो वाचयिता कुंभजलं संस्कार्यं मूर्द्धनि किंचित्सिंचेत्तथैवान्ये ब्रूयुश्च विविधाशिष इति ॥ आश्व-लायनस्मृतौ तु ॥ गुरोर्दक्षिणभागे तु कर्त्तासीत तदाज्ञयेति प्रक्रम्य मनः समाधी यतामित्यादि वाक्यवाचनं गुरुकर्तृकमेवोक्तं ॥ शान्तिपवित्रलिंगाभिर्ऋग्भिः सिं-चेयुरिति ॥ पारिजाताधृतशौनकीये पवस्वसोममित्यन्तानामृचां पाठेनाश्वलायन स्मृतौ च सावित्र्यादि मंत्रपाठेन शान्तिपवित्रलिंगाभिर्ऋग्भिरिति परिशिष्टस्य प्र-पंचनं कृतं नत्वृचो विशेषतस्ता विवक्षितः पारिजातधृतशौनकीये विशेषपाठा-भावादुक्तपाठयोः परस्परं विसंवादाच्च ॥ अत एवाप इत्यादिभिः शान्ति ततः कुर्यादित्येव कारिकायामुक्तं ॥ आश्वलायनस्मृतौ सावित्र्यादि मंत्रैरभिषेकमु-क्त्वान्ते उक्तं ॥ पुण्याहान्तेऽर्चयेद्विप्रान् दक्षिणाभिः स्वशक्तित इति ॥ अत्र बहु-ल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितं ॥ तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेदिति स्वगृह्यानुक्तस्य नावश्यकत्वमभिप्रेत्य कारिकाकृज्जयन्ताभ्यां परि-शिष्टमनुसृतं ॥ माध्यंदिनशाखायां तु पुण्याहवाचनस्यानुक्तत्वात् ॥ यन्नाम्नातं स्वशाखायामिति वचनाद्बह्वृचगृह्यपरिशिष्टोक्तमेव शिष्टैः परिगृहीतमिति परिशिष्टं ॥

## ॥ अथोक्तपरिशिष्टानुसारी स्वस्तिवाचनप्रयोगः ॥

तत्र कुशकुसुमयवजलपाणिना यजमानेन देशकालयोः संकीर्त्तनान्ते करिष्य-माणामुककर्मांगतया स्वस्तिवाचनं करिष्ये ॥ स्वपुरतः शुद्धायां भूमौ पंचवर्णैस्तं-दुलैर्वाष्टदलकरणं ॥ ॐ भूरसीति तस्मिन्नष्टदले भूमिस्पर्शः ॥ आजिघ्र कलशमिति कलशस्थापनं ॐ महीद्योरिति वारिणा कलशपूरणं ॐ या ओषधीरिति तस्मि-न्कलशे सर्वौषधिप्रक्षेपः ॥ ॐ हिरण्यगर्भ इति हिरण्यं च ॥ ॐ कांडात्कांडादिति

दूर्वाया इति केचित् ।। ॐ अश्वत्थेव इति पंचपल्लवानि च ॥ ॐ परिवाजपतिरिति पंचरत्नानां च ।। ॐ पूर्णादर्वीती तंडूलपूर्णस्य पूर्णपात्रस्य कलशोपरि निधानं ॥ ॐया: फलिनीरिति नालिकेलाद्यन्यतमफलस्य पूर्णपात्रे स्थापनं ॥ ॐ सुजातो ज्योतिषेति वासोयुग्मेन कलशवेष्टनं ॥ ॐ मनोजूतिरिति मंत्रेण कलशः सुप्रतिष्ठितो वरदो भवत्यंतेन कलशप्रतिष्ठा ॥ अत्र केचिदेवमाचरन्ति ।। ॐ तत्त्वायामीति मंत्रमुच्चार्यास्मिन् कलशे वरुणमावाहयामीत्येवं कलशे वरुणावाहनं ।। ॐ मनोजूतिरिति मंत्रान्ते अस्मिन् कलशे वरुणः सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठा ।। ॐ तत्त्वा यामीति मंत्रेण वरुणाय नम इत्येवमन्तेन गंधादिभिः पंचोपचारैः संपूज्य।। ॐ कलशस्य मुखे विष्णुरित्यादिभिर्मंत्रैः कलशे विष्ण्वादीनामावाहनं ॥ ॐ विष्ण्वादिभ्यो देवेभ्यो नम इत्येवं कलशे विष्ण्वादीनामभ्यर्चनं ।। देवदानवसंवादे इत्यादिभिः प्रार्थना चेति ॥ एवं कलशं प्रतिष्ठाप्य स्वस्तिवाचनार्थं विप्रवरणं ।। तद्यथा ॥ अमुकगोत्रममुकप्रवरममुकशर्माणं ब्राह्मणं स्वस्ति वाचनार्थं त्वां वृणे इत्येवं चतुर्णां वरणं ।। गंधपुष्पादिभिस्तेषामभ्यर्चनं ॥ तेभ्यो भोजनदानं ॥ दक्षिणादानं च ॥ अथावनिकृतजानुमंडलः कमलमुकुलसदृशमंजलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा ।। ॐ शिवा आपः सन्तु सौमनस्यमस्तु अक्षतं चारिष्टं चास्तु इति त्रिभिर्मंत्रैः क्रमादुदककुसुमाक्षतानां विप्रहस्तेषु दानं ।। ॐ गंधाः पान्तु सुमंगल्यं चास्तु ।। पुष्पाणि पान्तु सौश्रियमस्तु।। अक्षताः पान्तु आयुष्यमस्तु॥ तांबूलानि पान्तु ऐश्वर्यमस्तु ।। दक्षिणाः पान्तु आरोग्यमस्तु ॥ अत्र गंधाः पान्त्वित्यादिभिर्मंत्रपूर्वार्द्धैर्युग्मान् ब्राह्मणान् गंधादिभिः पूजयेत् ।। सुमंगल्यं चास्त्वित्यादीनि मंत्रोत्तरार्द्धानि ब्राह्मणाः प्रतिब्रूयुः ।। एवं ब्राह्मणपूजने कृते युग्मा ब्राह्मणा दर्भपाणयः प्राङ्मुखास्तिष्ठेयुः ॥ तद्दक्षिणतो वाचयितोदङ्मुखो दर्भपाणिः स्वर्चितकुंभं सपल्लवं दक्षिणहस्ते दधानस्तिष्ठेत् ।। तद्दक्षिणपार्श्वे पत्नीसंस्कार्याश्च तिष्ठेयुः ॥ ॐ मनः समाधीयतामिति ब्राह्मणान्प्रति कर्त्ता ब्रूयात्।। ॐ समाहितमनसः स्म इति परे ॥ ॐ प्रसीदन्तु भवन्त इति कर्त्ता ।। प्रसन्नाः स्म इति परे ॥ ततः सर्वे सहस्य पंचदशवाक्यानि वदेयुः ।। शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु स्वस्ति शिवं कर्मास्तु कर्मसमृद्धिरस्तु धर्मसमृद्धिरस्तु पुत्रसमृद्धिरस्तु वेदसमृद्धिरस्तु शास्त्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसंपदस्तु ।।१५।। इत्युक्त्वा कर्मदेवतानामग्रहणपूर्वकमग्निः प्रीयतामित्येवं वदेयुः ।। यत्र नामविशेषो नोक्तस्तत्र प्रजापतिः प्रीयतामिति ॥ ॐ उद्गातेवेत्युवं पठित्वा पुण्याहं भवन्तो ब्रुवन्त्विति क्रमान्मंद्रमध्योत्तमस्वरैरुत्तमस्वरेण वा कर्त्ता त्रिर्ब्रूयात् ।। ॐ पु-

ण्याहमिति परे तथा ब्रूयुः ॥ ॐ स्वस्ति न इन्द्रेत्यृचं पठित्वा ॐ स्वस्ति भवन्तो ब्रुवन्त्विति तथैव कर्ता त्रिर्वदेत् ॥ ॐ स्वस्तीति अपरे ॥ ॐ ऋद्ध्यामस्तोममित्यृचं पठित्वा ऋद्धिं भवन्तो ब्रुवन्त्विति पूर्ववद्वदेत् ॥ ऋद्ध्यतामिति परे ॥ ततः पत्नी वामत उपवेश्य ब्राह्मणाः सपल्लवा दर्भपाणयः ॐ आपोहिष्ठेति तिसृभिर्देवस्यत्वेति त्रिभिर्द्यौः शान्तिरित्येकयाऽन्यैश्च मंत्रैः शान्तिपवित्रलिंगाभिर्ऋग्भिश्चाभिषिचेयुः ॥ ततः सुवासिन्यौ नीराजनाशीः प्रयोगनूतनवस्त्रदानादिर्यथाचारं मंगलं कुर्युरिति ॥ इति बह्वृचगृह्यपरिशिष्टोक्तः स्वस्तिपुण्याहवाचनप्रयोगः ॥

## ॥ अथातिसंक्षिप्तस्वस्तिवाचनप्रयोगः ॥

तदाह रूपनारायणीये मदनरत्ने च बौधायनः॥ ब्राह्मणान् अन्नेन परिविश्य पुण्याहं स्वस्ति ऋद्धिरित्यौंकारपूर्वकं त्रिस्त्रिरेकैकामाशिषो वाचयेदिति ॥ ब्राह्मणान् अन्नेन परिवेष्य भोजयित्वा एकैकमिति पुण्याहादिभिः संबद्ध्यते ॥ एकैकामित्यस्यानन्तरमाशिष्यमिति शेषः॥ तथा च पुण्याहादिरूपामेकैकामाशिषं त्रिस्त्रिर्वाचयेदित्येवमाशिषो वाचयेदिति वाक्यार्थः ॥ तदित्थं ॥ यथोक्तलक्षणं कलशं पूर्ववत्प्रतिष्ठाप्य गंधादिभिरभ्यर्च्य गंधमाल्यवस्त्रादिभिर्यथाशक्त्यर्चितान् युग्मान् ब्राह्मणानुदङ्मुखानुपवेश्य यजमानः स्वयं यजमानेनान्वारब्ध आचार्यो वा प्राङ्मुखो गंधादिभिरर्चितं जलपूर्णं फलादिना पिहितास्यं कलशं कराभ्यामालभ्य ब्राह्मणाः ममास्य यजमानस्य वा गृहे ॐ पुण्याहं भवन्तो ब्रुवन्त्विति त्रिर्वाचयेत् ॥ ॐ पुण्याहमिति त्रिः प्रतिब्रूयुः ॥ ब्राह्मणा ममास्य यजमानस्य वा गृहे ॐ स्वस्ति भवंतो ब्रुवन्त्विति त्रिर्ब्रूयात् । ॐ स्वस्तीति त्रिः प्रतिब्रूयुः ॥ ब्राह्मणाः ममास्य यजमानस्य गृहे ॐ ऋद्धिं भवन्तो ब्रवन्त्विति त्रिर्वदेत् ॥ ॐ ऋद्ध्यतामिति विप्रास्त्रिः प्रतिब्रूयुः ॥ ॐकारपूर्वकं तु ब्राह्मणजातीययजमानमात्रविषयं ॥ पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ॥ एतदेव निरोंकारं कुर्यात् क्षत्रियवैश्ययोः ॥ सोंकारं ब्राह्मणे कुर्यान्निरोंकारं महीपतौ ॥ उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्त्तयेदिति स्वस्ति वाचनं प्रकृत्य यमोक्तेः ॥ इति ॥

## ॥ अथाभ्युदयिकनिमित्तसंग्रहः ॥

तत्र छंदोगपरिशिष्टे कात्यायनः॥ अनिष्ट्वा तु पितॄन् श्राद्धे कुर्यात्कर्म तु वैदिकं ॥ तत्रापि मातरः पूर्वं पूजनीया प्रयत्नतः ॥ आयुष्याणि च शान्त्यर्थे जप्त्वा तत्र समाहितः ॥ षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेदिति ॥ अनेन वैदिककर्ममात्रे श्राद्धं विहितं ॥ शातातपोऽपि ॥ नानिष्ट्वा तु पितॄन् श्राद्धे

वैदिकं किंचिदाचरेदिति ॥ मात्स्येपि ॥ नानिष्ट्वा तु पितृन् श्राद्धे कर्म वैदिकमाचरेदिति ॥ विष्णुपुराणे पराशरः ॥ कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ॥ नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ॥ नांदीमुखान्पितृनादौ तर्पयेत्प्रयतो गृहीति॥ चूडाकर्मादिक इत्यादि शब्द उपनयनादिसंस्कारोपसंग्रहार्थः ॥ पुत्रादिमुखदर्शन इति पुत्रस्याद्यमुखदर्शने पुत्र जन्मनीत्यर्थः ॥ पुत्रादिमुखदर्शन इत्यनेन तद्योग्यतासंपादकं पुत्रजन्ममात्रमेव गृह्यते ॥ नतु जातकर्म ॥ पूर्वोदाहृतैः सामान्यवाक्यैर्वैदिककर्ममात्रे प्राप्तस्य वृद्धिश्राद्धस्य केषुचित्कर्मसु पर्युदासार्थे नाष्टकासु भवेदिति वक्ष्यमाण छंदोगपरिशिष्टवचने जातकर्मणि तन्निषेधात् तेन ग्रहणवन्नैमितिकं वृद्धिश्राद्धं पुत्रजन्मन्यपि भवत्येव ॥ कश्चित्तु पुत्रादिमुखदर्शने इति येन प्रवासादिना पुत्रजन्मदिने जातकर्म सन्निधानेन स्थितं तेन प्रवासादागत्य नांदीमुखं पितृगणं संपूज्य पुत्रादिमुखं पश्येदित्यर्थं इत्याह ॥ पुत्रादीत्यादि शब्दात्पौत्रस्यापि संग्रह इति निर्णयामृते ॥ ब्रह्मांडपुराणे ॥ कर्मण्यथाभ्युदयिके मांगल्ये चातिशोभने ॥ जन्मन्यथोपयने विवाहे पुत्रकस्य च ॥ पितृन्नांदीमुखान्नेव तर्पयेद्विधिपूर्वकमिति ॥ आभ्युदयिकं त्वाभ्युदयार्थं कर्म ॥ राजाभिषेकनवग्रहमखमहादानादिमांगल्यं गर्भाधानसीमन्तोन्नयनादि ॥ अतिशोभन इति तद्विशेषणेन ब्राह्मण्यश्च जीवपत्यो जीवप्रजावद्यदुपदिशेयुस्तत्तत्कुर्युरथ खल्वृच्चा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयादित्याश्वलायनगृह्य सूत्रानुमतस्याचारप्राप्तस्य फलादिभिर्गर्भिणी कुक्षिभरणादेर्वित्राहाद्यंगहरिद्राचंदनादेश्च निवृत्तिः॥ निणर्यसिंधौ मात्स्ये ॥ अन्नप्राशे च सौमे च पुत्रोत्पत्तिनिमित्तके ॥ पुंसवे च निषेके च नववेश्मप्रवेशने ॥ वेदव्रतजलादीनां प्रतिष्ठायां तथैव च ॥ तीर्थयात्रा वृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितमिति ॥ अत्र पुत्रोत्पत्तिनिमित्ते नैमित्तिकं श्राद्धान्तरं विधीयते ॥ नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकं पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैरिति मार्कंडेयपुराणवाक्ये: नैमित्तिकः समशब्दाभ्यां श्राद्धस्य जातकर्म तुल्यत्वावगमेनांगत्वायोगात् ॥ वेदव्रतान्याग्नेयादीनि ॥ वृषोत्सर्गे तु प्रथमवर्षानन्तरं कार्त्तिक्यादिकाले ॥ काम्ये प्रयोगे क्रियमाणे वृद्धिश्राद्धं ॥ नतु कृतसपिंडीकरणस्याकृतसपिंडीकरणस्य च प्रथमसंवत्सराभ्यन्तरे वृद्धिश्राद्धमिति हरिहरभाष्ये स्पष्टं ॥ ब्राह्मे ॥ वेदव्रतेषु चाधाने यज्ञपुंसवनेषु च ॥ नवान्नभोजने स्नाने ऊढायाः प्रथमर्त्तवे ॥ देवारामतडागादिप्रतिष्ठाद्युत्सवेषु च ॥ राज्याभिषेके बालान्नभोजने वृद्धसंज्ञकान् ॥ वनस्थाद्याश्रमं गच्छन् पूर्वेद्युः सद्य एव वा ॥ पितृन् पूर्वोक्तविधिना तर्पयेत्कर्मसिद्धय इति ॥ कालदर्शे लौगाक्षिः ॥ नामान्न-

चौलगोदानसीमोपनयपुंसवे ॥ स्नानाधानविवाहेषु नांदीश्राद्धं विधियत इति ॥ गोदानं केशान्तः ॥ सीमः सीमन्तोन्नयनं ॥ उपनय उपनयनं ॥ स्नानं वेदं समाप्य स्नायादित्यादिना विहितं समावर्त्तनं ॥ आधानं गर्भाधानं ॥ वृद्धगार्ग्यः ॥ अग्न्याधानाभिषेकादाविष्टापूर्त्ते स्त्रिया ऋतौ ॥ वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथेति ॥ जाबालिः ॥ यज्ञोद्वाहप्रतिष्ठासु मेखलाबंधमोक्षयोः ॥ पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितमिति ॥ अत्र दानहेमाद्रिः ॥ तेन दर्शपूर्णमासादिष्वन्येषु वचनविशेषितेषु कर्मसु वृद्धिश्राद्धमाचरणीयं ॥ तुलापुरुषादीनां तु यागसंशब्दनाल्लोकपालावाहनमंत्रेषु च सर्वेषु ममाध्वरं पाहि यज्ञं रक्षस्वेत्यादियज्ञशब्दप्रयोगात्सत्यपि दानरूपत्वे यागधर्मेण भवितव्यमिति ॥ तत्रापि वृद्धिश्राद्धं कर्तव्यं ॥ एवमेव सहोमकेषु धान्यपर्वतादिष्वप्यनुसंधेयमित्याह ॥ कालदर्शे ॥ सीमन्तव्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च ॥ पुंसूत्यावसथप्रवेशनसुतस्यास्यावलोकाश्रमस्वीकारक्षितिपाभिषेकदयितार्त्तौ च नांदीमुखमिति ॥ आश्वलायनगृह्यकारिकायामपि ॥ स्यादाभ्युदयिकं श्राद्धं वृद्धिपूर्वेषु कर्मसु ॥ स्यात्पुंसवनसीमन्तचौलोपनयेष्विह ॥ विवाहे चानलाधेयप्रभृतिश्रौतकर्मसु ॥ इदं श्राद्धं प्रकुर्वीत द्विजोवृद्धिनिमित्तकं ॥ अन्यैः षोडशसंस्कारं श्रावण्यादिष्वपीष्यते ॥ वाप्याद्युपनादौ तु कुर्युः पूर्त्तनिमित्तकमिति ॥ अन्यैरित्युक्तसंस्कारेभ्योऽन्येषु जातकर्मादिषु श्रवणाकर्मादिषु च तदनावश्यकमिति ज्ञापनार्थमिति स्मृतिकौस्तुभे ॥ अत्र वानिष्टेति सामान्यवचनादेव विवाहादिष्वपि वृद्धिश्राद्धसिद्धौ तेषु कन्यापुत्रविवाहेष्वित्यादि पुनर्वचनमुपसंहारार्थं ॥ तेन विशेषवचनोपात्तेष्वेव कर्मसु वृद्धिश्राद्धं भवति नान्यत्रेति केचिदाहुः ॥ तदयुक्तं ॥ सामान्यवचनानर्थक्यापत्तेः॥ यत्र हि शाखान्तरगतत्वेन वा द्वारविशे संबंधप्रमाणेन वा सामान्यशास्त्रमप्यर्थवद्भवति तत्रैवोपसंहारो भवति ॥ पुरोडाशं चतुर्द्धा करोत्याग्नेयं चतुर्द्धा करोतीत्यादौ प्रकरणानारभ्याधीत साप्तदश्यवाक्यादौ च ॥ न चेह तथा संभवति स्मृतिपुराणादीनां सर्वेषां सर्वान्प्रतिप्रमाणत्वेन शाखान्तरन्यायाभावात् ॥ साक्षात्कर्मांगत्वेन तस्य चोभयत्रापि वाक्यायत्वेन सप्तदशन्यायाभावाच्च तेन केषुचित्पुनर्वचनं सामान्यवचनस्य प्रपंचमात्रं तत्रावश्यकत्वार्थं वा ॥ अत एव होमवैश्वदेवादिषु केषांचिद्वृद्धिश्राद्धानुष्ठानं केषांचिच्चानुष्ठानं ॥ येषामनुष्ठानं तद्विषयमेवेदं छंदोगपरिशिष्टे कात्यायनवचनं ॥ आधाने होमयोश्चैव वैश्वदेवे तथैवच॥ बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥ नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ॥ एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथगिति ॥ वैश्वदेवादिषु श्राद्धावृत्तिनिषेधादप्युपसंहारो न युक्तः ॥ उप-

संहारे तत्र श्राद्धस्यैवाप्रसक्तेः ॥ विष्णुपुराणे ॥ जातस्य जातकर्मादिक्रियाकांडमशेषतः ॥ पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकमिति ॥ जातकर्मादिक्रियाकांडमपत्यसंस्काराः पुत्रस्येति पुंस्त्वस्यानुवाद्यगतत्वेनाविवक्षितत्वात्कन्याया अपि भवति ॥ तच्च समंत्रकमेव ॥ मंत्रबाधे मानाभावात् ॥ यत्तु जातकर्मादिसंस्कारानुपक्रम्याह याज्ञवल्क्यः ॥ तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समंत्रक इति तत्प्रधानांगमंत्रबाधार्थं॥ यदि ह्यवभृथेन चरतीतिवत्तृतीयान्तेन सांगभावनामभिधाय तस्यां तूष्णीत्वं विधीयते ॥ ततः स्यादङ्गमंत्रबाधः ॥ इह तु यज्ञाथर्वणेवै काम्या इष्टयस्ता उंपांशुः कर्तव्या इत्यत्रेष्टीनामिव क्रियाणां प्रथमान्तपदोपात्तत्वात्प्रधान एव तूष्णीत्वविधिनांगेपि ॥ तेन कन्यानामकर्मादौ पुण्याहवाचनवृद्धिश्राद्धादिसमंत्रकमेव युक्तं ॥ नच नवैताः कर्णवेधांता मंत्रवर्जं क्रियाः स्त्रियः ॥ विवाहो मंत्रतस्तस्याः शूद्रस्यामंत्रतो दशेति व्यासवाक्ये शूद्रस्य दशेति॥ शूद्रस्य क्रियाप्रथमान्तपदोपत्त्वान्तत्रापि प्रधाने तूष्णीत्वंविध्यायपत्तेस्तेषां पुण्याहादि वाचनवृद्धिश्राद्धादिसमंत्रकस्यादिति वाच्यं ॥ शूद्रो वर्णश्चतुर्थोपि वर्णत्वाद्धर्ममर्हति ॥ वेदमंत्र स्वधा स्वाहा वषट्कारादिभिर्विनेति स्मृत्यापद्युवा एतच्छासनं यच्छूद्रस्तस्माच्छूद्रसमीपेनाध्येयमिति श्रुत्या च शूद्रसन्निधौ वेदमंत्रपाठनिषेधेन तत्संबंधि पुण्याहवाचनादौ वेदमंत्रपाठस्य सुतरां निषेधसिद्धः ॥ अतो न तत्र मंत्रप्रसक्तिः ॥ द्विजस्त्रीणां तु चूडाकरणे समंत्रको होमः ॥ तदाहाचार्यः ॥ जातकर्मादिचूडान्तं स्त्रीणां कार्यममंत्रकं ॥ होमकृत्यं तु पुंवत्स्यात्स्त्रीणी चूडाकृतावपीति तस्मात्तासां वचनाभावे प्रधानक्रियासु सर्वममंत्रकमेवेत्यलमनल्पजल्पेन नित्यकर्मसु प्रधानावृत्त्या प्राप्तायाः श्राद्धावृत्तेरपवादमाह छंदोगपरिशिष्टे कात्यायनः ॥ असकृद्यानि कर्माणि क्रियन्ते कर्मकारिभिः ॥ प्रतिप्रयोगे नैताः स्युर्मातरः श्राद्धमेव चेति॥ तेन पुनराधानादौ नाभ्युदयिकं ॥ द्वितीयविवाहानन्तरं क्रियमाणेषु पुनराधानादिषु तु भवत्येवाभ्युदयिकं ॥ तदुक्तं रेणुकारिकायां ॥ उद्वाहे पुनराधाने मातृश्राद्धं प्रवर्त्तते ॥ पश्चादौ मणिकाधाने महायज्ञे तथैव चेति ॥ पुनराधेये तु आभ्युदयिकं संप्रदायदेवयाज्ञिकादिभिर्न लिखितं॥ रामवाजपेयिभिस्तु पुनराधेये मातृपूजाभ्युदयिके इत्युक्तं प्रायश्चित्ताध्याये तत्काम्यपुनराधेयाभिप्रायं ॥ दर्शपूर्णमासस्यज्योतिष्टोममित्रविंदेष्ट्यादिनी कामनाभेदात् पुनः पुनरनुष्ठाने तु प्रतिप्रयोगमाभ्युदयिकावृत्तिर्भवत्येव ॥ सगुणस्यैव हि काम्यस्य कर्मणः फलजनकत्वात् ॥ अग्निहोत्रे त्वाभ्युदयिकं संप्रदायादिभिः कस्मादुपेक्षितमिति न विद्मः ॥ असकृत्क्रियमाणमध्ये आधानादिनवयज्ञान्तेषु विशेषमाह स एव ॥ आधानहोमयोश्चैव वैश्वदेवे तथैव च ॥ बलिकर्मणि दर्शे च पौर्णमासे त-

थैव च ॥ नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ॥ एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथगिति ॥ अत्र दर्शपौर्णमासपदाभ्यां पक्षादिषु विहितः स्थालीपाकोऽभिधीयते ॥ यद्यपि पारस्करगृह्ये पक्षादिषु विहिते स्थालीपाके दर्शपौर्णमासपदप्रयोगो नास्ति तथाप्यथ दर्शमासयोः संध्यां पौर्णमासीमुपवसेदिति छंदोगगृह्ये स्थालीपाके दर्शमासपूर्णमासपदाभ्यां स्थालीपाकाभिधानं ॥ अस्मिंश्च छंदोगगृह्ये पौर्णमामास्यामुपवासविधानादुपवासशब्दस्य च पूर्वां पौर्णमासीमुत्तरां वोपवसेदिति कात्यायनसूत्रे नियमपरत्वेन कर्कोपाध्यायादिभिर्भाष्यकारैर्व्याख्यातत्वादावसथ्याग्निमतोपि पर्वणि वपन व्रत्याशना दया नियमाः श्रौते विहिता भवन्ति ॥ अत प्रवसन्नोपवसेदिति छांदोग्ये ॥ नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतं ॥ शांखायनगृह्ये च प्रवासे उपवासनिषेधः ॥ न च छंदोगादिविषयमेतदिति वाच्यं ॥ परोक्तस्याविरोधिन उपादेयत्वात् ॥ शिष्टाचारोप्येवं ॥ एतेन गृह्याग्निमता पर्वणि वपनव्रत्याशनादिनियमो नास्त्यनभिधानादिति वदन्तो निरस्ताः ॥ अनाहिताग्नेर्नवप्राशनमित्यादिना विहितं नवप्राशनं नवयज्ञः ॥ आधानसायं प्रातर्होमादि नवयज्ञांतेषु कर्मसु न केवलं प्रतिप्रयोगं प्रतिकर्मापि श्राद्धं कर्त्तव्यं ॥ किन्त्वाधानादौ कृतेनैव श्राद्धेन सर्वेष्वेव कर्मसु श्राद्धं कृतं भवतीत्यर्थः ॥ एवं च श्रावण्यादिषु प्रतिकर्म श्राद्धमित्युक्तं भवति ॥ एवं चातुर्मास्यपशुबन्धज्योतिष्टोमादिकमपि प्रत्यब्दं कुर्वद्भिः प्रथमप्रयोग एव प्रतिकर्मादौ श्राद्धं कर्त्तव्यं ॥ असकृद्यानि कर्माणीति वचनात् ॥ अत एव संप्रदायशंकररामवाजपेयिदेवयाज्ञिकादिभिश्चातुर्मास्य निरूढपशुबंध ज्योतिष्टोमादिषु श्रौतकर्मसु प्रथमप्रयोगे वृद्धिश्राद्धमित्युक्तं ॥ एतच्च नारायणवृत्त्यनुसारेण श्लोकत्रयं व्याख्यातं ॥ आशार्कादयस्त्वन्यथा वर्णयन्ति ॥ आधाने होमयोश्चेत्यादिश्लोकद्वयेऽनुपात्तचातुर्मास्यादिष्वसकृदनुष्ठीयमानेषु श्राद्धमप्यसकृदेवानुष्ठेयं ॥ असकृद्यानि कर्माणि इत्यत्र सामान्यतो श्रुतस्य कर्मशब्दस्याधाने इत्यादि श्लोकद्वयोक्ताधानादिकर्म विशेषपरत्वेनोपसंहारात् ॥ तेनैतन्मतेऽयमर्थः ॥ एतेष्वाधानादिषु नवयज्ञान्तेषु कर्मस्वेकमेव प्रथमप्रयोग एव प्रतिकर्म श्राद्धं स्यान्न पृथक् पृथक् प्रतिप्रयोगं न स्यादिति ॥ श्लोकद्वयातिरिक्तेषु श्रवणाकर्मोपाकर्मसु गृह्योक्तेषु कर्मसु दर्शपूर्णमासचातुर्मास्यज्योतिष्टोमादिषु श्रौतेषु कर्मसु तु प्रतिप्रयोगं श्राद्धावृत्तिरिति तदयुक्तमित्यन्ये ॥ सामान्यविधिवैयर्थ्यापत्त्यैकस्यां स्मृत्यावुपसंहारानभ्युपगमात् ॥ अतश्च नारायणवृत्तिकृता कृतैव व्याख्या ज्यायसी॥ इमामेव व्याख्यामनुसृत्य श्रौतपद्धतिप्रणेतृभिः संप्रदायादिभिः सर्वैर्याज्ञिकैर्दर्शपूर्णमासाग्रयणचातुर्मास्यनिरूढपशुबंधज्योतिष्टोमादिषु कर्मसु प्रथमप्रयोगे

मातरः श्राद्धमित्युक्तं ॥ इदं चादाने होमयोश्चेत्यादि वाक्यमावसथ्याधानादि गृह्योक्तकर्मपरं ॥ अन्यथा वैश्वदेवबलिकर्मणोरंतः पाठानुपपत्तेः ॥ यत्तु वासुदेवहरिहरादिभिरावसथ्याधानादिषु नवयज्ञान्तेषु कर्मसु प्रतिकर्म प्रथमप्रयोगे श्राद्धमित्युक्तं ॥ तत्राधाने होमयोरित्यादि कात्यायनवाक्यस्याशार्कक्कतव्याख्यामूलमनिष्टेति सामान्यवाक्यं वा मूलं ॥ यत्तु स्मार्त्तपिंडपितृयज्ञारंभे वृद्धिश्राद्धं कर्त्तव्यमित्युक्तं गंगाधरपद्धतौ ॥ तन्न॥ नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते इति कात्यायनवाक्ये द्वितीयपादस्य हेतुवन्निगदतया प्रथमशेषत्वेन व्याख्यानात् ॥ आवसथ्याधानं दारकाले दायाद्यकाल एकेषामिति सूत्रे दायाद्यकाले वेति वाच्ये यदेकेषामिति सूत्रेणान्तशाखान्तरीयं कालान्तरं सूचयति ॥ तच्च प्रेते वा गृहपतौ परमेष्ठीकरणमिति गोभिलगृह्ये प्रेते वा गृहपतौ स्वयं ज्यायानिति शांखायनगृह्ये च विहितं ॥ तेन गृह्यपतिमरणोत्तरकाले क्रियमाणमावसथ्याधानं सपिंडीकरण सहितानि मासिकश्राद्धानि विहितकालापकर्षपूर्वकं विधाय ऊनाब्दिकश्राद्धान्तान्युनमासिकश्राद्धानि च स्वकालापकर्षपूर्वकं विधाय मातृपूजाभ्युदयिकपूर्वकं पुण्याहे कार्यं ॥ यथाहोशनाः ॥ ततः सपिंडीकरणं वार्षिके मृतवत्सरे ॥ आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरादिति ॥ शांखायनगृह्यकारिकाकारोपि रिक्थग्राही यथा ज्येष्ठः सपत्नीकोधिकारवान् ॥ प्रेते पितरि वा कुर्यात् ज्येष्ठः पुत्रोग्निधारणं ॥ सपिंडयित्वा पितरमविभक्तोनुजैरपीति केचिदाहुः ॥ अपरे त्वेवमाहुः ॥ गृहपतिमरणादेकादशे द्वादशे वाहन्यर्वागेकादशाहश्राद्धान्मातृपूजाभ्युदयिकश्राद्धवर्जमावसथ्याधानं कार्यं यथोक्तं पारस्करगृह्यकारिकायां एतद् गृहपतौ प्रेते कुर्यादेकादशेहनि॥ प्रागेवैकादशश्राद्धाद्वृद्धिश्राद्धविवर्जितं॥ एवं ज्येष्ठः समादध्यात्कनीयांश्च विवर्जयेत् ॥ एकादशेन्हि कुर्वीत द्वादशे वा विचक्षण इति ॥ अत्र च एतद् गृहपतौ प्रेते कुर्यादेकादशेहनि ॥ प्रागेवैकादशश्राद्धात्सद्यो जागरणादिकं ॥ न तत्पूर्वं यतः प्रोक्तः सपिंडनविधिः क्वचित् ॥ वृद्धिश्राद्धस्य लोपः स्यादुभयोरपि पक्षयोः॥ ज्येष्ठः कुर्यात्तथाधानं कनीयांश्च विवर्जयेत्॥ सैकादशेन्हि कुर्वीत द्वादशे वा विचक्षण इति छंदोगपरिशिष्टे कात्यायनवचनमूलं ॥ अस्यार्थः ॥ आधानपूर्वदिने रात्रौ यद्विहितमग्न्युपसमाधानरूप वसिष्टोक्तमग्निजागरणं तत्पूर्वदिनेऽशुत्वान्न कर्तव्यं ॥ किन्तु सद्य एवैतत्कुर्यादाधानं च तत्पूर्वमिति ॥ एकादशाहश्राद्धस्य लोप एव स्यात् ॥ यस्मादेकादशाहश्राद्धात्पूर्वं कर्तव्यत्वेन सपिंडनविधिः क्वचिदपि नोक्तः ॥ सपिंडीकरणात्पूर्वं च नाभ्युदयिकं ॥ निषेधादिति भावः ॥ एकादशाहेऽसंभवे द्वादशाहेप्येकादशाहश्राद्धं कार्यमित्युक्तं कौर्मे ॥ ॥ अत आह द्वादशे वा विचक्षण

इति ॥ तेनाहन्यपि प्रागेवैकादशश्राद्धादित्यनुसंधेयं ॥ यत्तु यदहर्वा वृद्धिरापद्येतेति कात्यायनसूत्रं वृद्धिश्राद्धनिमित्तभूते कर्ममात्रे उपस्थिते सति सपिंडीकरणापकर्षे विधायकं तदावसथ्याधानव्यतिरिक्तोपनयनादिसर्वकर्मविषयं बोध्यं यत्तु कर्कोपाध्यायैरुक्तं ॥ अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदिति मनुवचनं ॥ तदकृतावसथ्याधानाभ्युदयिकविषयमिति तद्दारकाले दायाद्यकाले वा क्रियमाणावसथ्याधानाभ्युदयिकविषयं बोध्यं न पुनः सपिंडीकरणापकर्षपूर्वकं क्रियमाणावसथ्याधानाभ्युदयिकविषयमिति॥ एवमुभयविधशास्त्रसद्भावादेवं व्यवस्थावाजसनेयिभिश्छंदोगैश्च प्रागेवैकादशश्राद्धादेकादशाहे द्वादशाहे वा अभ्युदयिकवर्जमावसथ्याधानं कार्यं ततो यथोक्तकाले सपिंडीकरणमिति ॥ अन्यैस्तु सपिंडीकरणापकर्षपूर्वकमावसथ्याधानं मातृपूजाभ्युदयिकं कृत्वा पुण्याहे कार्यमिति अन्येत्वेवमाहुः दारकालादौ कृतावसथ्याधानेन क्रियमाण श्रौताग्न्याधानविषयमाधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरादित्युशनसो वचनमिति ॥ अत एवोक्तं कर्कोपाध्यायैः ॥ उक्तेन न्यायेनाऽनाहिताग्निनापि चाभ्युदयिकं कुर्वता इदं पूर्वमेव कर्त्तव्यमिति ॥ अनाहिताग्निर्गृह्याग्निमान् ॥ अस्मिन्पक्षे गृहपतिमरणादेकादशाहे द्वादशाहे वा मातृपूजाभ्युदयिकरहितमावसथ्याधानं सर्वेषां भवतीति दिक् ॥ अनिष्ट्वा तु पितॄन् श्राद्धे न कुर्यात्कर्म वैदिकमित्यादिभिः पूर्वोदाहृतैः सामान्यवचनैर्वैदिककर्ममात्रे प्राप्तस्य वृद्धिश्राद्धस्य कर्मविशेषे निषेधमाह छंदोगपरिशिष्टे कात्यायनः ॥ नाष्टकासु भवेच्छ्राद्धं न श्राधधे श्राद्धमिष्यते ॥ न सोष्यन्ती जातकर्म प्रोषिता गतकर्मस्विति ॥ अस्यार्थः ॥ ऊर्ध्वमाग्रहायण्यास्तिस्रोष्टका इत्यादिना विहितअष्टकाः श्राद्धपार्वणादि ( पिंडपितृयज्ञान्वाहार्यादौ ) केचित् द्वितीयपादस्य हेतुवन्निगदतया प्रथमशेषत्वेन व्याख्यानं कुर्वन्ति ॥ सोष्यन्तीमद्भिरभ्युक्षत्येव तु दशमास्य इत्यादिना प्रसवात्पूर्वं विहितं कर्मजातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोतीत्यादिना विहितं जातकर्म ॥ प्रोष्येत्यगृहानुपतिष्ठत इत्यादिना विहितं प्रोषितागतपितृकर्तृकं कर्म केचित्विदं कात्यायनवचो नित्यानुवादकमेव न निषेधकं ॥ प्राप्त्यभावादित्याहुः ॥ तन्न ॥ सामान्यवाक्यैः पूर्वोक्तैरेव श्राद्धस्य प्राप्तत्वात्प्राप्तिपूर्वके हि निषेधे संभवति सति नित्यानुवादकल्पनाया अन्यायत्वात्सामान्यवाक्यानां विशेषवाक्यैरुपसंहारस्य सामान्यवाक्यवैयर्थ्यापत्या पूर्वं निरस्तत्वाच्च ॥ अयं च जातकर्मांगत्वेन वृद्धिश्राद्धनिषेधश्छंदोगमात्रविषयस्तत्परिशिष्टगतत्वादिति समयोद्योते ॥ तेनान्येषां तत्रापि तद्भवत्येव॥ तथाच हेमाद्रौ वृद्धिश्राद्धं तु कर्त्तव्यं जातकर्मादिके युवा इति ॥ आश्वलायनगृह्य-

कारिकायामपि ॥ अन्यैः षोडशसंस्कारश्रावण्यादिष्वपीष्यत इति ॥ युग्मान् वृद्धिपूर्तेष्वयुग्मानितरेष्वित्याश्वलायनगृह्यसूत्रव्याख्यावसरे वृत्तिग्रंथेपि ॥ अन्ये च षोडशसंस्कारा वृध्धिश्राद्धविषय इति ॥ जातकर्मणः षोडशसंस्कारांतर्गतत्वात् ॥ अत एव वासुदेवरेणुकहरिहरादिभिर्जातकर्माणि मातृपूजापूर्वकमाभ्युदयिकं श्राध्धं विधायेत्युक्तं ॥ पुत्रजन्मनिमित्तकं पुरुषार्थमाभ्युदयिकं तु ततः पूर्वं भवत्येव ॥ एवं पृथक् श्राद्धद्वयासंभवे तु पुत्रजननंनिमित्तं जातकर्मांगभूतं चाभ्युदयिकं तंत्रेण कार्यं ॥ यदा तु जातकर्मांगत्वेन वृद्धिश्राद्धनिषेधः कात्यायनेनाभिहितत्वादविरुद्धत्वाच्च वाजसनेयिभिरप्यनुसर्त्तव्यस्तदा तु यज्जातकर्मणि मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं विधायेति वासुदेवरेणुकहरिहरादिभिरुक्तं तन्नैमितिकं परं व्याख्येयं॥ निषेधस्य जातकर्मांगश्राद्धपरत्वेन नैमित्तिकश्राद्धपरत्वाभावात् ॥ ततश्च पुत्रजननिमित्तकमाभ्युदयिकश्राद्धं करिष्य इत्येव संकल्पः ॥ छंदोगपरिशिष्टे कात्यायनः ॥ विवाहादिकर्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते ( ध्रुवदर्शन समशनीययानारोहणरथाक्षभंगगृहप्रवेशचतुर्थीकर्मपर्यन्तो विवाहः ) विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नादौ कर्मणः कर्मणः स्यादिति॥ विवाह आदिर्यस्य गर्भाधानमन्ते यस्य कर्मगणस्य श्रुतवन्तः स्म ॥ अत्र कर्मगणे विवाहादावेकमेव श्राद्धं कुर्यान्न प्रतिकर्मादौ ॥ एकेनैव कृतेन श्राद्धेन सर्वाण्येतानि श्राद्धवन्तीति ॥ तेन गृहप्रवेशयानारोहणरथाक्षभंगचतुर्थीकर्मगर्भाधानेषु न वृद्धिश्राद्धं ॥ विवाहादिगणे पठितत्वात् ॥ रेणुकारिकायां तु ॥ तेन नैमित्तिकत्वाच्च वृद्धिश्राद्धं भवेदिहेति रथाक्षभंगादिनिमित्ते विहिते नैमित्तिके कर्मणि वृद्धिश्राद्धमुक्तं ॥ गर्भाधानपुंसवनसीमन्तोन्नयनेषु तु वाजसनेयिभिः कर्मांगश्राद्धं कार्यं॥ निषेककाले ( गर्भाधानकालः ) सोमे च सीमन्तोन्नयने तथा ॥ ज्ञेयं पुंसवने श्राद्धं कर्मांगवृद्धिवत्कृतमिति हेमाद्रौ पारस्करवचनात् ॥ मातृपूजायामुपदर्शितं श्राद्धकाशिकाकारोदाहृतन्यायाच्च ॥ यत्तु गर्गवासुदेवहरिहरादिभिर्गर्भाधानादिषु त्रिषु संस्कारेषु वृद्धिश्राद्धमुक्तं तत्कर्मांगवृद्धिश्राद्धयोर्नेतिभेदाद्वृद्धिशब्देनैव कर्मांगमुक्तमिति ध्येयं ॥ तथाच गर्भाधानादिषु त्रिषु संस्कारेषु कर्मांगश्राद्धं करिष्ये इति संकल्पः ॥ एवं सोमयागेपि॥ यदा तु नारायणवृत्तिकृता ॥ अत एव भविष्यपुराणमित्युक्त्वा निषेककाले सोमे चेति वाक्योदाहरणान्नेदं पारस्करवचनं ॥ तदा तु कर्मांगवृद्धिश्राद्धयोर्विकल्पः विवाहादिकर्मगण इति कात्यायनवचनं छंदोगविषयं ॥ कात्यायनोक्तत्वाद्वाजसनेयिविषयमपीति केचित् ॥ लांगलयोजने सीतायज्ञे च प्रतिप्रयोगं श्राध्धावृत्तिः॥ तदुक्तं छंदोगपरिशिष्टे कात्यायनेन॥ हलाभियोगादिषु ( हलयोजनादिषु ) तु षट्सु कुर्यात् पृथक् पृथ-

क् ॥ प्रतिप्रयोगमन्येषामादावेकं तु कारयेदिति हलाभियोगसीतायज्ञखलयज्ञ-प्रवयणप्रलवणपर्ययणेष्विति छंदोगगृह्ये हलाभियोगादयः प्रसिद्धाः ॥ तेषु प्रति-प्रयोगं श्राद्धं वासुदेवरेणुकहरिहरादयस्तु प्रथमप्रयोगे श्राद्धमित्याहुः ॥ अन्येषां श्रवणाकर्मादिनामादावेकं कारयेन्न प्रतिप्रयोगमित्यर्थः ॥ यदात्वेकस्य संस्कार्यस्य युगपदेककाले नामकरणाद्यनेके संस्काराः क्रियन्ते तदैकमेव श्राद्धं ॥ तदाह तत्रैव कात्यायनः ॥ गणशः ( समुदायेन ) क्रियमाणे तु मातृभ्यः पूजनं सकृत् ॥ सकृ-देव भवेच्छ्राद्धमादौ न पृथगादिष्विति ॥ मातृभ्य इति चतुर्थी षष्ठ्यर्थे ॥ अत्रादौ यज्जन्मनिमित्तं यच्च संस्कारादिषु विहितं तत्सकृदेव कार्यं न पृथगित्यन्वयः तत-श्च पुत्रजनननिमित्तं चौलान्तसंस्कारांगं चाभ्युदयिकं तंत्रेण करिष्य इति संकल्पः॥ एवं यमयोः संस्कारेपि देशकालकर्त्रैक्यादिति निर्णयसिंधौ कमलाकरभट्टाः॥ केचित्तु योगसिद्धाधिकरणन्यायेनैकया सामग्र्या एकमेव कार्यं मन्यते ॥ एवं च संस्कार्य-निष्ठानामुपनयनविवाहादिजन्यपरमापूर्वाणांसांगत्वार्थेपृथगेवाभ्युदयिकमित्याहुः॥गु-रवस्तु नह्यंगमित्येवावर्त्तनीयं ॥ तथात्वे प्रयाजादीनामपि प्रतिप्रधानमावृत्यापत्तेः॥ अगृह्यमाणविशेषत्वात्तंत्रत्वं तु तद्वदेवात्राप्यविशिष्टं ॥ तेन यथाऽनेकयूपस्थलेयं देशं प्राप्तः सन्नंतिकदेशं प्राप्त इति बुद्धिर्भवति तत्र क्रियमाणापूपाहुतिरगृह्यमाणविशेष-त्वात्तंत्रं तथात्रापीत्याहुः ॥ रेणुकारिकायां तु॥ इह श्राद्धादिकं सर्वं त्यक्तात्किभेदे-भवेत्पृथगित्युक्तम् ॥ इति ॥

## ॥ अथ कर्मारंभप्रतिबंधकनिमित्तानिर्णयः ॥

तत्र नारदः ॥ सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ॥ पंचाद्धात्प्रागथो-र्ध्वं तु गर्भिण्यामपि कारयेत् ॥ सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यत इति ॥ अत एव कैश्चिदुदाहृतस्य सूनोर्मातरि गर्भिण्यां मौंजीचूडेन कारयेदित्यस्य वचसः समूलत्वेपि प्रत्येकमेव निषेधो न सहितयोः पंचाद्धानि पूर्यन्ते यस्मिन्दिने तत्पं-चाद्धं ॥ प्रकारान्तरेण निषेधापवादमाह वशिष्टः ॥ गर्भे मातुः कुमारस्य न कुर्या-च्चौलकर्म तु ॥ पंचमासादधः कुर्यादत ऊर्ध्वं न कारयेदिति पंचमासा गर्भसंबंधिनः पूर्यन्ते यस्मिन्दिने तत्पंचमासं ॥ प्रकारान्तरेण चौलनिषेधमाह कात्यायनः ॥ कुले ऋतुत्रयादर्वाग् मंडनान्नतु मुंडनं ॥ प्रवेशान्निर्गमो नेष्टो न कुर्यान्मंगलत्रयमिति ॥ ऋतुत्रयं षण्मासाः ॥ कुलं त्रिपुरुषं ॥ पुरुषत्रयपर्यन्तं प्रतिकुलं स्वगोत्रिणं ॥ प्रवेशा-न्निर्गमस्तद्वत्तथा मंडनमुंडने इति मेधातिथ्युक्तेः ॥ मुंडनादिस्वरूपमप्याह कात्या-यनः ॥ पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ॥ मुंडनं चौलमित्युक्तं व्रतोद्वाहौ

तु मंडनं॥ चौलं मुंडनमेवोक्तं॥ वर्जयेत्वरणात्परं वरणात्तदुपक्रमकाद्वाग्दानादित्यर्थः॥ मौंजी चोभयतः कार्या यतो मौंजी न मुंडनमिति ॥ उभयतो विवाहात्प्रागूर्ध्वं चेत्यर्थः ॥ वृद्धवसिष्ठः ॥ एकमातृजयोरेकवत्सरे पुरुषद्वयोः ॥ न समानक्रियां कुर्यान्मातृभेदे विधीयत इति ॥ तथा कुले चतुःपुरुषपर्यन्तं सपिंडीकरणान्तप्रेतश्राद्धानुष्ठानात्प्राक् मांगलिकापरपर्योपमाभ्युदयिकं कर्म न कार्यमित्याह मेधातिथिः ॥ प्रेतकर्माण्यनिर्वर्त्त्य चरेन्नाभ्युदयक्रियां ॥ आचतुर्थं ततः पुंसि पंचमे शुभदं भवेदिति॥ अत एवानिवर्त्त्येत्यत्र समानकर्तृकत्वं न विवक्षितं ॥ यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यत इतिवत् ॥ मातरि रजस्वलायां वृद्धगार्ग्यः ॥ विवाहव्रतचूडासु माता यदि रजस्वला ॥ तस्याः शुद्धेः परं कार्यं मांगल्यं मनुरब्रवीदिति माधवीयादौ प्रारंभात्प्राग्विवाहस्य माता यदि रजस्वला ॥ निवृत्तिस्तस्य कर्त्तव्या सहत्वश्रुतिचोदनादिति ॥ आरंभोत्तरं रजोदर्शनसूतकादौ तु न विवाहादिप्रतिबंधः ॥ विवाहव्रतयज्ञेषु श्राद्धे होमेर्चने जपे॥ आरब्धे सूतकं न स्यादनारब्धे तु सूतकं॥ प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः नांदीश्राद्धं विवाहादौ श्राद्धपाकपरिक्रियेति विष्णूक्तेः ॥ वरणं तु मधुपर्कान्तं ज्ञेयं ॥ गृहीतमधुपर्कस्य यजमानाच्च ऋत्विज इत्युक्तेः ॥ एतच्च वरणवत्स्वेव ॥ अवरणवत्स्वाधानेष्टि पशुबंधादिषु तु स्वीयाद्यपदार्थप्रवर्त्तनमेवारंभः॥ तथाच दर्शपूर्णमासयोरवृतस्य होतुः सामिधेनीषु प्रवृत्तस्याशौचाभावः ॥ कन्यापितरं प्रतिदानमेव विवाहः ॥ वरं प्रति तु होमपाणिग्रहणादि ॥ पारब्धपाके श्राद्धकर्त्तुः ॥ कृतनिमंत्रणे श्राद्धे तु श्राद्धभोक्तुरिति व्यवस्थेति कालतत्त्वविवेचनकारादयः ॥ शंकरभट्टकृतधर्मप्रकाशेतु ॥ तत्तत्स्मृतिषु पाकनिष्पत्तिकृतसंकल्पता निमंत्राणानां त्रयाणामपि आशौचाभावनिमित्तत्वोक्ते निमित्तत्रयसमुच्चय एव श्राद्धे नाशौचं॥ तथैव शिष्टसमाचारादित्युक्तं॥ रजोदर्शनस्य नांदीश्राद्धोत्तरमुत्पत्तौ ततः पूर्वोत्पत्तावपि मुहूर्तान्तरालाभे श्रीपूजनादिकां शान्तिं कृत्वा तदैव चौलादि कार्यं ॥ यथोक्तं कारिकानिबंधे ॥ सूतिकोदक्ययोः ( उदकी रजस्वलेति प्रसिद्धिः ) शुद्ध्यै गां दद्याद्धोमपूर्वकं ॥ प्राप्ते कर्मणि श्रद्धा स्यादितरस्मिन्न शुद्ध्यति॥ अलाभे सुमुहूर्त्तस्य रजोदोषे ह्युपस्थिते॥ श्रियं संपूज्य तत्कुर्यात् वृत्रहत्याभयंकरीं॥ हैमीं माषमितां पद्मां श्रीसूक्तविधिनार्चयेत् ॥ प्रत्यृचं पायसं हुत्वाभिषिच्य शुभमाचरेदिति ॥ श्लोकभेदेन प्राप्ता॥ यदोक्तारंभस्य मुहूर्त्तान्तरालाभस्य च श्रवणान्नापरस्परसापेक्षत्वं रजोदर्शनादिसंभावनायां नांदीश्राद्धस्यापकृष्यानुष्ठानेप्यवधिरुक्तः प्रयोगरत्ने ॥ एकविंशत्यहर्यज्ञे विवाहे दशवासराः ॥ त्रिषट्चौलोपनयने नांदीश्राद्धं विधीयत इति

मुहूर्तान्तरालाभे सामग्र्यां च कृतायां सूतकिनोप्यधिकारोपायमाह पारिजाते विष्णुः॥ अनारब्धविशुद्ध्यर्थं कूष्मांडैर्जुहुयाद् घृतं ॥ गां दद्यात् पंचगव्याशी ततः शुद्ध्यति सूतकी ॥ ततः शुद्ध्यतीति पुनरुक्तिर्विवाहाद्युपयोगिपाकपरिवेषणादावपि शुद्धिज्ञापनार्थं ॥ गां पयस्विनीं दद्यात् ॥ संकटे समनुप्राप्ते सूतके समुपस्थिते ॥ कूष्मांडीभिर्घृतं हुत्वा गां च दद्यात्पयस्विनीं ॥ चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत्॥ यदैव सूतकप्राप्तिस्तदैवाभ्युदयक्रियेति संग्रहोक्तेः ॥ स्मृतिकौस्तुभे चौलप्रसंगे तु ॥ आरंभोत्तरं सूतके प्राप्ते विशेषः संग्रहे इत्युक्त्वा कूष्मांडीभिर्घृतं हुत्वेति संग्रहवाक्यमुपन्यस्तं ॥ एवं शुद्धिपूर्वकं विवाहाद्यनुष्ठाने तदंगत्वेन संकल्पितान्नभोजने न दोष इति बृहस्पतिनोक्तं ॥ विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके ॥ पूर्वसंकल्पितान्नेषु न दोषः परिकीर्त्तित इति ॥ मृतसूतकमध्ये विवाहाद्यनुष्ठाने उक्तशुद्धिपूर्वकमारब्धे इत्यर्थः ॥ नांदीश्राद्धोत्तरं सूतकादौ विवाहारंभोत्तरमपि संकल्पान्ने विशेषः ॥ षट्त्रिंशन्मते पूर्वार्द्धं पूर्ववत् ॥ परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैरिति॥ विवाहादिमध्ये सूतकादिप्राप्तावित्यर्थः॥ पूर्वसंकल्पितान्नभोजनसमये सूतकादौ तु विशेषस्तत्रैव ॥ भुंजानेषु तु विप्रेषु त्वन्तरा मृतसूतके ॥ अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृता इति॥ भोक्तृभिर्भुक्तशेषस्त्याज्यः॥पक्वशेषः सूतकिभिर्भोक्तव्य इत्याशयः॥

"कन्यायाः" रजोदर्शने तु विवाहात्पूर्वं जाते विवाहयोग्यतासिद्ध्यर्थमुपायमाह आश्वलायनः ॥ पिता ऋतून् स्वपुत्र्यास्तु गणयेदादितः सुधीः ॥ दानावधिगृहे यत्नात्पालयेच्च रजोवतीम् ॥ दद्यात्तदृतु संख्यागाः शक्तः कन्या पिता यदि ॥ दातव्यैकापि यत्नेन दाने तस्या यथाविधिः ॥ दद्याद्वा ब्राह्मणेष्वन्नमति निःस्वः सदक्षिणं ॥ तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥ उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ॥ अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणं ॥ तामुद्वहन्वरश्चापि कूष्मांडैर्जुहुयात् द्विज इति ॥ तस्याः कन्याया दानं कर्त्तव्ये यथाविधि सुवर्णशृंगादिगोदानविधिनेत्यर्थः ॥ वरायेति उक्तप्रकाराणामन्यतमेन दाता कन्यादाने योग्यो भवतीत्यर्थः ॥ उपोष्येति श्लोकेन दृष्टरजस्कन्याया उपवासत्रयान्ते गव्यपयः पानपूर्वकं अदृष्टरजसे कुमार्यै सरत्नभूषणदानेन विवाहयोग्यतोच्यते ॥ तामुद्वहन्निति वरस्य कूष्मांडहोमेन तदुद्वाहयोग्यतेति बोद्धव्यं ॥ होमकाले रजोदर्शने तूक्तं यज्ञपार्श्वे ॥ विवाहे वितते तंत्रे होमकाल उपस्थिते॥ कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥ स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ॥ युंजानमाहूतिं हुत्वा ततस्तंत्रं प्रवर्त्तयेदिति ॥ प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयं ॥ नचै-

कजन्ययोः पुंसो एकजन्ये च कन्यके इति ॥ स्वकन्या यस्य पुत्राय दत्ता तत्कन्यायाः स्वपुत्रेण परिणयनं प्रत्युद्वाहः ॥ अत्रोत्तरार्द्धगतनिषेधापवादः पारिजाते स्मृत्यन्तरे ॥ एकोदरी करतलग्रहणं यदि स्यादेकोदरस्थवरयोर्जलनाशनं च ॥ एकाद्धके तु विधवा नितरां तु कन्या नद्यन्तरेपि शुभदं पृथुशैलरोध इति ॥ विवाहस्त्वेकजन्यानामेकस्मिन्नुदये जले ॥ नाशं करोत्येकवर्षे स्यादेका विधवा तयोरिति उदयालग्नमिति पारिजाते गार्गः ॥ भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ॥ न जातु मंगलं कुर्यादेकस्मिन्मंडपेऽहनि ॥ पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयं ॥ पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरय इति ॥ एतद्वचनद्वयं भिन्नमातृकविषयमिति पारिजाते ज्योतिर्निबंधे च ॥ सामान्यप्रवृत्तमपि एकोदरप्रसूतानामेकस्मिन्वत्सरे यदि विवाहं नैव कुर्वीत कुर्वन्ति मुनयोन्यथेति सारावलीवचनेन समानोदरप्रसूतविषयनिषेधस्य प्राप्तत्वात्तद्भिन्नविषयं भवतीति तदाशयः ॥ उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं हि जातु ॥ यावच्चतुर्थी दिनमत्र सर्वं समाप्य चान्योद्वहनं विदध्यादिति कपर्दिवचोप्येवं भिन्नोदरविषयं ॥ अत्रेति चतुर्थी दिन इत्यर्थः ॥ यत्तु ज्योतिर्निबंधे मेधातिथिः पृथक् मातृजयोः कार्यो विवाहश्चैकवासरे ॥ एकस्मिन्मंडपे कार्यः पृथग्वेदिकयोस्तथा ॥ पुष्पपट्टिकयोः कार्यं दर्शनं च शिरस्थयोः ॥ भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेदिति तत्कर्तृभेदाभिप्रायं ॥ कार्य इति कर्मप्रत्ययं द्वाभ्यां त्रिभिरित्यन्वयसंभवात् ॥ उदाहृतगर्गवाक्ययोः कपर्दिवाक्ये चैकं कर्त्तारं प्रतिनिषेधो ज्ञाप्यते ॥ कुर्यात्कुर्वीत पिता विदध्यादित्यादिशब्दैस्तथैव प्रतीतेः ॥ अतः भ्रद्वाभ्यां कर्तृभ्यामेकस्मिन्नपि लग्ने एकस्मिन्नपि गृहे भिन्नोदरयोर्विवाहः कार्यः ॥ कर्तृभेदादेव मंडपप्रतिष्ठादिभेदाः प्रतीयते ॥ एककर्त्ता तु दिनचतुष्टयेन पूर्वं विवाहं समाप्योत्तरं कुर्यात् ॥ अपि संकटेत्वेकस्मिन्नपि दिने मंडपदेवताप्रतिष्ठाद्यभेदेन वेति व्यवस्था बोध्या ॥ वक्ष्यमाणवसिष्ठवाक्योत्तरार्द्धस्य भिन्नोदरसाधारणत्वात् ॥ मदनरत्ने नारदः ॥ मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वा तु मंगलं ॥ ऋतुत्रयं पुनर्यावन्न कुर्याल्लघुमंगलं ॥ एकमातृजयोरेकवत्सरे पुरुषस्त्रियो न समानक्रियां कुर्यान्मातृभेदे विधीयत इति ॥ ऋतुत्रयस्य मध्ये चेदन्याद्बस्य प्रवेशनं तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यत इति ॥ अत्रत्येन तु शब्देन विवाहभिन्नमेकोदरविषयं मंगलद्वयमब्दभेदेऽपि न भवतीति ज्ञाप्यते ॥ तत्रैव मिहिरस्तु ॥ पुत्रोपनयनादूर्ध्वं षण्मासाभ्यन्तरे तथा ॥ पुत्र्युद्वाहनं कुर्वीत विवाहाद्व्रतबंधनमिति ॥ यमलयोस्तु एकस्मिन्वत्सरे चैकवासरे मंडपे तथा कर्त्तव्यं मंगलं स्वस्रोर्भ्रात्रोर्यमलजातयोरिति विशेषः ॥ तथा च मदनरत्ने वसिष्ठः ॥ द्विशोभनं

त्वेकगृहेपि नष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु ॥ आवश्यकं शोभनमुत्सुको वा द्वारेथवाचार्यविभेदतो वेति ॥ एकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् ॥ भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीदिति ॥ शातातपग्रहणेन भिन्नोदरविषयाग्नित्रयनिषेधस्यानित्यता ज्ञाप्यते ॥ अथ प्रतिकुलविधिः कृष्णभट्टीये ॥ वधू वरार्थे घटिते सुनिश्चिते वरस्य गेहेप्यथ कन्यकायाः ॥ म्रियेत कश्चिन्मनुजोथ नारी तदा न कुर्युः खलु मंडनं ते॥ वाग् निश्चये कृते पश्चात् पितरौ निधनं गतौ॥ तयोस्तत्प्रतिकूलं स्यान्नान्येषां तु कदाचनेति वृद्धवसिष्ठः ॥ वरवध्वोः पिता माता पितृव्यश्च सहोदरः ॥ एतेषां प्रतिकूलं स्यान्महाविघ्नप्रदं भवेत् ॥ पिता पितामहश्चैव माता चैव पितामही ॥ पितृव्यः स्त्रीसुतो भ्राता भगिनी वाऽविवाहिता॥ एभिरेव विपन्नैश्च प्रतिकूलं बुधैः स्मृतं ॥ अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेदिति ॥ मांडव्यः ॥ वाग्दानानन्तरं माता पिता भ्राता विपद्यते ॥ विवाहो नैव कर्त्तव्यः स्ववंशहीतमिच्छतेति ॥ अथ संकटे प्रवृत्तिप्रकारमाह मेधातिथिः ॥ वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः॥ तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत्॥ पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणां ॥ प्रवेशान्निर्गमस्तद्वत्तथामंडनमुंडने ॥ प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियां॥ आचतुर्थं ततः पुंसि पंचमे शुभदं भवेदिति ॥ स्मृतिरत्नावल्यां॥ पितुरद्धमिहाशौचं तदर्द्धंमातुरेव च ॥ मासत्रयं तु भार्यायास्तदर्द्धं भ्रातृपुत्रयोः ॥ अन्येषां तु सपिंडानामाशौचं माससंमितं ॥ तदन्ते शांतिकं कृत्वा ततो लग्नं विधीयत इति ॥ ज्योतिः प्रकाशे ॥ प्रतिकूलेपि कर्त्तव्यो विवाहो मासमंतरा ॥ शान्ति विधाय गां दत्वा वाग्दानादिचरेत्पुनरिति ॥ स्मृत्यन्तरे प्रतिकूलेन कर्तव्यं लग्नं यावदृतुत्रयं ॥ प्रतिकूलेपि कर्तव्यं केप्याहुर्बहुसंप्लवे ॥ प्रतिकूले सपिंडस्य मासमेकं विवर्जयेत् ॥ विवाहस्तु ततः पश्चात्तयोरेव विधीयत इति ज्योतिःसारसागरे ॥ दुर्भिक्षे राष्ट्रभंगे च पित्रोर्वा प्राणसंशये ॥ प्रौढायामपि कन्यायां नानुकूलं प्रतीक्ष्यत इति ॥ अन्यत्रापि ॥ दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च ॥ उदासीनस्थित स्यापि प्रातिकूल्यं न विद्यते ॥ संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना ॥ शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥ अकृत्वा शान्तिकं यस्तु निषिद्धे सति दारुणे ॥ प्रकरोति शुभं कर्म विघ्नस्तस्य पदे पदे इति ॥ वृद्धवसिष्ठः ॥ प्रतिकूले तु संप्राप्ते विवाहं नैव कारयेत् ॥ अन्ते दोषविनाशाय कुर्याच्छांतिमिमां शुभां॥ श्रिये जात इति श्रियं ॥ इदं विष्णुरिति विष्णुं गौरिर्मिमायेति गौरीं त्र्यंबकमिति त्र्यंबकं परं मृत्योरिति यमं ॥ पूजयित्वा तिलाज्यं च हुनेद्दश्योत्तरं शतं ॥ ॐ भूः

स्वाहा मृत्युर्नश्यंतां स्नुषायै सुखं वर्द्धन्तां स्वाहा ॥ ततो होमं समाप्याथ गोद्वयं दक्षिणा भवेदिति॥ स्मृतिचंद्रिकायां॥ कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः॥ तदा न मंगलं कार्यं नारीवैधव्यदं ध्रुवमिति ॥ वाग् दानानन्तरं यत्र कुलयोः कस्यचिन्मृत्तिः ॥ तदोद्वाहो नैव कार्यो स्ववंशक्षयदोषत इति ॥ अत्र यद्यपि म्रियेत कश्चिदिति मृत्युर्भवति कस्यचिदिति चाविशेषेणोक्तं तथापि पितामहादीनामिव मातामहादीनामपि मरणस्य प्रतिकूलदोषनिमित्तत्वेन क्वचिदकीर्त्तनादविवाहिताया भगिन्या इव विवाहिताया मरणस्य तथात्वानुक्तेर्मेधातिथिवाक्ये स्वगोत्रिणामिति चंद्रिकावाक्ये मर्त्यस्य गोत्रिण इति च कीर्त्तनाद् वध्वा वरस्य वा सगोत्रसपिंडेषु त्रिपुरुषान्तर्गते मर्त्ये मृते प्रतिकूलदोष इति मंतव्यं स्त्री च वरस्य द्वितीयादिविवाहसमये पूर्वोढा सुतस्तस्यां पूर्वोत्पन्नः ॥ एतत्पौत्रोपलक्षणं एवं पितृव्यग्रहणं तत्पुत्रस्य ॥ एवं च वरमारभ्य जनकत्रिपुरुषीजन्य त्रिपुरुषीकूटस्थमारभ्य संतानभेदे च त्रिपुरुष्यत्र बोद्धव्या वधूवरयोः समानगृहे तन्मरणे कंचित्कालं प्रतीक्ष्यैव विवाह इति तदा न कुर्युरित्यादिशब्दैर्बोध्यते ॥ तयोस्तत्प्रतिकूलं स्यादिति कालप्रतीक्षाशान्तिभ्यामसमाधेयो दोषो द्वयोर्युगपन्मरणज इत्यर्थः ॥ अत एवोक्त नान्येषां तु कदाचनेति ॥ अन्येषां सपिंडानां तयोरप्येकैकमरणजस्तु समाधेय इत्याशयः ॥ वृद्धवसिष्ठवाक्ये चतुर्णां मरणस्य महीविघ्नकरत्वकथनं तत्र प्रतिक्षा सहिता केवला वा विनायकशान्तिकथनार्थं ॥ अत एव तद्विधिवाक्यशेषे शान्त्यकरणे पदे पद इति विघ्नस्य महत्वं प्रदर्शितं ॥ एभिरेव विपन्नैरिति कालप्रतिक्षासहिताया: श्रीपूजनादिशांतिनिर्मितमेतन्मरणशरणमेवेत्याशयः ॥ अत एव मांडव्यवाक्येनैव कर्त्तव्यो निमित्तानन्तरमिति व्याख्येयं ॥ एवं वृद्धवसिष्ठवाक्यमपि ॥ प्रतीक्षा च सामान्यतः॥ संवत्सरमृतुत्रयं मासमात्रं वेति पक्षत्रयं मेधातिथिवाक्यसहितस्मृत्यन्तरवाक्याद्बोद्धव्यं ॥ स्मृतिरत्नावलीवाक्ये तु आशौचशब्देन प्रतिकूलकृतं विवाहानधिकारमात्रप्रतीक्षा तात्पर्यकं बोद्धव्यं ॥ तत्र पितुर्मरणे अब्दप्रतीक्षया मात्रादिमरणनिमित्तं तदर्द्धादिप्रतीक्षायास्तुल्यकल्पत्वेनोक्तत्वात्पितुर्मरणे संकटतारतम्ये न पक्षत्रयं ॥ मातुर्मरणे तदर्द्धं मासमात्रं वेति पक्षद्वयं ॥ एवं भार्यामरणे मासत्रयं मासमात्रं वेति भ्रातृमरणे पुत्रमरणे च सार्द्धमासं मासमात्रं वेति पक्षद्वयं ॥ पितामहादिसपिंडान्तरमरणेतु मासमेव प्रतीक्षा ॥ यदि गुणवत्तरमातृमरणे ऋतुत्रयपरीक्षयाऽपरितोषस्तदा संवत्सरप्रतीक्षापि कार्या ॥ एवं गुणवत्तरभार्यादिमरणे ऋतुत्रयप्रतीक्षापीत्याशयेन तयोरपि पक्षयोः सामान्यविध्युपपत्तिः॥ पितृ मातृ पितृव्य सोदराणां चतुर्णां मरणे उक्तव्यवस्थया प्रतीक्षान्ते विनायक-

शांतिः ॥ अन्यमरणं तदन्ते शान्त्यंतरः ॥ यदा त्वतिसंकटवशेन सर्वत्र निमित्त मासाधिकप्रतीक्षाया असंभवस्तदा तन्मध्येपि कंचित्कालं प्रतीक्षोक्तव्यवस्थतान्यतरां शान्ति कृत्वा गां दत्वा पुनर्दानं चरेदिति ज्योतिःप्रकाशे वा कृतो विशेषः ॥ नतु क्वचिदपि प्रतिकूले पूर्वाशौचादिनिमित्ते न निवृत्ताशौचस्यापि सद्यो विवाहे प्रवृत्तिरुचिता ॥ यथा सगोत्रसपिंडेषु पुरुषत्रयपर्यन्तमेव प्रतिकूलस्य निषेधनिमित्तत्वं ॥ एवं प्रवेशमुंडनयोर्निर्गममंडननिषेधनिमित्तत्वमपि तेष्वेव तावत्पर्यंतमेवेति पुरुषत्रयेति मेधातिथिवाक्यार्थः ॥ प्रेतकर्माणीत्युत्तरवाक्ये तु यद्यपि आचतुर्थमिति संख्यान्तरस्योपादानात्प्रेतकर्मानिवृत्तेर्निमित्तत्वस्याभ्युदयनिषेधस्य च नैमित्तिकस्योपादानात्पूर्ववाक्यादत्यन्तभिन्नविषयता स्फुटैव प्रतीयते ॥ तथापि स्वगोत्रिणामाचतुर्थमित्यनुषंगलभ्यार्थसिद्ध्यै तदनन्तरपाठः॥ प्रेतकर्माणीति च प्रेतोद्देशेन विहितानि कर्माण्युच्यन्ते नतु प्रेतशब्दोद्देशविशिष्टानि ॥ तेन सपिंडीकरणोत्तरभाविनां मासिकश्राद्धानामपि संग्रहः॥ तेषामुत्पत्तिवेलायां प्रेतोद्देशेन विहितानामपि तच्छब्दोद्देशरहितपुनरावृत्तेर्वाचनिकत्वात् ॥ अत्र कात्यायनः ॥ निर्वृत्य वृद्धितंत्रं तु मासिकानि न तंत्रयेत् ॥ अयातयामं मरणं न भवेत्पुनरस्य त्विति वृद्धिकर्मोत्तरं मासिकानुष्ठाने मृतस्य मरणं अयातयामं भवेन्नूतनमिव भवेत् ॥ तच्च मांगलिककर्मणः पूर्वं मृतस्य मांगलिककर्मोत्तरमापद्यमानमनुचितमिति भावः ॥ शाट्यायनिरपि ॥ सपिंडीकरणादर्वागपकृष्य कृतान्यपि ॥ पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनादिति ॥ एवं च मृतमरणस्यारोपितनूतनत्वे दोषं वदताऽनारोपितनूतनत्वापादकानां सपिंडीकरणान्तानामाभ्युदयिकोत्तरमनुष्ठानमतिदुष्टमिति ज्ञाप्यते ॥ अत एव कात्यायनेनापि यदहर्वा वृद्धिरापद्येतेति सूत्रे वृद्धिश्राद्धनिमित्तभूतशुभापरपर्यायमांगलिकविवाहोपनयनादिकर्मागमे सति सपिंडीकरणस्य विहितकालापकर्ष उक्तः ॥ सचायमपकर्षो न वृद्धिदिने वृद्धिश्राद्धस्य प्रातःकालीनत्वात्प्रेतश्राद्धानां च मध्यान्हकालीनत्वात् ॥ अतश्च तत्पूर्वदिने मध्यान्हे सपिंडनाधिकारसिद्ध्यर्थं प्रथममासिकोनमासिकद्वितीयमासिकत्रैपक्षिकतृतीयमासिक चतुर्थमासिक पंचममासिक षाण्मासिकोनषाण्मासिक सप्तमाष्टमनवमदशमैकादशद्वादशमासिकोनाब्दिकानि षोडशश्राद्धानि दद्यादिति हेमाद्र्युदाहृतसूत्रबोधितक्रमेण षोडशश्राद्धानि कृत्वा तदुत्तरं सपिंडीकरणं कृत्वा तदव्यवधानेनैव पुनरनुमासिकानि कर्त्तव्यानि ॥ द्वादशादिकाले कृतसपिंडनस्य केषुचित्सर्वेषु वाऽनुमासिकश्राद्धेष्ववशिष्टेषु वृद्धिश्राद्धनिमित्तोपस्थितौ त्ववशिष्टानि सर्वाणि वाऽनुमासिकश्राद्धानि कर्त्तव्यानि ॥ तदुत्तरदिने तत्वतो निश्चितं वृद्धिश्राद्धं कर्त्तव्यं ॥ यत्र पुत्रजन्मादिनिमित्ताकस्मिक-

वृद्धिसंभावना तत्र पूर्वं षोडशश्राद्धकाललाभे युक्तमेव तेषां पूर्वमनुष्ठानं ॥ अन्यथा वृद्धिसंभावनयापि षोडशश्राद्धकालानुग्रहाय वृद्धिपूर्वदिनभिन्नदिनेषु केषुचित्तेषामनुष्ठानेपि बाधकं निर्वृत्यै वृद्धितंत्रं तु मासिकानि न तंत्रयेत् ॥ पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनादित्यादि वृद्ध्युत्तरं निषेधात् ॥ सर्वथा तेषां लोपस्यान्याय्यत्वात्॥ अत एव वृद्धिपूर्वदिनं दैवाल्लब्धं मृतिदिनं ॥ अथवा तद्भिन्नमपि ॥ अयंच वृद्धिश्राद्धप्रयुक्तः सपिंडनापकर्षो वृद्धिश्राद्धदेवतात्वसिद्ध्यर्थः ॥ तद्विना पितृत्वप्राप्त्यभावेन देवतात्वासंभवात् ॥ अतश्च यान् विना वृद्धिश्राद्धाकरणप्रसक्तिस्तेषामेव तद्दैवत्यं वृद्धिश्राद्धं ॥ सपिंडनापकर्षमिति सपिंडनाधिकारिणः स्वस्यैव वृद्धिश्राद्धकर्तृत्वे तत्सपिंडनं कृत्वैव वृद्धिश्राद्धं तद्दैवत्यं वृद्धिश्राद्धकर्त्रा कर्त्तव्यं ॥ तदपेक्षया सपिंडनाधिकारिणोऽन्यस्य सत्वे तस्य सन्निहितत्वाद् वृद्धिश्राद्धकर्तुस्तत्सपिंडनेऽनधिकारान्नस्वीयवृद्धिश्राद्धानुरोधेन तत्सपिंडनस्यापकर्षः कर्त्तव्यः ॥ न वा मुख्याधिकारिण तदक्षयवृद्धिश्राद्धानुरोधेन तत्सपिंडीकरणापकर्षः कर्त्तव्यः ॥ प्रेतश्राद्धानि सर्वाणि सपिंडीकरणं तथा ॥ अपकृष्यापि कुर्वीत कर्त्ता नांदीमुखं तत इति शाट्यायनप्रभृतिवचनेषु त्तवा प्रत्ययश्रवणेन कर्त्रैक्यावश्यंभावात् ॥ अतस्तत्र यावत्तत्सपिंडनं वृद्धिश्राद्धं विलंबत एव ॥ यदातु मुख्यस्य सपिंडनाधिकारिणोऽसन्निधानं तदा वृद्धिश्राद्धकर्तुः शास्त्रतस्तत्सपिंडनेऽधिकारे सति तत्सपिंडनमपकृष्य कर्त्तव्यमेव वृद्धिश्राद्धकारिणा ॥ यथा ज्येष्ठपुत्रेऽसन्निहिते कनिष्ठेन ॥ एवं भ्रातृपुत्रादीनां पितृव्यादिभिः क्रियमाणे संस्कारे तदंगवृद्धिश्राद्धे संस्कार्यं पितृमातृमातामहानां देवतात्वात्सन्निहिताधिकार्यन्तराभावे ॥ यदि पितृव्यादयः शास्त्रतस्तेषां सपिंडने लब्धाधिकारास्तदा तेषामपि सपिंडनमपकृष्य कर्तव्यमेव ॥ तैस्तदंगवृद्धिश्राद्धसिद्ध्यर्थं भ्राता वा भ्रातृपुत्रो वा सपिंडः शिष्य एव वा ॥ सह पिंडक्रियां कृत्वा कुर्यादभ्युदयं तत इति लघुहारीतवचनेपि त्तवा प्रत्ययश्रवणात् ॥ अतस्तत्रापि मुख्याधिकार्यन्तरसत्त्वे यावत्सपिंडनं वृद्धिश्राद्ध विलंब एव ॥ अत एव मृतपितृपितामहभ्रातृकायाः कन्यायाः विवाहे ज्यष्ठकनिष्ठयोः पितृव्ययोरधिकारेपि न पुत्रस्य पिता कुर्यान्नानुजस्य तथाग्रजः ॥ अपि स्नेहेन कुर्यात्तां सपिंडीकरणं विनेति ॥ सपिंडनस्य ज्येष्टं प्रत्याह त्वनिषेधात्॥ अकृतसपिंडनस्य चाभ्युदयेऽधिकाराभावान्न तादृशविषये ज्येष्ठपितृव्येण कनिष्ठभ्रातृसपिंडनपूर्वकाभ्युदयिकानुष्ठानेन कन्यादानं कर्त्तव्यं ॥ किन्तु तत्र मृतकनिष्ठेनैव तत्कार्यमिति कनिष्ठपितृव्यकस्यैव तत्राधिकारः ॥ एवमसंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ॥ पितरं तत्र संस्कु-

र्यादिति कात्यायनोऽब्रवीत् ।। पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।। पितामहेन पितरं संस्कुर्यादिति निश्चयः ।। कात्यायनवचनादकृतसपिंडनाभ्यामपि पितामह-प्रपितामहाभ्यां पितुः सपिंडनविधानेन दर्शश्राद्धेपि तयोरेव ।। तथाभूतयोर्देवता-त्वात्तद्विकृतिभूतवृद्धिश्राद्धेपि अकृतसपिंडनयोस्तयोर्देवतात्वसंभवात्तस्मिन्पक्षे तद्दे-वतात्वसिद्ध्यर्थं तत्सपिंडनापकर्षो न कर्तव्य एव ।। तस्मादपकर्षिकापकृष्य क्रिय-योरेककर्तृकत्वानुरोधेनैककर्त्रा स्वनांदीश्राद्धसंबद्ध देवतासपिंडनं कृत्वैव तत्कार्यं-नत्वनधिकारिणा तदपकृष्य वृद्धिश्राद्धं कर्तव्यं ।। नापि वृद्धिश्राद्धासंबद्धदेवता सपिंडनं यावत्तदकरणं वेत्यर्थे सिद्धे प्रतिकूलविवाहनिषेधोपपादनप्रसंगप्रदर्शित-स्मृतिकौस्तुभरीत्या पित्रादीनां मातामहादीनां च सपत्नीकानां देवतात्वेपि सप-त्नीकत्वगुणस्यादृष्टार्थमुच्चारणेपि देवतात्वेनानुप्रवेशाभावान्मातामह्यादीनामपि देव-तात्वसिद्ध्यर्थः सपिंडनापकर्षो नास्तीति प्रतीयते ।। तथापि साग्निककर्तृकपिंड-पितृयज्ञदर्शश्राद्धदेवतात्वसिद्ध्यर्थं मात्रादिसपिंडनापकर्षवन्मातामह्यादीनामप्यधिका-रसत्वे वृद्ध्यर्थमपि भवत्येव सपिंडनापकर्षः ।। भर्तृपिंडेष्वपि स्त्रीणामंशहा-रित्वस्यैकत्वं सांगता भर्तुः पिंडे गोत्रे च सूतके इत्यादि वचनसिद्धस्य पितृ-त्वप्राप्तिं विनाऽनुपपत्तेरुभयत्र तुल्यत्वात् ।। अत एव एकादशाहं निर्वर्त्य अर्वाग् दर्शाद्यथाविधि ।। प्रकुर्वीताग्निमान् पुत्रो मातापित्रोः सपिंडनमिति छंदोगपरि-शिष्टे मातृग्रहणं ।। नासपिंडाग्निमान् विप्रः पितृयज्ञं समाचरेत् ।। न पार्वणं नाभ्युदयं कुर्वन् न लभते फलमिति हेमाद्र्युदाहृते प्रजापतिव्रतिवचने सवकक्षतया त्रयाणामप्युपादानं ।। अतस्तासामपि सपिंडनस्यापकर्षः ।। तस्माद् वृद्ध्यागमस्य सपिंडनापकर्षप्रयोजकत्वं वृद्धिश्राद्धसिद्ध्यर्थं ।। अनुमासिकापकर्षकत्वं त्वदृष्टार्थ-तयैवेति ।। युक्तमेव नांदीश्राद्धदेवतात्वसिद्ध्यर्थत्वं सपिंडनापकर्षस्येत्यर्थे सिद्धे यस्य कस्यापिंडस्य सपिंडनाभावे येन केनापि तत्सपिंडनेन तदसंबद्धश्राद्धांगक-मपि पुत्रोत्सवादि न क्रियते ।। तदुपस्थितौ चानधिकारिणामपि तदाकृष्य क्रियत इति ।। यत्केषांचिदाचरणं दृश्यन्ते तत्र मूलं न विद्म इति तदेतत्कालतत्वविवेच-नकृदभिप्रायेणोक्तं ।। स्मृतिकौस्तुभकारस्तु प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियां।। आचतुर्थं ततः पुंसि पंचमे शुभदं भवेदिति प्रतिकूलविवाह निषेधप्रसंगे कृष्णभट्टी-यप्रयोगोदाहृतमेधातिथिवचने पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणामिति ।। त-दीयपूर्ववचनस्थस्वगोत्रिणामिति पदानुषंगेन स्वगोत्रिणां मध्ये कूटस्थमारभ्य च-तुः पुरुषपर्यन्तं ये स्वगोत्रिणः पुरुषास्तेषां मध्ये कस्यचिदपि सपिंडस्य मृतौ तदा

यदाहप्रभृति अनुमासिकान्तं यावत्प्रेतकर्म न जातं तावच्चतुःपुरुषमध्यवर्त्तिभिस्त दीयैर्गोत्रजैराभ्युदयिकं न कार्यमिति निषेधप्रतीतेरर्थाच्च तावत्पुरुषमध्यंतनर्यत्कि-चिन्मृतसंबंधिप्रेतकर्म मात्रं कृत्वा तदुत्तरं तावत्पुरुषमध्यवर्तिभिः पुरुषैः प्राप्तकाल-माभ्युदयिकं कर्त्तव्यमिति विधिपर्यवसाने यद्यपि क्त्वा प्रत्ययश्रवणात् प्रेतकर्म-भिः सहाभ्युदयिकक्रिया समानकर्त्तृत्वं प्रतीयते ॥ तेन चाभ्युदयिकक्रिया कर्त्तृ-स्वकर्त्तृकप्रेतकर्मापकर्षः स्वाधिकारे सति युज्यते ॥ नतु कर्त्रन्तरीयाभ्युदयिका-नुरोधेन भिन्नकर्त्तृकतदपकर्षः संभवति ॥ 'तथापि बध्वांजलावुपस्तीर्य भ्रातृस्थानो वा लाजानावपतीत्याश्वलायनसूत्रे उपस्तीर्येत्यत्रोपस्तरणस्य वरकर्त्तृकत्वात् साक्षा-त्प्रयोजककर्तृत्वोभयरूपेणावपनसमानकर्तृत्वनिर्वाहवदिहापि चतुः पुरुषपर्यन्त-पुरुषाणामाभ्युदयिकाचरणकर्तृत्वोक्तौ तपां प्रेतकर्म कर्तृत्वं तथैव स्वीकार्यमि-ति ॥ न तदनुपपत्तिरिति कर्त्रन्तरे मुख्ये सन्निहिते आभ्युदयिककर्त्रन्त रेण प्रे-तकर्माणि तेन कारयित्वा स्वयमाभ्युदयिकं कार्यं ॥ स्वस्यैवोभयकर्तृत्वे तु साक्षा त्कर्तृत्वं सिद्धमेव ॥ अत्र च वचनेन प्रेतशब्दोद्देश्यकर्माणि प्रेतकर्मशब्देन गृह्यन्ते ॥ अपि तु प्रेतोद्देश्यान्यनुमासिकान्तान्यपि चतुःपुरुपपर्यन्तं तत्कर्मापकर्षविधान-बलादेव वृद्धिश्राद्धासंबंधमृतानामपि तत्कर्मापकर्षप्रतीतेर्नायपकर्षो वृद्धिश्राद्धदेवता-सिद्धिप्रयोजनक इति ॥ यदहर्वा वृद्धिरापद्येतेत्यादि कात्यायनगोभिलादिव-चनेषु वृद्धिपदेनांगवाचिना सौर्यं चरुं निर्वपेदिति ॥ निर्वपशब्देन प्रधान-यागलक्षणेव तदंगिमांगलिककर्ममात्रलक्षणा एवं च शुभागममंगलागमरूपाय कर्षककालप्रतिपादकस्मृत्यन्तरैकवाक्यतापि लभ्यते ॥ अतएवाकृतसपिंडनयोः पितामहप्रपितामहयोर्वृद्धिश्राद्धदेवता त्वयोग्ययोरपि मांगलिकविवाहादिकर्मानुरो-धेनादृष्टार्थं कर्त्तव्य एव तदीयप्रेतकर्मापकर्षः ॥ प्रयोजककर्तृत्वस्यापि प्रेतकर्मसु विधानात्कनिष्ठपितृव्यकर्त्तृकेष्वपि प्रेतकर्मसु ज्येष्ठपितृव्यस्यप्रयोजककर्त्तृत्वोपपत्ते-र्मृतपितृपितामहभ्रातृकायाः कन्याया विवाहेपि ज्येष्ठपितृव्यस्याप्यधिकारः सि-द्धो भवति ॥ स्वगोत्रिणामित्युपादानाच्चासगोत्रमातामहादीनां वृद्धिश्राद्ध देवतात्व-योग्यानामपि न प्रेतकर्मापकर्षो विवाहाद्यर्थे इत्यपि ज्ञेयं ॥ एवं स्थिते अपकृष्यापि कुर्वीत कर्त्ता नांदीमुखं ततः ॥ भ्राता वा भ्रातृपुत्रो वेत्यादि वचनान्यपि एकमूल, श्रुतिकल्पनालाघवानुरोधेन प्राप्तकालप्रेतकर्मणां यावतः पुरुषान् प्रति आभ्यु-दयिकानुरोधेनावश्यकर्त्तव्यता विहिता ॥ तान्प्रत्येवापकर्ष विधाय कान्नि एवं च यस्य कस्यापि सपिंडस्य प्रेतकर्मानिर्वृत्तौ कुले मांगलिकानामाचरणं प्राच्य-भिन्नशिष्टानामद्य यावदनुवर्त्तमानमनुगृहीतं भवतीत्याह उभयथापि वृद्ध्युपस्थितौ

अनधिकारिणा सपिंडनापकर्षौ वृद्धिश्राद्धासंबद्धस्य क्रियते ॥ अयमाचारस्तु दुरुपपाद एवेति दिक् ॥ इति प्रतिकूलनिर्णयः ॥

## ॥ अथ देवतोत्थापनविधिः ॥

तत्राह विश्वकर्मा ॥ समेतु दिवसे कुर्याद्देवतोत्थापनं बुधः ॥ षष्टं च विषमं नेष्टं मुक्त्वा पंचमसप्तमाविति ॥ समेषु षष्ठं विषमेषु पंचमसप्तमव्यतिरिक्तं दिनं नेष्टमित्यर्थः ॥ देवतोत्थापनं मंडपोद्वासनं च ॥ अथ प्रयोगः ॥ स्थापितदेवताः पंचोपचारैरभ्यर्च्यनपूर्वकं प्रदेशान्तरं समानीय पत्नीसंस्कार्याभ्यां समन्वितो यजमानः प्राङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्यामुककर्मार्थं स्थापितदेवतानां षोडशोपचारैरभ्यर्चनं विसर्जनं तदंगत्वेन स्वस्तिवाचनं च करिष्ये ॥ इति संकल्पं कुर्यात् ॥ ततो यथाविधि गणेशमभ्यर्च्य षोडशोपचारैः स्थापितदेवताश्चाभ्यर्च्य ॥ ॐ उत्तिष्ठ ब्रह्मणस्पत इति विसर्जनं॥ ततः कलशं विधिना संस्थाप्य स्वस्तिवाचनं यथोक्तं कुर्यात् ॥ तत्रास्य मंडपदेवतोद्वासनकर्मणः पुण्याहं भवन्त इति वाक्यप्रयोग इति विशेषः ॥ अथोदङ्मुखा आचार्यास्तिष्ठन् स्थापितकलश-

---

"अथ शिवमानसपूजा"—रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्यांबरं नानारत्नविभूषितं मृगमदामोदांकितं चंदनं ॥ जातीचंपकबिल्वपत्ररचितं पुष्पं च धूपं तथा दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यतां ॥ १ ॥ सौवर्णे नवरत्नखंडरचिते पात्रे घृतं पायसं भक्ष्यं पंचविधं पयो दधियुतं रंभाफलं पानकं ॥ शाकानाममुतं जलं रुचिकरं कर्पूरखंडोज्वलं तांबूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥ २ ॥ छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं वीणाभेरिमृदंगकाहलकलागीतं च नृत्यं तथा ॥ साष्टांगं प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया संकल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥ ॥ ३ ॥ आत्मा त्वं गिरिजापतिः सहचराः प्राणाः शरीरं गृहं पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ॥ संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो यद्यत्कर्म करोमि तत्तदखिलं शंभो तवाराधनं ॥ ४ ॥ करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम् ॥ विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शंभो ॥ ५ ॥

"अथ द्वादशज्योतिर्लिंगानि"—सौराष्ट्रे सोमनाथं च श्रीशैले मल्लिकार्जुनं ॥ उज्जयिन्यां महाकालमोंकारममलेश्वरं ॥ १ ॥ परल्यां वैद्यनाथं च डाकिन्यां भीमशंकरं ॥ सेतुबंधे तु रामेशं नागेशं दारुकावने ॥ २ ॥ वाराणस्यां तु विश्वेशं त्र्यंबकं गौतमीतटे ॥ हिमाचले तु केदारं घुसृणेशं शिवालये ॥ ३ ॥ एतानि ज्योतिर्लिंगानि सायं प्रातः पठेन्नरः ॥ सप्तजन्मकृतं पापं स्मरणेन विनश्यति ॥ ४ ॥

स्थाभिः पात्रान्तरगृहीताभिरद्भिस्तत्रत्यैः पंचपल्लवैः सकुशदूर्वैः पुण्याहवाचनोक्तैर-भिषेकमंत्रैर्धृतनवकंचुकीवस्त्रया वामस्थितया पत्न्या समन्वितं सपुत्रं सपरिवारं नूत-नवस्त्रयज्ञोपवीतधारिणं स्वासनोपविष्टं प्राङ्मुखं यजमानमभिषिंचेत् ॥ ततः कल-शोदकेनान्येनोष्णोदकेन च तैलाभ्यंगसर्वौषध्यानुलेपनपूर्वकं सुस्नातौ दंपती अभिषेककालीनानि वासांसि परित्यज्यान्यान्यहतशुभ्रवासांसि परिधाय श्वेत-चंदनपुष्पधारणं च कुरुतः ॥ त्यक्तानि वासांस्याचार्यो गृह्णीयात् ॥ अथ कर्त्ता षट्सु षट्सु मासेष्वस्मद्गोत्रे शोभनानि भवन्त्विति प्रार्थयेत्तेपि तथास्त्विति प्रतिब्रूयुः ॥ ततस्तानि वृक्षपत्रवेष्टितान्युन्मुक्तसूत्राणि गृहोपरि शुचिदेशे प्रक्षिप्यांगणस्थं वि-तानमीशानकोणाद्विमुच्य यथाशक्तिब्राह्मणभोजनसंकल्पं विधाय संकल्पपूर्व-कं ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा अच्छिद्रतां वाचयित्वा ईश्वरार्पणं कर्म कुर्यादिति देवतोत्थापनविधिः ॥

"अथाभ्युदयिकश्राद्धोत्तरं देवतोत्थापनपर्यन्तं निषेधाः"—गार्ग्यः ॥ नांदी-श्राध्धे कृते पश्चाद्यावन्मातृविसर्जनं ॥ दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥ अपसव्यं स्वधाकारः नित्य श्राद्धं तथैव च ॥ ब्रह्मयज्ञं चाध्ययनं नदीसीमा-तिलंघनं॥ उपवासव्रतं चैव श्राद्धभोजनमेव च॥ नैव कुर्युः सपिंडाश्च मंडपोद्वासनावधिः अत्र नित्यश्राद्धनिषेधेन तत्कार्यविहितपितृयज्ञनिषेधसिद्धेः स्वधाकारग्रहणं त-त्सहितवैश्वदेवनिषेधार्थं ॥ आचारसंवादलाभाच्चेति बहव इत्युक्तं स्मृति-कौस्तुभे ॥ तथा अन्यत्र ॥ अभ्यंगे सूतके चैव विवाहे पुत्रजन्मनि ॥ मांगल्येषु च सर्वेषु न धार्यं गोपिचंदनमिति ॥

श्रीशंभोश्चरणद्वंद्वमाधाय हृदयांबुजे ॥ उद्धवस्य तनूजेन काशीपुरनिवासिना ॥१॥
रचितानन्तदेवेन सर्वकर्मांगपद्धतिः ॥ गुरवस्तेन तुष्यन्तु विद्वांसश्च तथा मयि॥२॥

इति श्रीसूर्यपुरनिवासिना भीतडाखेडावालविप्रजातीयेन
द्विवेद्युपनामकपरशुरामात्मजेन जगन्नाथशर्मणा
संशोधिते श्रीरुद्रकल्पद्रुमे प्रयोगपरिच्छेदः

॥ समाप्तः ॥

## ॥ अथ शास्त्रार्थपरिच्छेदः ॥ ३ ॥

सिद्धिबुद्धिप्रदातारं विघ्नव्यूहविदारणम् ॥ वन्दे महागणपतिं शिवविष्ण्वादिवन्दितम् ॥ १
अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् श्रीमद्गुरुपदाम्भोजं वन्दे शास्त्रार्थसिद्धये ॥ २
मुनीन् कात्यायनान्नत्वा श्रीमदुद्धवसूनुना रुद्रकल्पद्रुमाख्योऽयं निबन्धस्तन्यते मया ॥ ३
हेमाद्र्यादि निबन्धास्तु बहवः सन्ति यद्यपि तेभ्यस्त्वस्य विशेषो यः पण्डितैरवधार्यताम् ॥ ४

तावदुपयुक्तत्वाद्विनियोगो विचार्यते

विनियोगशब्देन च शेषशेषि भावलक्षणः सम्बन्धोऽभिधीयते ।
मंत्राणां प्रयोगसमवेतार्थस्मारकतया कर्मार्थत्वेन परार्थत्वाच्छेषत्वम् ।
कर्मणां च सर्वशेषाणामेकशेषित्वम् । योगियाज्ञवल्क्येनापि ।

पुरा कल्पे समुत्पन्ना मंत्राः कर्मार्थमेवच अनेन चेदं कर्तव्यं विनियोगः स उच्यते

इत्यत्र पूर्वार्धे कर्मार्थतया मंत्राणामुत्पत्तिमभिदधता मंत्राणां शेषतां कर्मणां च शेषितां च उत्तरार्धे शेषशेषिणोः संबध एव विनियोग इति प्रतिपादितम् । एकस्यैव मंत्रस्यैकस्मिन्कर्मणि विनियोगस्यापि विधिसामर्थ्यात्कर्मांतरेष्वपि सजातीयविजातीयेषु शेषत्वमस्ति । ततश्च यदा यो मंत्रो यस्मिन्कर्मणि तस्य मंत्रस्य विनियोगोऽवगंतव्यः । यद्यपि माध्यंदिनकाण्वादिवाजसनेयशाखासु रौद्राध्यायस्य शतरुद्रियस्य " अथातः शतरुद्रियं जुहोति " इत्यादिकथाश्रुत्या शतरुद्रियहोम उत्तरपक्षः परस्यां स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्टेन शातयत्संततंजर्तिलमिश्रान् गवेधुकासक्तून् एके तिष्ठन्नुदङ्नमस्त इत्यध्यायेनेत्यादिकेन कात्यायनसूत्रेण च विहिते सोमशेषस्याग्नेः शेषरुद्रियाख्ये होम एव विनियोगात्तच्छेषत्वमेवेति न जपादिशेषत्वम् । तथापि । अथ हैनं ब्रह्महारिणः किं जप्येनामृतत्वं गच्छति तन्नो ब्रूहीति सहोवाच याज्ञवल्क्यः शतरुद्रियेणेत्यानि हवा अमृतानि नामधेयान्येतैर्हवा अमृतो भवतीति जाबालोपनिषदि । गुरोः सकाशादध्ययनेन वेदलक्षणं ब्रह्महरंति ते ब्रह्महारिणः शिष्या इत्यर्थः । यः शतरुद्रियमधीते सोऽग्निपूतो भवति । स सुरापानात्पूतो भवति । सब्रह्महत्यायाः पूतो भवति । सकृत्याकृत्यात्पूतो भवति । तस्मादविमुक्तमाश्रितो भवति । अंत्याश्रमी सर्वदा सकृद्वा जपेत् । अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् तस्मादेवं विदित्वैनं कैवल्यफलमश्नुते इति कैवल्योपनिषदि । अग्नेः पूत इत्यग्निपूत इति । अग्निसकाशात् कृत्याकृत्यात्पूत इत्यर्थः । कृत्याकृत्यादिनि । कृत्यस्य विहितस्याकृत्यादकरणाद्विहितकर्माकरणजन्यात्पापादित्यर्थः । यः श्रद्धयायुतो नित्यं शतरुद्रियमभ्यसेत् । अग्निदाहात्सुरापानाद्दुष्कृत्याचरणात्तथा । मुच्यते

ब्रह्महत्याया इति कैवल्यशाखिनः । इति सूतसंहितायाम् । एकादशगुणान् वापि रुद्रानावर्त्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशयः । इति मिताक्षरायाम् । स्मृतौ । एकादशगुणान् रुद्रानावर्त्य याति रुद्रताम् । इति बृहत्पराशरस्मृतौ ॥ मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ॥ भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥ इति शातातपस्मृतौ ॥ यस्तु रुद्रं जपेन्नित्यं ध्यायमानो ममाकृतिम् ॥ षडक्षरं वा प्रणवं निष्कामो विजितेंद्रियः ॥ अथाथर्वशिरोमंत्रं कैवल्यं वा रघूत्तम । स तेनैव च देहेन शिवः संजायते ध्रुवमिति पद्मपुराणे शिवगीतायां च जपे विनियोगश्रवणात् ॥ रुद्राणां च तथा जप्यं सर्वाघविनिकृंतनम् । सर्वकामकरो होमस्तथा सर्वत्र शांतिदः । अजाविकानामश्वानां कुंजराणां तथैवच । मनुष्याणां नरेंद्राणां बालानां योषितामपि ॥ ग्रामाणां नगराणां च देशानामपि भार्गव । उपद्रुतानां धर्मज्ञमथितानां तथैवच । मरणे समनुप्राप्ते रिपुजे च तथाभये । रुद्रहोमः परा शांतिः पायसेन घृतेन वेति विष्णुधर्मोत्तरे जपहोमयोर्विनियोगश्रवणात् ॥ अथातः पंचांगरुद्राणां न्यासपूर्वकं जपहोमार्चनविधिं व्याख्यास्यामः इति बोधायनसूत्रे जपहोमाभिषेकेषु विनियोगश्रवणाच्च तेष्वपि शेषत्वमस्त्येव । तस्माज्जपे साध्ये जपे, होमे साध्येहोमेऽभिषेके साध्येऽभिषेके विनियोगो बोद्धव्यः ॥ शतसंख्याता रुद्रा देवता अस्येति शतरुद्रियम् । " शतरुद्राद्घश्च " वा. २७०२ इति घप्रत्ययांतोऽयं शतरुद्रियशब्दः । अत्र पूर्वोदाहृतस्मृतिसूत्रपुराणवचनेषु रुद्रं जपेदिति । रुद्रान् जपेदिति श्रूयते ॥ तत्रोभयथाप्येकवचनांतत्वेन बहुवचनांतत्वेन वा श्रुतस्य रुद्रपदस्य रौद्राध्यायोऽभिधेयः । स्मृतिकाराणामिह रौद्राध्यायवाचकत्वेन रुद्रपदप्रसिद्धेः । गृह्यकाराभिप्रायाच्च । तथाहि । शूलगवपशौ अनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठत इति पशुकर्मकं रुद्रकरणकमुपस्थानमभिधाय प्रथमोत्तमाभ्यां वानुवाकाभ्यामित्येवमाह । इत्थमभिदधता गृह्यकृता पारस्कराचार्येण बहुवचनांतरुद्रशब्दस्येह यएवप्रसिद्धोऽर्थः । अतएव रुद्रैरित्यनेन रौद्राध्यायस्य प्रकृतत्वादुत्तरसूत्रे पशुकर्मकोपस्थाने करणभूतयोः प्रथमोत्तमानुवाकयोः रौद्राध्यायावयवभूतत्वं न सिध्येत् । मा सिध्यतु । एवं च प्रथमोत्तमानुवाकौ कस्येति संदिह्येतेति स्वाभिप्रायो दर्शितः । अतएव वृषोत्सर्गे रुद्रान् जपित्वेति सूत्रे बहुवचनांतरुद्रपदवाच्यो रौद्राध्याय इति भर्तृयज्ञकर्कोपाध्यायहरिहरजयरामादिभिर्व्याख्यातम् । गर्गोपाध्यायवासुदेवादिभिःपद्धतिकारैरपि तथैव प्रयोग उपन्यस्तः। रौद्राध्याये रुद्रदैवत्यमंत्रबहुत्वापेक्षया रुद्रानिति बहुवचनम् । रुद्रदैवत्यमंत्रसमुदायात्मकरौद्राध्यायस्य मंत्रैकत्वापेक्षया च रुद्रमित्येकवचनम् ॥ एवं च समग्रस्य रौद्राध्यायस्य मंत्रैकत्वात्सकलेन रौद्राध्यायेनैकाहुति-

होतव्येति पक्षः सिद्धः। अतोऽस्मिन् पक्षे रौद्राध्यायांते स्वाहाकार इति। बहुवचनाच्च मंत्रबहुत्वमपि गम्यते । अतश्चानेकाहुतिपक्षा अपि सिद्धाः । एतच्च मंत्रविभागे स्फुटं वक्ष्यते । तथा च रुद्रस्य रुद्रदैवत्यमंत्रसमुदायात्मकरौद्राध्यायस्य, रुद्राणां रौद्राध्यायात्मकानां रुद्रदैवत्यानां मंत्राणां वा जपो रुद्रजप इत्यर्थः । किंच । उदाहृतजाबालोपनिषदि " शतरुद्रियेण " इति तृतीयया मंत्रांतरजपनिरपेक्षरुद्रापरपर्य्यायशतरुद्रियजपस्यैव फलसंबंधावगमात्तस्यैव प्राधान्यम् । वाक्यांतरेषु तु श्रूयमाणार्थाक्षिप्तसाध्यत्वानुवादिनी द्वितीया तृतीयार्थे द्रष्टव्या । सक्तून् जुहोतीतिवत् । ततश्चैवं वाक्यार्थः । अशेषपापात्स्वात्मनः पूतत्वकामः शतरुद्रियेणाधीतेन स्वात्मानमशेषपापात्पूतं भावयेदिति । वर्तमानेन स्वदेहेन स्वात्मनः शिवत्वप्राप्तिकामः शिवाकृतिं ध्यायमानो रुद्रेण तेनैव स्वदेहेन स्वात्मानं शिवं भावयेदितिच । एवं वाक्यांतरेष्वपि वाक्यार्था ऊह्याः। अतश्च चमकजपस्य प्राधान्यकोटौ न प्रवेशः ननु रुद्राणामिव चमकानुवाकानामपि रुद्रजपादौ प्राधान्यं स्याद् । " नमस्ते रुद्रमन्यवे " इत्येकादशानामनुवाकानां जपांते जपांते "अग्नाविष्णू सजोषसा" इत्येकादशानुवाकानामेकमेकं जपेदिति बौधायनसूत्रे विशेषानवगमादिति चेत्सत्यम् । यद्यप्यस्मिन् सूत्रे विशेषो नावगम्यते तथापि " पंचांगरुद्राणां जपहोमार्चनविधिं व्याख्यास्यामः " इति प्रतिज्ञासूत्रे रुद्रपदग्रहणाच्चावगम्यते हि विशेषः । यदि रुद्राणामिव चमकानुवाकानामपि रुद्रजपादौ प्राधान्यं स्यात्तदा रुद्राणां चमकानुवाकानां च जपादाविविधिमित्येव ब्रूयात् । बहुषु प्रागुदाहृतवाक्येषु रुद्राणामेव जपफलश्रवणाच्च चमकजपस्य रुद्रजपांगत्वमेव स्यान्नतु प्राधान्यम् ॥ उक्तंच भगवता जैमिनिना " फलवत्सन्निधावफलं तदंगम् " इति फलवतो दर्शपूर्णमासशब्दवाच्याग्नेयादियागसमुदायस्य सन्निधौ श्रूयमाणानामफलानां प्रयाजानुयाजादियागानां दर्शपूर्णमासांगत्ववत् फलवतो रुद्रजपस्य सन्निधौ श्रूयमाणस्याफलस्य चमकजपस्य रुद्रजपांगत्वम् । एवंच सति काण्वमाध्यंदिनादीनां चमकजपानुष्ठानात्फलाधिक्यमात्रं नतु तदकरणे रुद्रवैगुण्यम् । पराशरादि स्मृतिष्वनभिहितत्वेन कौशिकबौधायनाभ्यामभिहितत्वेन च तस्य बौधायनकौशिकेतरान्प्रति कृताकृतत्वावगतेः । नन्वेकत्र श्रुतस्याधिकांगस्यान्यत्रोपसंहारः स्यात् कथं तस्य कृताकृतत्वमिति चेत्सत्यम्। स्यात्समर्थं प्रत्युपसंहारः। असमर्थं प्रति तु नोपसंहारः। किं तर्हि यावदुक्तांगानुष्ठानम्। बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् ॥ तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेद् इति बह्वृचपरिशिष्टोक्तेः । ऊनो वाप्यतिरिक्तो वा यः स्वशाखोदितो विधिः। तेन संतनुयाद् यज्ञं न कुर्यात्पारतांत्रिकमिति लौगाक्षिणोक्तेश्च । शाखांतराधिकरणे " यन्नाम्नातं स्वशाखायाम् " इत्यादि

वक्ष्यमाणकात्यायनादिवाक्येषु च प्रतिपादितस्यैकत्र श्रुताधिकांगोपसंहारस्य बह्वृचपरिशिष्टवाक्ये स्वशाखोक्तबह्वल्पयावद्विध्यनुष्ठानोक्तेः पारक्याधिकांगोपसंहारनिवृत्यात्मा निषेधोऽर्थसिद्धः । लौगाक्षिणा तु " न कुर्यात्पारतांत्रिकम् " इत्यनेन परोक्ताधिकांगोपसंहारस्य शाब्द एव निषेधः कृतः। एवं चातिरात्रे षोडशीग्रहणाग्रहणवत् परोक्ताधिकांगोपसंहारस्य विहितप्रतिषिद्धत्वाद्विकल्पः । सच समर्थासमर्थविषयत्वेन व्यवस्थितो बोध्यः । ऐच्छिकविकल्पस्याष्टदोषदुष्टत्वात् । तस्मात्प्रधान भूतरौद्राध्यायस्यैव जपो रुद्रजपः। प्राधान्येन व्यपदेशा भवंतीति न्यायादिति निष्कर्ष इति स्थितम्॥ उपपादयिष्यते च रुद्रभेदनिरूपणावसरे विस्तरेणैतत्। अत्रैतद्विचार्यते

किं रुद्रो जपादिषु तैत्तरीयशाखीय एवापरशाखिभिरुपादेय उत स्वस्वयजुः शाखीय एवेति । किंतावत्प्राप्तम् । तैत्तरीयशाखायामेवेति कर्तव्यतासहितरुद्रविधेः श्रवणादन्यासु यजुः शाखासु रुद्रमात्रश्रवणेऽपीति कर्तव्यताया अश्रवणात् सर्वशाखिभिस्तैत्तरीयशाखीय एव रुद्रो जपादिषूपदेय इति। अत्र ब्रूमः। रुद्रः स्वस्वयजुः शाखीय एव जपादिषूपादेयो न पुनः सर्वैस्तैत्तरीयशाखीयः । कुत एतत् । अथहैनं ब्रह्महारिण ऊचुः किं जप्येनामृतत्वमिच्छति तन्नो ब्रूहीति सहोवाच याज्ञवल्क्यः शतरुद्रियेणेत्येतानि हवा अमृतानि नामधेयान्येतैर्हवामृतो भवतीति जाबालोपनिषच्छ्रुत्या अमृतलक्षणफलसाधनत्वेन विहितजपस्य शतरुद्र शतरुद्रियापर पर्यायद्वयस्य रौद्राध्यायस्य सर्वासु यजुःशाखासु श्रवणात्। यदि स्वशाखायां रुद्रो न श्रूयते तदा शाखांतरीयरुद्रग्रहणं प्रसज्येत । न चैतदस्ति । किंच । फलसम्बन्धबोधकस्मृतिश्रुतिपुराणादिवाक्यनिष्ठशतरुद्रियशब्दस्य रुद्रशब्दस्य वा श्रवणेनाध्ययनगोचरीभूतत्वाच्छीघ्रोपस्थितिकत्वेन प्रथमतः स्वशाखीयस्यैव शतरुद्रियस्य प्रतीतेः। इतर शाखीयस्य विलंबोपस्थितिकत्वात्पश्चात्प्रतीतेश्च। प्रथमोपस्थितपरित्यागे कारणाभावाच। " स्वाध्यायोध्येतव्यः " इत्यत्र स्वाध्यायस्योपादेयत्वात्तद्गतैकत्वस्य विवक्षितत्वेन शाखांतरीयाध्ययनाप्रसक्तेश्च । " अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम्। अक्रिया च परोक्ता च तृतीया च यथा क्रिया " इति छन्दोगपरिशिष्ट कात्यायनेन स्वशाखोक्तपरित्यागेन परशाखोक्तानुष्ठानस्याकरणरूपा क्रियात्वाभिधानाच्च । " यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् । अप्रमाणमृषिं कृत्वा सोंऽधे तमसि मज्जति " तत्रैव कात्यायनवाक्ये स्वशाखोक्तपरित्यागेन परशाखीयोपादाने दोषश्रवणाच्च । तस्मात्स्वस्वयजुः शाखीय एव रुद्रः सर्वशाखिभिर्जपादिषु ग्राह्य इत्येवयुक्तम् ॥ किंच । " आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्या-

यन्ते इति श्रुतिरपि वाजसनेययजुषां प्राशस्त्यं प्रतिपादयंती तदंतःपातीनो रुद्रस्यापि प्राशस्त्यं प्रतिपादयन्ति । आदित्यादधीतानि । आदित्यानि । एतानि च यजूंषि शुक्लानि शुद्धानि निर्मलानि वीर्ययुक्तानि शीघ्रं फलप्रदानीत्यर्थः । इतोऽन्यानि यानि यजूंषि तानि कृष्णानि मलिनानि वीर्यहीनानि विलंबेन फलप्रदानीति श्री शंकरस्वामिप्रभृतिभिरियं श्रुतिर्व्याख्याता । तेनादित्यादधीतानामेषां यजुषां शुक्लत्वेन शीघ्रं फलप्रदत्वादन्येषां यजुषां कृष्णत्वेन तदभावाच्छुक्लयजुषामेव प्राशस्त्येन वाजसनेयीशाखीयोरुद्रोऽतिप्रशस्त इति गम्यते ॥ यत्तु इति कर्तव्यतासहित रुद्रविधेस्तैत्तरीयशाखायामेव श्रवणेनान्यत्र तदश्रवणात्तैत्तरीयशाखीय इति कर्तव्यता विशिष्टो रुद्रो जपादिषूपादेय इत्युक्तं तन्न ॥ नहि इति कर्तव्यताया अश्रवणमात्रेण हेतुना स्वशाखीयरुद्रपरित्यागेन तैत्तरीयशाखीयरुद्रोपादाने युक्तम् । हेतूना मुक्तत्वात् । इति कर्तव्यतायास्तत्राश्रुताया अप्यन्यतो ग्रहणं युक्तमेव । शाखांतराधिकरणन्यायात् । "यन्नाम्नातं स्वशाखायां परोक्तमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि कर्मवत्" इति छंदोगपरिशिष्टे कात्यायनोक्तेश्च । "यन्नाम्नातं स्वशाखायां गृह्ये वा गृह्यशेषतः। तद्ग्राह्यं मनवः प्राहुः पारक्यमविरोधि यद्" इति स्मृतिसंग्रहाच्च । "आत्मतंत्रेषु यन्नोक्तं तत्कुर्यात्पारतंत्रिकम् । विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः" इतिकार्ष्णाजिनिस्मरणाच्च । यत्तु । "ऊनो वाप्यतिरिक्तो वा यः स्वशाखोदितो विधिः" इति प्रागुदाहृतं लौगाक्षिवचनं तद्गृह्यरूपं वा स्वगृह्योक्तमित्यनेन समानार्थकम् । यथा । "क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इत्यत्र क्रतुशद्बः कर्मसामान्यपरो न पुनर्देवतोद्देशेन द्रव्यत्यागात्मकक्रतुपरः । तथा "तेन संतनुयाद्यज्ञम्" इत्यत्रापि यज्ञशब्दः कर्मसामान्यपरो बोद्धव्यः । केचित् "यज्ञं संतनुयात्" इति वचनाद्दर्शपूर्णमासादिविषयतामस्य वाक्यस्य मन्यन्ते । ततश्च दर्शपूर्णमासादिष्वपि परोक्ताधिकांगोपसंहार इति । तन्न । सर्वशाखाप्रत्ययकर्मण एकत्वेन दर्शपूर्णमासादिष्वपि परोक्ताधिकांगोपसंहारकर्तव्यतायाः शाखांतराधिकरणे निर्णीतत्वाद् । तस्माद्वाजसनेयिशाखासु श्रीरुद्रस्याश्रुतेति कर्तव्यताकत्वाद्वाजसनेयिभिः परोक्ता श्रीरुद्रेति कर्तव्यता ग्राह्येति युक्तम् । वस्तुतस्तु । बृहत्पराशरस्मृतौ रुद्रेति कर्तव्यताया वाजसनेयिविषयत्वेनास्त्येवश्रवणम् । स्मृतेः सर्वशाखासाधारण्येऽपि "इषेत्वादिषु खंब्रह्मांतेषु याः क्रियाः" इति वाक्ये खं ब्रह्मांतत्वोक्तिलिंगाद्वाजसनेयिविषयताप्रतीतेः। एवं च यजुर्वेदभिन्नवेदशाखासु शतरुद्रियहोमस्याध्वर्यवत्वादश्रुतत्वेन तदंगभूतरुद्रस्य च तास्वश्रवणाद्बह्वृचछंदोगादीनां श्रुतिस्मृतिपुराणेषु भूयो महिमाश्रवणेन रुद्रजपरुद्रहोमरुद्राभिषेका-

नामन्यतमचिकीर्षायामुत्पन्नायां स्वपरंपरापरिगृहीतयजुःशाखायाः स्वशाखात्वेन त-च्छाखासमान्नात एव रुद्रोजपादिष्वाध्वर्यवमिव तैर्ग्राह्यो नत्वनियमेन यत्किंचिद् यजुःशाखीयः। स्वपरंपरापरिगृहीतयजुः शाखायाः स्वशाखात्वं च स्वीयैः पित्रादिभिरधीतो वेदः स्वाध्याय इत्यर्थकेन " स्वाध्यायोध्येतव्यः " इति विधिना " पारंपर्यागतो येषां वेदः स परिबृंहणः। तच्छाखं कर्म कुर्वीति तच्छाखाध्ययनं तथा " इति मदनपारिजाते वसिष्ठेन चोक्तम्। स्वाध्यायः स्वशाखेत्यनर्थांतरं। किंच। " वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् " इति वेदाध्ययनोत्तरं स्नानविधिपरे याज्ञवल्क्यवाक्ये " वेदं वेदौ तथा वेदान् वेदान् वा चतुरो द्विजः। अधीत्य चाधिगम्यार्थं ततः स्नायाद् द्विजोत्तमः" इति माधवीये कूर्मपुराणवाक्येच विहितानेकवेदाध्ययनपक्षे वेदशब्देन तत्तद्वेदनिष्ठस्वपरंपरापरिगृहीतशाखैव विवक्षिता। अन्यथा " सहस्रं सामशाखाः। एकशतमध्वर्युशाखाः। एकविंशतिशाखं बह्वृचम् " इति वचनोक्तसकलशाखाविशिष्टैकैकवेदाध्ययने विधीयमानेऽशक्यार्थविधानापत्तेः। नह्येतावदध्ययनं केनापि शक्यं कर्तुम्। नच पित्राऽन्याऽध्येतव्या, पुत्रेण त्वन्येत्येवमनियमेनैकवेदसंबंधिन्याः यस्याः कस्याश्चिदेकस्याः शाखाया अध्ययनेन तद्विध्युपपत्तौ न स्वपरंपरापरिगृहीतशाखाया अध्ययने नियम इति वाच्यम्। तथा सति पुत्रेणाधीयमानशाखायाः स्वाध्यायत्वमेव व्याहन्येत। नहि पुत्रेणाधीयमाना शाखा स्वीयैः पित्रादिभिरधीता। अस्वाध्यायत्वाच्च न तस्या अध्ययनं सिध्येत्। " स्वाध्यायो ध्येतव्यः " इत्यनेन विधिना स्वाध्यायस्यैवाध्ययनविधानात्। अतश्च यस्य वेदस्य या शाखा स्वपरंपरापरिगृहीता तस्य वेदस्य सैव शाखा स्वशाखेति व्यवहारः शिष्टानां। तेन स्वशाखातोऽन्यस्या एक वेद संबंधिन्यानाध्ययनं। तस्या अस्वपरंपरापरिगृहीतत्वादस्वाध्यायत्वेनाध्ययनस्याविहितत्वाद्। अतएव न तदुक्तकर्मानुष्ठानं। अध्ययनस्य कर्मानुष्ठानार्थत्वेन दृष्टार्थत्वात् यत्तु। " अधीत्य शाखामात्मीयामन्यां शाखां ततः पठेत् " इति मदनपारिजाते वसिष्ठस्मरणं तत्तस्य वेदांतरसंबंधिन्या अन्यशाखाया अध्ययने क्रमविधानार्थत्वात् "स्वाध्यायोध्येतव्यः" इत्यत्र स्वाध्यायस्योपादेयकत्वेन तद्गतैकत्वस्य विवक्षितत्वाच्च नैकवेदसंबध्यन्यशाखाध्ययनविधायकम्। वेदांतरसंबंधिन्या अप्यन्यशाखायाः स्वपरंपरापरिगृहीताया एवाध्ययनं तदुक्तकर्मानुष्ठानं च। स्वाध्यायत्वेनास्या अध्ययनस्य विहितत्वात्। तेनायमर्थो निष्पन्नः। स्वपरंपरनिष्ठस्वशाखात्वप्रसिध्या यस्य वेदस्य यस्याः शाखायाः व्रतादेशपूर्वकं पूर्वमध्ययनं तस्याः स्वशाखात्वं मुख्यं। तदध्ययनस्यश्रौत-

स्मार्तकर्मानुष्ठानार्थत्वात् । अत एव तस्याः पूर्वमध्ययनमुक्तं मदनपारिजाते वसिष्ठेन "अधीत्य शाखामात्मीयामन्यां शाखां ततः पठेत्" इति । तदन्यवेदसंबंधिशाखानां तु स्वपरंपरापरिगृहीतत्वेऽपि न स्वशाखात्वं मुख्यं । तदध्ययनस्य श्रौतकर्ममात्रानुष्ठानार्थत्वात् ॥ अतएव तासां पश्चादध्ययनमिति। एतच्च प्रतिवेदं भिन्नभिन्नव्रतादेशपक्षे ज्ञेयम् । सर्ववेदार्थमेकव्रतादेशपक्षे तु ऋग्वेदमारभ्यैव सर्ववेदाध्ययनोक्तेः स्वपरंपरानिष्ठप्रसिद्धेः स्वस्वशाखात्वे हेतुत्वं बोध्यम् । ननु चेदानींतनानामनेकवेदाध्ययनादर्शनात्कथं वेदांतरे स्वपरंपरापरिगृहीतशाखानिर्णय इति चेदुच्यते । अनधीतवेदानां यथा स्वशाखानिर्णयस्तथैवेत्यवेहि । माध्यंदिनशाखोक्तकर्मानुष्ठानस्य स्वपरंपरायातत्वादस्माकं माध्यंदिनीशाखेत्यनधीत वेदा यथा स्वशाखानिर्णयं व्यवहरंत्येवमिहापि । ततश्च येषां ऋग्वेदिनां यच्छाखीयमाध्वर्यवं स्वपरंपरायातं तेषां यजुर्वेदसंबंधिनी सैव स्वशाखेति। एवं येषां यजुर्वेदिनां यच्छाखीयं हौत्रं स्वपरंपरायातं तेषां ऋग्वेदसंबंधिनी सैव स्वशाखेति । एवं येषां छंदोगानां यच्छाखीयं हौत्रमाध्वर्यवं वा स्वपरंपरापरिगृहीतं तेषामृग्वेदसंबंधिनी यजुर्वेदसंबंधिनी सैव स्वशाखेति । तेन श्रौतस्मार्त्तकर्मानुष्ठानाय बह्वृचशाखापरिगृहीतारो यथा केचिद्वयं शांखायनशाखिन इति व्यपदिशंति । अत एव आश्वलायनशाखिनः शांखायनशाखिनो वा श्रौतमाध्वर्यवमनुष्ठातुं यजुः शाखापरिगृहीतारो वयमापस्तंबशाखिनो वयं बोद्धायनशाखिनो वयं काण्वशाखिनो वयं माध्यंदिनशाखिन इत्येवमादि व्यपदिशंति । एवं श्रौतस्मार्तकर्मानुष्ठानाय यजुःशाखापरिगृहीतार आपस्तंबाद्या अपि श्रौतं होत्रमनुष्ठातुं ऋग्शाखास्वपि वयमाश्वलायनशाखिन इत्यादि व्यपदिशंति। एवं सर्वशाखिनां सर्ववेदेषु बोध्यम् । तस्मात्स्वपरंपरापरिगृहीतयजुःशाखायाः स्वशाखात्वेन तच्छाखोक्तमेव रुद्रजपादिकं बह्वृचादिभिः कार्यम् । अन्यथा स्वशाखोक्तत्यागपूर्वकं परशाखोक्तानुष्ठानस्य "अक्रिया त्रिविधा प्रोक्ता" इत्यादिना पूर्वोक्तकात्यायनवाक्येनाक्रियात्वप्रतिपादनस्य स्वशाखोक्तं विहाय परशाखोक्तानुष्ठाने "यः स्वशाखोक्तमुत्सृजेत्" इत्यादिना पूर्वोक्तेन कात्यायनवाक्येन दोषप्रतिपादनस्य चानुपपत्तेः । न च "स्वाध्यायोध्येतव्यः पारंपर्यागतो येषाम्, अक्रिया त्रिविधा प्रोक्ता, यः स्वशाखोक्तमुत्सृज्य." इत्यादिवाक्यानि मुखस्वशाखा विषयाणीति वाच्यम् ॥ स्वशाखात्वस्याविशिष्टत्वेनोभयत्रापि तेषां प्रवृत्तेः । यत्तु नारायणभट्टकृतरुद्रपद्धतौ "तत्र बौद्धायनं ग्राह्यं बह्वृचादिभिरादरात्" इति वचनं तत्स्वपरंपरापरिगृहीत बौद्धायन शाखाविषयम् । उक्तन्यायसिद्धार्थानुवादक-

त्वे लाघवात् । अपूर्वार्थविधायकत्वे गौरवाच्च । नचास्मिन् वाक्ये रुद्रपदमुपात्तमस्ति । येन बौधायनशाखीयो रुद्रो बह्वृचादिभिरुपादीयते । किंच नेदं वाक्यं रुद्रप्रकरणपठितम् । आध्वर्यव प्रतिपादकतया हि क्वचिदेतदुदाहृतम् । न च सर्वैर्बह्वृचादिभिर्बौधायनीयमेवाध्वर्यवमनुष्ठीयते । उक्तार्थकस्वाध्यायविधिविरोधात् । "पारंपर्यागतो येषाम्" इति वसिष्ठस्मृतिविरोधाच्च । "अक्रिया त्रिविधा प्रोक्तः यः स्वशाखोक्तमुत्सृज्य" इति कात्यायनवचो विरोधाच्च । किं तर्हि, स्वपरंपरापरिगृहीतयजुःशाखीयमेव युक्ततरमुत्पश्यामः । ये त्वस्वपरंपरापरिगृहीतबौद्धायनशाखासमाम्नातरुद्रस्य जपाद्याचरंति बह्वृचादयस्तेषां स्वाध्याय विध्यर्थविरोधः । "पारंपर्यागतो येषाम्" इति वसिष्ठस्मृतिविरोधः । स्वशाखोक्तपरित्यागेन परशाखोक्तानुष्ठानस्याकरणत्वोक्तिविरोधः । परशाखोक्तानुष्ठाने दोषोक्तिविरोधश्चेति दोषचतुष्टयं दुःपरिहरम् । एतेन ऋग्वेदेपि रुद्रापरपर्यायं शतरुद्रियमस्तीति भ्रांतिः केषांचिन्निरस्ता । यदि ऋग्वेदे शतरुद्रियमस्ति तर्हि ऋग्वेदीयशतरुद्रियानुष्ठानस्य कर्तव्यत्वेन ऋग्वेदिकरुद्रानुष्ठानपद्धतिनिबंधस्यैषोचितत्वात्कथं ऋग्वेदिभिरपि नारायणभट्टादिभिर्याजुर्वैदिकरुद्रानुष्ठानपद्धतिर्निबद्धा । अथ यजुर्वेदिन उद्दिश्येति चेत् । तर्हि यद्यप्यनेकासु यजुःशाखासु रुद्रः पठ्यते तथापि तैत्तरीयशाखानुसारेण रुद्रप्रयोग उच्यते । स्मार्तरुद्रप्रयोगस्य बोद्धायन सूत्रमूलकत्वेन बह्वृचादीनां च "तत्र बौद्धायनं ग्राह्यं बह्वृचादिभिरादरात्" इति वाक्यानुसारेण बौद्धायनीयानुष्ठेयत्वादित्युपक्रमग्रंथविरोधः । अद्यावधि ऋग्वेदिभिः शिष्टैरनुष्ठीयमानयाजुर्वैदिकरुद्रजपाद्यनुष्ठानस्यासंगतत्वापत्तिश्च॥ तस्मात् ऋग्वेदे शतरुद्रियापरपर्यायो रुद्रो नास्त्येव । यत्तु शांखायनगृह्ये "वृषोत्सर्गे रुद्रान् जपित्वा" इति सूत्रं तद्भुतशेषं निधाय "रुद्रं जपित्वा" इति "पौष्णस्य जुहोति रुद्रान् जपित्वा" इति वृषोत्सर्गे बौद्धायनपारस्करगृह्याद्येकवाक्यतया यजुर्वेद समाम्नात रुद्रजपविधायकम् । शांखायनगृह्यभाष्यकृता तु रौद्रसूक्तजपविधानपरत्वेनेदं व्याख्यातम्॥ तथाहि तद्भाष्यम् । रुद्रदेवताकामंत्राः शूलगवप्रकरणे शांखायनसूत्रे उक्ताः । "कद्रुद्रायेमारुद्रायाते पितरि मा रुद्राय स्थिरधन्वने" इति सर्वरुद्राय स्थिरधन्वने" इति सूत्रैश्चतस्रो दिश उपस्थायेति। वृषोत्सर्गे । आश्वलायन गृह्यपरिशिष्टेऽपि शूलगवपशौ विनियुक्तानां रौद्रसूक्तानां वृषोत्सर्गेऽपि विनियोगदर्शनाद् "रुद्रान् जपित्वा" इति शांखायनगृह्यतो रुद्रशब्दो रौद्रसूक्ताभिप्राय इति शांखायनगृह्यभाष्यकाराभिप्रायः । च शब्दस्योक्तसमुच्चयार्थकत्वेन चतुर्णां सूक्तानामेव समुच्चयस्य तेनोक्तत्वादनुक्त त्र्यंबकमंत्रसमुच्चयार्थकत्वे च प्रमाणाभावात् ॥

चकाराञ्चयंबकमंत्रश्चेति भाष्यं चिंत्यम् । यत्तु भ्रांतः कश्चिदाह । बह्वृचशाखासु रु-द्रसद्भावे एकवचनांते न समाम्नातं " रुद्रं जपित्वा " इति शांखायनगृह्यं प्रमाणम्। रुद्रसद्भावे हि " रुद्रं जपित्वा " इति तद्विनियोगाभिधानं न । युक्तं तु तदसद्भावे। अत एव " जप्तव्यं शतरुद्रीयमृग्वेदोक्तं पदक्रमैः । एवं कृते तु देवेशं पश्यध्वं नेतरे-णच " इति वामनपुराणे ऋग्वेदोक्तपदक्रमैर्युक्तशतरुद्रियजपविधानमुक्तम् । पुरा-णांतरे च " रौद्रो जपः सर्वशाखासु दृष्टः सद्भिः स्वशाखाविहितः प्रशस्तः । कु-र्वन् स्वशाखोक्तमिमं हि नित्यं प्राप्नोति सर्वं हि मनोऽभिलाषम् " इति सर्ववेदशा-खासु रुद्रसद्भावोक्तिपुरस्कारेण स्वशाखीयरुद्रप्रशंसाभिधानम् । अतश्च ऋग्वेदे रुद्रापरपर्यायं शतरुद्रियमस्त्येव । किंच । स्वशाखोक्तपरित्यागेन परशाखोक्तक-रणे निंदापि स्मर्यते ॥ " स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः । कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् " इति । " स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं च यत् । कृतं तत्फलदं न स्यादिति व्यासेन भाषितम् " " बह्वल्पं वा स्वगृह्योक्तम् " इत्यादिभिर्वचनैः । तस्मात्स्वशाखोक्त एव रुद्रो बह्वृचछंदोगादिभिर्जपा-दिषु स्वीकार्यः । अत एवोक्तं गृह्यभाष्यकृता " एके " रुद्रं जपित्वा " इति पठंति तन्मते पूर्णो रुद्रजपः । तद्यथा । प्रणवः । व्याहृतयः ३ । गायत्री । आपो-हिष्ठा ९ । एतोनु ३ । ऋतंच सत्यं ३ । शंवत्यः शन्नः ३४ । स्वस्तिनोमिमीतां ७ । स्वादिष्टया १८ । आद्यंते जपोऽयं ॥ ततो वेदादिः। अग्निमीळे ९ । ततः षडं-गानि । येनेदं भूतं २५ । सहस्रशीर्षा १६ । अहंरुद्रेभिः ८ । नतमंहः ८ । आशुः शिशानः १३ । विभ्राड् बृहत् ४ । प्रधानानि ॥ कद्रुद्राय ९ । इमारुद्राय ११ । आतेपितः १५ । रुद्राणामेति ११ । प्रवः पांतं १ । आवो राजानं १ । कद्धिष्ण्यासु २ । हंसः शुचिषत् १ । कथामहे रुद्रियाय १ । तमुष्टुहियः । स्त्रिषुः १ । भुवन-स्य पितरं १ । रथीतमं कपर्दिनं १ । रुद्रस्य ये १ । अस्मे रुद्राः १ । प्रवोच्छारिरिचे १ । त्र्यंबकम् । इत्युत्तरांगानि ॥ एवं रुद्रसूक्तसंख्या १७ । ऋक्संख्या २७ । सूक्तानामृक्संख्या १६८ । ऋचश्च २७ निगदः १ एवमृक्संख्या १९५ निगदः १ । तदुक्तमृग्विधाने "ॐकाराद्यास्तु ता जप्त्वा सावित्रीं च तदित्यृचम्। आपोहिष्ठे-ति सूक्तं तु शुद्धवत्योघमर्षणम् । शंवत्यः स्वस्तिमत्यश्च पावमान्यस्तथैवच । सर्वत्रैत-न्मयोक्तव्यमादावंते च कर्मणाम् " इति । अतश्च बह्वृचैः स्वशाखासमाम्नात एव रुद्रो जपादिषु ग्राह्य इति । तदसत् । शतरुद्रियहोमे विनियुक्तमंत्रसमुदायस्यैव स्मृ-तिसूत्रपुराणस्थरुद्रविधानेषु रुद्रत्वप्रतिपादनेन तस्यैवात्र रुद्रपदवाच्यतया प्रसि-द्धत्वेन च रुद्रत्वात् । नच यजुर्वेदशाखातोऽन्यवेदशाखासु शतरुद्रियहोमस्तस्मिन् वि-

नियुक्तमंत्रसमुदायो वा समाम्नातोऽस्ति । अत एव " यस्तु रुद्रं जपेन्नित्यं ध्यायमानो ममाकृतिम् " इति, "एकादशगुणान् वापि रुद्रानावर्त्य धर्मवित्" इति, " ब्राह्मणस्वर्णहारी च रुद्रजापी जले स्थितः" इत्यादौ रुद्रपदवाच्यतया प्रसिद्धएव याजुर्वेदिकरुद्रः सर्वैर्मिताक्षरा हेमाद्रिमहार्णवकारादिभिरुक्तः। हुतशेषं निधाय रुद्रं जपित्वा" इति "पौष्णस्य जुहोति रुद्रान् जपित्वा" इति वृषोत्सर्गे बौद्धायनपारस्करादौ कर्कोपाध्यायादिभिर्भाष्यकारैरपि स एव रुद्र उक्तः। न च रुद्रसूक्तानां रुद्रत्वे प्रमाणमस्ति। पूर्वोक्तशांखायनश्रौतसूत्रैकवाक्यतया स्वशाखाप्रसिद्धरौद्रसूक्तजपविधानपरत्वे नोपपत्तेः । अन्यथा । प्रसिद्धयाजुर्वेदिकरुद्रापेक्षया रुद्रांतरकल्पने रुद्रपदस्यानेकशक्तिकल्पनागौरवप्रसंगात् । रुद्रस्य द्वैविध्ये तन्मूलभूतानेकश्रुतिकल्पना गौरवप्रसंगाच्च । कुर्याद्विधानं रुद्राणां यजुर्वेदविनिर्मितम् " इति बृहत्पराशरेण रुद्रविधानस्य यजुर्वेदविनिर्मितत्वोक्त्या अन्यवेदोक्तत्वाभावोक्तेश्च । नच बह्वृचशाखासु रुद्रः प्रसिद्धो नापि शांखायनगृह्यकृता रुद्रविधानं वा क्वचिदप्यभिहितम् । तस्मान्न " रुद्रं जपित्वा " इति शांखायनगृह्यं बह्वृचशाखासु रुद्रसद्भावे प्रमाणमिति वक्तुं युक्तम् ॥ किंच " हेमाद्रौ शौनकप्रोक्तात् " इति ॥

## ॥ अथ शतरुद्रियमंत्रविनियोगः ॥

तद्विधिं तदर्थध्यानं तैराराधनं तद्देवतां तदर्पिं तदंगन्यासादिकं तच्छंदश्च व्याख्यास्यामः शौनकमतेन, " तत्र शतरुद्रियमंत्रो " नमस्ते मन्यव " इत्येकादशानुवाका इत्युक्तं । अतश्च ऋग्वेदाचार्येण शौनकेनापि याजुवेदिकरुद्रविधानं निरूपयता बह्वृचशाखासु रुद्रो नास्तीति प्रदर्शितम् । तथाहि मध्यकुंभं प्रकृत्याह-शौनकः । " अर्चितं गंधपुष्पाद्यैः श्रीरुद्रं च स्पृशन् जपेत् । षडंगसहितं सम्यक् तं जपेद्रुद्रसंख्यया " षडंगसहितं षड्विधांगन्याससहितं । रुद्रसंख्यया एकादशवारम् । बह्वृचछंदोगयोस्तु रुद्राभावात् प्रकारांतरं तयोराह " बह्वृचा रुद्रसूक्तैर्वा छंदोगा रुद्रसामगैः । एकादशाष्टत्रिद्व्येकसंख्यया शक्तितो जपेत् " इति । अत्र वा शब्दो विकल्पार्थः । तेन यजुः शाखासमाम्नातरुद्राध्ययनाभावे सूक्तादिजपविधिः । तदध्ययनसद्भावे तु रुद्रजपविधिरित्येवं व्यवस्थित इति ॥ यदि च बह्वृचछंदोगशाखासु रुद्रः समाम्नातोऽस्तीति ब्रूयात् प्रतिब्रूयात्तर्ह्येनम् । रुद्रजपविधिनैव बह्वृचादीनां तत्सिद्धौ " बह्वृचा रुद्रसूक्तैर्वा " इत्यादिशास्त्रस्य वैयर्थ्यमेव प्रसज्येतेति । तस्माद् ऋग्वेदे सामवेदे च रुद्रो नास्त्येव ॥ यत्तु ऋग्विधाने चतुर्थेऽध्याये " अत्रैवत्वावपेन्मध्ये पितृसूक्तान्यनेकशः । पित्र्यां तां संहितां विद्यात्पितॄन्प्रीणंति चैतया । एवमेव समाहृत्य वासवी संहिता भवेत् । रौद्र्यादित्या वैश्वदेवी

यद्दैवत्यां च कामयेत्'' इत्युक्तम् ॥ यच्च छंदोगानां सामविधानब्राह्मणे "आवोराजा तद्वो वर्ग आज्यदोहानि देवव्रतानि चैषा रौद्री नाम संहितैतां प्रयुंजन् रुद्रं प्रीणाति" इत्युक्तम्। आवो राजेत्येकं साम। तद्वो वर्गश्चत्वारि। आज्यदोहानि त्रीणि। देवव्रतानि त्रीणि। इति। तत्फलांतरार्थं प्रयोगांतरम्। नत्वेतैर्महारुद्रादिकरणं युक्तम्। प्रमाणाभावात्। तेन यत्केषांचिदेतद्दशासामभिर्महारुद्राद्याचरणं यच्च ऋग्वेदिनां रुद्र सूक्तैस्तन्निर्मूलं भ्रांति निर्बंधनमभिमानमात्रमित्युपेक्ष्यमित्युक्तं निर्णयसिंधौ शांतिरत्ने कमलाकरभट्टपादैः ॥ अत एव बृहत्पराशरेणोक्तम्। "कुर्याद्विधानं रुद्राणां यजुर्वेदविनिर्मितम्" इति। तथान्यत्रापि। "यावज्जीवं प्रणवमथवा ॥ वर्तयेद्रौद्रियं वा याजुर्वेद्यम्" इति। अत्र "यजुर्वेदविनिर्मितम्—याजुर्वेद्यम्" इति विशेषणाभ्यां वेदांतरे रुद्रविधानसद्भावो व्यावर्त्यते ॥ यदि तु "कुर्याद्विधानं रुद्राणाम्" इत्यनेन यजुर्वेदविहितरुद्रविधानकर्तव्यता मात्रस्यैव विधानायात्र "यजुर्वेदविनिर्मितम्" इति विशेषणमृग्वेदादिवेदेषु रुद्रविधानसद्भावं व्यावर्तयितुं शक्नोति। एवं च ऋग्वेदविहितरुद्रविधानकर्तव्यता सिद्धिरिति ब्रूयात्तर्हि प्रति ब्रूयादेनम्। "अश्वाभिधानीमादत्ते" इत्यत्राश्वाभिधानी ग्रहणेन गर्दभाभिधान्याः परिसंख्यावदिहापि "रुद्रविधानं यजुर्वेदविहितं कुर्यात्" इत्यभिदधता वेदांतरविहित रुद्रविधानकर्तव्यतायाः परिसंख्यैवाभिहिता स्यात्। ततश्चैवं वाक्यार्थ आपद्येत। रुद्रविधानं यजुर्वेदविहितं कुर्यान्नान्यवेदविहितमिति। एवं च सति वेदांतरे रुद्रविधानसद्भावेऽपि न तद्विहितरुद्र जपादिकं सिध्येत् वेदांतर विहितरुद्रविधानकर्तव्यतायाःपरिसंख्याततत्वात् तस्मात् ऋग्वेदादिवेदेषु रुद्रविधानाभावेन तत्कर्तव्यताया अप्रसक्तेस्तेषु रुद्रविधानाभाव एव "यजुर्वेदविनिर्मितम्" इत्यनेन बोध्यते इति युक्तं अन्यथा "यजुर्वेद विनिर्मितम्" इति विशेषणानर्थक्यापत्तेः। ज्ञानभास्करे सूर्यारुणस्मृतिरपि। "यजुर्मयो ह्ययं देवो यजुर्भिः शतरुद्रियैः पूजनीयो महारुद्रः संततिश्रेय इच्छता" इति। तस्माद् यजुर्वेदव्यतिरिक्तवेदेषु रुद्रो नास्त्येव। एवं स्थिते सति "रुद्रं जपित्वा" इति शांख्यायनगृह्ये रुद्रस्यैव जपो विधीयत इति तत्र यद्याग्रहस्तर्हि "रुद्रान् जपित्वा" इति, "रुद्रंजपित्वा" "इति पारस्करबौधायनगृह्यैकवाक्यतया यजर्वेदसमाम्नात रुद्रस्यैव जपविधायकमिदं शांखायनगृह्यमित्येव युक्तं वक्तुम्। पूर्वोक्तप्रकारेण बह्वृचशाखासु रुद्राभावनिर्धारणात्। पूर्वोक्तवाक्यैर्यजुर्वेदसमाम्नातरुद्रस्यैव रुद्रस्याभिधानाच्च। तेन रुद्रजपार्थत्वेन वरणीयविप्रस्य यजुर्वेदिनो वरणपूर्वकं याजुरुद्रस्यैव जपो वृषोत्सर्गांगतया शांखायनैः कारणीयः। यत्तूक्तं शांखायनशाखायां

रुद्रसद्भावे हि " रुद्रं जपित्वा " इति तद्विनियोगाभिधानं युक्तं नतु तदसद्भावे इति। तन्न। स्वशाखायामसमान्नातानां शाखांतरे समाम्नातानामपि मंत्राणां कात्यायनीयकल्पसूत्रे शतशो विनियोगदर्शनात्। नच शाखांतरीयमंत्राणां संपूर्णानां कल्पसूत्रे उपदेशाद्युक्तं तत्र विनियोगाभिधानम्। प्रकृते तु शांखायनशाखायां रुद्रानुपदेशात् " रुद्रान् जपित्वा " इति रुद्रविनियोगाभिधानमसंगतमिति वाच्यम्। यतो " रुद्रान् जपित्वा " इति रुद्रविनियोगाभिधानमसंगतमिति वाच्यम्। यतो " रुद्रान् जपित्वा " इत्यत्र रुद्रपदवाच्यानां शाखांतरीयमंत्राणां संपूर्णानां " विष्णुखेनारण्येऽनूवाच्य " मितिवन्नाम्नैवोपदिष्टत्वात्। यत्तु " जप्तव्यं शतरुद्रियमृग्वेदोक्तं पदक्रमैः " इति वामनपुराणनाम्ना लिखिते वाक्ये ऋग्वेदोक्तशतरुद्रियजपविधानादस्त्येव ऋग्वेदे शतरुद्रियाख्यहोमे विनियुक्तमंत्राणां शतरुद्रियत्वादृग्वेदे शतरुद्रियमस्ति। किंच। अस्मिन् वाक्ये ऋग्वेदोक्तं शतरुद्रियं जप्तव्यमित्यावदुक्तम्। " शतरुद्रियं जुहोति नमस्ते रुद्रमन्यव " इति यजुर्वेदोक्तशतरुद्रियवदिदमृग्वेदोक्तं शतरुद्रियमिति तु नोक्तम्। नापि रौद्रसूक्तानि शतरुद्रियमंत्रत्वेनास्मिन् वाक्ये उपात्तानि। अपि च। ऋग्वेदोक्तरौद्रसूक्तेषु प्रयुज्यमानः शतरुद्रियशब्दः स किं बहुरुद्रदैवत्यसादृश्येन प्रयुज्यते शतरुद्रियाख्यहोमसाधनत्वसादृश्येन वा। नतावदाद्यः। रौद्रसूक्तानां चतूर्णामेकरुद्रदैवत्यत्वेन यजुर्वेदोक्तशतरुद्रियवद्बहुरुद्रदैवत्यत्वाभावात्। यद्यपि यजुर्वेदसमधीतरुद्रेऽपि पठितेषु केषुचिन्मंत्रेष्वेकरुद्रदैवत्यताप्यस्ति तथापि एकदैवत्यस्वबहुरुद्रदैवत्यत्वमंत्रसमुदायमादायैव बहुरुद्रदैवत्यत्वं बोध्यम्। छत्रिणो गच्छन्तीतिवत्। नापि द्वितीयः। शतरुद्रियाख्यहोमे रौद्रसूक्तानां रौद्राध्यायवद्विनियोगस्याश्रुतत्वेन तत्साधनत्वाभावात्। ततश्चास्माद्वाक्याद्रौद्रसूक्तानां शतरुद्रियत्वं वक्तुमशक्यत्वादृग्वेदे शतरुद्रियसद्भावः खपुष्पायमान एवेति कथमृग्वेदे शतरुद्रियमस्तीति भवता वक्तव्यम्। किंच। अस्मिन्वाक्ये ऋग्वेदोक्तं शतरुद्रियं पदक्रमैर्युक्तं जप्तव्यमिति विहितम्। नचैतादृशजपानुष्ठानं तत्रापि दृश्यते। यथाशास्त्रमननुष्ठानाच्च न जपात्फलं तव सिध्येत्। तस्मादस्य वाक्यस्य वामनपुराणेऽदर्शनादिदं निर्मूलं कल्पितमेव। यत्तु " प्रपद्येन विरूपाक्षं रौद्रं मंत्रगणं जपन्। अनार्यैर्नाभिभाषेत न शूद्रैर्नापि गर्हितैः " इति ऋग्विधानवाक्यं तत् " रौद्रं मंत्रगणम्, अनार्यैर्नाभिभाषेत" इत्यादि नियमविशिष्टं जपतो विरूपाक्षप्राप्तिः स्यादित्येतदर्थपरं नतु ऋग्वेदे रुद्रसद्भावप्रतिपादनपरम्। यानि तु " स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः" इत्यादीनि वाक्यानि तानि स्वशाखोक्तं विहाय परशाखोक्तं न ग्राह्यमित्यर्थकानि। नच बह्वृचशाखायां रुद्रः समाम्नातोऽस्तीति शतशः प्रागावेदितम्। यच्च " रौद्रो जपः सर्वशाखासु दृष्टः "

इति वाक्ये सर्वशाखापदं तत्तत्र वेदपदाश्रवणात्सर्वयजुः शाखापरम्। यच्चैके "रुद्रं-जपित्वा" इति पठंति तन्मते "पूर्णो रुद्रजपः" इत्यादिशांखायनगृह्यभाष्यं तदपि न रुद्रसद्भावे साधकम्। यतो "रुद्रान् जपित्वा" इति सूत्रे सामान्यतः श्रुत्यस्य बहुवचनांतरुद्रपदस्य "कद्रुद्रायेमारुद्रायाते पितरि मारुद्राय स्थिरधन्वने" इति च सूक्तानीति शूलनागप्रकरणस्थशांखायनसूत्रैकवाक्यतया "कद्रुद्राय" इत्यादि सूत्रचतुष्टयपरत्वेनोपसंहारो गृह्यभाष्यकृता यथोक्तस्तथैकवचनांतरुद्रपदपाठेऽपि रुद्रपदस्य चतुः सूक्तपरत्वेनोपसंहारः संभवति। तथाहि। चतुः सूक्तांतर्वर्तिरुद्रदैवत्यमंत्रबहुत्वमादाय "रुद्रान्" इति बहुवचनांतः पाठः। चतुः सूक्तांतर्वर्तिरुद्रदैवत्य मंत्रसमुदायस्यैकत्वमादाय "रुद्रम्" इत्येकवचनांतः पाठः। एवं च सति बहुवचनांतरुद्रपदेनैवैकवचनांतरुद्रपदेनाप्यभिधेयस्य रौद्रसूक्तसमुदायस्याभिधातुं शक्यत्वेनैकवचनांतरुद्रपदपाठे विशेषानवगमात्। अत एव "रुद्रं जपित्वा" इति "रुद्रान् जपित्वा" इत्येवं पूर्वोक्तबौधायनपारस्करगृह्यभेदेन। "यस्तु रुद्रं जपेन्नित्यम्" इति "एकादशगुणान् रुद्रानावर्त्य" इति स्मृतिभेदेन च याजुषाणामुभयविधपाठसद्भावेऽप्येक एव रुद्रो द्विविधपाठेप्यभिधीयते। तेन पाठभेदवशादर्थभेदकल्पनमर्थैक्ये संभवति सतित्वयुक्तम्। अत एकवचनांतरुद्रपदपाठेऽपि रुद्रपदस्य "कद्रुद्राय" इत्यादीनि चत्वार्येव सूक्तान्यभिधेयानीति न कश्चित्पाठभेदनिबंधनोऽर्थभेदः। अत एव भाष्यकृता एके "रुद्रं जपित्वा" इति पठंतीत्यादिग्रंथ एकोक्त्या न स्वाभिमत इति द्योतितम्। अथवा बहुवचनांत रुद्रपदपाठे चत्वार्येव सूक्तानि रुद्रपदार्थः। एकवचनांतरुद्रपदपाठे तु "अग्निमीळे येनेदं सहस्रशीर्षाऽहंरुद्रेभिर्नतमंह आशुः शिशानो विभ्राड्" इति निगदः "कद्रुद्रायेमारुद्रायातेपितरि मारुद्राय स्थिरधन्वने" इति च सूक्तानि "सोमारुद्राधारयेथां जराबोधतन्नमो महद्भ्यो रुद्राणामेति प्रवः पांतं रघुमन्यव आवो राजानं कद्रिष्ण्यासुद्रे हंसः शुचिषत्कथामहे रुद्रियाय तमुष्टुहि यःस्विषु भुवनस्य पितरं रथीतमं कपर्दिनं रुद्रस्य येऽस्मे रुद्राः प्रवोऽच्छारिरिचे त्र्यंबकम्" इतिभाष्यकारोदाहृतरुद्रपरिशिष्टोक्तेः "अग्निमीळे" इत्यादि "त्र्यम्बकं यजामहे" इत्यंतो रौद्रर्क्समुदायो रुद्रपदार्थ इत्येवं पाठभेदेनार्थभेदोपपत्तावुपपन्नमेव यद्यपि भाष्यं तथापि "अग्निमीळे" इत्याद्यृक्समुदायस्य रुद्रपरिशिष्टोक्तस्य रुद्रत्वबोधकप्रमाणाभावात्पूर्वोक्त बृहत्पराशरादिवाक्ये "यजुर्वेदविनिर्मितम्" इति "याजुर्वेद्यम्" इति विशेषणाभ्यां वेदांतरे रुद्रसद्भावस्य निरस्तत्वाच्च न रुद्रत्वम्। अत एव मिताक्षराहेमाद्रिमहार्णवकारादिभिस्तस्य रुद्रत्वं नांगीकृतम्। यस्तु तन्मते "पूर्णो रुद्रजपः" इति भाष्यकारोक्तरुद्रजपशब्दप्रयोगः सतु रौद्रसूक्तजपपर इत्यविरोधः। रुद्रपरिशिष्टमिति स-

माख्यातुं त्र्यंबकमंत्रजपविधानवत्फलांतरार्थत्वेन " अग्निमीळे " इत्यादि रौद्रर्क् समुदायजपविधानप्रतिपादकतयोपपन्नेव यद्यपि " अग्निमीळे " इत्यादयः केचन मंत्रा अग्निदैवत्या न रुद्रदैवत्यास्तथापि "अग्निर्वै रुद्रः" इत्यग्निचयनप्रकरणे शतपथश्रुत्याग्नेरेवरुद्रत्वाभिधानेनाग्निरुद्रयोरभेदान्नानुपपत्तिः । वस्तु तस्तु " अग्निमीळे " इत्यादीनां "त्र्यंबकं यजामहे" इत्यंतानां मंत्राणां रुद्रत्वेन निर्देशात्सर्वेषां प्राधान्यं परिशिष्टात्प्रतीयते । भाष्यकृता तु ततो वेदादिः " अग्निमीळे " इत्युक्त्वा ततः षडंगानि " येनेदं भूतम् इत्यादीनि " विभ्राड् बृहत् " इत्यंतान्युपन्यस्य "कद्रुद्राय" इत्यादीनि चत्वार्येव सूक्तानि प्रधानानीत्युपन्यस्तत्त्राचतुर्णामेव सूक्तानां प्राधान्यं भाष्यतः प्रतीयते। अतो भाष्यपरिशिष्टयोर्मिथो विरोधाद् बह्वृचानां रुद्र परिशिष्टमिति समाख्यया रुद्रविधानप्रतिपादकपरिशिष्टस्य चाप्रसिद्धेः स्वोपनिबद्धफक्किकाया एवं रुद्रपरिशिष्टत्वेनोपन्यस्तत्वाच्च परिशिष्टं निर्मूलम् यत्तु भाष्यकृतोक्तम् । ऋषिदैवतछंदांसि परिशिष्टात् ज्ञेयानीति तत्र परिशिष्टं सर्वानुक्रमसूत्ररूपमेव ज्ञेयम् । ऋषिदैवतछंदसां तत्रैव निरूपणात् । यच्च भाष्यकृता " येनेदं भूतम् " इत्यादीनां " विभ्राड् बृहद् " इत्यंतानां हृदयादिषडंगमंत्रत्वमुक्तं। यच्च " हृदयं शिवसंकल्पं शिरः सूक्तंच पौरुषम्। अहंरुद्रे शिखां विद्याच्छैलूषं कवचं मतम् । आशुर्नेत्रं विजानीयाद्विभ्राडस्त्रं तथैवच । सूक्तान्येतानि वै विद्याद्रुद्रस्यांगानि सर्वदा " इति कारिकायामुक्तं । तन्मूलभूतानि ऋग्विधानवाक्यानि यान्युदाहृतानि " येनेदमिति वैनित्यं जपेत नियमव्रतः। समाधिमनस्तेन विंदते न समुह्यति" तथा "ऋग्भिः षोडशभिःसम्यगर्चयित्वा जनार्दनम्" इति। प्रलये जनानर्दयती तिजनार्दनो रुद्रः। विष्णुरुद्रयोरैक्यात् । तथा " अहं रुद्रेभिरित्येतद्वाग्मी भवति पूजितः । नतमित्यष्टमं सूक्तं वैश्वदेवं जपन्मुनिः। कृत्स्नं तु किल्बिषं हित्वा विश्वैर्देवैस्तु हीयते। सर्वत्रैव पराशांतिर्ज्ञेयाऽप्रतिरथस्त्वृषिः । यमेव देशं गच्छेत शत्रुवाप्यनुमंत्रितः । नाजित्वा विनिवर्तेत परं हि ब्रह्मणो बलम्। सर्वकामैर्जपेदेतत्सर्वकामसमृद्धये। विभ्राड्बृहदतो नित्यं सौर्यं सूक्तं जपन्मुनिः। यं यं काममभिध्यायेत्तंतं प्राप्नोत्यसंशयम् " इति। तदेतैःऋग्विधानवाक्यैरुद्रसूक्तानां काम्यजपविधानेन हृदयाद्यंगेषु न्यासविधाने प्रमाणाभावादतीव मंदम् ॥ अथ यदि " शिवसंकल्पहृदयम् " इत्यादियजुर्वेदोक्तरुद्रस्यांगविधायकशास्त्रमत्रापि प्रमाणमिति ब्रूयात्तर्हि प्रतिब्रूयादेनम् । हृदयाद्यंगद्वये त्विदमस्तु । शिखाद्यंगचतुष्टये तु नैतत्प्रमाणं भवितुमर्हति । उक्तशास्त्रेण तु उत्तरनारायणादीनां शिखाद्यंगचतुष्टये विनियोगप्रतिपादनेन " अहं रुद्रेभिः " इत्यादिनां विनियोगप्रतिपादनाभावात् । न च " अहं रुद्रेभि " रित्यादीनां शिखाद्यंगेषु न्यास-

विधायकं शास्त्रांतरमस्ति । किंच । " आशुः शिशानः " इत्यनुवाकः कवचमंत्रेण सर्वत्रोक्तः । "विभ्राड् " इत्यनुवाकश्च नेत्रमंत्रत्वेन । इह तु "आशुः शिशानः" इत्यनुवाको नेत्रमंत्रत्वेन । " विभ्राड् " इत्यनुवाकश्चास्त्रमंत्रत्वेनेति वैपरीत्यमुक्तम् । " आशुः शिशानः " इत्यस्य नेत्रमंत्रत्वे " मर्माणि ते वर्मणाच्छादयामि " इति मंत्रलिंगविरोधः । " चक्षोः सूर्योक्त जायत " इति मंत्रे सूर्यो भगवतो नेत्रादुत्पन्न इत्यभिधानात्सौरमंत्राणां " विभ्राड् " इत्यादीनां नेत्रमंत्रत्वमुक्तम् । न पुनरस्त्र-मंत्रत्वम् । अतस्ततश्च प्रमाणानुपलंभान्निर्मूलमित्युपेक्षणीयम् । यद्यपि भाष्यकृता रौद्रान् मंत्रान् रुद्रस्वरूपकत्वेनोपन्यस्य तत्र प्रामाण्यसाधकतया " ॐकाराद्यास्तुता-जप्त्वा" इति ऋग्विधान वाक्यमुदाहृतम् । तदपि न तत्र प्रामाण्यसाधकम् । नहि तेन ऋग्विधान वाक्येन रुद्र स्वरूपं प्रतिपाद्यते। नापि "येनेदं भूतम् " इत्यादीनां षडंगमं-त्राणां हृदयाद्यंगत्वं पूर्वांगत्वमुत्तरांगानामुत्तरांगत्वं वा प्रतिपाद्यते । किं तर्हि " पु-रश्चरणमादौ तु कर्मणां सिद्धिकारकम्" इत्युपक्रम्य ऋग्विधाने "ॐकाराद्यास्तु ता ज-प्त्वा" इति वाक्यं पठित्वा "सर्वत्रैतत्प्रयोक्तव्यमादावंते च कर्मणाम्। आसहस्रादाश-ताद्वादशांतमथवा जपेत् " इत्युपसंहाराद्वक्ष्यमाणानां पुरश्चरणरूपाणां काम्यानां सर्व-कर्मणामाद्यंतयोरोंकारादीनां मंत्राणां सहस्राद्यन्यतमसंख्यया जप प्रतिपाद्यते । अनैतद्बह्वृचशाखासु रुद्रसद्भावे साधकम् । किंच " अग्निमीळे " इत्यादिसूक्तानां जपस्याद्यंतयोरपि नानेन ऋग्विधानवाक्येन प्रणवादीनां मंत्राणां जपो विधातुं श-क्यते । यतो वेदादिसूक्तादेः पुरश्चरणरूपत्वेनानुष्ठीयमानजपस्याद्यं योः प्रणवादि-नां मंत्राणां जपस्यानेन विहितत्वात् । नच वेदादिसूक्तानां जप इह पुरश्चरणरू-पोऽस्ति। वृषोत्सर्गांगत्वेन हि तस्य विधानात् । न च " रुद्रं जपित्वा" इत्यनेन वि-हितजपस्य रुद्रपरिशिष्टोक्तस्वरूपस्य रुद्रस्याद्यंतयोः प्रणवादीनां जपो येन ऋग्वि-धानवाक्येन विधीयत इति वाच्यम् । पुरश्चरणार्थतव्याविहितजपेष्वेव ऋग्विधान-वाक्यप्रवृत्त्या गृह्योक्तकर्मसु विहितजपेषु मंत्रेषु तदप्रवृत्तेः । अन्यथा वृषोत्सर्गांगभूत वेदादिसूक्तानां जपस्याद्यंतयोः प्रणवादिमंत्राणां जपेऽस्मादृग्विधानवाक्यादुच्य-माने गार्ह्यकर्मसु विहितजपानां सर्वेषां मंत्राणामाद्यंतयोस्तदापत्तेः । " आसह-स्रादाशताद्वादशांतमथवा जपेत् " इति वाक्यशेषादुद्रपरिशिष्टोक्तं रुद्रस्याद्यंतयोः प्रणवादीनां मंत्राणां चरमपक्षेऽपि दशकृत्वा जपापत्तेश्च । तस्मादेकवचनांततया बहुवचनांततया वा पठितेन " रुद्रान् जपित्वा " इति शांखायनगृह्यसूत्रेण भाष्यकारप्रदर्शितेन यथा " कद्रुद्राये मारुद्रायाते पितरि मारुद्राय स्थिरधन्वने " इति च सूक्तानीति शूलगवप्रकरणस्थशांखायनसूत्रैकवाक्यतया " कद्रुद्राय " इत्या-

दीनां रौद्राणां चतुर्णां सूक्तानामेव जपो बौद्धायनपारस्करगृह्यैकवाक्यतया यजुर्वेदसमाम्नातो रुद्रजपो वा परमार्थतो विधीयते । तेनैतद्वशाद् बह्वृचशाखासु रुद्रसद्भावं वदता निरंकुशेन स्वकीयं मौर्ख्यमाविष्कृतमित्यलमतिदूषणप्रयासेन हेमाद्र्यादिमतद्रोहिखंडनेनामुना मुदं प्राप्नोतु श्रीभवानीशः श्रीरुद्रः कुलदैवतः ।

एवं स्वशाखीयरुद्रजपे सिद्ध कथमित्याकांक्षायां माध्यंदिनकाण्वादिवाजसनेयशाखास्विति कर्तव्यताविध्यपरपर्यायस्य रुद्रविधानस्याश्रुतत्वाद्रुद्रविधानानां चानेकत्वेऽपि बोधायनसूत्रोक्तरुद्रविधानोक्तैवेति कर्तव्यता काण्वमाध्यंदिनादिभिरुपादेयेति देवयाज्ञिकादयः । बृहत्पराशरोक्तरुद्रविधानोक्तौ वेति कर्तव्यता काण्वादिभिर्ग्राह्येत्यपरे । युक्तं चैतद् । स्मृतेः सर्वशाखासाधारणत्वेन काण्वादीन् प्रति बृहत्पराशरोक्तरुद्रविधानोक्ताया इति कर्तव्यताया एव प्राप्तत्वात् । " इषेत्वादिषु मंत्रेषु खंब्रह्मांतेषु याः क्रियाः " इति बृहत्पराशरवाक्ये खंब्रह्मांतत्वोक्तेः खंब्रह्मांततायाश्च वाजसनेयशाखास्वेव समाम्नातत्वात्ततो भिन्नासु तैत्तरीय शाखासु " समुद्रोऽश्वस्य योनिः समुद्रः " इत्यंततायाः समाम्नातत्वेन खंब्रह्मांतताया एवाभावाच्च बृहत्पराशरोक्तरुद्रविधानस्य वाजसनेयिविषयत्वावगमाच्च । अपि च बृहत्पराशरोक्तरुद्रविधाने वाजसनेयशाखासु श्रुतमंत्राणामेव विनियोगः श्रूयते न पुनरश्रुतमंत्राणाम् । अतश्च बृहत्पराशरोक्तरुद्रविधानमेव वाजसनेयिभिरनुसर्तव्यम् । यत्तु बौद्धायनोक्तरुद्रविधानेति कर्तव्यतोपादानमुक्तं देवयाज्ञिकादिभिस्तत्काण्व माध्यंदिनादीनां तदध्ययनाक्षेपापत्तेः सूत्रस्य चासाधारणत्वेन बौद्धायनैकविषयत्वाच्चायुक्तम् । यद्यप्येवं तथापि देवयाज्ञिकादिपद्धतीराश्रित्य कैश्चिदाचरितत्वात्पूर्वं बौद्धायनसूत्रोक्तेति कर्तव्यताऽत्रोच्यते तत्र तावत् बौद्धायनसूत्रम् ।

## ॥ अथ न्यासविधिः ॥

अथातः पंचांगरुद्राणां न्यासपूर्वकं जपहोमार्चनविधिं व्याख्यास्यामो या ते रुद्रेति शिखायामस्मिन्महत्यर्णव इति शिरसि, सहस्राणीतिललाटे, हंसः शुचिषदिति भ्रुवोर्मध्ये, त्र्यंबकं यजामह इति नेत्रयोः नमस्कृत्यायेति कर्णयोः मानो स्तोक इति नासिकायां, अवतत्येतिमुखे, नीलग्रीवौद्वौ कंठे, नमस्त आयुधायेति बाह्वोः येतीर्थानीति हस्तयोः; सद्योजातमिति पंचानुवाकान् पंचस्वंगुलीषु, नमोवः किरिकेभ्य इति हृदये, येष्वृक्षेषूदरे, नमः शंभवायेति कुक्ष्योः, नमोगणेभ्य इति पृष्ठे नमो हिरण्यबाहव इति पार्श्वयोः, विज्यं धनुरिति जठरे, हिरण्यगर्भ इति नाभौ, मीढुष्टमेति कट्यां, येभूतानामधिपतय इति गुह्ये, सशिराजातवेदा इत्यपाने, मानो

महांतमित्यूर्वोः, एषते इति जान्वोः; संसृष्टजिदिति जंघयोः, विश्वं भूतमिति गु-ल्फयोः, ये पथामिति पादयोः, अध्यवोचदिति कवचं, नमोबिल्मिन इत्युपकवचं, नमोऽस्तु नीलग्रीवायेति तृतीयनेत्रं, प्रमुंच धन्वन इत्यस्त्रं, य एतावंतश्चेति दिग्बंधः। ॐ नमो भगवते रुद्रायेति नमस्कारं न्यसेत्। ओंकारं मूर्ध्नि विन्यस्य नकारं नासि-काग्रतः। मोकारं तु ललाटे वै भकारं मुखमध्यतः। गकारं कंठदेशे तु वकारं हृदि विन्यसेत्। तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत्। द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत्। सद्यं च पादयोर्न्यस्य वामं न्यस्योरुमध्यतः। अघोरं हृदि विन्यस्य मुखे तत्पुरुषं न्यसेत्। ईशानं मूर्ध्नि विन्यस्य हंसो नाम सदाशिवः। हंस हंसेति यो ब्रूयाद्धंसो नाम सदाशिवः। एवं न्यासविधिं कृत्वा ततः संपुटमारभेत्।" त्रातार-मिद्रं, त्वन्नो अग्ने सुगन्नुपंथा, अमुन्वंतं, तत्वायाम्यानोनियुद्भिर्वयं सोम, तमीशानं, अस्मे रुद्राः स्योना पृथिवी, त्वेतत्संपुटमिद्रादीन् दिक्षु विन्यस्यैवमात्मनि रौद्रीकरणं कृत्वा त्वगस्थिगतैः पापैः प्रमुच्यते सर्वभूतेष्वपराजितो भवति यक्षरक्षोगंधर्वभूत-प्रेतपिशाचब्रह्मराक्षसयमदूतशाकिनीसर्पश्वापदतस्कराद्युपद्रवाः सर्वे ज्वलंतं पश्यंतु मा रक्षंतु मन्वोज्योतिरबोध्यग्निमूर्धानं मर्माणि ते जातवेदा इति गुह्याग्नि हृदय मुख शिरस्स्वभिमंत्र्यात्मरक्षा कर्तव्या शिवसंकल्पं हृदयं पुरुषसूक्तं शिर उत्तर नारायणं शिखा प्रतिरथं कवचं शतरुद्रियमस्त्रं पंचांगं सकृज्जपेदष्टांगं प्रणम्य हि-रण्यगर्भो यः प्राणतो महीद्यौरुपश्वासयाग्ने नय याते अग्ने यथा वः स्वाहाग्नय इत्य-ष्टावृचो जपेदथात्मानं रुद्ररूपं ध्यायेत् "शुद्धस्फटिकसंकाशं त्रिनेत्रं पंचवक्त्रकम्। गंगाधरं दशभुजं सर्वाभरणभूषितम्। नीलग्रीवं शशांकांकं नागयज्ञोपवीतिनम्। व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम्। कमंडल्वक्षसूत्राभ्यामन्वितं शूलपाणिनम्। ज्वलंतं पिंगलजटाशिखामुद्योतकारिणम्। अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम्। दिव्य-सिंहासनासीनं दिव्यभोगसमन्वितम् दिग्देवतासमायुक्तं सुरासुरनमस्कृतम्। नि-त्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम्। सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम्। एवं ध्यात्वा द्विजः सम्यक् ततो यजनमारभेत्" इति अथातो रुद्रस्नानार्चनवि-धिं व्याख्यास्याम आदित एव तीर्थे स्नात्वा गत्यशुचिः प्रयातो ब्रह्मचारी शुक्लवासा स्तस्य दक्षिणा प्रत्यग्देशे तन्मुखः स्थित्वात्मनि देवता स्थापयेत्प्रजने ब्रह्मा तिष्ठतु, हस्तयोर्हरिर्हरस्तिष्ठतु, बाह्वोरिंद्रस्तिष्ठतु, नासिकयोर्वायुस्तिष्ठतु, नयनयोः सूर्या-चंद्रमसौ तिष्ठेताम्, कर्णयोरश्विनौ तिष्ठेताम्. ललाटे रुद्रास्तिष्ठंतु, मूर्ध्न्यादित्या-स्तिष्ठंतु, शिरसि महापुरुषस्तिष्ठतु, शिखायां चामुंडा तिष्ठतु, पृष्ठे पिनाकी तिष्ठतु पुरतः शूली तिष्ठतु, पार्श्वयोः शिवशंकरौ तिष्ठेताम्, सर्वतो वायुस्तिष्ठतु, ॥ ततो ब-

हि: ॥ सर्वतोऽग्निज्वालामालापरिवृतस्तिष्ठतु, सर्वेष्वंगेषु सर्वा देवतास्तिष्ठंतु, मां रक्षंतु, इत्यग्नि मे वाचि श्रित इति यथालिंगमंगानि संमृज्याथैनं गंधादिभिरात्मानं प्रत्याराधयेत् " आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां मां गृहाण महेश्वर " त्र्यम्बकं यजामह इत्यथैनमाराधयेत् " आत्वा वहतु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः । वाताजवैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्यायशर्वोम् " इत्यावाहयामीत्यावाह्य संस्थापयामीत्यावाहनं "सद्योजातं प्रपद्यामि" इत्यावाहनं ददाति "सद्योजाताय वै नमो नमः" इत्यासनं ददाति "भवेभवेभवेनाति भवस्वमाम्" इति पाद्यं ददाति "भवोद्भवायनमः" इत्यब्लिंगाभिश्च स्नानं ददात्यथाद्भिस्तर्पयति "भवं देवं तर्पयामि सर्वं देवं तर्पयामीशानं देवं तर्पयामि पशुपतिं देवं तर्पयामि रुद्रं देवं तर्पयामि उग्रं देवं तर्पयामि भीमं देवं तर्पयामि महांतं देवं तर्पयामि " इति तर्पयित्वा "ज्येष्ठाय नमः" इत्याचमनीयं ददाति "श्रेष्ठाय नमः" इति मधुपर्कं ददाति "कालाय नमः" इति गंधं ददाति " कलविकरणाय नमः " इति पुष्पं ददाति "सर्वभूतदमनाय नमः" धूपं ददाति "मनोन्मनाय नमः" इति दीपं ददाति "भवोद्भवायनमः" इति काले नैवेद्यं ददात्यथाष्टभिर्मंत्रैरष्टौ पुष्पाणि ददाति "भवाय देवाय नमः, शर्वाय देवाय नमः, ईशानाय देवाय नमः, पशुपतये देवाय नमः, रुद्राय देवाय नमः, उग्राय देवाय नमः, भीमाय देवाय नमः, महते देवाय नमः, इत्यथास्याघोरतनुरघोरेभ्य इत्युपतिष्ठतेऽथैतस्य हिरण्येन मूर्ध्नि कलशेन संततधारां निषिंचेन्मधुना सर्पिषा पयसा वेक्षुरसेन नालिकेररसेनाम्ररसेन वा तदलाभे उदकेन "नमस्ते रुद्रमन्यवे" इत्येकादशानामनुवाकानां जपांते जपांते " अग्नाविष्णू सजोषसा " इत्येकादशानामनुवाकानामेकमेकं जपेत्सर्वेषां पारे पुनराराधयेदुत्तमाराधनेन तदेतद्विधानं प्रोक्तं तेनाभिषेक्तेनोदकेन " अक्षिभ्यां " इत्यनुवाकेनाब्लिंगाभिश्चापः संमृज्यात्पापक्षयार्थी व्याधिविमोचनार्थी श्रीकामः शांतिकामः पुष्टिकामस्तुष्टिकामो मोक्षार्थीच कुर्यादेवं कुर्वन् सिद्धिमदाप्नोतीत्याचार्याय दक्षिणां ददाति दश गाः सवत्साः सुवर्णभूषणाः वृषभैकादशास्तदलाभे एकां गां दद्यादित्याह बौद्धायन इति ॥ अस्यार्थः ॥ अथात इति ॥ अथ शब्दो मंगलार्थः । रुद्रजपादेरतिश्रेयस्करत्वेन तस्येति कर्तव्यतानिरूपणे विघ्नबाहुल्यात्तद्विघातद्वारा रुद्रजपादेरिति कर्तव्यता निरूपणसमाप्तिसिध्यर्थं शिष्टाचारानुमितश्रुतबोधितमंगलकर्तव्यताया आवश्यकत्वात्। अधिकारार्थश्च आंतर्यार्थितायाः पाठादेव सिद्धेः। ततश्च रुद्रजपादिकं वक्तुमधिक्रियत इत्यर्थः। नचैवमनेकार्थताऽथ शब्दस्येति वाच्यम् विषयभेदात् । उच्चारणेन हि मंगलं जनयति दधीव दर्शनात्। अधिकारार्थत्वं तु लक्षणया वक्ति । अतो नानेकार्थता । अतः शब्दो

हेत्वर्थः । यतः श्रुतिस्मृतिषु काम्यत्वात्फलेच्छायानित्यत्वेनाकरणे प्रत्यवायजनकत्वादवश्यकर्तव्यतया च विहितत्वाद्रुद्रजपादीनि कर्माणि विधेयानि । अतो हेतोः । पंचांगरुद्राणामिति । पंचप्रकारा अंगन्यासा येषुते पंचांगरुद्राः । वाक्यांतरेष्वेकवचनांतरुद्रपदपाठपक्षे पंचप्रकारा अंगन्यासा यस्मिन्निति विग्रहः। एवं षट्प्रकारा अंगन्यासा यस्मिन्निति षडंगरुद्रपदेऽपि। तत्र पंचांगन्यासेषु शिखाद्यस्त्रांतो दिग्बंधसहित एकत्रिंशदंगन्यासो महार्णवकारमते प्रथमः। देवयाज्ञिकनारायणभट्टादीनां मते तु शिखाद्यस्त्रांतो दिग्बंधसहितश्चतुस्त्रिंशदंगन्यासः प्रथमः । मूर्धादिपादांतं दशांगन्यासो द्वितीयः । पादादिमूर्धांतं पंचांगन्यासस्तृतीयः। गुह्यादिमस्तकांतं पंचांगन्यासश्चतुर्थः। हृदयाद्यस्त्रांतं पंचागषडंगन्यासो वा पंचमः । एवं पंचांगन्यासाः । प्रजननादिसर्वांगपर्यंतं षोडशांगन्यासोऽपरः । अयं च षष्ठो न्यासः । पूर्वोक्तपंचप्रकारन्यासससहिताः पंचांगरुद्राः षट्प्रकारन्याससहिताः षडंगरुद्राः । तत्राभिषेक एवैते षडंगरुद्राः, जपादौ तु पंचांगरुद्रा इति बोद्धायनमतम्। जपादौ सर्वत्रापि षडंगरुद्रा इति शातातपमतम्।। रुद्राणामिति बहुवचनांतरुद्रशब्देन रौद्राध्यायोऽभिधीयते । तेन रुद्राध्यायात्मकानां रुद्रदेवत्यानां मंत्राणां पंचविधांगन्यासविशिष्टानामित्यर्थः। अत्र रुद्राणामिति रुद्रपदोपादानाद्रुद्राणामेव जपादौ प्राधान्यम्। न पुनश्चमकानामपीति ध्वन्यते । रुद्राणामिव चमकानुवाकानामपि प्राधान्ये रुद्राणां चमकानुवाकानां च जपादिविधिमित्येव ब्रूयात् ।। " न्यासपूर्वकं जपहोमार्चनविधिमिति ।। अर्चनशब्देनाभिषेकोऽभिधीयते । विधिशब्दस्य जपाद्यैः प्रत्येकमन्वयः। विधिमिति कर्तव्यतामनुष्ठानप्रकारमिति यावत् " व्याख्यास्यामः " इति । प्रतिज्ञा शिष्यबुद्धिसमाधानार्था । शातातपः "मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा। भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः" इति। रुद्रं रुद्रान्वाधीते एवं शीलो रुद्राध्यायी । विष्णुधर्मोत्तरे " रुद्राणां च तथा जप्यं सर्वाघविनिषूदनम् । सर्वकामकरो होमस्तथा सर्वत्र शांतिदः । अजाविकानामश्वानां कुंजराणां तथैवच । मनुष्याणां नरेंद्राणां बालानां योषितामपि । ग्रामाणां नगराणां च देशानामपि भार्गव:।। उपद्रुमानां धर्मज्ञ व्याधितानां तथैवच । मरणे समनुप्राप्ते रिपुजे च तथा भये । रुद्रहोमः परा शांतिः पायसेन घृतेन च " इति । " जपहोमार्चनविधिम् " इत्यनेन रुद्रस्त्रिधोक्तः । जपरुद्रो होमरुद्रोऽभिषेकरुद्रश्चेति । तत्राद्यो द्विधा । केवलजपात्मको होमांगकश्च । तत्राद्ये मूलम् । " एकादशगुणान् वापि रुद्रानावर्त्य धर्मवित् । महापापैरपिस्पृष्टो मुच्यते नात्र संशयः। सर्वपापानि नश्यंति रुद्रैकादशिनी जपाद्" इत्यत्रिस्मृतिः। हेमाद्रौ कौशिकबोद्धायनौ ।। रुद्रैकादशिनीत्येषा सर्वकामफलप्रदा । सर्वपापक्षयक-

री सर्वशांतिप्रदायिनी " इति। इदं च रहः कृते मात्रं ज्ञेयम्। "रुद्राध्यायी भवेद्भक्त्या मासमात्रमतंद्रितः। प्रायश्चित्तं भवेदेतद्रहस्यस्य संशयः" इतिपराशरपुराणात्। द्वितीयेऽपि कालिकापुराणादौ जपमात्रोक्ते " जपाद्दशांशतो होमस्तथा होमात्तु तर्पणम्। तर्पणस्य दशांशेन मार्जनं कथितं किल। मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत्। जपोऽर्चापूर्वको होमस्तर्पणं चाभिषेचनम्। भूदेवपूजनं पंचप्रकारोक्ता पुरस्क्रिया " इति। " होमाशक्तो जपं कुर्याद्धोमसंख्याचतुर्गुणम्। एवं कृते तु मंत्रस्य जायते सिद्धिरुत्तमा " इति पुरश्चरणचंद्रिकादौ जपमात्रे दशांशहोमाद्युक्तिर्मूलम्॥ तेन तर्पणाद्यपि सिद्धम्॥ होमरुद्रेतु तर्पणाद्यनाशंक्यमेव। जपमात्रे तदुक्तेः। एवमभिषेकरुद्रे होमाद्यपि। जपे तद्दशांशतो होमाद्युक्तेः अन्येतु पुरश्चरण एवायं विधिः। अत एव हेमाद्रिमहार्णवादौतर्पणाद्यनुक्तिः। तेन तदुक्तजपो होमो विप्रभोजनं चेत्येव कार्यमित्याहुर्वृद्धाः॥ होमोऽपि द्विधा। प्रधानभूतः समग्रहोमो जपांगभूतश्चेति। तत्राद्ये " जपहोमार्चनविधिं व्याख्यास्यामः" इति। " रुद्रहोमः परा शांतिः। पायसेन घृतेन वा " इत्यादि बौद्धायनविष्णुधर्मोत्तरवचने प्रागुक्तं मूलम् न अंगभूतोऽपि द्वेधा। इत्यादि बौद्धायनविष्णुधर्मोत्तरवचनं प्रागुक्तं मूलम्॥ अंगभूतोऽपि द्वेधा दशांशहोमः। शतांशहोमश्चेति। स च तिलाद्यैः कार्य इति महार्णवकारः। निर्णयसिंधौ शांतिरत्ने कमलाकरभट्टपादैस्तु। अत्र यद्यपि महार्णवकृता मूलं नोक्तं तथाप्यन्यमंत्रजपसामान्येन तेनोक्तं भवेत् " आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते। इति सामान्यवचनादाज्येनैव स्यान्न तु तिलद्रव्यके मानमस्ति। तेन पूर्वोदाहृतविष्णुधर्मोत्तरात् पायसेन वा घृतेन होमः कार्य इति युक्तं प्रतिभातीत्युक्तम्॥ "अक्षतान्वा तिलान्वापि यवान्वा समिधोऽपि वा। शंभवायेति जुहुयात्सर्वास्तानाज्यसिक्तकान् " इति बृहत्पराशरोक्तिरेव तिलद्रव्यके होमे महार्णवोक्ते मानमिति केचित्। हेमाद्रिणा तु रुद्रजपांगहोमसंख्या वाचनिक्येवोक्ता नतु दशांशादिः। यथाह तत्रैव बौद्धायनः। " ततो होमं प्रकुर्वीत नमः शंभवमंत्रतः। रुद्रैकादशिनीजप्ये त्रयस्त्रिंशदथाहुतीः। रुद्रे शतत्रयं प्रोक्तं षष्ठ्यात्र्यधिकयायुतम्। रुद्रे लघुरुद्रे। चत्वारश्च महारुद्रे सहस्राः सप्त वर्जिताः। चत्वारिंशसहस्राश्च कर्तव्याश्चतुरुत्तरा॥ ऊनाश्च सप्तसप्तत्या ह्यतिरुद्रे विनिश्चयः। " इति। तेन हेमाद्रिमते मंत्रविभाग एव नास्ति। रुद्रजपांगहोमस्य " नमः शंभवाय " इति मंत्रेण विहितत्वात्तन्निष्ठसंख्याया वाचनिकत्वाच्च। अतो होमे दशांशादेरनादरः। अयं च मंत्रविभागाभावो जपांगहोम एव। " जप्ते " इति सप्तम्या " मंद्रं प्रापणीयायाम्" इतिवदंगत्वावगतेः। प्रधानभूते समग्रहोमे त्वस्यासंभवान्महार्णवाद्युदाहृतश्रुति-

कल्पसूत्रेषु चयनप्रकरणोक्त एव मंत्रविभागो ग्राह्यः । अपेक्षितत्वादित्युक्तम् । अयमेव पक्षो बहुभिर्ग्रंथ्यादृतस्तथाप्यस्मिन्पक्षे "ततो होमं प्रकुर्वीत" इत्यादि बोद्धायनवाक्यस्य निर्विषयापत्तेर्हेमाद्रिमतमेव युक्तं प्रतिभाति । मंत्रविभागस्तु विस्तरतोऽग्रे वक्ष्यते ।

## ॥ अथ त्रिविधोऽपि रुद्रः प्रत्येकं पंचधा ॥

रूपं रुद्रो रुद्री महारुद्रोऽतिरुद्रश्चेति । तदुक्तं "शृणुष्व भो महाप्राज्ञ ! रुद्रभेदान्वदामि ते ॥ रुद्राः पंचविधाः प्रोक्ता देशिकैरुत्तरोत्तरम् । सांगस्त्वाद्यो रूपकाख्यः सशीर्षो रुद्र उच्यते । एकादशगुणैस्तद्वद्रुद्री संज्ञो द्वितीयकः । एकादशभिरेताभिस्तृतीयो लघुरुद्रकः । लघ्वेकादशभिः प्रोक्तो महारुद्रश्चतुर्थकः । पंचमः स्यान्महारुद्रैरेकादशभिरंतिमः । अतिरुद्रः समाख्यातः सर्वेभ्यो ह्युत्तमोत्तमः" इति । महार्णवे-शातातपोऽपि । "षडंगैकादशीरुद्रौ रुद्र्येकादश रुद्रतः । एकादशभिरेताभिर्महारुद्रस्तु कथ्यते । एकादशमहारुद्रैरतिरुद्र इतीरितः" इति । तथा । "विधितो-नमकावृत्तीरुद्र एकादशात्मिका रुद्रस्यैकादशावृत्त्या रुद्रैकादशिनी स्मृता । एकादशभिरेताभिर्महारुद्रस्तु कथ्यते । एकादशमहारुद्रैरतिरुद्र इतीष्यते" इति। अत्र च "सांगस्त्वाद्यो रूपकाख्यः" इति वाक्येऽगसाहित्यार्थकत्वेन श्रुते सांगशब्दे वर्तमानस्यांगसामान्यवाचिनोंगशब्दस्यांगन्यासपरत्वेन नैव दृष्टत्वात्तथापि छंदोदैवतमार्षेयमथातः शतरुद्रिये । ज्ञातेन कर्मसम्यक्त्वं द्विजानां येन जायते । आद्यानुवाके रुद्राणामाद्यायां तु ऋचि द्विजः" इत्यादिना "रुद्रः सर्वासु देवत्यं विनियोगो यथोचितम्। इत्यंतेन ग्रंथेन रौद्राध्यायस्यार्षादिकमभिधायोक्तम् "यज्जाग्रतादि षट्के च शिवसंकल्पमार्षकम्। रुद्रस्तु देवताषट्सु विनियोगो जपादिषु। सहस्रशीर्षा इत्यादिद्विगुणाष्टदेवता । पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः । छंदः सर्वासु चानुष्टुप् विनियोगो जपादिषु। अद्भ्यः संभृत इत्यादौ उत्तरनारायणस्त्वृषिः। पूर्वानुवाकदेवत्यं त्रिष्टुप्छंदः प्रकीर्तितम्। आशुः शिशान इत्यादिरप्रतिरथमुच्यते । एतन्नाम्ना मुनिस्तत्र देवता चामरेश्वरः । त्रिष्टुप्छंदो जपादौ तु विनियोगो यथोचितम् । विभ्राट् बृहदित्यादौ सूर्यो दैवतमुच्यते । एतत्संचित्य सकलं द्विजाग्र्यो रुद्रजाप्यकृत् । यद्यदारभते तत्तद् यथोक्तफलदं भवेत्" इति बृहत्पराशरस्मृतौ शिवसंकल्पादिमंत्राणां विनियोगविधिवाक्येषु जपरुद्रे जपे, होमरुद्रे होमेऽभिषेके विनियोग इत्यर्थकत्वेन "विनियोगो जपादिषु" इत्यभिधानाच्छिवसंकल्पादि हृदयाद्यंगन्यासविशेषमंत्रपरत्वमध्यवसीयते । ते चांगमंत्राः शिवसंकल्पादयः पंचानामेव । यतो बृहत्पराशरस्मृतौ । "शिखा तस्य तु रुद्रस्योत्तरं नारायणं स्मृतः।

शिरः पुरुषसूक्तं च शिवसंकल्पकं च हृद् कवचं चाप्रतिरथं नेत्रं विभ्राड् बृहत्स्मृतम्। शतरुद्रियमस्त्रेषु देवस्यास्त्रं प्रकल्पयेत् " इति षडंगान्युक्त्वा "पंचांगानि स्मरेदष्ट-प्रणवं प्रजपेद् द्विजः " इत्युक्तत्वात् । अंगानां स्मरणं तत्तन्मंत्रजपादिरूपेण । अत्र च जप्यमंत्रस्यैव रौद्राध्यायस्यास्त्रन्यासे विनियोगादस्त्रवर्जितान्येव पंचांगानि बो-ध्यानि । अत एव देवयाज्ञिकैः पंचांगमंत्रसाहित्यमेव रुद्रजपे उक्तं नतु षडंगमंत्र साहित्यं । अत्र " अष्टप्रणवं प्रजपेद् " इति वाक्ये जपग्रहणं होमाभिषेकयोरुप-लक्षणम् । तेन रुद्रं जपेत् रुद्रेण जुहुयात् रुद्रियेणाभिषिंचेदित्यर्थः । " वयं सोम " इत्यष्टर्चस्य सप्तर्चस्य वा महच्छिरः संज्ञकत्वात्सशीर्षो वयं सोमेत्यष्टर्चेन सप्तर्चेन वा सहितः । तवश्च हृदयादिभिः पंचभिरंगमंत्रैः शिवसंकल्पादिभिर्विभ्राडित्यनुवाकां तैरुपेतः शिरसा युतो रुद्राध्यायो रूपकाख्य आद्यो रुद्र इत्यर्थः । तथा च विधान-पारिजाते जाबालश्रुतिः । " शिवसंकल्पं हृदयं सूक्तं स्यात्पौरुषं शिरः । प्राहुर्ना-रायणं चैव शिखां तस्योत्तराभिधम्।। आशुःशिशानः कवचं नेत्रं विभ्राड्बृहत्स्मृतम्। शतरुद्रियमस्त्रं स्यात्षडंग रूपईरितः । पूर्वमंगानि संजप्य रुद्राध्यायं ततो जपेत् । त-दंते सप्तमंत्राश्च व य सोममहच्छिरः । उग्रश्चेति यजुर्मंत्रं जटामाहुर्जपेदिति " इति। अत्र " त्वमग्ने रुद्रो असुर " इति तैत्तरीयायां शतरुद्रत्वेन प्रसिद्धोऽनुवाक एव " श-तरुद्रियम् " इति महार्णवानुसारिणो देवयाज्ञिकाः। रौद्राध्यायस्याद्योनुवाकः " श-तरुद्रियम् " इति परशुरामकारिकानुसारिणो विधानपारिजातकारकाशिदीक्षिता-दयः । रौद्राध्याय एव "शतरुद्रियम् " इत्यपरे । युक्ततममेतत् । बृहत्पराशरस्मृ-तिसंमतत्वादिति वक्ष्यामः । परशुरामोऽपि ॥

## " अथ रुद्राध्यायः स रुद्रः स्यात्प्रथमः सांगशीर्षकः "

इति यद्यपि पूर्वोदाहृतवाक्यैर्विहिते रूपकाख्यरुद्रस्वरूपे रौद्राध्यायजपानंतरं चमकजपो नोक्तस्तथापि " नमकं चमकं चैव पौरुषं सूक्तमेव च । नित्यं त्रयं प्रयुं-जानो ब्रह्मलोके महीयते " इति काशिदीक्षितपद्धतिधृतवाक्यात्कार्य एवेति के-चित् । तदयुक्तम्। अस्य वाक्यस्य स्वतंत्रसरलार्थतया नमकादित्रिकप्रयोगविधायक-त्वेन रूपकाख्यरुद्रस्वरूपप्रतिपादकत्वाभावात् । कौशिकबौद्धायनादिभिस्त्वेका-दशधा विभक्तनमकजपस्य रुद्रैकादशिन्यां विधानात्तेनापि नेह नमकजपप्राप्तिः । यतः प्रकृतितो विकृतौ धर्मप्राप्तिर्युक्ता नतु वैपरीत्यम् । नचैकादशधा विभक्तचम-कानुवाकजपः प्रकृते संभवति । अतो रूपकाख्यरुद्रजपे नमकानुवाकजपो नास्ती-त्येके । नारायणभट्टास्तु । नमकाध्यायात्मकरूपकाख्य रुद्रमात्रजपादौ चमका-ध्यायोऽपि सकृदावर्तनीयः । रुद्री जपादौ तु प्रत्यावृत्येकैकश्चमकानुवाको योज-

नीय इत्याहुः । युक्तं चैतत्। यतः कात्यायनादिभिः कल्पकारैर्वसोर्द्धारायां चमकानुवाक समुदायस्यैकमंत्रत्वेनाभिहितत्वात्तेनैव न्यायेनेहाप्येकमंत्रतायान्याय्यत्वात् चमकानुवाकजपस्तु महच्छिरो जपानंतरं कार्य इति देवयाज्ञिकादयः। नमकाध्यायजपाव्यवहितकाले तु युक्तः। नमकजपानंतरं चमकजपविधानात्। रुद्रैकादशिन्यामपि नमकस्यैकैकावृत्तौ कृतायामेकैकचमकानुवाक जपविधानाच्च "वयं सोम" इत्यष्टौ कंडिका महच्छिर इति परशुराम देवयाज्ञिकादयः। तेन "वयं सोम" इति सप्तमंत्रानिति काण्वाभिप्रायम्। तेषां सप्तकंडिकानामेव संहितायां समाम्नात्। अत्र मंत्रशब्दः कंडिकापर इत्युक्तं विधानपारिजातेऽनंतभट्टैः। जटायां तु विप्रतिपत्तिः॥ यत आह परशुरामः॥ लिंगोक्ता देवता दध्यङ्ङुग्रश्च त्रितयं यजुः॥ विनियोगो जटाजाप्ये केचित्सप्तजपंत्यृच" इति तत्र उग्रश्चेति सप्तकंडिकात्मकानुवाकस्य जटात्ववादिनामेवमाशयः। "शिवसंकल्पहृदयम्" इत्यादिके "उग्रश्चेति यजुर्मंत्र जटामाहुर्जपेद्" इति पूर्वोक्तवाक्ये सर्वत्र प्रायोऽनुवाकग्रहणादिहापि मंत्रप्रतीकग्रहणेन "आशुः शिशानः कवचम्" इतिवत् "नेत्रं विभ्राड बृहस्मृतम्" इति वच्चानुवाकस्यैव ग्रहणोचित्यात्। एवंच तदंते सप्तमंत्रांश्च वयं सोमेति मंत्रनिष्ठसप्तसंख्या निर्देशोऽनुवाक्यांतरत्वात् "एषते" इत्यनुवाकग्रहणार्थः। अन्यथा "वयं सोम" इत्येतस्यानुवाकाद्यमंत्रप्रतीकत्वाभावाद् "वयं सोम" इत्येकस्या एवानुवाकशेषभूतायां ग्रहणं मंत्रप्रतीकमात्रग्रहणेन प्रसज्येतेति। अपरे तु। उग्रश्चेति तिसृणां कंडिकानां जटात्वमाहुः। तदभिप्रायं तु वयं न विद्मः। यतः "उग्रश्चेतियजुर्मंत्रंजटामाहुः" इति वाक्ये एकत्वविशिष्टयजुर्मंत्रग्रहणाद् "उग्रश्च" इत्येकस्यैव यजुर्मंत्रस्य जटात्वागतेः। नहि तिसृणां कंडिकानामेकयजुर्मंत्रत्वम्। उग्रश्च मारुती गायत्री विमुखाख्यो मंत्रोऽग्नौ विनियुक्तस्तस्मादाग्निक एवास्यर्षिः परमेष्ठी प्राजापत्यो वा अग्निं हृदयेनाश्वमेधिकानि तत्रोक्त एवर्षिः॥ इति सर्वानुक्रमसूत्रे कल्पसूत्रे च कात्यायनेन भिन्नतया विनियोगाभिधानेनैकयजुर्मंत्रत्वानवगमात्॥ अग्निं हृदयेन, उग्रं लोहित" इति द्वयोः कंडिकयोर्देवताश्वावयवसंबंधविधानाद् ब्राह्मणरूपत्वेन यजुर्मंत्रत्वाभावाच्च। संहितास्वम्नातानां ब्राह्मणभागानां मंत्रत्वेन क्वापि विनियोगादर्शनाच्च। न सप्तमंत्रांश्च "वयं सोम" इति वदिह त्रित्वसंख्यानिर्देशोऽस्ति। न वा तादृशार्थविधायकं स्मृत्यतरवाक्यं हेमाद्रिमहार्णवादिनिबंधेषूपलभ्यते। येन तिसृणां कंडिकानां जटात्वं स्यात्। तस्मादसति विशेषोपादाने प्रायो मंत्रप्रतीकग्रहणेन सर्वत्र स्मार्तकर्मणि कंडिकाया एवोपादानस्य "तत्रोपवेशयेद्राजानं स्त्रियं वा प्रतिक्षत्र इति यज्ञांतेन" "विकृत्यैनमभिमंत्रयते सुप-

र्णोऽसीति प्राग्विष्णुक्रमेभ्यः इति । " सोष्यंतीमद्भिरभ्युक्षत्येजतु दशभाष्यः " इति प्रागस्यैतइत्यादौ मंत्रांतं वदता पारस्कराचार्येण सूचितत्वादेकत्वविशिष्ट यजुर्मंत्रमित्युक्तत्वाच्च " उग्रश्च " इत्येकस्या एव जटात्वमुक्तमिति मम प्रतिभाति । यत्वनुवाक प्रकरणाद् "आशुः शिशानः कवचम् " इतिवत् " नेत्रं विभ्राड्बृहत्स्मृतम् " इतिवच्च " उग्रश्च " इत्यनुवाकस्यैव जटात्वमित्युक्तं तत्सत्यप्यनुवाकप्रकरणे एकत्वविशिष्टयजुर्मंत्रग्रहणादेव निरस्तम् । " कवचं चाप्रतिरथम् " इति वक्ष्यमाण बौधायनबृहत्पराशरादि वाक्याच्चानुवाकग्रहणम् । " विभ्राड " इत्यत्रतु इतरानुवाकपाठसाहचर्याच्चानुवाकग्रहणम् । प्रकृतेतु " शतरुद्रियमस्त्रम् " इति रौद्राध्यायस्य मध्ये निर्देशेनानुवाकप्रकरणविच्छेदाद्रौद्राध्यायस्याद्योनुवाकः शतरुद्रियमितिमते तैत्तरीयश्रुत्यनुसारेण वक्ष्यमाणः " त्वमग्ने रुद्रो असुरः " इत्यनुवाकः । शतरुद्रियमितिमते चानुवाकप्रकरणाविच्छेदेऽपि एकत्वविशिष्ट यजुर्मंत्रमित्युक्तत्वाच्च नानुवाकग्रहणम् । " वयं सोम " इति सप्तमंत्रानिति सप्तसंख्यानिर्देशस्तु " एषते " इत्यनुवाकग्रहणार्थः । अयं च महच्छिरो जपो जटाजपश्च कृताकृतः । क्वचिद्विहितत्वेन क्वचिच्चाविहितत्त्वेन तयोः पूर्वोक्त चमकन्यायेन कृताकृतत्वावगमात् । अतश्चानयोरनुष्ठानात्फलाधिक्यमात्रं नतु तयोरकरणे रुद्रवैगुण्यम् । गुणविशेषे फलविशेषः " इति कात्यायनसूत्रात् । अयं च महच्छिरो जपो जटाजपश्च रुद्रैकादशिन्यां न प्रतिरुद्रमावर्तते । रुद्रस्यैवैकादशगुणविधानादेतयोश्च रुद्रशद्ववाच्यत्वाभावाच्च । तस्माद्रुद्रस्य सर्वावृत्यंते सकृज्जप इति संप्रदायविदः । परशुरामोऽपि " रूपैकादशकस्यांते जपेद्रुद्रमहच्चिरः " । इति । देवयाज्ञिकैस्तु जटाजपो हेमाद्रि महार्णवादिषुत द्विधायकार्षवाक्याद्दर्शनान्नैवोक्तः । एवं देवयाज्ञिकादिप्राचीनपद्धतिग्रंथानुसारिरूपकाख्य रुद्रस्वरूपमुक्तम् । महार्णवकारनारायणभट्टकमलाकरभट्टादयस्तु यथोक्तन्यासपूजापूर्वकमष्टप्रणवान्वित रौद्राध्यायस्यैव सकृदावर्त्तनं रूपकाख्यो रुद्र इत्याहुः । युक्ततरं चैतत् । पूर्वोदाहृतजाबालकैवल्य श्रुतिमिताक्षरोदाहृतात्रिबृहत्पराशरशातातप स्मृति सूतसंहिता पद्मपुराणहेमाद्र्युदाहृत वायुकालिकापुराणादिवाक्यैः शतरुद्रिय रुद्रशद्वान्यतर शद्ववाच्य रौद्राध्यायस्यैव फलार्थतया नित्यतया वा जपविधानात् । पारस्करगृह्यसूत्रकर्कभाष्यादिसंवादलाभाच्च । तथाहि भगवता पारस्कराचार्येण शूलगवपशौ " अनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमाभ्यामनुवाकाभ्याम् " इति सूत्रे पशुकर्मकोपस्थाने करणभूतयोः प्रथमोत्तमानुवाकयोः रौद्राध्याय एवेति स्पष्टतया प्रदर्शितमेव । अन्यथा रुद्रैरित्यनेन रौद्राध्यायस्याप्रकृतत्वात्प्रथमोत्तम-

शद्वयोश्च साकांक्षत्वादनुवाकयोः रौद्राध्यायावयवत्वं कथं सिध्येदिति विभावनीयं सुधीभिः। ततश्च यत्र कर्तव्यतया रुद्रजपश्चोद्यते तत्र रौद्राध्यायस्यैव जपः कार्य इत्यवगम्यते। अत एव " वृषोत्सर्गे रुद्रान् जपित्वा " इति सूत्रे बहुवचनांत रुद्र शद्बाभिधेयो " नमस्ते रुद्र मन्यवे " इत्यध्याय इति पारस्करगृह्यसूत्रं व्याचक्षाणैर्भर्तृयज्ञकर्कोपाध्यायहरिहरजयरामादिभिर्व्याख्यातम्॥ तदनुसारिभिर्वासुदेवादिभिः पद्धतिकारैरप्येवं प्रयोग उपन्यस्तः। अन्यथा " रुद्रान् जपित्वा " इति वृषोत्सर्गे श्रुतस्य रुद्रजपविधेरन्यत्र श्रुतेन रुद्रजपविधिना तुल्यत्वाद्वृषोत्सर्गेऽपि हृदयादि पंचांगमत्र विशिष्ट एव रुद्रजप उपदिश्येत। " हुतशेषं निधाय रुद्रं जपित्वा" इति वृषोत्सर्गप्रकरणस्थबौधायनसूत्रेऽपि तद्भाष्यकारैस्तथैव व्याख्यातम्। याज्ञवल्क्यस्मृतिं व्याचक्षाणैर्विज्ञानेश्वराचार्यैरपि " ब्राह्मणः स्वर्णहारी च रुद्रजापी जले स्थितः " इति रहस्यप्रायश्चित्तप्रकरणस्थवाक्यव्याख्यावसरे " नमस्ते रुद्र मन्यवे " इति शतरुद्रिय जपयुक्तः शुद्ध्यति स एवाध्याय एकादश कृत्व आवर्तनीय इति व्याख्यातम्। व्रतखंडांतर्गतशांतिखंडे हेमाद्रिणापि शौनकमतादित्युपन्यस्य " अथातः शतरुद्रियमंत्राणां विनियोगं तद्विधिं तदर्थध्यानं तैराराधनं तद्देवतां तदृषिं तदंगन्यासादिकं तच्छद्वश्च व्याख्यास्यामः " शौनकमतेन॥ तत्र शतरुद्रियमंत्रो "नमस्ते रुद्र मन्यवे" इत्येकादशानुवाका इत्युक्तम्। एकादशानुवाका इति तु तैत्तरीयाणां विषयम्। तेषां संहितायां शतरुद्रमंत्रात्मकस्य रौद्राध्यायस्यैकादशानुवाकात्मकात्॥ वाजसनेयिनां तु शतरुद्रियमंत्रात्मकस्य रौद्राध्यायस्य नचानुवाकात्मकत्वात्॥ तस्माद्यथोक्तन्यासपूर्वकमष्टप्रणवान्वितरौद्राध्यायस्यैव सकृदावर्तनं रूपकाख्यो आद्यो रुद्र इति युक्तम्॥ अग्निपुराणेऽपि। यजुर्विधाने " अग्निरुवाच " इत्युपक्रम्य " वक्ष्ये रुद्रविधानं तु पंचांगं सर्वदं परम्। हृदयं शिवसंकल्पं शिरः सूक्तं तु पौरुषम्। शिखाद्भ्यः संभृतं सूक्तमाशुः कवचमेव च। वेदवादिभिराख्यातमस्त्रं वै शतरुद्रियम्। शतरुद्रियसंज्ञस्य रुद्रस्यांगानि पंच हि। पंचांगं न्यस्य तं ध्यात्वा जपेद्रुद्रांस्ततः क्रमाद्" इत्यनेनैतदेव स्पष्टमुक्तं रुद्राध्याय एव रुद्रा इत्युक्तम्। एतेन यत्कैश्चिदुक्तम्। पट्षष्टिर्मूलजाप्येन षोडशर्चं पुनर्जपेत्। एष ते द्वे नमस्ते द्वे न तं द्विद्वयमेव च। मीढुष्टमचतुष्कं च वयं सोमाष्टकं ततः। वेदवादिभिराख्यातमेतद्वै शतरुद्रियम् " इति तत्पूर्वोक्तानेकस्मृतिसूत्रनिबंधविरोधान्निर्मूलत्वाच्च निरस्तम्। यत्तु " रुद्राः पंचविधाः प्रोक्ता देशिकैरुत्तरोत्तरम् " इत्युपक्रम्य " सांगस्त्वाद्यो रूपकाख्यः सशीर्षो रुद्र उच्यते " इति प्राचीनपद्धतिकारैरुदाहृतं वचस्तत्र सांगशब्देनांगसाहित्यमभिधीयते। अंगशद्बश्चात्रांगन्यासपरः।

" पंचांगरुद्राणां न्यासपूर्वकम् " इति बौधायनसूत्रे । " अथाभिधास्ये रुद्राणां शांतये गृहमेधिनाम् । पंचांगानां विधानं तु यत्कृतं हंति पातकम् " बृहत्पराशरस्मृतौ । " वक्ष्ये रुद्रविधानं तु पंचांगं सर्वदं परम् " इत्यग्निपुराणे चांगशब्दस्यांगन्यासपरत्वेनैव दृष्टत्वात् । अतश्च सांगशब्देन पंचविधांगन्यासससाहित्यमात्रं षड्विधांगन्यासससाहित्यमात्रं वाभिधीयते । नतु पुनः शिवसंकल्पादि पंचांगस्य षडंगस्य वा न्यासस्य साहित्यम् । अंगशब्दस्यांगसामान्यपरत्वात् ॥ नच पूर्वोक्ताग्निपुराणैकवाक्यतया शिवसंकल्पादिन्याससाहित्यपरत्वं सांगशब्दस्येति वाच्यम् । " याते रुद्र " इति शिखायामित्येवमादीनां पंचविधांगन्यासविधिनानर्थक्यप्रसंगात् । अग्निपुराणवाक्यस्य स्वशक्त्यं प्रत्यनुकल्पपरत्वेन वक्ष्यमाणत्वाच्च । तथा च सांगशब्देन न्यासविधिप्राप्तांगन्यासससाहित्यमात्रानुवादाल्लाघवम् । पूर्वोक्तसर्वस्मृतीनां मूलभूतैकश्रुतिकल्पना लाघवं च ॥ संगच्छते चैवं सति महार्णवकारादिभिरभिहितं " षडंगैकादशी रुद्रः " इति शातातपवाक्ये षडंगपदस्य षड्विधांगन्यासपरत्वम् । अथ सांगशब्देन जपादिषु रुद्रेषु शिवसंकल्पादिहृदयाद्यंगमंत्रजपसाहित्यमभिधीयते इति चेन्न, तथा सति सामान्यत श्रुतेनांगशब्देनांगन्यासमात्रपरामर्शात्पंचविधानां षड्विधानां वा अंगन्यासमंत्राणामेव जपादिषु रुद्रेषु साहित्यं प्रसज्येत । न पुनः शिवसंकल्पादीनामेव हृदयाद्यंगमंत्राणां विनिगमनाविरहात् । अंगन्यासमात्रबोधकत्वेन प्रसिद्धस्यांगशब्दस्याशेषांगन्यासैकदेशभूतहृदयादि न्यासैकदेशभूतशिवसंकल्पादिमंत्रपात्रपरत्वेन संकोचे प्रमाणादर्शनाच्च । यत्तु बृहत्पराशरस्मृतौ " यज्जाग्रतादिषट्केच । शिवसंकल्पमार्षकम् । रुद्रस्तु देवता षट्सु विनियोगो जपादिषु " इत्यादिकेषु शिवसंकल्पादिहृदयाद्यंगमंत्राणां विनियोग विधिवाक्येषु " विनियोगो जपादिषु " इत्यभिधानमेव जपादिषु रुद्रेषु शिवसंकल्पादिहृदयाद्यंगमंत्रजपसाहित्ये मानमित्युक्तं । तन्न । उपक्रमोपसंहारैकवाक्यतया पूर्ववाक्ये " श्रुतयथोचित " मितिपदानुवृत्याच जपादिषु त्रिविधेषु रुद्रेषु यथोचितं यथाविहितं हृदयादिन्यास एव विनियोग इत्यर्थकत्वेन तस्य शिवसंकल्पादिहृदयाद्यंगमंत्रजपाद्यर्थकत्वाभावात् । " यज्जाग्रतादिषट् च " इत्येतस्मात्पूर्वं पठिते " रुद्रः सर्वासु देवत्वं विनियोगो यथोचितम् " इति वाक्ये " यथोचितम् " इत्युपक्रमः । " आशुः शिशान इत्यादिरप्रतिरथ उच्यते । एतन्नाम्ना मुनिस्तत्र देवता चामरेश्वरः । त्रिष्टुप्छंदो जपादौ तु विनियोगो यथोचितम् " इत्युपसंहारश्च॥ नच त्रिविधं रुद्रमुपक्रम्य बौधायनसूत्रे न्यासविधानाज्जपादिषु त्रिविधेष्वपि रुद्रेषु तेनैव न्याससिद्धे

" विनियोगो जपादिषु " इत्यादिभिरन्यथानुपपत्त्या " यज्जाग्रत " इत्यादि हृद-याद्यंगमंत्रजपसाहित्यं जपादिषु रुद्रेषु विधीयते इति वाच्यम् । यतो बृहत्पराशर-स्मृतौ त्रिविधरुद्रोपक्रमेण बौधायनसूत्र इव न्यासविधानाभावात् । " एतत्सं-चिंत्य सकलं द्विजाग्र्यो रुद्रजाप्यकृत् " इत्युपसंहारबलाच्च न्यासानां जपरुद्रैक-विषयत्वावगमान्न होमाभिषेकरुद्रयोर्न्यासविधीभिर्न्यासप्राप्तिः । अतो होमाभिषेक-रुद्रयोर्न्यासप्राप्तिर्यथास्यादित्येवमर्थानि " विनियोगो जपादिषु " इत्यादीनि वाक्यानीति न किंचिदनुपपन्नम् । यच्च " पंचांगानि स्मरेदष्टप्रणवं च जपेद् द्विजः " इति बृहत्पराशरवाक्ये " पंचांगानि स्मरेत् " इत्यभिधानमेव जपादिषु रुद्रेषु शिव-संकल्पादिहृदयाद्यंगमंत्रजपसाहित्ये मानमिति। तदपि न। पंचांगानि सद्योजाताद्योनि पंचास्यानि। हेमाद्रौ चैत्रमित्येवं तस्य निर्णयसिंधौ शांतिरत्ने कमलाकरभट्टपादैर्व्या-ख्यातत्वात् । तस्मात् सांगशब्दस्य जपादिषु रुद्रेषु शिवसंकल्पादिहृदयाद्यंगमंत्रजप-साहित्यं नार्थः। किंतु " याते रुद्रे " इति शिखायामित्येवमाद्यंगन्याससाहित्य-मेव तदर्थ इति युक्ततरम् । " सांगस्त्वाद्यो रूपकाख्यः " इति वाक्ये अंगन्यास-ग्रहणं पूजाया उपलक्षणार्थम् । " संप्रध्वस्त्वांतरायः सन् ततो यजनमारभेत् " इ-ति यजनमुपक्रम्य " अनुगुप्ते सुलिप्ते च देशे गोचर्ममात्रके । स्थंडिलेऽबुजमालि-ख्य शुभ्रैः क्षालिततंदुलैः । तत्र पूजादिकं कुर्याच्छंभवायेति मंत्रतः इत्यादिना जपाद्यंगत्वेन पूजाया अपि बृहत्पराशरेण विधानात् । अत एव देवयाज्ञिकादिभिः पूजापूर्वकता जपादावभिहिता । बौधायनमते तु " यजनमारभेत् " इति सूत्रे म-हार्णवकारादिभिर्निरुक्तस्य जपहोमाभिषेके त्रिविधस्य यजनपदार्थस्य जपहोमार्चन-विधिं व्याख्यास्याम इति सूत्रमूलकत्वाज्जपहोमयोः पूजा नास्त्येव । अत एव महा-र्णवकारादिभिर्नोक्ता । तेन पूजापूर्वकता जपहोमयोर्वैकल्पिकी । शिरसा सहितः स-शीर्षः । " वयं सोम " इत्यादिमंत्राणां सप्तकमष्टकं वा शिरः । तथा चोक्तविधांग-न्यासपूजापूर्विकायां सशिरस्कायामेकस्यां रौद्राध्यायावृत्तौ रूपकेत्याख्या मात्र-मस्मिन् वाक्ये प्रतिपाद्यते ॥ महच्छिद्रे जपमात्रं चेहाधिकमुक्तम् । एतेन रुद्राध्याय स रुद्रः स्यात्प्रथमः सांगशीर्षक इति परशुरामोक्ति इति व्याख्याता । यच्च विधान-पारिजाते । जाबालश्रुतिरित्युपन्यस्य शिवसंकल्पं हृदयमित्यादिना हृदयादीनि षडंगानि निरूप्य पूर्वमंगानि संजप्य रुद्राध्यायं ततो जपेदिति वचनमुदाहृतं तदप्येवं व्याख्येयम्, पूर्वमंगानि संजप्येत्यनेनांगन्यासकर्तव्यतामनुद्य तदुत्तरकालता रौद्राध्या-यजपादौ विधीयते । पूर्वं रौद्राध्यायजपात्पूर्वम् । एतेनांगन्यासानुष्ठानस्यावश्यकर्त-व्यता दर्शिता। यतोऽनुष्ठिता अंगन्यासाः शिवस्वरूपतासंपादनेनजपयोग्यतामापादयंति।

उक्तं च शतपथे। देवो भूत्वा देवानप्येतीति। श्रुत्यन्तरेपि । देवो भूत्वा देवान् यजेतेति । अंगन्यासानां च शिवस्वरूपतासंपादकत्वमुक्तम्। बोद्धायनेन एवमात्मनि रौद्रीकरणं कृत्वेति । उक्तं च बृहत्पराशरेणापि । रौद्रीकरणमेतद्वै कृत्वा पापात्प्रमुच्यते इति। अंगानि हृदयादीनि यज्जाग्रत इत्येवमादीनि संजप्य सम्यक् तत्तन्मंत्रजपधर्मपूर्वकं हृदयादिषु स्वांगेषु जप्त्वा समधीत्य विन्यस्येति पूर्वमंगानि संजप्येत्यस्यार्थः। लभते चैवं सति: शतरुद्रियसंज्ञस्य रुद्रस्यांगानि पंच हि। पचांगं न्यस्य तं ध्यात्वा जपेद्रुद्रांस्ततः क्रमादिति पूर्वलिखिताग्निपुराणवाक्यसंवादोपि, नच पूर्वमंगानि संजप्येति वाक्ये सामान्यतः श्रुतस्याप्यंगशब्दस्य शिवसंकल्पं हृदयमित्यादिना पूर्ववाक्येन निरूपितहृदयाद्यंगविशेषविषयत्वादंगानि संजप्येत्यंगानां जपविधानात्तज्जपविध्यन्यथानुपपत्त्यांगमंत्राणां शिवसंकल्पादीनां जप एव विधीयत इति वाच्यम्। अंगजपविध्यन्यथानुपपत्तिर्हि तदास्याद्यद्यंगन्यासमंत्राणां करणमंत्रत्वेनैकश्रुतिस्वरोऽभिधीयेत। न तु तदस्ति । अंगन्यासमंत्राणां न्यासक्रियां प्रति कर्मत्वेन करणमंत्रत्वाभावात् । जपशब्दस्याध्ययनविधिप्राप्तत्रैस्वर्यानुवादकत्वेनांगन्यासमंत्राणां स्वरपूर्वकं तत्तदंगेषु न्यासो यथा स्यादित्येवमर्थकत्वाच्च । अत एवांगन्यासेषु जपशब्दप्रयुक्तो हेमाद्रौ कौशिकेन । हृदये हृदयं जप्त्वेति । हृदये स्वावयवे हृदयाख्यं मंत्रं जप्त्वा जपधर्मपुरःसरं समधीत्य विन्यस्येत्यर्थः । तस्मान्नंगानि संजप्येत्यंगजपविध्यन्यथानुपपत्तिः। किंच । शिवसंकल्पं हृदयमित्यादिना शिवसंकल्पादिषु हृदयादिसंज्ञाविधानस्य जपार्थत्वे प्रयोजनाभावाद्वैयर्थ्यापत्तेः । अतस्तत्तदंगेषु न्यासार्थतयैव विज्ञाविधानमित्यवश्यं वाच्यम् । अत एव संज्ञया संज्ञिनो न्यास उक्तो हेमाद्रौ कौशिकेन। हृदये हृदयं जप्त्वेति । तस्मान्न पूर्वमंगानि संजप्येति वाक्यं शिवसंकल्पादिहृदयाद्यंगमंत्रजपविधायकम् । यद्यप्यंगशब्दस्य हृदयाद्यंगविशेषत्वे जपहोमार्चनविधिमित्युपक्रम्य विहितानां न्यासान्तराणां परिसंख्यापत्तिस्तथापि-शिवसंकल्पं हृदयमित्युपक्रमात्। वक्ष्ये रुद्रविधानं तु पंचांगं सर्वदं परम् । हृदयं शिवसंकल्पं शिरः सूक्तं तु पौरुषम् ॥ शिखाद्द्यः संभृतं सूक्तमाशुः कवचमेवच । वेदवादिभिराख्यातमस्त्रं वै शतरुद्रियम्॥ शतरुद्रियसंज्ञस्य रुद्रस्यांगानि पंच हि । पंचांगं न्यस्य तं ध्यात्वा जपेद्रुद्रांस्ततः क्रमात् ॥ इत्यग्निपुराणैकवाक्यत्वाच्च सामान्यतः श्रुतस्याप्यंगशब्दस्य हृदयाद्यंगविशेषविषयत्वमेव युक्तम् । न च शिवसंकल्पादिन्यासस्य न्यासान्तरोपलक्षणार्थत्वम् । लक्षणप्रसंगात् । तस्माच्छिवसंकल्पादिन्यास एव कर्तव्यतया पूर्वमंगानि संजप्येत्यनेन प्रतिपाद्यत इत्येव युक्ततरं। एवं स्थिते सति याते रुद्रेति शिखायामित्येवमादिनां पंचविधन्यासानां पंचांगस्य षडंगस्य वा हृ-

दयादिन्यासस्य शक्ताशक्तपरत्वेन व्यवस्था । शक्तेन तु पंचविधा न्यासाः कार्याः। अशक्तेन तु हृदयादिन्यंगानि नेत्रयुक्तानि तद्वर्जितानि वा कार्याणीति सर्वं तुस्थम् । तदंते रौद्राध्यायजपान्ते । इह वाक्ये तु महच्छिरसो जटायाश्च जपोधिक उक्तः । देवयाज्ञिकैस्तु जटाजपो नैवोक्तः । हेमाद्रिमहार्णवादिषु तद्विधायकस्मृतिवाक्यादर्शनात्। निर्णयसिन्धौ शान्तिरत्ने कमलाकरभट्टपादैस्तु महच्छिरसो जटायाश्च जपविधायकवाक्यान्याकरग्रंथेष्वदर्शनान्निर्मूलानीत्युक्तम् । यत्तु बृहत्पराशरस्मृतौ । शिरसा सह रुद्राणां जप्तैर्दशशतर्ध्रुवम् । सर्वे मंत्रा भवन्त्यस्य ब्राह्मणस्योक्तकारिण इति । तथा । अथवा । चरुभिक्षाशी सशिरं रुद्रसहस्रकं जपेदिति शिरसा सह रुद्रजपविधानमुक्तं तत्सहस्रसंख्यनिर्देशात्फलान्तरनिर्देशाच्चोक्तप्रकारापेक्षया प्रकारांतरमेव द्रष्टव्यम् । यत्तु व्रतखंडान्तर्गतशांतिखण्डे हेमाद्रौ रुद्रप्रकरणे निर्णयसिंधौ शांतिरत्ने च । एवं ध्यात्वा द्विजः सम्यगंगानां जपमारभेत् । हृदये हृदयं जप्त्वा शीर्षि सूक्तं च पौरुषम् ॥ शिखायामुत्तरं षट्कं नारायणमनुत्तमम् । कवचे प्रतिरथं तद्वदस्त्रेतु शतरुद्रियम् ॥ जप्त्वांगानि जपेच्छांतिं विकिरीति विसर्जयेत् ॥ इति बोद्धायनवचनं शिवसंकल्पादीनां हृदयादिपंचांगानां जपविधायकं तदशक्तौ तन्मात्रस्यैव जपविधायकं न तु रूपकाख्यरुद्रांगत्वेन शिवसंकल्पादिहृदयाद्यंगमंत्रजपविधायकम्॥ तस्मात् रुद्राध्याय जप एव रूपकाख्यो रुद्र इति सिद्धम् । एवं च सति यज्जाग्रत इत्यादिभिर्विभ्राडित्यनुवाकान्तैर्हृदयादिभिः पंचभिरंगमंत्रैर्न्यासभिन्नैर्युक्त रौद्राध्यायं संजप्य रौद्राध्यायजपांते वयं सोमेत्यादीनामष्टानामुग्रश्चेति तिसृणां सप्तानां वा कंडिकानां च ये जपमाचरंति ते तु विहितादन्यथाकरणस्याक्रियात्वमजानंतो वंद्या एव । विहितादन्यथाकरणस्याक्रियात्वमुक्तं छंदोगपरिशिष्टे कात्यायनेन । अक्रिया त्रिविधा प्रोक्तेति । एतच्च पूर्वमुदाहृतम् । न्यूनकरणवदतिरिक्तकरणमपि विहितादन्यथाकरणमेव । उक्तं च । कर्मोपपाते प्रायश्चितं तत्कालमिति सूत्रे कर्मणोभ्रेषत्वाऽपरपर्यायस्योपपातस्याकरणं न्यूनकरणमतिरिक्तकरणमन्यथाकरणं चेति चातुर्विध्योपन्यासपूर्वकम् । अथवा । सर्वमेवेदं विहितान्यथाकरणमेवेत्येवं वदद्भिर्भर्तृयज्ञपितृभूतिकर्कोपाध्यायवासुदेवश्रीअनंतदेव याज्ञिकादिभिर्भाष्यकारैः कारिकाकारैर्गोविन्दोपाध्यायैः संप्रदीय शंकर श्रीरामचंद्राचार्यादिभिः पद्धतिकारैश्चेत्यलमतिप्रपंचेन ॥

प्रकृतमनुसरामः। षडंगैकादशी रुद्र इति शातातपवचसो द्वितीयरुद्रस्वरूपप्रतिपादकस्य महार्णवकृतार्थ उक्तः । षडंगन्यासपूर्वकमेकादशानुवाकात्मकं रौद्राध्यायं पठित्वा आद्यं चमकानुवाकं पठेत् । पुनस्तं पठित्वा द्वितीयं चमकानुवाकमित्येवमेकादशानां पूरणी आवृत्तिः॥ षडंगैकादशीत्यभिधीयते। एष एव रुद्र इति सज्ञां लभते ।

अयमेव रुद्रो रुद्रीशब्देनाप्यभिधीयते । बोद्धायनसूत्रेपि । नमस्ते रुद्रमन्यव इत्येकादशानामनुवाकानां जपांते जपांतेऽग्नाविष्णुसजोषसेत्येकादशानानुवाकानामेकमेकं जपेदिति। एकादशानुवाकात्मकं रौद्राध्यायं पठित्वा पठित्वा एकैकं चमकानुवाकं पठेदित्यर्थः । वाजसनेयिनां तु नवानुवाकात्मको रौद्राध्यायः । चमकानुवाकजपश्च कृताकृत इति विशेषः । एवं च चमकानुवाकजपाभावपक्षे रौद्राध्यायस्यैव केवला एकादशावृत्तयो रुद्रयपर पर्यायस्य रुद्रस्य स्वरूपं बोध्यम्। एकादशगुणान् रुद्रानावर्त्य याति रुद्रतामिति बृहत्पराशरस्मृतेः। "एकादशगुणान्वापि रुद्रानावर्त्य धर्मवि" दित्यत्रिस्मृतेश्च। अत्र षडंगैकादशीरुद्र इति शातातपोक्तेः पंचांगरुद्राणामिति बौद्धायनोक्तेश्च पंचांगषडंगन्यासयोर्विकल्प एव । तुल्यशास्त्रत्वात् । अभिषेके तु बौद्धायनेन षष्ठस्यापि विहितत्वात् षडंगन्यास एव । यस्तु शिखा तस्य तु रुद्रस्योत्तरं नारायणः स्मृतः । रुद्रस्य रुद्रशब्दवाच्यरौद्राध्यायलक्षणमंत्रस्येत्यर्थः । शिरःपुरुषसूक्तं च शिवसंकल्पकं च हृत् । कवचाप्रतिरथं नेत्रं विभ्राड् बृहत्स्मृतम्॥ शतरुद्रियमंत्रेषु देवस्यास्त्रं प्रकल्पयेदिति बृहत्पराशरेण विहितः षडंगन्यासः सत्वत्र न ग्राह्यः । तथात्वे षडंगन्यासव्यतिरिक्तानां जपहोमार्चनविधिं व्याख्यास्याम इत्युपक्रम्य विहितानामन्येषां न्यासानां परिसंख्यापत्तेः । महार्णवाद्यनेकग्रन्थविरोधापत्तेश्च । तस्मादभिषेकांगतया विहितं षष्ठं न्यासमादायैव याते रुद्रेति शिखायामित्यादि यः षड्विधांगन्यास एवात्र षडंगन्यासा इति ध्येयम् । एवं पंचविधांगन्यासा एव पंचांगन्यासा अपीति । यत्तु प्रांचः पद्धतिकाराः । षडंगशब्देन हृदयादिषडंगन्यासमंत्राः शिवसंकल्पादय उच्यंते। तथा च तेषां रुद्रस्वरूपे निवेशान्न परिसंख्यादोषः। अतश्च शिवसंकल्पादि षडंगमंत्राणां जपपूर्वकमेकादशानां पूरणी रौद्राध्यायस्य वृत्तिः षडंगैकादशीति " षडंगैकादशी रुद्र" इत्यस्यार्थमाहुः। वचनं च व्रतखंडनाम्नोदाहरंति, षडंगानि सकृज्जप्त्वा रुद्रैकादशवर्तनम् । महच्छिरश्च कर्तव्यं रुद्रैकादशिनीं जपेदिति । तदयुक्तम् । श्रुतिस्मृतिपुराणादिपूर्वोक्तानेकवाक्येषु रौद्राध्यायस्यैवैकादशगुणस्य द्वितीयरुद्रस्वरूपत्वेनोक्तत्वात् । तस्य शिवसंकल्पादिहृदयाद्यंगमंत्रजपपूर्वकतायां प्रमाणाभावाच्च । शिवसंकल्पर्हृदयमित्यादिना तत्तदंगेषु न्यासार्थत्वेनैव शिवसंकल्पादिषु हृदयादिसंज्ञाविधानाच्च जपार्थतया विधाने प्रयोजनाभावाद्वैयर्थ्यापत्तेश्च। षडंगशब्दस्य षड्विधांगन्यासपरतायाः महार्णवकारादिभिरभिहितत्वात् षड्विधांगन्यासमंत्राणामेव जपप्रसक्तेश्च । षड्विधांगन्यासबोधकत्वेन प्रसिद्धस्य षडंगशब्दस्य षड्विधांगन्यासैकदेशभूतहृदयादि न्यासैकदेशभूतशिवसंकल्पादिमंत्रमात्रपरत्वे षडंगशब्दसंकोचापत्तेश्च महार्णवाद्यखिलनिबंधविरोधापत्तेश्चेति यत्किंचिदेतत् । यत्तु व्रतखण्डनाम्नो-

दाहृतं वचस्तद्व्रतखण्डे हेमाद्रौ रुद्रप्रकरणेऽदर्शनान्निर्मूलं । समूलत्वे तु षडंगानि याते रुद्रेति शिखायामित्यादीनि षड्विधांगन्यासरूपाणि सकृज्जप्त्वा सकृत्कृत्वेति तस्यार्थः । पंचांगरुद्राणामित्याद्यंगशब्दस्यांगन्यासपरत्वेनैव प्रयोगात् । महार्णवकृतापि षडंगैकादशी रुद्र इति शातातपवाक्ये षडंगशब्दः षड्विधांगन्यासपरत्वेनैव व्याख्यातः । रुद्रे रूपकाख्याद्यरुद्रस्यैकादशगुणत्वाद्रुद्रीमहारुद्रादौ सर्वेषां पार इति विहितोत्तरपूजनस्यावृत्तिवन्न्यासानामप्येकादशकृत्व आवृत्तिः स्यादिति शंका मा भूदिति सकृदित्युक्तम् । एवं च निखिलनिबंधैर्न विरोधः ।। इति ।।

यत्तु परशुरामेणोक्तम्। सांगमाद्यं जपेद्रुद्रं केवलानि नवान्तरे ।। सांगं सशीर्षकं चान्त्यं निरंगमिति केचनेति ।। तत्रादृशार्थविधायकार्षवचनानुपलंभात् पूर्वोक्तानेकश्रुतिस्मृतिवाक्यविरोधान्निर्मूलमंधपरम्परामात्रमित्युपेक्षणीयमित्युक्तं निर्णयसिन्धौ शान्तिरत्ने कमलाकरभट्टपादैः ।। अयं च द्वितीयो रुद्रः। रुद्रैरेकादशरुद्र इति। एकादशरुद्रतो रुद्रीत्यन्वयः। रुद्रतः पूर्वोक्तरुद्रस्यैकादशावृत्त्येत्यर्थः। इयमेव रुद्री रुद्रैकादशिनी लघुरुद्रशब्दाभ्यामभिधीयते। अयं च तृतीयो रुद्रः। इयमेव रुद्री एकादशगुणश्चेदेको महारुद्र इत्यभिधीयते । अयं च तुरीयः । एकादशावृत्तैर्महारुद्रैरेकोतिरुद्र इति । अयं च पंचमः । एतदेवाह व्रतखण्डान्तर्गतशान्तिखण्डे हेमाद्रौ कौशिकः । सद्यादिपंचमंत्रांश्च रुद्रानेकादशैव तु ।। जपित्वा सर्वरुद्रांश्च चमकाद्यं ततो जपेत् ।। पुनरेतज्जपेत्सर्वं द्वितीयं चमकं तथा ।। एवमेकादशगुणान् क्रमेण चमकांस्तथा ।। रुद्रैकादशिनीत्येषा सर्वकामफलप्रदा ।। एकादशगुणा सैव रुद्र इत्यभिधीयते ।। रुद्रो लघुरुद्रः। रुद्र एकादशगुणो महानित्यभिधीयते।। महानेकादशगुणस्त्वतिरुद्र इहोच्यत रुद्रकल्पद्रुमे चास्मिन् रुद्ररूपं प्रपंचितम्। विदुषानंतदेवेन तेन तुष्यतु शंकरः ।।

## ।। अथ मंत्रविभागः ।।

अथैतेषु पंचसु रुद्रेषु हेमाद्रिमते प्रधानभूते समग्रहोमे महार्णवकारमते प्रधानहोमे जपांगभूते दशांशादिहोमे चोपयोगाच्छ्रुतिसूत्रदृष्टो मंत्रविभागो महार्णवकारप्रदर्शितेन कथा निरूप्यते। तत्र मंत्रांतैः कर्मादिः सान्निपात्योभिधानादिति कात्यायनसूत्रे मंत्रांतैः कर्मादीन्संन्निपातयेदित्यापस्तंबसूत्रे च मंत्रांतैः मंत्रसमाप्तिभिः कर्मादीन् कर्मोपक्रमान्संन्निपातयेत्संयोजयेदित्युक्तत्वान्मंत्रान्ते कर्मोपक्रमो होमारंभः कार्यः । तत्र वृषोत्सर्गप्रकरणे हुतशेषं निधाय रुद्रं जपित्वेति बौद्धायनगृह्ये । यस्तु रुद्रं जपेन्नित्यं ध्यायमानो ममाकृतिमिति पूर्वोक्तपद्मपुराणे च रुद्रमित्येकवचनश्रवणात्संपूर्णो रौद्राध्याय एको मंत्र इत्यवगम्यते । ततश्च रौद्राध्यायान्ते स्वाहाकारं प्रयु-

ष्य होमं विधायेदं रुद्राय नममेति रुद्रोद्देशेन त्यागः कार्यः। रुद्रान्जपित्वेति पूर्वोक्त-पारस्करगृह्ये प्रागुदाहृतेषु बृहत्पराशरात्रिशातातपस्मृतिविष्णुधर्मोत्तरादिवाक्येषु रुद्रानिति बहुवचनश्रवणात् रौद्राध्याये मंत्रबहुत्वमपि गम्यते। तच्च मंत्रबहुत्वं नाना-विधम्। तत्र श्रौते कर्मणि चरमायामिष्टकायां जुहोतीत्युक्त्वा त्रेधा विभक्तं जुहोति त्रय इमे लोका इति तैत्तिरीयश्रुतिस्तावद्रौद्राध्यायस्य त्रेधा विभागमाह। बोद्धायनोपि। न-मस्ते रुद्रमन्यव इत्येताननुवाकांस्त्रेधा विभज्येति। एतदनुसारिणी शतपथश्रुतिरपि परिश्रित्सु जुहोतीति प्रकृत्य सर्वै जानु दघ्ने। प्रथमं स्वाहा करोति। अथ नाभिदघ्ने। अथ मुखदघ्न इति लोका त्रय क्रमेण रौद्राध्यायस्य त्रेधा त्रिभागमाह। स्वीकृतश्च बौद्धायनोक्तास्त्रधा विभागः परशुरामादिभिः। इत्थंच तेषां ग्रन्थः। बौद्धायन-मते तिस्र श्रुत्यभिप्रायदर्शनात्। परिश्रित्स्वर्कपर्णेन तिस्रो जुहोति जर्तिलैः गवेधुस्त-लुभिस्तद्वज्जुहोति तिस्र आहुतीः। परिश्रित्सूत्तरार्द्धेग्रेरुदङ्तिष्ठन्निति श्रुतिः। स्वाहा-कारत्रयस्योक्तेर्जानुदघ्ना त्रिषु त्रिष्विति॥

## ॥ अथ षोढा विभागः ॥

तत्र शतपथश्रुतिः। यद्वेव पल्यवरोहत्येतद्वा एतदेतान् रुद्रानित ऊर्ध्वान्प्रीणाति तान् पुनरमुतोर्वाच इति। त्रिष्कृत्वः प्रत्यवरोहतीत्युक्त्वा त्रिरितऊर्ध्वोरोहतितत्षट्कृत-स्योक्तो बंधुरित्यारोहावरोहक्रमेण षडाहुतिपक्षं निगमयति। तथा॥ स वा अशीत्यां च स्वाहा करोति प्रथमे चानुवाकेऽथाशीत्यांमथाशीत्यांच यानि चोर्ध्वानि यजूष्यावता नेभ्य इति। इत्थमस्याः श्रुतेरर्थः। नमो हिरण्यबाहवे सेनान्य इत्येतावदेकं य-जुः। एवमुत्तराण्यपि। ततश्चैकैकस्यां कंडिकायामष्टावष्टौ यजूंषि भवंति। तानि च दशसु कंडिकास्वशीतीः संपद्यंते। तस्यां यजुषामशीत्यामतीतायां स्वाहा करोति-प्रथमे चानुवाकेऽतीतेष्वनुवाकेष्वतीतेषु जानुमात्रे परिश्रिति स्वाहाकारं करोती-त्यर्थः। अथाशीत्याम्। नमस्तक्षभ्य इत्यारभ्य यजुषामशीत्यामतीतायां पंचानुवा-कानि नाभिमात्रे परिश्रिति स्वाहाकारं करोतीत्यर्थः। अथाशीत्यां च यानि चोर्ध्वा-नि यजूंष्यावतानेभ्य इति। नमः स्रुत्यायेत्यारभ्य यजुषामशीत्यामतीतायां यानि च तत ऊर्ध्वानि अशीतेरुपरिष्टात्पठितानि नमोवः किरिकेभ्य इत्यादीनि यजूंषि तेष्व तीतेष्वित्यर्थः। आ आवतानेभ्य इत्याङभिविधौ असंख्याता इत्यादयो दशकंडिका अवतानसंज्ञकाः। अथावतानां जुहोतीत्युक्तत्वात्। तदन्ते मुखमात्रे परिश्रिति स्वा-हाकारं करोतीत्यर्थः। तथा। अथ प्रत्यवरोहान् जुहोतीति। एकजातं मूलत्वेना-दाय कल्पकारो भगवान् कात्यायनः। अनुवाकांते स्वाहाकारो जानुमात्रे पचंति च नाभिमात्रे प्राक् प्रत्यवरोहेभ्यो मुखमात्रे प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु

नमोऽस्त्वित्ति प्रतिमंत्रमिति षोढाविभागमाह । तथा तैत्तिरीयश्रुतिरपि पूर्वास्तिस्रो मनसि कृत्वा तिस्र उत्तरा आहुतीर्जुहोति षट् संपद्यंते षड्वा ऋतव इति । ननु चारोहक्रममंगीकृत्योक्तस्य षोढाविभागस्य तैत्तिरीयाणामेव स्यान्न वाजसनेयिनामिति चेन्न। एतद्वा एतदिमां लोकानित ऊर्ध्वो रोहति । तथा एतदेतान् रुद्रानित ऊर्ध्वान्प्रीणाति । त्रिरितऊर्ध्वो रोहतीत्यादि श्रुतिभिर्वाजसनेयशाखायामप्यारोहक्रमस्यैव विहितत्वात्। किंच। सवै जानुदघ्ने प्रथमं स्वाहा करोतीत्युपक्रम्याधइवतद्यजानुदघ्नमध इव तद्यदयं लोकस्तद्य इमं लोकं रुद्राः प्राविशंस्तांस्तत्प्रीणातीत्यस्य नमोस्तु रुद्रेभ्यो ये पृथिव्यामित्यनेन व्यवहितेन संबंधः प्रतीयते । समानार्थत्वात् एवमथ नाभिदघ्न इति प्रकृत्य मध्यमिव वै तद्यन्नाभिदघ्नं मध्यमिवान्तरिक्षलोकस्तद्येऽन्तरिक्षलोकं रुद्राः प्राविशंस्तांस्तत्प्रीणातीत्यस्य नमोस्तु रुद्रेभ्यो येंतरिक्ष इत्यनेन। तथा अथ मुखदघ्नइति प्रकृत्य उपरीव वै तद्यन्मुखदघ्नमुपरीतवद्यदसोलोकस्तद्येऽमुं लोकं रुद्राः प्राविशंस्तांस्तत्प्रीणातीत्यस्य नमोस्तु रुद्रेभ्यो ये दिवीत्यनेन । एवमेतेष्ववरोहक्रमः स्पष्टतया दृश्यते । तथा पूर्वोदाहृतकात्यायनकल्पसूत्रेपि । तस्मादारोहावरोहक्रममाश्रित्य वाजसनेयिनामपि षोढा विभागो युक्त एव ॥

## ॥ अथ षोडशधाविभागवानन्यप्रकारः ॥

तत्र दशावताना एते दशमंत्राः । अथावतानान्जुहोतीत्यनेन तेषां पृथद्धोमविधानात् । अत्र च बहुवचनश्रवणान्मंत्रबहुत्वप्रतीतेः प्रतिमंत्रं पृथद्धोमप्रतीतौ सत्यामपि पुनः संख्याविशिष्टास्तानाह । दशैतानवतानान्जुहोतीति । एवमेतैर्दशभिः षण्मंत्रपक्षोदितैः षड्भिर्मंत्रैश्च सह षोडशधा विभागः संपद्यते। बौद्धायनोपि । नमस्ते रुद्रमन्यव इत्येतानन्नुवाकांस्त्रेधा विभज्यापि वा प्रथमादुपक्रम्य नमस्तक्षभ्य इति जानुदघ्ने धारयमाणो रथकारेभ्य इत्युपक्रम्य नमः स्वायुधायेति नाभिदघ्ने शेषेण प्रागवतानेभ्य आस्यदघ्ने हुत्वा सहस्राणि सहस्रश इति दशावतानान् हुत्वा नवारोहान् जुहोति नमोस्तु रुद्रेभ्यो ये पृथिव्यामिति जानुदघ्ने धारयमाणो नमोस्तु रुद्रेभ्यो येंतरिक्ष इति नाभिदघ्ने नमोस्तु रुद्रेभ्यो ये दिवीत्यास्यदघ्ने हुत्वेति त्रेधा षोडशधा च विभागं दर्शयति ।

## ॥ अथ चतुश्चत्वारिंशन्मंत्रविभागात्मकोपरः प्रकारः ॥

तत्र षोडशर्चे प्रथमानुवाके षोडशमंत्राः । ततः सप्तानुवाकाः सप्तमंत्राः काशकृत्स्नमतेन। नमो वः किरिकेभ्य इत्यादिभिः पंचभिर्व्याहृतिभिरेको मंत्रः । एवमष्टस्वनुवाकेषु चतुर्विंशतिमंत्राः। विंशतिकंडिकात्मकेन नवमानुवाके विंशतिमंत्राः । एवं

पूर्वैःसह चतुश्चत्वारिंशत् । यद्यपि नमोवः किरिकेभ्य इत्यस्य मंत्रस्याशीत्यंनः पातित्वान्न पृथङ्मंत्रत्वं तथापि अथैतानि यजूंषि जपति नमो वः किरिकेभ्य इत्यनया श्रुत्या अथ शब्दोपन्यासपूर्वकं जपविधानात्तदेताभिर्व्याहृतिभिर्जयादित्यनया पृथग्घोमविधानाच्चपृथङ्मंत्रत्वं बोध्यम्। नमो वः किरिकेभ्य इत्यादीनां पंचमंत्रतां स्वीकृत्य पूर्वोक्तैस्त्रिचत्वारिंशन्मंत्रैः सहाष्टाचत्वारिंशन्मंत्रविभागः संपद्यते । यद्यपि संहिताभाष्यकारै रुवटादिभिः कल्पसूत्रभाष्यकारैर्देवयाज्ञिकादिभिश्च नमो वः किरिकेभ्य इत्यग्निवायुसूर्यहृदयभूताः पंच व्याहृतय इति कात्यायनोक्तेः पंचमंत्रा ज्ञेयाः ॥ स्वीकृतं च श्री अनन्तयाज्ञिकैः शतरुद्रियहोम इति सूत्रव्याख्यायां नमो वः किरिकेभ्य इत्याद्याः पंच व्याहृतयः पंचमंत्रा इति। अत्र वचनात्साकांक्षाणामपि दिवो मात्रयेतिवज्जहामिसेदिमितिवच्च पृथङ्मंत्रत्वं बोध्यम्। तेन पंचमंत्रपक्षे होमेपि देवानां हृदयेभ्य इत्यस्य पृथङ्मंत्रत्वान्नमो विचिन्वयत्केभ्य इत्यादिषु नानुषंगः ॥

## ॥ अथापरषष्ठ्युत्तरशतधामंत्रविभागात्मकः प्रकारः ॥

तत्र नमस्कारादि नमस्कारान्तमेकं यजुरितिशाकफणिराह । नमस्काराद्ये वैकं यजुरिति यास्क आह । तदेतदुभयं श्रुत्या स्पष्टमुक्तम् । तथाहि । अथ द्वंद्विभ्यो जुहोति नमो युष्मै चामुष्मै चेत्याद्युक्त्वा मंत्रमाह । नमो हिरण्यबाहवे सेनान्ये दिशांच पतये नम इतीति। अत्रेति शब्दो मंत्रसमाप्तौ तेन नमस्कारादि नमस्कारांतमेकं यजुरिति दर्शितं भवति । अतश्चैतावानेव मंत्रः । तदनंतरमथ जातेभ्यो जुहोतीत्युक्त्वा तेषां वा उभयतो नमस्कारः । अन्येऽन्यतरतो नमस्कारा अन्य इति वक्ष्यति । एतेन नमो भवाय च रुद्राय चेति नमस्काराद्येवैकं यजुरिति दर्शितं भवति। अतश्चैतावानेव मंत्रः। तदनंतरमथ जातेभ्यो जुहोतीत्युक्त्वा तेषां वा उभयतो नमस्कारा अन्येऽन्यतरतो नमस्कारा अन्य इति वक्ष्यति। एतेन नमो भवाय च रुद्राय चेति नमस्काराद्येवैकं यजुरिति दर्शितं भवति। अतश्चैतावानेव मंत्रः। एवं यावंति यजूंषि तावंतो मंत्राः। तत्र नमो हिरण्य बाहव इत्यादयो नमस्तिष्ठद्भ्यो धावद्भ्योश्च वो नम इत्यन्यता द्वंद्विनः॥ नमःसभाभ्य इत्यादयो नम आनिर्हतेभ्य इत्यंता जाताख्यास्तेषु च नमो हिरण्यबाहव इत्यादयः श्वपतिभ्यश्च वो नम इत्यंता उभयतो नमस्कारास्ततश्चत्वारिंशन्मंत्राः॥ ततो नमो भवाय च रुद्राय चेत्येवमादयः प्रखिदतेचेत्यंताअन्यतरतो नमस्काराः पंचाधिकाः सप्तमंत्राः। ततो नम इषुकृद्भ्यो धनुष्कृद्भ्यश्चवो नम इत्युभयतो नमस्कारो मंत्रः। नमो वः किरिकेभ्य इत्यादयोऽन्यतरतो नमस्काराश्चत्वारो मंत्राः । तत्र वाजसनेयिनामुभयतो नमस्काराः पंचचत्वारिंशन्मंत्राः। अन्यतरतो नमस्कारा नवसप्ततिमंत्राः एकीकृताश्चतुर्विंशत्यधिकं शतं मंत्रा भवंति। षोडशर्चे प्रथमानुवाके षोडशमंत्राः।

द्रापे सप्त। अवताना दश। मत्स्यवरोहाख्यान्यंतानि त्रीणि यजूंषि त्रयो मंत्राः। एकत्र-मिलिताः षड्विंशन्मंत्राः। यजुषां च चतुर्विंशत्यधिकं शतं। एषु सर्वेष्वेकीकृतेषु षष्ट्युत्तरं शतं मंत्रा भवंति। अथ द्वंद्विभ्यो जुहोति। अथ जातेभ्यो जुहोतीति वाक्ययोर्द्वंद्विनां जातानां च बहुत्वश्रवणात् द्वंद्विसंज्ञकानां जातसंज्ञकानां च मंत्राणां प्रत्येकहोमसाधनत्वं गम्यते। अत्र च द्वंद्विनां जातानां च बहुत्वात् बहुत्वं च त्रित्वे नित्यमिति कपिंजलाधिकरणन्यायो न प्रवर्तते। तेन प्राक्प्रदर्शितमंत्रेणैतावंतो मंत्राः प्रदर्शिता भवंति। तत्र शाकपूणिपक्षे उभयतो नमस्कारेषु सुकरो मंत्रविभागः। अन्यतरतो नमस्कारेष्वेवमूह्यः। तद्यथा। नमो भवाय च रुद्राय च नमःशर्वाय च पशुपतये चेत्यत्र द्वितीयो यो नमः शब्दः स पूर्वमंत्रस्यांतत्वेनोत्तरमंत्रस्य चादित्वेनेत्युभयार्थमाम्नातः काकाक्षिवदुभयत्र संबध्यते। तथा च नमो भवाय च रुद्राय च नम इत्येको मंत्रः। पुनरपि तमेव नमः शब्दमुपादाय नमः शर्वाय च पशुपतये च नम इत्यपरो मंत्रः। एवमुत्तरात्रापि ज्ञेयम् अथवा नमो भवाय च रुद्राय चेत्येवमादिषु च शब्देन प्रथमो नमः शब्दोऽनुकृष्यते। एवमुभयतो नमस्काराः सर्वे मंत्रा भवंति। यास्कपक्षे तु अन्यतरतोनमस्कारेषु स्फुटो मंत्रविभागः। उभयतो नमस्कारेषूह्यः। तद्यथा। नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमोनमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये इति प्रथमत एव द्विनमस्कारको द्वितीयो मंत्रः। एवमुत्तरत्रापि चरममंत्रवर्जचरमस्त्वादौ द्विनमस्कारक अंते एक नमस्कार युक्तः। अत एवैकनमस्कारको द्विनमस्कारक इत्युभयतो नमस्कारः स्वीकार्यः। एवंविधपक्षद्वयेपि शाकपूणिपक्षोक्त एव विभागो ग्राह्यः। बहुसंमतत्वादिति महार्णवकारः। तत्राप्यन्यतरतो नमस्कारेषु मंत्रेषु पूर्वोक्त ऊहो न कार्यः। तथा सति तेषु श्रुताया अन्यतरतो नमस्कारा मंत्रा होमे विनियोज्या इति युक्तं प्रतिभाति। यत्तु शाकपूणिमतं तदुभयतो नमस्कारमंत्रपरम्। यच्च यास्कमतं तदन्यतरतो नमस्कारमंत्रपरमिति न विरोधः। महार्णवकारोप्येवम्। अयं च षठ्युत्तरशतमंत्रविभागात्मकप्रकारो वाजसनेयिनामेव नत्वन्येषां वाजसनेयरुद्रतस्तैतिरीयरुद्रे पंचयजूंषिऋचश्च चतस्रोऽधिका विद्यंते। तेनैकोनसप्तत्युत्तरशतमंत्रविभागात्मकप्रकारस्तैतिरीयाणामेवेति विवेकः॥

## ॥ अथ पंचविंशत्युत्तरचतुःशतधामंत्रविभागात्मकोन्यःप्रकारः॥

तत्र शतपथश्रुतिः। षष्टिश्च हवै त्रीणीच शतान्येतच्छतरुद्रियमथ त्रिंशद्थ पंचत्रिंशदिति। अयं प्रकारः शतरुद्रियहोम इति सूत्रव्याख्यायां कर्कोपाध्यायैर्देवयाज्ञिकैश्चोपपादितः। इहाप्युपपादयिष्यते। अन्येपि विभागप्रकारा बृहत्पराशरसंहितायां सुव्रतप्रोक्तायामुक्ताः। पंच पंचाथ षट्षड्वा अष्टावथापि वा। दश दशैकादश वा जुहुयात्साधको हि वा। अत्रैकादशिन्यादिभिर्होमे प्रथमे रूपे यो मंत्रविभागपक्षोंगीकृतः स एव-

मंत्रविभागपक्ष उत्तरेष्वपि रूपेषु पंचपंचेत्यादि वीप्सया नियम्यते । मंत्रविभागप्रकाराणामनेकत्वात्प्रतिरूपमनियमापत्तेः ।। तथा मंत्रमुक्तावल्याम् ।। पंचाहुतिः षडष्टदशवैकादश वा जुहुयादिति । परशुरामकारिकायामपि। मुख्या आहुतयस्तिस्रो रूपस्य विधिनामुना।। पंच षड् वा तथाष्टौ वा दशवैकादशाथवा।। अथवैकाहुतिर्देया रूपस्यविधिनामुना ।। प्रसृतं हविषापूर्य रुद्राध्यायमतीत्य वा ।। एवमेत्रास्य रूपस्य सप्तपक्षा दशांशके ।। तेषामेकेन पक्षेण होतव्यं मन इच्छया ।। बोद्धायनमते तिस्रः श्रुत्यभिप्रायदर्शनादिति । इति रुद्रानुवाकेषु मंत्रविभागः ।।

## ॥चमकानुवाकेषु केवलेषु नमकचमकयोर्विशिष्टप्रयोगे च मंत्रविभागः॥

तत्र वसोर्धारां जुहोत्यौदुंबर्या पंचगृहीतं संततं यजमानोऽरण्येऽनूच्येऽग्निप्राप्ते वाजश्चम इत्यष्टानुवाकेनेत्यष्टानुवाकात्मकचमकमंत्रसमुदायस्यैकमंत्रत्वं कात्यायनेन वसोर्धाराहोमेऽभिहितं तेनैव न्यायेन यदा एकवारं रौद्राध्यायावृत्त्या यत्राज्येन प्रतिमंत्रं होमः क्रियते । तदा तत्राष्टभिश्चमकानुवाकैः संततां धारां जुहुयात् । यदा तु रौद्राध्यायेन तिलादिभिर्होमस्तदा तिलादिभिरद्रवद्रव्यैः संततधाराया अनिष्पत्तेरयज्ञसंयुक्ते कर्मणि जपादौ तु एकादशधाविभक्तैर्वाजश्चम इत्यादिभिरष्टानुवाकैरेकादशमंत्रा इत्येवमेकादशमंत्रैर्जुहुयात् । अंते वसोर्धारामपि कुर्वता वसोर्धारायामभिलषितार्थप्राप्तिहेतुत्वात्। यत्रापि रौद्राध्यायस्यैकादशावृत्त्या प्रतिमंत्रं होमस्तत्रापि नमस्तेरुद्रमन्यव इत्येकादशानामनुवाकानां जपान्ते जपान्ते अग्नाविष्णूसजोषसेत्येकादशानुवाकानामेकमेकं जपेदिति बौद्धायनोक्तेरेकावृत्त्या रौद्राध्यायमंत्रैः प्रतिमंत्रं होमान्ते एकेन प्रथमचमकविभागेन हुत्वा पुनरपि रौद्राध्यायमंत्रैर्हुत्वा द्वितीयेन चमकविभागेन जुहुयादिति।।एवं रौद्राध्यायस्यैकादशावृत्त्या होमे प्रत्यावृत्त्येकैकेन चमकविभागेन हुत्वांत्ये वसोर्धारां जुहुयात्।।अयं च होमप्रकारो द्रवाद्रवद्रव्यसाधारणः।।सर्वत्र वसोर्धारात्वाज्येन।। एवमेवरुद्रैकादशिन्यां महारुद्रेऽतिरुद्रे च द्रष्टव्यम्।। इतिचमकनमकयोर्विभागः।।

अथ मंत्रविभागप्रकाराणामनेकेषां दर्शितत्वात्त्रिधा विभागो सर्वं जानुदघ्ने प्रथमं स्वाहाकरोतीत्यादि श्रुतिःप्रमाणत्वेन पूर्वं प्रदर्शिता।। त्रेधा विभागश्च महार्णवकृता द्वेधोक्तः । तद्यथा । अत्र चाविच्छिन्नानामनुवाकानां त्रेधा प्रकरणपक्षे आद्याश्चत्वारोऽनुवाका आद्यंशस्ततश्चत्वारोनुवाका द्वितीयोंशः । एवमष्टानुवाकागताः । अवशिष्टास्त्रयोऽनुवाकास्तृतीयोंशः। एवं चानुवाकमध्ये विच्छेदमंतरेण त्रैविध्यं घटते।। यथा-गवां शतं दक्षिणा इत्यत्र षोडशर्त्विजां दक्षिणाविभागः।। तद्यथा। आद्यानां चतुर्णामृत्विजामर्द्धिन इति संज्ञा । तदनन्तरं चतुर्णां तृतीयिन इति संज्ञा ततोऽवशिष्टानां

चतुर्णां पादिन इति संज्ञा । एषां शतं गावो विभज्य दातव्याः । तत्रायं नियमः । अर्धिनामर्धंदातव्यम्। तृतीयिनां पादिनां चतुर्थांश इति। अर्द्धिनां च द्वौ समुदायौ॥ तत्र प्रथमार्द्धिनां गोशतार्द्धं पंचाशद्गावो भवंति । एवं क्रियमाणे द्वितीयार्द्धितां पंचाशदर्द्धं पंचविंशतिः । तृतीयिनां पंचाशतस्तृतीयांशे क्रियमाणे षोडश भवंति गोद्वयमवशिष्यते । तच्च त्रिषु स्थलेषु विभज्य स्थापितुमशक्यम् । द्रव्यद्वारा विभागो निषिद्धः । तस्मात् प्रथमार्द्धिनामष्टाचत्वारिंशत्। द्वितीयार्द्धिनां चतुर्विंशतिः तृतीयिनां षोडशपादिनां द्वादशेति गवां स्वरूपाविच्छेदाय शतं गावो विभक्ताः। अनेन न्यायेन प्रकृतेऽपि एकादशानामनुवाकानां स्वरूपाविच्छेदाय चरमानुवाकत्रयस्यैकमंत्रत्वं स्वीकार्यमित्येकः पक्षः ।

## ॥ अथापरः पक्षः ॥

तत्र च नमस्ते रुद्रमन्यव इत्यत आरभ्य सभापतिभ्यश्च वो नम इत्यंत एको भागः । नमोऽश्वेभ्य इत्यारभ्यावार्याय चेत्यंतो द्वितीयः । नमः प्रतरणाय चेत्यारभ्यासमाप्तेस्तृतीय इति । एवं त्रेधा विभागे पक्षद्वयमुक्तम् । तत्र वाजसनेयिनां न तावदाद्यः पक्षः । तेषामेकादशानुवाकाभावेनोक्तविधविभागासंभवात् । न च महार्णवकृदुक्तानुवाकत्रयस्यैकमंत्रत्वस्वीकारेण वाजसनेयिनामपि महार्णवकारोक्तो विभागः संभवतीति वाच्यम्। श्रुतिमूलके हि विभागे सति न्यायमूलकविभागकल्पनानवकाशात् ॥ नापि द्वितीयः॥ तादृशेपि भागे स्वशाखायां मूलश्रुत्यनुपलंभात् । तस्माद्वाजसनेयिभिरित्थं विभागः कार्यः । नमस्ते रुद्रमन्यव इत्याद्या अर्भकेभ्यश्चवो नम इत्यंतास्त्रयोनुवाका एको भागः। नमस्तक्षभ्य इत्यारभ्य सुधन्वने चेत्यंतौ द्वावनुवाकौ द्वितीयः । नमः स्रुत्यायेत्यारभ्य अध्यायसमाप्तिं यावच्चत्वारोनुवाकास्तृतीयः । त्रेधा विभागविधानसामर्थ्यान्नात्र प्रत्यवरोहमंत्राणां पृथङ्मंत्रत्वम् । अस्मिंश्च विभागे सवैजानुदघ्ने प्रथमं स्वाहा करोतीत्यादिश्रुतिजातमेव पूर्वोक्तं मूलम्। स्वीकृतश्चेत्थमेव विभागः ॥ कारिकाकृतापरशुरामेणापि । यत आह । स्वाहाकारत्रयस्योक्तेर्जानुदघ्नादिषु त्रिष्विति । एतेन वाजसनेयिनामपि महार्णवकृता द्वेधा उक्तम् । त्रेधाविभागं वदंतो निरस्ताः । एवं च नमकानामेकावृत्त्या जपांते यदि होमं कर्तुं चिकीर्षति होममात्रमेव वा तदाऽस्मिन्पक्षे त्रयो मंत्रा इति तिस्र आहुतयो भवंति । एवं चमकानुवाकानामेव जपांते होमचिकीर्षायां होममात्रेच्छायां वा एकादशधा विभक्तैरष्टभिश्चमकानुवाकैरेकादशमंत्रा इत्येकादशाहुतयः । वसोर्धारा तु पूर्वोक्तरीत्यैव । इति त्रेधा विभागः ॥

## ॥ अथ षोढा विभागात्मकोऽन्यः प्रकारः ॥

तत्र पूर्वोक्तविभागप्रकारेणैव प्रथमद्वितीयौ ग्राह्यौ । तृतीयो विभागस्तु नमः स्रुत्यायेत्यारभ्य य एतावंत इत्यृगंतः । नमोस्तु रुद्रेभ्यो ये दिवीति तिस्रः कंडिकास्त्रयो मंत्रा इत्येवं षोढा । काण्वानां तु नमोस्तु रुद्रेभ्यो ये दिवीत्यस्यामेवैकस्यां कंडिकायां तिस्रः कंडिकाः संतीति तास्तिस्रस्त्रयो मंत्रा इति बोध्यम् । अस्मिन्विभागे षडाहुतयो भवंति जपांगहोमे स्वतंत्रहोमे वा ।

अथ षोडशधाविभागात्मकोऽपरः प्रकारः॥ तत्र नमस्ते रुद्र मन्यव इत्यारभ्यार्भकेभ्यश्चवो नम इत्यंतःप्रथमो विभागः । नमस्तक्षभ्य इत्युपक्रम्य सुधन्वनेचेत्यंतो द्वितीयः । नमःस्रुत्यायेत्यारभ्य सहस्राणि सहस्रश इत्यृगंतस्तृतीय इति त्रयो मंत्राः । असंख्याता सहस्राणीत्याद्याः य एतावंतः श्चेत्यंतदश चौ दशमंत्राः। एते च पूर्वैः सह त्रयोदश । त्रीण्येतानि यजूंषि त्रयो मंत्राः। एवं पूर्वोक्तैः सह षोडश । अस्मिन्विभागे जपांगहोमे वा षोडशाहुतयो भवंति ॥

अथान्यश्चतुश्चत्वारिंशद्विभागात्मकः प्रकारः । तत्र प्रथमानुवाके षोडशमंत्राः । ततः सप्तानुवाकाः सप्त मंत्राः नमो वः किरिकेभ्य इत्यारभ्य आनिर्हतेभ्य इत्यन्त एक इत्येवं चतुर्विंशतिमंत्राः । द्रापे इत्याद्याः सप्त । असंख्याता इत्यावतो दशावताना दशेत्येवं सप्तदशमंत्रा । नमोस्तु रुद्रेभ्य इत्यादीनि त्रीणि यजूंषि त्रयो मंत्रा इत्येवं विंशतिमंत्राः पूर्वैः सह चतुश्चत्वारिंशन्मंत्राः । अत्र जपांगहोमे स्वतंत्रहोमे वा चतुश्चत्वारिंशदाहुतयो भवंति ॥

॥ अथाष्टाचत्वारिंशद्विभागात्मकोऽपरः प्रकारः॥ तत्र नमोवः किरिकेभ्य इत्याद्याः पंच व्याहृतयः पंचमंत्राः । प्रथमानुवाके षोडशचैं षोडशमंत्रा इत्यादिना निरुक्तैः त्रिचत्वारिंशन्मंत्रै । सहाष्टाचत्वारिंशन्मंत्राः। अत्र जपांगहोमे स्वतंत्रहोमे वाष्टाचत्वारिंशदाहुतयो भवंति ॥

अथ षष्ट्युत्तरशतधाविभागात्मकोन्यः प्रकारः ॥ तत्रोभयतो नमस्काराः पंचचत्वारिंशन्मंत्राः । अन्यतरतो नमस्कारा नवसप्ततिमंत्राः । एकीकृताश्चतुर्विंशत्यधिकं शतं मंत्रा भवंति । षोडशचैं प्रथमानुवाके षोडशमंत्राः । द्रापे इत्याद्याः सप्त । असंख्याता इत्यादयो दश। नमोस्तु रुद्रेभ्यो इत्यादीनि त्रीणि यजूंषि त्रयो मंत्राः । एकत्र मिलिताः षड्त्रिंशन्मंत्राः। यजुषां च चतुर्विंशत्यधिकं शतम्। एषु सर्वेष्वेकीकृतेषु षष्ट्युत्तरं शतं मंत्रा भवंति। अतोऽस्मिन्पक्षे जपांगहोमे स्वतंत्रहोमे वा षष्ट्युत्तरं शतमाहुतयो भवंति ॥

अथ पंचविंशत्युत्तरचतुःशतधाविभागात्मकोऽपरः प्रकारः ॥ सच श्रुतरुद्रियम-न्त्रमितिसूत्रव्याख्यावसरे विस्तरतो वक्ष्यते। अतश्चास्मिन्पक्षे जपांगभूते स्वतंत्रहोमे वा पंचविंशत्यधिकं चतुः शतमाहुतयो भवंति। इत्येकं वा रौद्राध्यायावृत्तौ मंत्रविभाग-भेदेनाष्टौ पक्षा दर्शिताः। ये तु बृहत्पराशरस्मृत्यादावन्येपि पंचधा अष्टधा दशधा एकादशधा विभागपक्षा उक्तास्ते तु प्राचीनैर्न व्याख्याता इति गुरुमुखादेवावगंतव्याः। अथ रुद्ररुद्रैकादशिन्यादिषु पूर्वोक्तसंख्यानामावृत्तिभेदात्संख्याभेदः प्रदर्श्यते। तत्र रौद्राध्यायस्यैकस्यामावृत्तौ दशांशहोमप्राप्तिरेव नास्तीति। एकादशधा आवृत्यात्मके रुद्राख्ये विद्यते। तत्र दशांशहोमे कर्तव्ये त्रेधाविभागपक्षाश्रयणेन तिस्र आहुतयः। ततश्चम-कानुवाकैर्वसोधारा च संपूर्णं होमपक्षे प्रतिरूपकं तिस्र तिस्र आहुतय इति त्रयस्त्रिंशत्। रूपकांते रूपकांते एकैकेन चमकविभागेनैकैका आहुतिरेकादशपूर्वाभिः सह चतुश्चत्वा-रिंशत्। अन्ते वसोर्धारा च। षोढा विभागपक्षे दशांशहोमे षडाहुतयः। ततो वसोर्धारा च। समग्रहोमे प्रतिरूपकं षड्षडिति षडुत्तराषष्टिः। चमकाहुतय एकादशेति सप्तसप्ततिराहु-तयः। अंते वसोर्धारा च। षोडशधाविभागाश्रयणे दशांशहोमे षोडशाहुतयो वसोर्द्धारा च। संपूर्णहोमपक्षे तु प्रतिरूपकं षोडशषोडशेति षट्सप्तत्युत्तरं शतमाहुतयः।पूर्ववच्चमकविभा-गाहुतयश्चैकादशेति पूर्वाभिः सह सप्ताशीत्युत्तरं शतम्। वसोर्द्धारा च॥ अथ चतुश्चत्वा-रिंन्मंत्रविभागपक्षे दशांशहोमे चतुश्चत्वारिंशदाहुतयो वसोर्द्धारा च॥ समग्रहोमपक्षे प्रतिरूपकं चतुश्चत्वारिंशदिति चतुरशीत्यकं चतुःशतमाहुतयः। चमकाहुतयश्चैकाद-शेति पूर्वाभिः सह पंचनवत्यधिका चतुःशतादित्याहुतीनाम्। अथाष्टाचत्वारिंशन्मंत्र-विभागपक्षांगीकारे दशांशहोमे अष्टाचत्वारिंशदेवाहुतयः। ततो वसोर्द्धारा च। स-मग्रहोमपक्षे प्रतिरूपकमष्टाचत्वारिंशदित्यष्टविंशत्युत्तरं पंचशतमाहुतयः। पूर्ववच्चम-कविभागाहुतय एकादशेति पूर्वाभिः सहैकोनचत्वारिंशदधिका पंचशतीभवत्याहुतीनां ततो वसोर्द्धारा च॥ अथषष्ट्युत्तरशतधामंत्रविभागपक्षाश्रयणे तु दशांशहोमे षष्ट्यु-त्तरशतमेवाहुतयो भवन्ति। वसोर्द्धारा च। समग्रहोमपक्षे तु प्रतिरूपकं षष्ट्युत्तरं शतं षष्ट्युत्तरं शतमित्येकं सहस्रं सप्तशतानि षष्ट्युत्तराण्याहुतयो भवंति। पूर्ववच्च-मकविभागाहुतयश्चैकादशेत्येकं सहस्रं सप्तशतानि एकसप्ततिश्च। ततो वसोर्द्धारा। अथ पंचविंशत्यधिकचतुःशतधामंत्रविभागपक्षाश्रयणेतु दशांशहोमे पंचविंशत्यधिकं चतुः शतमेवाहुतयो भवंति। वसोर्द्धारा च। समग्रहोमपक्षे तु प्रतिरूपकं पंचविंशत्य-धिकं चतुःशतं। पंचविंशत्यधिकं चतुःशतमिति चत्वारिंसहस्राणि षट्शतानि पंचस-प्ततिश्चाहुतयो भवंति। पूर्ववच्चमकविभागाहुतय एकादेशेति पूर्वाभिः सह चत्वारि स-हस्राणि षट्शतानि षडुत्तराऽशीतिश्च। ततो वसोर्द्धारा इति रुद्रे आहुतिसंख्याक्रमः॥

## ॥ अथ रुद्रैकादशिन्यामाहुतिसंख्या ॥

अत्रैकविंशत्युत्तरं शतं रूपका भवंति। अतः शतांशहोमोऽप्यत्रावतिष्ठते । अवकाशसंभवात् । यदा च शतांशहोमस्तदा शतरूपकाणामेकरूपकावृत्त्या होमः। तत्रापि त्रेधाषोढेत्यादिमं विभागभेदेनानेके पक्षाः संभवेयुः॥ तत्र शतांशहोमपक्षे त्रेधाविभागे शतरूपकाणामेकरूपकावृत्त्या तिस्र आहुतयः । रूपकाणामेकविंशतिरवशिष्यते। तदर्थं नमस्ते रुद्रमन्यव इत्यनया प्रथमया ऋचा एकाहुतिः। नमोऽस्तु रुद्रेभ्यो ये दिवीत्यंतेन यजुषा चैकाहुतिः । चमकानुवाकैर्विभक्तैरेकादशेति षोडशाहुतयः । अंते वसोर्द्धारा च। शतांशहोमपक्षे एव षोढा विभागाश्रयणे शतरूपकाणामेकरूपकावृत्त्या षडाहुतयः। अवशिष्टैकविंशतिरूपकाणां कृतेन नमस्ते रुद्रमन्यव इत्यादिभिस्तिसृभि ऋग्भिः प्रत्येकमेकैकाहुतिरिति तिस्रः। नमोऽस्तु रुद्रेभ्यो येदिवीत्यादिभिस्त्रिभिर्यजुर्भिस्तिस्र आहुतय इति पूर्वाभिः सह द्वादशचमकानुवाकैरेकादशेतिमिलित्वा त्रयोविंशतिः। अंतेवसोर्द्धारा च । शतांशहोमपक्ष एव षोडशधाविभागांगीकारे रूपकशतस्यैक रूपकावृत्त्या षोडशाहुतयः । अवशिष्टाया रूपकाणामेकविंशतेः कृते प्रथमयचैकाहुतिः । पूर्वोक्तरीत्यांत्येन यजुषा चैकाहुतिः। पुनः प्रथमाभिस्तिसृभिर्ऋग्भिः प्रत्येकमेकैकेति तिस्रः। अंत्यैस्त्रिभिर्यजुर्भिः प्रत्येकमेकैकेति तिस्र इति मिलित्वा चतुर्विंशतिः। चमकानुवाकैरेकादशेति पूर्वाभिः सह पंचत्रिंशत्। ततो वसोर्द्धारा । शतांशहोमपक्ष एव चतुश्चत्वारिंशद्रूपविभागाश्रयणे शतरूपकाणामेकरूपकावृत्त्याचतुश्चत्वारिंशदाहुतयः । त्रेधा विभागमाश्रित्य पुनरेकरूपकावृत्त्या तिस्र आहुतयः । अवशिष्टरूपकाणां कृते प्रथमयचैकाहुतिः। अंत्येन यजुषा चैकेत्येकोनपंचाशत्। चमकानुवाकैरेकादशेति पूर्वाभिः सह षष्ठिराहुतयः। अंते वसोर्द्धारा च ॥ शतांशहोमपक्ष एवाष्टाचत्वारिंशद्रूपमंत्रविभागाश्रयणे शतरूपकाणामेकरूपकावृत्त्या अष्टाचत्वारिंशदाहुतयः त्रिधा विभागमाश्रित्य पुनरेकरूपकावृत्त्या तिस्र आहुतयः। अवशिष्टरूपकांकृते प्रथमयचैकाहुतिः । अंत्येन यजुषा चैकाहुतिरित्येवं त्रिपंचाशत् । चमकानुवाकैरेकादशेति मिलित्वा चतुःषष्टिः। अन्ते वसोर्द्धारा च । शतांशहोमपक्ष एव षष्ठ्युत्तरशतधामंत्रविभागपक्षाश्रयणे शतरूपकाणामेकरूपकावृत्त्या षष्ट्युत्तरं शतमाहुतयः । त्रेधाविभागमाश्रित्य पुनरेकरूपकावृत्त्या तिस्र आहुतयः । अवशिष्टरूपकाणां कृते प्रथमाभिस्तिसृभिर्ऋग्भिः प्रत्येकमेकैकेति तिस्रः। अन्त्यैस्त्रिभिर्यजुभिः प्रत्येकमेकैति तिस्रः । एवं पूर्वोक्ताभिः सहैकोनसप्तत्युत्तरं शतमाहुतयः । चमकानुवाकैरेकादशेति मिलित्वैकोनाशीत्युत्तरं शतम् । अन्ते वसोर्द्धारा च । शतांशहोमपक्ष एव पंचविंशत्यधिकचतुः शतधामंत्रविभागपक्षाश्रयणे तु शतरूपकाणामेकरूपकावृत्त्या पंचविंशत्युत्तरं चतुः शतमाहुतयः ।

त्रेधाविभागमाश्रित्य पुनरेकरूपकावृत्तया तिस्र आहुतयः। अवशिष्टरूपकाणां कृते प्रथमाभिस्तिसृभिर्ऋग्भिः प्रत्येकमेकैकेति तिस्रः। अन्त्यैस्त्रिभिर्यजुर्भिः प्रत्येकमेकैकेति तिस्रः। अन्त्यैस्त्रिभिर्यजुर्भिः प्रत्येकमेकैकेति तिस्रः। एवं पूर्वोक्ताभिः सह चतुस्त्रिंशदुत्तरं चतुःशतमाहुतयः। चमकानुवाकैरेकादशेति मिलित्वा पंचचत्वारिंशदुत्तरं चतुःशतमाहुतयः अन्ते वसोर्धाराच॥ अथ रुद्रैकादशिन्यामेव दशांशहोमपक्षे त्रेधाविभागांगीकारे एकविंशत्युत्तरशतरूपकाणां द्वादशरूपको दशमो भागः। द्वादशेष्वपि प्रत्येकं तिस्रस्तिस्र इति षट्त्रिंशदाहुतयः। एकरूपकोऽवशिष्यते। तत्कृते प्रथमयचैंका। अंत्ययजुषा चैकेति मिलित्वाऽष्टत्रिंशत्। चमकानुवाकैरेकादशेति पूर्वाभिः सहैको नपंचाशत्। अन्ते वसोर्धाराच। दशांशहोम पक्ष एव षोढा मंत्रविभागांगीकारे दशांशो द्वादशरूपकाः। तेषु प्रत्यावृत्ति षट्षडिति द्वासप्ततिराहुतयः॥ अवशिष्टैकरूपकस्य कृते प्रथमयचैंकांत्ययजुषा चैकेति चतुःसप्ततिः। चमकानुवाकैरेकादशेति पंचाशीतिः। ततो वसोर्द्धारा। दशांशहोम पक्ष एव षोडशधा विभागे द्वादशरूपका दशमांशः। तेषां प्रत्यावृत्तिषोडशेति द्व्यधिकनवत्युत्तरं शतमाहुतयः॥ अवशिष्टरूपकैकस्य कृते प्रथमयचैंका। अन्त्ययजुषाऽपरा चमकानुवाकैरेकादशेति मिलित्वा पंचोत्तरं शतद्वयमाहुतयः अंते वसोर्धारा दशांशहोमपक्ष एव चतुश्चत्वारिंशन्मंत्रविभागे दशमांशो द्वादशरूपकाः। तेषां प्रत्यावृत्तिचतुश्चत्वारिंशचतुश्चत्वारिंशदित्यष्टाविंशत्युत्तराः पंचशतमाहुतयः। अवशिष्टैकरूपकस्य कृते प्रथमयचैंका। अंत्येन यजुषा चापरा चमकानुवाकैरेकादशेति मिलित्वा एकचत्वारिंशदुत्तराः पंचशतमाहुतयः। अंते वसोर्द्धाराच। दशांशहोमपक्ष एवाष्टाचत्वारिंशन्मंत्रविभागे दशांशो द्वादशरूपकाः। तेषां प्रत्यावृत्त्यष्टाचत्वारिंशदष्टाचत्वारिंशदष्टाचत्वारिंशदिति षट्सप्तत्युत्तरं पंचशतमाहुतयः। अवशिष्टे रूपककृते। प्रथमयचैंकांत्येन यजुषा चापरा। चमकानुवाकैरेकादशेति मिलित्वा एकोननवत्युत्तरं पंचशतमाहुतयः। अन्ते वसोर्द्धाराच। दशांशहोमपक्ष एव षष्ट्युत्तरशतधामंत्रविभागे दशमांशस्य द्वादशरूपकाणां प्रत्यावृत्ति षष्ट्युत्तरं शतं षष्ट्युत्तरशतमित्येकं सहस्रं नवशतानि विंशत्युत्तराणि चाहुतयः। अवशिष्टैकरूपकस्य कृते प्रथमयचैंका। अंत्येन यजुषा चापरा। चमकानुवाकैरेकादशेति मिलित्वा पंचोत्तरं शतद्वयमाहुतयः। अंते वसोर्द्धारा च। दशांशहोमपक्ष एव चतुश्चत्वारिंशन्मंत्रविभागे दशमांशो द्वादशरूपकाः। तेषां प्रत्यावृत्तिश्चतुश्चत्वारिंशच्चतुश्चत्वारिंशदित्यष्टाविंशत्युत्तराः पंचशतमाहुतयः। अवशिष्टैकरूपकस्य कृते प्रथमयचैंका। अंत्येन यजुषा चापरा। चमकानुवाकैरेकादशेति मिलित्वा एकचत्वारिंशदुत्तराः पंचशतमाहुतयः। अंते वसोर्द्धाराच॥ दशांशहोमपक्ष एवाष्टाचत्वारिं-

शन्मंत्रविभागे दशांशो द्वादशरूपकाः । तेषां प्रत्यावृत्त्यष्टाचत्वारिंशदष्टाचत्वारिंशदष्टाचत्वारिंशदिति षट् सप्तत्युत्तरं पंचशतमाहुतयः । अवशिष्टैकरूपककृते । प्रथमयचैकांत्येन यजुषा चापरा । चमकानुवाकैरेकादशेति मिलित्वा एकोनवत्युत्तरं पंचाशतमाहुतयः । अंते वसोर्द्धाराच । दशांशहोम पक्ष एव पंचविंशत्युत्तरचतुः शतधा मंत्रविभागांगीकारे दशांशस्य द्वादशरूपकाणां प्रत्यावृत्ति पंचविंशत्युत्तरं चतुः शतं पंचविंशत्युत्तरं चतुःशतमिति पंचसहस्राणि शतोत्तराणि चाहुतयः। अवशिष्टैकरूपकस्य कृते प्रथमयचैका अन्त्येन यजुषा चापरा। चमकानुवाकैरेकादशेति मिलित्वा सहस्रैकमेकं नवशतानि त्रयस्त्रिंशचाहुतयः। अंते वसोर्धाराच । दशांशहोमपक्ष एव पंचविंशत्युत्तरचतुः शतधा मंत्रविभागांगीकारे दशांशस्य द्वादशरूपकाणां प्रत्यावृत्ति पंचविंशत्युत्तरं चतुःशतं पंचविंशत्युत्तरं चतुःशतमिति पंच सहस्राणि शतोत्तराणि चाहुतयः। अवशिष्टस्य रूपकैकस्य कृते प्रथमयचैका अंत्येन यजुषा चापरा । चमकानुवाकैरेकादशेति मिलित्वा पंचसहस्राण्येकं शतं त्रयोदशचाहुतयः। अंते वसोर्द्धाराच । अथ रुद्रैकादशिन्यामेव समग्रहोमपक्षे तत्रापि त्रेधाविभाग एकविंशत्युत्तरशतरूपकाणां प्रतिरूपकं तिस्रस्तिस्र इति त्रीणि शतानि त्रिषष्टिश्चाहुतयो भवंति । समग्रहोमपक्ष एव षोढा मंत्रविभागांगीकार एकविंशत्युत्तरशतरूपकाणां प्रतिरूपकं षट् षडिति सप्तशतानि षड्विंशतिश्चाहुतयः । संपूर्णहोमपक्ष एव चतुश्चत्वारिंशन्मंत्रविभाग एकविंशत्युत्तरशतरूपकाणां प्रतिरूपकं चतुश्चत्वारिंशच्चतुश्चत्वारिंशदितिपंच सहस्राणि त्रीणिशतानि चतुर्विंशत्युत्तराणि चाहुतयः । समग्रहोमपक्ष एवाष्टाचत्वारिंशन्मंत्रविभाग एकविंशत्युत्तरशतरूपकाणां प्रतिरूपकमष्टाचत्वारिंशदष्टाचत्वारिंशदिति पंच सहस्राण्यष्टौ चाहुतयः । समग्रहोमपक्ष एव षष्ट्युत्तरशतधामंत्रविभाग एकविंशत्युत्तर शतरूपकाणां प्रतिरूपकं षष्ट्युत्तरं शतं षष्ट्युत्तराण्याहुतयो भवंति । समग्रहोमपक्ष एव पंचविंशत्युत्तरं चतुः शतमित्येकपंचाशत् सहस्राणि चत्वारि शतानि पंचविंशतिश्चाहुतयः । समग्रहोमपक्षेषु सर्वेष्वप्येकादशरूपकाश्चमकानुवाकानां भवंति । तत्र प्रतिरूपकमेकादशभिश्चमकविभागैरेकादशैकादशाहुतय इति चमकाहुतय एकविंशत्युत्तरं शतं भवंति । अंते वसोर्धाराच । इति रुद्रैकादशिन्यामाहुतिसंख्या समाप्ता ॥

## ॥ अथ महारुद्र आहुतिसंख्याप्रकारः ॥

तत्र चैकविंशत्युत्तरशतस्यैकादशभिर्गुणेन एकं सहस्रं त्रीणि शतान्येकत्रिंशच्च रूपका भवंति । तत्र शतांशस्त्रयोदशरूपकाः । रूपकाणामेकत्रिंशदवशिष्यते । एवं च शतांशहोमपक्षांगीकारे तत्रापि त्रेधा मंत्रविभागे शतांशस्य त्रयोदशरूपकाणां प्रतिरूपकं तिस्रस्तिस्र इत्येकोनचत्वारिंशदाहुतयः । अवशिष्टानामेकत्रिंशतो रूपकाणां कृते

आद्याभिस्तिसृभिर्ऋग्भिः प्रत्येकमेकैकेति तिस्रः। अंत्यैस्त्रिभिर्यजुभिः प्रत्येकमेकैकेति तिस्रः। पूर्ववद्विभक्तैरष्टभिश्चमकानुवाकैरेकादशेति पूर्वोक्ताभिः सह षट्पंचाशत्। अन्ते वसोर्द्धारा। शतांशहोमपक्ष एव षोढामंत्रविभागे त्रयोदशरूपकाणां प्रतिरूपकं षट्षडित्यष्टसप्ततिराहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते आद्याभिस्तिसृभिर्ऋग्भिः प्रत्येकमेकैकेति तिस्रः। अंत्यैस्त्रिभिर्यजुभिः प्रत्येकमेकैकेति तिस्रः। एवं मिलित्वा चतुरशीतिः। पूर्ववच्चमकानुवाकैरेकादशेति पूर्वोक्ताभिः सह पंचनवतिः। ततो वसोर्द्धारा। शतांशहोमपक्ष एव षोडशधामंत्रविभागे त्रयोदशरूपकाणां प्रतिरूपकं षोडशषोडशेति द्वेशते अष्टौ चाहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते प्रथमऋग्भिस्तिस्रः। अन्त्ययजुर्भिस्तिस्र इति षट् पूर्ववच्चमकानुवाकैरेकादशेति मिलित्वा द्वेशते पंचविंशतिश्च। अन्तेवसोर्द्धाराच। शतांशहोमपक्ष एव चतुश्चत्वारिंशन्मंत्रविभागे त्रयोदशरूपकाणां प्रतिरूपकं चतुश्चत्वारिंशचतुश्चत्वारिंशदिति द्विसप्तत्यधिकं पंचशतमाहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते प्रथमाभिस्तिसृभिर्ऋग्भिस्तिस्रः। अंत्यैस्त्रिभिर्यजुर्भिस्तिस्र इति षट्। चमकानुवाकैरेकादशेति मिलित्वा एकोननवत्यधिकं पंचशतमाहुतयः। शतांशहोमपक्ष एवाष्टाचत्वारिंशन्मंत्रविभागे त्रयोदशरूपकाणां प्रतिरूपकमष्टाचत्वारिंशदष्टाचत्वारिंशदिति षट्शतानि चतुर्विंशतिश्चाहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते प्रथमाभिस्तिस्रः। अन्त्यैर्यजुर्भिस्तिस्रः। चमकानुवाकैरेकादशेति पूर्वोक्ताभिः सहैकचत्वारिंशदुत्तरा षट्शत्याहुतीनाम्। ततो वसोर्द्धारा च। शतांशहोम पक्ष एव षष्ट्युत्तरशतधामंत्रविभागे त्रयोदशरूपकाणां प्रतिरूपकं षष्ट्युत्तरशतं षष्ट्युत्तरं शतमित्यशीत्यधिकं सहस्रद्वयमाहुतीनाम्। अत्रांशष्टैकत्रिंशद्रूपकाणां कृते आद्याभिः पूर्ववत्तिस्रः। अंत्यैस्त्रिभिस्तिस्रः। चमकानुवाकैरेकादशेति मिलित्वा सप्तनवत्यधिकं सहस्रद्वयमाहुतीनाम्। शतांशहोमपक्षे एव पंचविंशत्युत्तरचतुः शतधामंत्रविभागे त्रयोदशरूपकाणां प्रतिरूपकं पंचविंशत्युत्तरं चतुःशतं पंचविंशत्युत्तरं चतुः शतमिति पंचसहस्राणि पंचशतानि पंचविंशतिश्चाहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते आद्याभिर्ऋग्भिस्तिस्रः। अन्त्यैर्यजुर्भिः तिस्र इति षट्। चमकानुवाकैरेकादशेति मिलित्वा पंचसहस्राणि पंचशतानि द्विचत्वारिंशदधिकान्याहुतयः। अथ महारुद्र एव दशांशहोमपक्षे एकं सहस्रं त्रीणि शतान्येकत्रिंशद्रूपकाणामेकैकंशतं त्रयस्त्रिंशच्चरूपको दशमांशो भवति। एक एव रूपकोऽवशिष्यते। तत्र च त्रेधामंत्रविभागे त्रयस्त्रिंशदधिकैकशतरूपकाणां प्रतिरूपकं तिस्रस्तिस्र इत्येकोनचतुःशतमाहुतयः। अत्र चमकानां दशांशो द्वादशरूपका भवंति। तत्र प्रतिरूपकमेकादशधा विभक्तैरष्टानुवाकैरेकादशैकादशेति मिलित्वा त्रिंशदधिकमेकशतमाहुतयः। एताश्च पूर्वाभिः सह पंचशतान्येकत्रिंशच्चाहुतयः। ततो वसोर्द्धारा।

दशांशहोमपक्ष एव षोढामंत्रविभागे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकं षड्षडिति सप्तशतान्यष्टानवत्याहुतयः। पूर्ववच्चमकस्य द्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेति द्वात्रिंशदधिकमेकशतम्। पूर्वाभिः सह नवशतानि त्रिंशच्चाहुतयः। ततो वसोर्द्धारा। दशांशहोमपक्ष एव षोडशधामंत्रविभागे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकं षोडशषोडशेति द्वेसहस्रे एकशतमष्टाविंशतिश्चाहुतयः। पूर्ववच्चमकस्य द्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेति द्वात्रिंशदधिकमेकशतम्। पूर्वाभिः सहैता द्वेसहस्रे द्वेशते षष्ठिश्चाहुतयः। अंते वसोर्द्धाराच। दशांशहोमपक्ष एव चतुश्चत्वारिंशन्मंत्रविभागे-त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकं चतुश्चत्वारिंशश्चतुश्चत्वारिंशदिति पंचसहस्राण्यष्टौ शतानि द्वापंचाशच्चाहुतयो भवंति। चमकस्य द्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेति द्वात्रिंशदधिकमेकशतम्। पूर्वाभिः सह पंचसहस्राणि नवशतानि चतुरशीतिश्चाहुतयः। अंते वसोर्द्धाराच। दशांशहोमपक्ष एवाष्टाचत्वारिंशन्मंत्रविभागे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकमष्टाचत्वारिंशदिति षट्सहस्राणि त्रीणि च शतानि चतुरशीतिश्चाहुतयः। पूर्ववच्चमकस्य द्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेति द्वात्रिंशदुत्तरमेकशतम्। पूर्वाहुतिभिः सह षट्सहस्राणि पंचशतानि षोडश च भवंति। अंते वसोर्द्धारा च। दशांशहोमपक्ष एव षष्ट्यधिकशतधामंत्रविभागपक्षे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकं षष्ट्यधिकशतमित्येकविंशतिसहस्राणि द्वेशतेऽशीतिश्चाहुतयः। पूर्ववच्चमकस्य द्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेति द्वात्रिंशदधिकं शतम्। पूर्वाभिः सहैकविंशतिसहस्राणि चत्वारि शतानि द्वादश चाहुतयः। अंते वसोर्द्धारा च॥ दशांशहोमपक्ष एव पंचविंशत्युत्तरचतुःशतधामंत्रविभागपक्षे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकं पंचविंशत्यधिकं चतुःशतमिति षट्पंचाशत्सहस्राणि पंचशतानि पंचविंशतिश्चाहुतयः। चमकस्य द्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेति द्वात्रिंशदुत्तरशतम्। पूर्वाभिः सह षट्पंचाशत्सहस्राणि षट्शतानि सप्तपंचाशच्चाहुतयः। अंते वसोर्द्धारा च॥ अथ महारुद्र एव समग्रहोमपक्षे तत्रापि त्रेधामंत्रविभाग एकं सहस्रं त्रीणि चशतानि एकत्रिंशच्चेति रूपकाणां प्रतिरूपकं तिस्रस्तिस्र इति त्रीणि सहस्राणि नवशतानि त्रीणि नवतिश्चाहुतयो भवन्ति। चमकस्यैकविंशत्युत्तरैकशतरूपकाणां प्रतिरूपमेकादशैकादशेति मिलित्वा एकं सहस्रं त्रीणि च शतान्येकत्रिंशच्चाहुतयः। एताश्च पूर्वाभिः सह पंचसहस्राणि त्रीणि च शतानि चतुर्विंशतिश्चाहुतयः। अंते वसोर्द्धाराच॥१॥ महारुद्र एव समग्रहोमपक्षे षोढामंत्रविभाग एकं सहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकं षट्षडाहुतय इति सप्तसहस्राणि नवशतानि षडशीतिश्चाहुतयो भवंति। चमकस्यैकविंशत्युत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेत्येकं सहस्रं त्रीणि शतानिए-

कत्रिंशच्चाहुतयः। पूर्वाभिः सह नवसहस्राणि त्रीणि शतानि सप्तदश चाहुतयः।अंते वसोर्द्धारा च॥२॥महारुद्र एव समग्रहोमपक्षे षोडशधामंत्रविभाग एकं सहस्रं त्रीणि शतान्येकत्रिंशच्चेतिरूपकाणां प्रतिरूपकं षोडश षोडशेत्येकविंशतिसहस्राणि द्वे च शते षण्णवतिश्चाहुतयः । चमकस्यैकविंशत्युत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा एकसहस्रं त्रीणिशतानि एकत्रिंशच्च । पूर्वाभिः सहैता द्वाविंशतिसहस्राणि षट्शतानि सप्तविंशतिश्चाहुतयः । अंते वसोर्धारा च ॥ ३ ॥ महारुद्र एव समग्रहोमपक्षे चतुश्चत्वारिंशन्मंत्रविभाग एकं सहस्रं त्रीणि च शतान्येत्रिंशच्च रूपकाणां प्रतिरूपकं चतुश्चत्वारिंशच्चतुश्चत्वारिंशदित्यष्टपंचशतानि चतुःषष्ठिश्चाहुतयः । चमकस्यैकविंशत्युत्तरैकशतरूपकाणां प्रतिमिलित्वैकसहस्रं त्रीणि शतानि एकत्रिंशच्चाहुतयः । पूर्वाभिः सहैकोनषष्ठिसहस्राण्यष्टौ शतानि पंचनवतिश्चाहुतयः अंते वसोर्धाराच॥४॥ महारुद्र एव समग्रहोमपक्षे अष्टाचत्वारिंशन्मंत्रविभाग एकं सहस्रं त्रीणि शतान्येकत्रिंशच्चरूपकाणां प्रतिरूपकमष्टाचत्वारिंशदष्टाचत्वारिंशदिति त्रिषष्ठिसहस्राण्यष्टौशतान्यष्टाशीतिश्चाहुतयः॥ चमकस्यैकविंशतिरूपकाणां प्रतिरूपकमेकादशैकादशेत्येकं सहस्रं त्रीणि शतानि एकत्रिंशच्चाहुतयः। एताश्च पूर्वाभिः सह पंचषष्टिसहस्राणि द्वेशते एकोनविंशतिश्चाहुतयः। अंते वसोर्धाराच ॥५॥ महारुद्र एव समग्रहोमपक्षे षष्ट्युत्तरशतधामंत्रविभाग एकं सहस्रं त्रीणि शतानि एकत्रिंशच्च रूपकाणां प्रतिरूपकं षष्ट्युत्तरं शतं षष्ट्युत्तरं शतमिति द्वे लक्षे द्वादशसहस्राणि नवशतानि षष्टिश्चाहुतयः संपद्यन्ते। चमकस्यैकाविंशत्युत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा एकं सहस्रं त्रीणि च शतान्येकत्रिंशच्च। पूर्वाभिः सह द्वेलक्षे चतुर्दशसहस्राणि द्वेशते एकनवतिश्चाहुतयः। अंते वसोर्धारा च ॥६॥ महारुद्र एव समग्रहोमपक्षे पंचविंशत्यधिकचतुः शतधामंत्रविभाग एकं सहस्रं त्रीणि शतान्येकत्रिंशच्च रूपकाणां प्रतिरूपकं पंचविंशत्यधिकं चतुःशतं पंचविंशत्यधिकं चतुःशतमितिचत्वारि लक्षाणि षट् चत्वारिंशत्सहस्राणि पंचशतानि पंचदश चाहुतयः । चमकस्यैकविंशत्युत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वैकं सहस्रं त्रीणि शतान्येकत्रिंशच्चाहुतयः। एताश्च पूर्वाभिः सह चत्वारि लक्षाणि सप्तचत्वारिंशत्सहस्राण्यष्टौ शतानि षट्चत्वारिंशच्चाहुतयः । अन्ते वसोर्धारा च ॥ ७ ॥ इति ॥

## ॥ अथातिरुद्र आहुतिसंख्या ॥

तत्र चतुर्दशसहस्राणि षट् शतानि एकचत्वारिंशच्च रूपका भवन्ति अत्रैकशतं षट्चत्वारिंशच्च रूपकाः शतांशः। एकचत्वारिंशद्रूपका अवशिष्यन्ते अतिरुद्रे च च-

मकस्यैकं सहस्रं त्रीणि च शतान्येकत्रिंशच्च रूपका भवन्ति। अत्र च शतांशस्त्रयोद-शरूपकाः। एकत्रिंशच्च रूपका अवशिष्यन्ते। एवंस्थिते शतांशहोमपक्षे त्रेधामंत्रवि-भागे षट् चत्वारिंशदुत्तरैकशतरूपकाणां प्रतिरूपकं तिस्रस्तिस्र आहुतय इत्यष्टत्रिंशद-धिका चतुःशतमाहुतयः । अवशिष्टैकचत्वारिंशद्रूपकाणां कृते आद्याभिर्ऋग्भिः प्रत्येकमेकैकेति तिस्रः । अन्त्यैर्यजुभिः प्रत्येकमेकैकेति तिस्र इति मिलित्वा चतु-श्चत्वारिंशदुत्तराश्चतुःशतमाहुतयः । चमकस्य त्रयोदशरूपकाणां प्रतिरूपकमेकाद-शैकादशेति त्रिचत्वारिंशदुत्तरमेकशतमाहुतयः । अवशिष्टैकत्रिंशद्रूपकाणां कृते वाज-श्चम इत्यनुवाकेनैकाहुतिरित्येवं मिलित्वा अष्टाशीत्युत्तराः पंचशतमाहुतयः। अंते व-सोर्धारा च ॥१॥ अतिरुद्रे शतांशहोमपक्ष एव षोढामंत्रविभागे षट् चत्वारिंशदधिकै-कशतरूपकाणां प्रतिरूपकं षडित्यष्टौ शतनि षट्सप्ततिश्चाहुतयः अवशिष्टैकच-त्वारिंशद्रूपकाणां कृते पूर्ववदाद्याभिस्तिस्रः। अन्त्यैर्यजुर्भिस्तिस्र इति षडाहुतयः चम-कस्य त्रयोदशरूपकाणां प्रतिरूपकमेकादशैकादशेति त्रिचत्वारिंशदधिकमेकशतम्। अ-वशिष्टैकत्रिंशद्रूपकाणां कृते वाजश्चम इत्यनुवाकेनैकाहुतिः । पूर्वाभिः सहैकं सहस्रं षड्विंशतिश्चाहुतयः। अंते वसोर्धारा च ॥२॥ अतिरुद्रे शतांशहोमपक्ष एव षोडशधा-मंत्रविभागे षट्चत्वारिंशदुत्तरैकशतरूपकाणां प्रतिरूपकं षोडश षोडशेति द्वेसहस्रे त्रीणि शतानि षट्त्रिंशच्चाहुतयः अवशिष्टैकचत्वारिंशद्रूपकाणां कृते पूर्व-वदाद्याभिस्तिस्रः । अन्त्यैर्यजुर्भिस्तिस्रः इति षट् । चमकस्य त्रयोदशरूपकाणां प्रतिरूपकमेकादशैकादशेति त्रिचत्वारिंशदधिकमेकशतमाहुतयः । अवशिष्टैकत्रिंशद्रू-पकाणां कृते वाजश्चम इत्यनुवाकेनैकाहुतिरिति मिलित्वा द्वे सहस्रे चत्वारि च शतानि षडशीतिश्चाहुतयः। अंते वसोर्धाराच ॥३॥ अतिरुद्रे शतांशहोमपक्ष एव चतुश्चत्वा-रिंशन्मंत्रविभागे षट् चत्वारिंशदधिकैकशतरूपकाणां प्रतिरूपकं चतुश्चत्वारिंशच्चतु-श्चत्वारिंशदिति षट् सहस्राणि चत्वारि शतानि चतुर्विंशतिश्चाहुतयः। चमकस्य त्रयो-दशरूपकाणां प्रतिरूपकमेकादशैकादशेति त्रिचत्वारिंशदधिकमेकशतम् । अवशि-ष्टैकत्रिंशद्रूपकाणां कृते वाजश्चम इत्यनुवाकेनैकाहुतिरिति मिलित्वा षट्सहस्राणि पंच-शतानि चतुःसप्ततिश्चाहुतयः अंते वसोर्धारा च ॥ ४ ॥ अतिरुद्रे शतांशहोमप-क्ष एवाष्टाचत्वारिंशन्मंत्रविभागे षट्चत्वारिंशदधिकैकशतरूपकाणां प्रतिरूपकमष्टा-चत्वारिंशदष्टाचत्वारिंशदिति सप्त सहस्राणि अष्टौ चाहुतयः ॥ अवशिष्टैकचत्वारिं-शद्रूपकाणां कृते पूर्ववत्प्रथमाभिस्तिसृभिस्तिस्रः अंत्यैस्त्रिभिर्यजुर्भिस्तिस्र इति प-ट्। चमकस्य त्रयोदशरूपकाणां प्रतिरूपकमेकादशैकादशेत्येकं शतं त्रिचत्वारिंशच्चाहु-तय अवशिष्टैकत्रिंशद्रूकाणां कृते वाजश्चम इत्यनुवाकेनैकाहुतिरिति मिलित्वा एक

विंशतिसहस्राण्यष्टौशतानि षट्पंचाशच्चाहुतयः ॥ अंते वसोर्धाराच ॥ ५ ॥ अतिरुद्रे शतांशहोमपक्ष एव पंचविंशत्यधिकचतुःशतधामंत्रविभागे षट्चत्वारिंशदधिकैकशतरूपकाणां प्रतिरूपकं पंचविंशत्यधिकं चतुःशतं पंचविंशत्यधिकं चतुःशतमिति पंचचत्वारिंशत्सहस्राणि द्वेशते नवतिश्चाहुतयः। अवशिष्टैकचत्वारिंशद्रूपकाणां कृते प्रथमाभिस्तिसृभिस्तिस्रः। अन्त्यैस्त्रिभिर्यजुर्भिस्तिस्र इति षट्। चमकस्य त्रयोदशरूपकाणां प्रतिरूपकमेकादशैकादशेत्येकं शतंत्रिचत्वारिंशच्चाहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते वाजश्चम इत्यनुवाकेनैकाहुतिरिति मिलित्वा पंचचत्वारिंशत्सहस्राणि चत्वारि शतानि चत्वारिंशच्चाहुतयः। अन्ते वसोर्द्धाराच ॥६॥ अथातिरुद्र एव दशांशहोमपक्षे चतुर्दशसहस्राणि षट्शतान्येकचत्वारिंशच्च रूपकाणां एकं सहस्रं चत्वारि शतानि चतुःषष्टिश्च रूपका दशमांशो भवति। एक एव रूपकोऽवशिष्यते, तथा। चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशच्च रूपकाणामेकं शतं त्रयस्त्रिंशच्च रूपका दशमांशो भवति। एक एव रूपकोऽवशिष्यते। अत्र चमकस्य त्रेधामंत्रविभाग एकसहस्रं चत्वारिशतानि चतुः षष्टिश्च रूपकाणां प्रतिरूपकं तिस्रस्तिस्र आहुतय इति मिलित्वा चत्वारिसहस्राणि त्रीणि शतानि द्वानवतिश्चाहुतयः। चमकस्य त्रयस्त्रिंशदधिकैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा एकसहस्रंचत्वारिशतानि त्रिषष्टिश्चाहुतयः। एताश्च पूर्वाभिः सह पंचसहस्राण्यष्टौ शतानि पंचपंचाशच्चाहुतयः। अंते वसोर्द्धाराच ॥ अति रुद्रे दशांशहोमपक्ष एव षोढामंत्रविभाग एकं सहस्रं चत्वारिशतानि चतुःषष्टिश्चेति रूपकाणां प्रतिरूपकं षड्षडिति मिलित्वा अष्टौ सहस्राणि सप्तशतानि चतुरशीतिश्चाहुतयः। चमकस्य त्रयस्त्रिंशदधिकैकशतरूपकाणां प्रतिरूपमेकादशैकादशेति मिलित्वा एकसहस्रं चत्वारिशतानि त्रिषष्टिश्चाहुतयः। एताश्च पूर्वाभिः सह दशसहस्राणि द्वेशते सप्तचत्वारिंशच्चाहुतयः। अन्ते वसोर्द्धारा च ॥ अतिरुद्रे दशांशहोमपक्षे एव षोडशधामंत्रविभाग एकसहस्रं चत्वारिशतानि चतुःषष्टिश्चेति रूपकाणां प्रतिरूपकं षोडशषोडशेति मिलित्वा त्रयोविंशतिसहस्राणि चत्वारि शतानि चतुर्विंशतिश्चाहुतयः। चमकस्य त्रयस्त्रिंशदुत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा एकसहस्रं चत्वारिशतानि त्रिषष्टिश्चाहुतयः। एताश्च पूर्वाभिः सह चतुर्विंशतिसहस्राण्यष्टौशतानि सप्ताशीतिश्चाहुतयः॥ अंते वसोर्द्धारा च॥ अतिरुद्रे दशांशहोमपक्ष एव चतुश्चत्वारिंशन्मंत्रविभाग एकसहस्रं चत्वारिशतानि चतुःषष्टिश्चेति रूपकाणां प्रतिरूपकं चतुश्चत्वारिंशच्चतुश्चत्वारिंशदिति मिलित्वा चतुःषष्टिसहस्राणि चत्वारिशतानि षड्विंशतिश्चाहुतयः। चमकस्य तु त्रयस्त्रिंशदुत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा एक सहस्रं चत्वारि शतानि त्रिषष्टिश्चाहुतयः। एताश्च पूर्वाभिः सह पंचषष्टिसहस्राण्यष्टौशता-

न्येकोननवतिश्चाहुतयः।अंते वसोर्द्धारा च॥ अतिरुद्रे दशांशहोमपक्ष एवाष्टाचत्वारिंशन्मंत्रविभाग एकसहस्रं चत्वारि शतानि चतुः षष्टिश्चेति रूपकाणां प्रतिरूपकमष्टाचत्वारिंशदष्टाचत्वारिंशदिति मिलित्वा सप्ततिसहस्राणि द्वेशते द्विसप्ततिश्चाहुतयः। चमकस्य त्रयस्त्रिंशदुत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वैकं सहस्रं चत्वारि शतानि त्रिषष्टिश्चाहुतयः पूर्वाभिः सहैता एकसप्तति सहस्राणि सप्तशतानि पंचत्रिंशच्चाहुतयः। अंते वसोर्धाराच। अतिरुद्रे दशांशहोमपक्ष एव षष्ट्युत्तरशतधामंत्रविभाग एक सहस्रं चत्वारिशतानि चतुः षष्टिश्चेति रूपकाणां प्रतिरूपकं षष्ट्युत्तरं शतमिति मिलित्वा द्वेलक्षे चतुस्त्रिंशत्सहस्राणि द्वेशते चत्वारिंशच्चाहुतयः। चमकस्य त्रयस्त्रिंशदुत्तरैकशतरूपकाणां प्रतिरूपक मेकादशैकादशेति मिलित्वा एकसहस्रं चत्वारिशतानि त्रिषष्टिश्चाहुतयः। पूर्वाभिः सहैता द्वे लक्षे पंचत्रिंशत्सहस्राणि सप्तशतानि तिस्रश्चाहुतयः। अंते वसोर्धारा च॥ अतिरुद्रे दशांशहोमपक्ष एव पंचविंशत्यधिकचतुः शतधा मंत्रविभागपक्षे एकं सहस्रं चत्वारि शतानि चतुः षष्ठिश्चेति रूपकाणां प्रतिरूपकं पंचविंशत्यधिकं चतुः शतं पंचविंशत्यधिकचतुः शतमिति मिलित्वा चत्वारि लक्षाणि पंचपंचाशत्सहस्राण्येकं शतं षष्टिश्चाहुतयः। एताश्च पूर्वाभिः सह चत्वारि लक्षणानि षट्पंचाशत्सहस्राणि षट् शतानि त्रयोविंशचाहुतयः। अंते वसोर्धारा च। अथातिरुद्र एव समग्रहोमपक्षे चतुर्दशसहस्राणि षट्शतान्येक चत्वारिंशच्चेति रूपकाणां त्रेधामंत्रविभागे प्रतिरूपकं तिस्रस्तिस्र आहुतय इति त्रिचत्वारिंशत्सहस्राणि नवशतानि त्रयोविंशतिश्चाहुतयः। चमकस्यैकसहस्रं त्रीणिशतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकस्यैकादशधाविभक्तैरष्टानुवाकैरेकादशाहुतय इति मिलित्वा चतुर्दशसहस्राणि षट्शतान्येकचत्वारिंशच्चाहुतयः। पूर्वोक्ताभिः सहैता अष्टपंचाशत्सहस्राणि पंचशतानि चतुःषष्टिश्चाहुतयः। अंते वसोर्धारा च। अतिरुद्रे समग्रहोमपक्ष एव षोढामंत्रविभागे चतुर्दशसहस्राणि षट्शतान्येकचत्वारिंशच्चेति रूपकाणां प्रतिरूपकं षट्षडिति मिलित्वा सप्ताशीति सहस्राण्यष्टौशतानिषट्चत्वारिंशच्चाहुतयः। चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा चतुर्दशसहस्राणि षट्शतान्येकचत्वारिंशच्चाहुतयः। चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकमेकादशैकादशेतिमिलित्वा चतुर्दशसहस्राणि षट्शतान्येकचत्वारिंशच्चाहुतयः। एताश्च पूर्वाभिः सहैकलक्षं द्वे सहस्रे चत्वारि शतानि सप्ताशीतिश्चाहुतयः। अंते वसोर्धाराच। अतिरुद्रे समग्रहोमपक्ष एव षोडशधामंत्रविभागे चतुर्दशसहस्राणि द्वेशते षट्पंचाशच्चाहुतयः। चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा

चतुर्दशसहस्राणि षट्शतान्येकचत्वारिंशच्चाहुतयः। एताश्च पूर्वाभिः सह षट् लक्षाणि अष्टपंचाशत्सहस्राण्यष्टौ शतानि पंचचत्वारिंशच्चाहुतयः अंते वसोर्धारा च। अतिरुद्रे समग्रहोमपक्ष एवाष्टाचत्वारिंशन्मंत्रविभागे चतुर्दशसहस्राणि षड् शतान्येकचत्वारिंशच्चेति रूपकाणां प्रतिरूपकमष्टाचत्वारिंशदष्टाचत्वारिंशदिति मिलित्वा सप्तलक्षाणि द्वे सहस्रे सप्तशतान्यष्टषष्टिश्चाहुतयः। चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा चतुर्दश सहस्राणि षट्शतान्येकचत्वारिंशच्चाहुतयः॥ एताश्च पूर्वाभिः सह सप्तलक्षाणि सप्तदश सहस्राणि चत्वारि शतानि नव चाहुतयः। अंते वसोर्धारा च। अतिरुद्रे समग्रहोमपक्ष एव षष्टयुत्तरशतधामंत्रविभागे चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशच्चेति रूपकाणां प्रतिरूपकं षष्ट्युत्तरं शतं षष्ट्युत्तरं शतमिति मिलित्वा त्रयोविंशतिलक्षाणि द्विचत्वारिंशत्सहस्राणि पंचशतानि षष्टिश्चाहुतयः। चमकस्य तु पूर्ववच्चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशच्चाहुतयः। एताश्च पूर्वाभिः सह त्रयोविंशतिलक्षाणि सप्तपंचाशत्सहस्राणि एकाधिके द्वेशते चाहुतयः॥ अंते वसोर्धारा च॥ अतिरुद्रे समग्रहोमपक्ष एव पंचविंशत्युत्तरचतुः शतधामंत्रविभागे चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशच्चेतिरूपकाणां प्रतिरूपकं पंचविंशत्युत्तरं चतुः शतं पंचविंशत्युत्तरचतुः शतमिति मिलित्वा द्वाषष्टिलक्षाणि द्वाविंशतिसहस्राणि चत्वारि शतानि पंचविंशतिश्चाहुतयः। चमकस्य तु पूर्वतश्चतुर्दशहस्राणि षट् शतान्येकचत्वारिंशच्चाहुतयः एताश्च पूर्वाभिः सह द्वाषष्टिलक्षाणि सप्तत्रिंशत्सहस्राणि षट् षष्टिश्चाहुतयः। अंते वसोर्धारा च। अत्र च जपहोमयोर्नमकविभागभेदेन गुरुलघुश्च दृष्टोपि विधिः शक्त्याद्यपेक्षया योजनीय इति॥

रुद्रकल्पद्रुमे चास्मिन्मंत्रभेदो निरूपितः॥विदुषानन्तदेवेन तेन तुष्यतु शङ्करः ॥१॥
इति श्रीपरशुरामात्मजेन जगन्नाथशर्मणा संशोधिते रुद्रकल्पद्रुमे मंत्रभेदः समाप्तः ॥

## ॥ अथ पदार्थप्रमाणनिरूपणम् ॥

तत्रादौ [1]होमद्रव्याणि निरूप्यन्ते तानि च परशुरामेणोक्तानि। ग्रहाणां यानिचोक्तानि समिद्रादीनि तानि वा इति॥ नवग्रहमखे यानि द्रव्याणि विहितानि तान्येवात्रापि द्रव्याणीत्यर्थः। रुद्रस्य नवग्रहमखविकृतित्वात्। समिदादीनि समित्सर्पिस्तिलादीनि। होमस्तु देवतोद्देशेन द्रव्यत्यागं कृत्वा कार्यः॥ तदुक्तं देवभाष्ये कारिका-

---

१ रुद्रानुष्ठानसौकर्यार्थं पदार्थक्रमो वर्तते इति किंवदन्ती॥ एतदर्थं महति प्रयत्ने कृतेऽप्यनसादिते चातःपरमप्युपलब्धौ सत्यां द्वितीयावृत्तौ प्रकाशयिष्यामः॥ इति सविनयं निवेदयामः॥

याम्॥ आदौ द्रव्यपरित्यागःपश्चाद्धोमो विधीयते । प्रयोग इदमिन्द्राय नममेति यथार्थतः ॥१॥ अवत्तं तु त्यजेदन्नं मनसा वचसापि च ॥ ततश्चप्रक्षिपेदग्नाविति धर्मःसनातनः ॥२॥ अत्यक्त्वा जुहुयाद्यस्तु मोहेनान्वितमानसः ॥ देवा हव्यं न गृह्णन्ति कव्यं च पितरस्तथा ॥३॥ यत्किंचिज्जुहुयादग्नौ तत्सर्वं त्यागपूर्वकम् ॥ अन्यथा जुहुयाद्यस्तु नरकं स तु गच्छति ॥४॥ इति ॥ सच त्यागोऽनेककर्तृके होमे त्यागस्य विभिन्नकालत्वेन त्यागकालस्य ज्ञातुमशक्यत्वेन प्रत्याहुतित्यागासंभवाद्धोमोपक्रमकाल एव यष्टव्या देवताः स्मृत्वा यजनीयद्रव्यं च मनसि निधायेदं यथादैवतमस्तु नममेत्येवं कार्यः । असौ च त्यागो यजमानेनैव कार्यः। प्रधानस्वामीफलयोगादिति कात्यायनोक्तेः । त्रिकांडमंडनस्तु विशेषमाह ॥ तुल्य एवाधिकारःस्यात् दंपत्योरुभयोर्मिथः ॥ कर्तृत्वं च तयोस्तुल्यं द्रव्यत्यागे प्रचक्षते ॥१॥ यद्वा त्यागं पतिः कुर्यात् पत्नी तदनुमन्यते॥ अधिकारेपि वैषम्यं प्रोक्तं शद्धानुसारिणा॥ २ ॥ सन्निधौ यजमानः स्यादुद्देशत्यागकारकः॥ असन्निधौ तु पत्नी स्यादुद्देशत्यागकारिका॥३॥ असन्निधौ तु पत्न्याः स्यादध्वर्युस्तदनुज्ञया॥ उन्मादे प्रसवे चार्तौ कुर्वीतानुज्ञया विना ॥४॥ सर्वदा यजमानो वा त्यजेत्तद्दिङ्मुखः शुचिः इति । मंडनः॥ त्यागं तु सर्वथा कुर्यात् तत्राप्यन्यतरस्तयोः ॥ उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेदिति॥ होमश्च समिद्धतमेग्नौ कार्यः। समिद्धतमे जुहोतीति कात्यायनसूत्रात्॥ यत्र एव समिद्धतमं मन्ये तदाहुतीर्जुहुयात्। समिद्धहोमेन ह्येव समृद्धा आहुतय इति श्रुतेः । तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचनेति छंदोगपरिशिष्टे कात्यायनोक्तेश्च॥ अत्र शारदातिलकटीकायां विशेषः॥ सधूमोग्निः शिरो ज्ञेयो निर्धुमश्चक्षुरेव च॥ ज्वलत्कृशो भवेत्कर्णः काष्ठलग्नश्च नासिका ॥ १ ॥ अग्निर्ज्वालायते यत्र शुद्धस्फटिकसन्निभः ॥ तन्मुखं तत्र विज्ञेयं चतुरंगुलमानतः ॥२॥ गुह्यप्रोक्ते वनदुर्गाकल्पे तु॥ सर्वकार्यप्रसिद्ध्यर्थं जिह्वायां तत्र होमयेत्॥ चक्षुः कर्णादिकं ज्ञात्वा होमयेद्देशिकोत्तमः ॥१॥ अग्निकर्णे हुतं यत्तु कुर्याच्चेद्व्याधितो भयम्॥ नासिकायां महद्दुःखं चक्षुषोर्नाशनं भवेत् ॥२॥ केशेदारिद्र्यदं प्रोक्तं तस्माज्जिह्वासु होमयेत्॥ यत्र काष्ठं तत्र श्रोत्रे यत्र धूमस्तु नासिके॥३॥ यत्राल्पज्वलनं नेत्रं यत्र भस्म तु तच्छिरः॥यत्रव ज्वलितो वन्हिस्तत्र जिह्वा प्रकीर्तिता॥४॥ इति ॥ उक्तेष्वेतेष्वंगेषु हवनकृत्तदंगक्षयः स्यात् ॥ यदाहुः ॥ वह्नेः शिरसि नासायां श्रोत्रेष्वक्षिषु वा तथा ॥ जुहुयाच्चेत्तदा क्षिप्रं तदंगानि विनाशयेदिति ॥ अथ होमपात्रलक्षणम्॥ तत्र स्रुग्लक्षणमाह कात्यायनः॥ बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिलाहंसमुखप्रसेका मूलदंडा भवंतीति॥पालाशी जुहूरिति च॥ हूयते यया सा जुहूरिति॥

## ॥ अथ स्रुवलक्षणम् ॥

तदुक्तं कात्यायनेन ॥ अरत्निमात्रः स्रुवोंगुष्ठपर्ववृत्तपुष्कर इति॥ खादिरः स्रुव इति च॥ एतेन परशुरामकारिकोक्तं स्रुकस्रुवलक्षणं तांत्रिकहोमविषयं तंत्रमूलकत्वात् बोध्यम् । अन्येषां प्रोक्षणीपात्राज्यचरुस्थालीस्फयादीनां पात्राणां लक्षणानि यज्ञपार्श्वे छंदोगपरिशिष्टे कर्मप्रदीपाख्ये च कात्यायनोक्तानि द्रष्टव्यानि ॥ अथ वसोर्धाराप्रकार उक्तो महार्णवे चिन्तामणौ ॥ घृतकुंभवसोर्धारां पातयेदनलोपरि ॥ उदुम्बरीमथार्द्रां च रुज्वीं कोटरवर्जिताम् ॥ हंसचंचुपुटाकारां चतुरस्रां सगर्तिकाम् ॥ प्रोक्षणीपात्रसदृशां वृत्तदण्डसमन्विताम् ॥ बाहुमात्रां स्रुचं कृत्वा ततस्तंभद्वयोपरि ॥ घृतधारां तया सम्यगग्नेरुपरि पातयेत् ॥ जपेद्वाजश्चमेत्यादि वेट् स्वाहेत्यंतमेव च । होमांते प्राशयेदग्नौ स्रुचं तामाज्यलिप्तिकामिति ॥ कात्यायनसूत्रेपि ॥ वसोर्धारां जुहोत्यौदुंबर्या पंचगृहीतसंततं यजमानोऽरण्येनूच्येऽग्निप्राप्ते वाजश्चम इत्यष्टानुवाकेन हुत्वा स्रुकासनमिति ॥ अस्यार्थः ॥ यजमानः पूर्णाहुतिवदाज्यं संस्कृत्यार्थपरिमाणया महत्यौदुम्बर्या स्रुचा अर्थपरिमाणेन महता स्रुवेण पंचकृत्वोगृहीतमाज्यमरण्येनूच्येऽरण्येऽनूच्यो वक्तव्यः पठनीयो मंत्रो यस्या सावरण्येऽनूच्यः ॥ उग्रश्च भीमश्चेत्ययं मंत्रो नियतमरण्य एवानूच्यते। तत्संबंधात्सप्तमो मारुतः पुरोडाशेऽप्यरण्येऽनूच्य इत्युच्यते॥ तस्मिन्नरण्येऽनूच्ये सप्तमे मारुते पुरोडाशेऽधिकरणभूते संततमविच्छिन्नधारं यथा स्यात्तथा वसोर्धाराख्यामाहुतिं जुहोति अरण्येऽनूच्य इत्यग्निप्रदेशोपलक्षणम् । तस्याप्यग्निसाद्भूतत्वात् तेन यत्र प्रदेशे सहुतस्तस्मिन्नग्निप्रदेशे जुहोतीत्यर्थः। अग्निप्राप्ते घृते घृतधारायामग्निमध्ये प्राप्तायां वाजश्चम इत्यस्य होममंत्रस्य प्रारंभः कार्यः । अष्टानुवाकेत्यष्टभिरनुवाकैः करणभूतैः वसोर्धारां जुहोति । तेन वेट्स्वाहेत्येतत्पर्यंतेनाध्यायेनेत्यर्थः ॥ अथातो वसोर्धारां जुहोतीति । प्रकृत्याज्येन पंचगृहीतेनौदुंबर्या स्रुचा तस्योक्तो बंधुरिति। तद्वा अरण्येऽनूच्ये जुहोतीति । सा यदैवैषा धाराऽग्निं प्राप्नुयादथैतद्यजुः प्रतिपद्यत इति च श्रुतत्वात् । यजमानः शाखान्तरात्। स्वशाखायामपि लिंगमस्ति । तस्यै यजमान एवात्मावाहुरूथः स्रुक् स्तनोधारैव धारेति । सा एषा घृतधारा यदैवाग्निं प्राप्नुयादथ तदा एतद्वाजश्चम इत्यादियजुः प्रतिपद्यत इति श्रुत्यर्थावगमान्न मंत्रांतैः कर्माभिसांन्निपात्येऽभिधानादितिपरिभाषाया इह प्रवृत्तिः । एतद्यजुरिति यजुः संपात एवैकधारा सम्बधाद्यजुरित्युक्तम् ॥ वस्तुतस्तु शतरुद्रियवत् बहून्येवैतानि यजूंषि भवंति । बहव एव होमाः संतानेन क्रियंते तथा चाह श्रुतिः॥ षष्टिश्च ह वै त्रीणि च शतान्येषा वसोर्धाराथ षड्च पंचत्रिंशदिति। तथा। एतस्या एव वसोर्धाराया यानि नव प्रथमानि यजूंषीत्यादि च॥

वाजायस्वाहेत्यादौ स्वाहाकारांतपाठादिसंदिग्धो मंत्रभेदो होमभेदश्च । अत्र च चत्वारि शतान्येकाधिकानि यजूंषि संतीत्युक्तम्। यजुर्वेदानुसारेण च होमा अपि तावंत एव बोद्धव्याः होमभेदाच्च संततायामपि धारायां द्रव्यभेदा अपि तावंत एव मंतव्याः । कथं पुन वाजश्चम इत्येतेष्वष्टस्वनुवाकेषु यजुषां चत्वारि शतान्येकाधिकानि भवंति। उच्यते॥ वाजश्चम इत्याद्यासु ज्यैष्ट्यं च मे वसु चम इति कंडिकानि द्वादशयज्ञेन कल्पंतामित्येतत्तु त्रयोदश ज्यैष्ट्यंचम इत्येतस्यां पंचदश। वसुचम इत्यस्यां नव । अग्निश्चमे घर्मश्चम इत्यस्यां तु द्वादशैव यजूंषि । अंगुलयः शक्वरयोदिशश्चम इत्येतावदेकं यजुः। व्रतं चम इत्यस्यां तु षडेव । एका चमइत्यस्यां तु त्रयस्त्रिंशत्। चतस्रश्चम इत्यस्यां त्रयोविंशतिः । त्र्यविश्चम इत्यत्रैकादश । पष्ठवाड्चम इत्यस्यां नव । वाजाय स्वाहेत्यत्र चतुर्दश । आयुर्यज्ञेनेत्यत्रैकविंशतिः तत्र कल्पतामंतानि द्वादश । स्तोमश्चेति षट् । स्वर्देवा अगन्मेत्येकं प्रजापतेः प्रजा अभूमेत्येकं । वेट्स्वाहेत्येकं । एवमेकाधिका चतुःशती यजुषाम् । अत्र च समानदेवतत्वात्सप्तदश प्राजापत्यवत्तंत्रेणैव त्यागः वाजाय स्वाहेत्यादीनां तु पृथग्पृथक् त्यागो भिन्ननामत्वात्। वाजाय स्वाहा प्रसवाय स्वाहेति नामान्यस्यैतानि नामग्राहमेवैनमेतत्प्रीणाति त्रयोदशैतानि नामानि भवंतीति श्रवणात्। देवता तु सर्वत्राग्निरेव स्वात्मकः । अथातो वसोर्धारां जुहोत्यत्रैष सर्वोग्निः संस्कृतः स एषोत्र वसुस्तस्मै देवा एतां धारां प्रागृह्णन्निति श्रुतत्वात् । तथैवास्मा अयमेतां धारां प्रगृह्णाति तयैनं प्रीणातीति च । वसोर्धारां हुत्वा यजमान एव तस्मिन्नग्नौ स्रुक्प्राशनं करोति । अत्र तां स्रुचमनुप्राप्यति यदत्राज्यलिप्तं तन्नैतद्बहिर्द्धाग्नेरसदिति श्रवणादिति। अत्र वसोर्धारायां चमकानुवाकानां मंत्रत्वेपि मंत्रान्तराणि श्रूयन्ते । श्रावयत्सूक्तमाग्नेयं वैष्णवं रौद्रमैंदवं॥ महावैश्वानरं सम्यक् ज्येष्ठसाम च पाठयेदिति वसोर्द्धाराप्रकारः । अत्र श्रीरुद्रजपहोमार्चनादिषु सर्वत्रोदङ्मुखता नियमो द्रष्टव्यः ॥ तथा च शतपथश्रुतिः ॥ शतरुद्रियं जुहोतीति परिश्रित्सु जुहोतीति च प्रकृत्याह ॥ उत्तरार्द्धेग्नेरुदङ् तिष्ठन् जुहोत्येतस्यांहदिश्येतस्य देवस्य गृहाः स्वायामेवैनमेतद्दिशि प्रीणाति स्वायां दिश्यवयजत इति । कात्यायनोप्याह । तिष्ठन्नुदङ् नमस्त इत्यध्यायेनेति ॥ अत्र च प्राच्युदग्वेत्यनया परिभाषया विकल्पप्राप्तावुदङिति नियमः । उपविष्टहोमा इत्यनेन प्राप्तस्योपवेशनस्य तिष्ठन्नित्यपवादः । तिष्ठता होमस्तु श्रौतविषयः तथा स्विष्टकृद्वदाने। अतो अनुष्टुपाभावेव भवतो चास्त्वनुष्टुयास्तु स्विष्टकृदिति प्रकृत्य यथा उत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्यदिक्तस्मादुत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोतीति स्विष्टकृद्वदानं होमं च वदंती श्रुतिरुक्तमेवार्थं दर्शयति । स्विष्टकृद्यागश्च रौद्र इति वक्ष्यति ॥

रुद्रियः स्विष्टकृद्रुद्रियेण ह पशून्प्रसजेदिति। तथा चातुर्मास्यप्रस्तावे साकमेधाख्ये पर्वणि महाहविषा ब्राह्मणे उदगुपचारेणोदङ्मुखेन च सर्वं रौद्रं कर्म विहितम्। तथाहि। महाहविषेत्युपक्रम्याह । यत् त्र्यम्बकैर्यजन्तेति । ते वै रौद्रा भवन्तीति च । ततः सजघनेन गार्हपत्यं यज्ञोपवीति भूत्वोदङ्मासीन एतान्गृह्णाति सतत एवचोत्थायोदङ्तिष्ठन्नवहंत्युदीच्यौ दृषद्रुपले उपदधात्युत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति तत्रदेतामुत्तरां दिशं सचंत एता ह्येतस्य देवस्य दिक्तस्मादेतामुत्तरां दिशं सचंत इति॥ तथा प्रवर्ग्यब्राह्मणे ॥ स्वाहा रुद्राय रुद्रहुतय इति हुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति तं स उत्तरतः शालाया उदंचं निरस्यत्येषा ह्येतस्य देवस्य दिक्स्वायमेवैनमेतद्दिशि प्रीणातीति । तस्माच्छ्रीरुद्रजपादिषूदङ्मुखतैव नियम्यत इति । एतस्यां हदिशीत्यादिना श्रुतौ हेतूपन्यासात् । एवमन्यत्रापि रुद्रार्चन रौद्रमंत्र जपादिषु रौद्रेषु कर्मसु द्रष्टव्यम् । हेतोः सर्वत्राविशिष्टत्वात् । रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि । शिवार्चनं सदा चैव शुचिः कुर्यादुदङ्मुख इति मनूक्तेश्च॥ अनेन चैतदुक्तं भवति। सर्वकर्मांगत्वेन प्राप्ताया अपि शुचितायाः पुनर्ग्रहणात् अत्यंत शुचेरेव शिवार्चनेऽधिकारः ॥

## ॥ अथ होमस्थंडिलकुंडनिर्माणविधिः ॥

तत्र स्वल्पसंख्याकहोमे स्थंडिलं समंततो हस्तपरिमितं वा होमानुसारेण कल्पयेत् । अधिकसंख्याहोमे तु कुंडं प्रकल्पयेत् । तच्च नवग्रहमखोक्तप्रकारेण । महार्णवस्कान्दे ॥ नवग्रहमखे कुंडं प्रकल्पयेत्। तच्च नवग्रहमखोक्तप्रकारेण । महार्णवस्कान्दे ॥ नवग्रहमखे कुंडं हस्तमात्रं समं भवेत् । चतुरस्रमधोहस्तं योनिवक्त्रं समेखलम्॥ चतुरंगुलविस्तारा मेखला तद्वदुच्छ्रिता । मानहीनाधिकं कुंडमनेकभयदं भवेदिति ॥ हस्तमात्रं समं चतसृष्वपि दिक्षु कुंडस्य हस्तमात्रप्रमाणं भवतीत्यर्थः। चतुरस्रं चतुः कोणम् ॥ अधो हस्तं अधः खातमपि हस्तपरिमितं यस्य तत्तथोक्तम्। योनिवक्त्रम् ॥ वक्ष्यमाणलक्षणलक्षितायोनिर्वक्त्रं यस्य तत्तादृक्। मेखलाप्रमाणमाह। चतुरंगुलविस्तारेत्यादिना तद्वदुच्छ्रिता चतुरंगुलोन्नता । एतच्च कुंडमयुतहोमानुसारि । योनिलक्षणं तु महार्णवे चिन्तामणौ । वितस्तिमात्रा योनिः षट् समांगुलविस्तृता । कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चांगुलोच्छ्रिता । गजोष्ठसदृशी तद्वदायतादायता छिद्रसंयुता ॥ एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते मेखलोपरि सर्वत्र अश्वत्थदलसन्निभा ॥ वितस्तिमात्रेति । एतच्च योनिदैर्घ्यम् । षट्सप्तांगुल "विस्तृता" इति । षडंगुलविस्तृता सप्तांगुलविस्तृता चेति व्यायामे विकल्पः । "तद्वदायता" इति । अनेन दैर्घ्ये प्रमाणांतरमुक्तम् । उक्तलक्षणलक्षिता गजोष्ठसदृशी अश्वत्थपत्रसदृशी वा योनिर्भवतीत्यर्थः । साच योनि कुंडस्य पश्चिमदिग्भागे मेखलोपरि कार्या ।

मंडपलक्षणं तु महार्णवे स्कंदपुराणे " गृहस्योत्तरपूर्वेण मंडपं कारयेद्बुधः रुद्रायतनभूमौ वा चतुरस्रमुदक् प्लवम्। दशहस्तमथाष्टौ वा हस्तान् कुर्याद् विधानतः। तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः। प्रागुदक्प्रवणां भूमिं कारयेद्यत्नतो नरः। प्रागुत्तरे समासाद्य प्रदेशं मंडपस्य तु। शोभनं कारयेत्कुंडं यथावल्लक्षणान्वितम् ॥

अथ प्रकारांतरेण कुंडविधिस्तत्रैव। द्विहस्तविस्तृतं हस्तद्वयविस्तृतं दक्षिणोत्तरयोश्चतुर्हस्तायतं चतुर्हस्तखातं चतुरस्रं कुंडं विधेयमित्यर्थः ॥ योनिलक्षणं तु प्रागुक्तम्। " द्व्यंगुलोच्छ्रिता कार्या प्रथमामेखला बुधैः। त्र्यंगुलोन्नता तद्वद्द्वितीया समुदाहृता॥ उच्छ्रायविस्तराभ्यां च तृतीया चतुरंगुला द्व्यंगुलस्तत्र विस्तारः पूर्वयोरपि शस्यते।" पूर्वयोर्द्वितीयतृतीयमेखलयोः ॥

## ॥ अथ कुंडमंडपविचारः ॥

चतुर्हस्तकुंडे मंडपप्रमाणमाह। तथा षोडशहस्तः स्यान्मंडपश्च चतुर्मुखः।" इति। क्वचिदष्टादशहस्त विंशतिहस्तो वेति मंडपावुक्तौ स्कंदपुराणे " नदीनां संगमे चैव सुराणामग्रतस्तथा। सुसमे भूमिभागे च देवतासंस्थिते नृणां॥ ऋत्विग्भिर्गुरुणा चैव सार्धं भूमिं परीक्षयेत्। खनेद्वै तत्र वसुसमं हस्तमात्रकम्। द्विगुणं लक्षहोमे च कोटिहोमे चतुर्गुणम्" इति। अत्र च। " प्रागुत्तरं समासाद्य प्रदेशं मंडपस्य तु। शोभनं कारयेत्कुंडं यथावल्लक्षणान्वितम्" इति महार्णवोदाहृते स्कांदवाक्ये ईशान्यां कुंडकरणमुक्तम् ॥ " एवं मंडपमारोप्य यथावर्णं यथारुचिः। तत्र कुंडं प्रकर्तव्यं ग्रहपीठेन संयुतम्। मेखलात्रयसंयुक्तं योनियुक्तं च पश्चिमे।" इति परशुरामेण तु प्रतीच्यां कुंडमित्युक्तम् ॥ " गृहस्येशान भागे तु मंडपं कारयेद्बुधः। दशद्वादशभिर्हस्तैः षोडशैर्वा समंततः। चतुर्द्वारसमायुक्तं तोरणाद्यैरलंकृतम्। कुंडं तन्मध्यभागे तु कारयेच्चतुरस्रकम्। वितस्तिद्वयखातं तत्कुंडं सचतुरंगुलम्" इति ज्योतिर्वसिष्ठसंहितायां नवग्रहाधिकारे मंडपमध्यभागे कुंडमित्युक्तम्। युक्तं चैतत्। " रुद्रहोमे " पराशांतिः पायसेन घृतेन वा" इति विष्णुधर्मोत्तरवाक्ये रुद्रहोमस्य शांतिकत्वेनोक्तेः सर्वशांतिकपौष्टिकानां नवग्रहमखविकृतित्वाच्च। एतच्च निर्णयसिंधौ शांतिरत्ने कमलाकरभट्टपादैः सविस्तरं निर्णीतम्। काशीदीक्षितास्तु प्रतीच्यामीशान्यां वा कुंडकरणं मुख्यः पक्षः। स्थलसंकोचे मध्येऽपि कुंडमित्याहुः। अत्र सुधीभिर्विचार्य युक्तं यत्तदनुष्ठेयम्। रुद्रवेदी तु प्रतीच्यामीशान्यां वा कुंडकरणपक्षे मंडपमध्यभागे कार्या। यथाह परशुरामः " तत्रैका वेदिका कार्या यज्ञमंडपमध्यतः। मध्यस्तंभांतरं यावत्तावन्मानाकरोच्छ्र-

या " इति मंडपमध्ये कुंडकरणे तु कुंडादीशान्यां मंडपमध्य एव रुद्रवेदी कार्या। तदुक्तम् " गर्तस्योत्तरपूर्वेण स्थंडिलं हस्तमात्रकम्। द्विवप्रचतुरस्रं च वितस्त्युच्छ्रायसंमितम्।" इति। गर्तात्कुंडादैशान्यां दिशि "स्थंडिलं हस्तमात्रकम्" इत्यादिना वेदिनिर्माणमुच्यते। यद्यपि नवग्रहमखे ग्रहवेदी विधायकमेतत्तथापि सर्वशांतिकपौष्टिकानां नवग्रहमखविकृतित्वादिहापीदमेव वेदीप्रापकं द्रष्टव्यम्। द्विवप्रं द्विमेखलम्। तत्र द्व्यंगुलोच्छ्रायः प्रथमो वप्रः। अंगुलोच्छ्रायो द्वितीयः। विस्तारस्तुद्वयोरप्यंगुलपरिमितः। सनवग्रहरुद्रपक्षे ग्रहवेदी च तत्रैव कार्या। तत्र दक्षिणतो ग्रहवेदी कार्या। उत्तरतो रुद्रवेदी च। ग्रहाणां पूर्वांगत्वात्प्राक्पूजनीयत्वेन पश्चाद्रुद्रपूजाया उदक् संस्थत्वापेक्षणात्। प्रतीच्यामीशान्यां वा कुंडपक्षे कुंडादीशान्यां ग्रहवेदी कार्या। एतच्च मंडपकुंडकरणं जपरुद्रेऽगहोमार्थम्। होमरुद्रे तु प्रधानहोमार्थम्। एतदुभयमपि होमांगमेव। अनावश्यकं च। करणे फलाधिक्यमकरणे तु न गुणवैगुण्यम्।

## ॥ अथ प्रायश्चित्तविचारः ॥

श्री रुद्रारंभस्तु यथाशक्तिप्रायश्चितपूर्वककार्यः। तदुक्तं परशुरामकारिकायाम्। "धर्मकार्यं महत्कर्तुं यदीच्छेद्दशभिर्दिनैः। प्रायश्चितं यथावित्तं प्राकार्यं तेन शुद्धये" इति प्रायश्चित्तं तत्रैवोक्तम्। "षडब्दं चतुरब्दं वा त्र्यब्दं द्व्यब्दाद्धमेव वा। गोहिरण्यादि दानं वा कृत्वा कर्म समारभेत्" इति। नारायणभट्टपादैस्तु षडब्दं त्र्यब्दं सार्धाब्दमित्येवं क्रमेण प्रायश्चित्तमुक्तम्। अतोऽन्यतरप्रकारेण प्रायश्चित्तपूर्वकं श्रीरुद्र आरंभणीयः। तत्र श्री रुद्रारंभात्पूर्वं व्रतमुक्तं हेमाद्रौ कालिकापुराणे। "कृच्छ्रमादौ स्वयं चीर्त्वा पराकं च तथा पुनः॥ कृत्वा ध्यायन्महादेवमिदं भूयः समाचरेत्। स्नात्वा सर्वं समभ्यर्च्य उषित्वा सप्तशर्वरी॥ जपेद्रुद्राँस्तथा जप्तं तदंते प्राशयेद् घृतम्। अपरेऽहनि संजाते समाप्यैवं व्रतं पुनः। भास्कराभिमुखो भूत्वा तद्दिने तान् जपेद् बहून्। भूयश्चाह्नि परे रुद्रं संपूज्य विधिवत्ततः॥ घृताक्तैर्बिल्वपत्रैश्च रुद्रैर्होमं प्रकल्पयेत्। एवं सम्यक् व्रते नूनं कृतेऽसौ जायते द्विजः॥ साक्षाद्रुद्रो महातेजास्ततः कामाँस्तु साधयेत्" इति।

## ॥ अथाभ्युदयिकश्राद्धविचारः ॥

श्रीमहारुद्राद्यंगता केचिन्मातृपूजापूर्वकमाभ्युदयिकं श्राद्धमिच्छंति। तन्नातीवयुक्तम्। "नानिष्ट्वा तु पितॄन् श्राद्धे न कुर्यात्कर्मवैदिकम्" इति शातातपवाक्यस्य वाक्यांतरैर्यत्राभ्युदयिकं विहितं तत्रैव मित्रविंदादिप्रकरणाधीतैर्वाक्यैरनाधीतसाप्तदश्यस्येवोपसंहारात् श्रीमहारुद्रस्य चाग्निहोत्रहोमस्येव पृथगुपसंहाराभावादग्निहोत्रहो-

म इव नात्राभ्युदयिकानुष्ठानं युक्तम् । दानखंडे हेमाद्रिस्तु । " यज्ञोद्वाहप्रतिष्ठासु मेखलाबंधमोक्षयोः पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् " इति जाबालिवचनमुदाहृत्य तेन दर्शपूर्णमासादिषु अन्येषु वचनाविशेषितेषु वृद्धिश्राद्धमाचरणीयम् । तथा-तुलापुरुषादिमहादानेषु, लोकपालावाहनमंत्रेषु "ममाध्वरं पाहि यज्ञं रक्ष" इत्यादि-यज्ञशब्दप्रयोगात्सत्यपि दानरूपत्वे यागधर्मेण भवितव्यमिति । तत्रापि वृद्धिश्राद्धमाचरणीयमित्याह । एवं हेमाद्रिणा तुलापुरुषादीना दानरूपत्वे सत्यपि लोकपालावाहनमंत्रेषु यज्ञशब्दप्रयोगादेव तुलापुरुषादिषु यागधर्मोवृद्धिश्राद्धमुक्तम् तदा होमात्मके होमांगके चेत्येवं त्रिविधे श्रीमहारुद्रे यागधर्मोवृद्धिश्राद्धं भवति । उभयविधस्यापि महारुद्रस्य मंडपेऽनुष्टेयत्वेन पूजाद्वारा मंडपांगभूतानां लोकपालावाहनमंत्राणां तत्रसत्वेन यज्ञशब्दप्रयोगस्यापि तत्र सत्वादिति । अमुनैवाशयेनाह परशुरामः "कृत्वाभ्युदयिकं श्राद्धं मातृपूजनपूर्वकम् । वसोर्द्धारान्वितं सर्वं प्राग्दिने वाथ तद्दिने " इति । श्रीदत्तोपाध्यायस्तु " निषेककाले सोमे च सीमंतोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्मांगं वृद्धिवत्कृतम् " इति भविष्यपुराणैकवाक्यतया जाबालीययज्ञशब्दः सोमयागपर इति दर्शपूर्णमासादीनां पृथगुपादानाभावान्न तदादौ वृद्धिश्राद्धमित्याह ॥ अतएवापस्तंबानाचरंतीति । तस्मादग्निहोत्रदर्शपूर्णमासादाविव महारुद्रस्य पृथगुपादानाभावान्न तदादावाभ्युदयिकानुष्ठानं युक्तम् । अत एव महार्णवकृता देवयाज्ञिकैश्चाभ्युदयिकं नोपन्यस्तम् ॥ इति ॥ तत्र पुण्याहवाचनं कार्यम् ॥ "संपूज्य गंधमाल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेद्" इत्युपक्रम्य "धर्मकर्मणि मांगल्ये संग्रामाद्भुतदर्शने " इति व्यासोक्तेः । इति ॥

## ॥ अथ ग्रहयज्ञविचारः ॥

तत्रादौ विनायकशांतिपूर्वको ग्रहयज्ञः कर्तव्यः । " एवं विनायकं पूज्यग्रहाँश्चैव विधानतः ॥ कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् " इति याज्ञवल्क्येनानुष्टेयकर्मणां निर्विघ्नफलसिद्धये तयोर्विधानात् ॥ " विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु । निर्विघ्नार्थं मुनिश्रेष्ठ ! तथोद्वेगोद्भुतेषुच " इति वाक्यांतराच्च । "ग्रहाः पूज्याः" इति पूर्ववाक्यादत्रानुषंगः । केचित्तु नवग्रहमखां विनायकशांतिं कुर्वन्ति । तच्चिन्त्यम् । एवमुक्तप्रकारेण विनायकपूजाभावनां सांगां निर्वर्त्येत्यर्थकेन "एवं विनायकं पूज्य " इतियाज्ञवल्क्यवाक्येन विनायकशांतिप्रयोगसमाप्त्युत्तरकाले ग्रहयज्ञविधानात् । अल्पीयसि विनायकतंत्रे महतो ग्रहतंत्रस्यावापासंभवाच्च । यत्तु " मातृगणं सर्वं संपूज्य विधिवत्पुरा कार्या गणेशशांतिर्वा ग्रहशांतिसमन्विता " इति परशुरामवाक्यं तदेवं व्याख्येयम् ॥ एकस्मिन् पक्षे केवला गणेशशांतिरेव कार्या । पक्षांतरे तु

गणेशशांतिर्ग्रहशांतिसमन्विता कार्या । शांतिद्वयं समुचितं भिन्नप्रयोगं पौर्वापर्येण कार्यमित्यर्थः । एवं च न कश्चिद्विरोधः । सनवग्रहमखं रुद्रं केचित्कुर्वंति । तदपि चिंत्यम् । पूर्वोक्तयाज्ञवल्क्यादिवाक्यैर्वक्ष्यमाणेन बह्वृचपरिशिष्टवाक्येन च प्रधानकर्मणः प्रयोगारंभात्पूर्वं ग्रहयज्ञविधानात् । अन्वारंभणीय बृहस्पतिसवादिवत् । अतश्च ग्रहयज्ञो महारुद्रस्य पूर्वांगं नचांगप्रधानयोः क्वचिदपि तंत्रन्यायो दृष्टः । प्रधानानां सह प्रयोगे ह्यंगानां सकृत्करणरूपतंत्रस्यैकादशे प्रतिपादितत्वात् । "कर्मणां युगवद्भावस्तंत्रम्" इत्युपक्रम्य "फलकर्मदेशकालद्रव्यदेवतागुणसामान्येन भेदः" इति कात्यायनसूत्रेऽपि तथैव प्रतिपादितत्वाच्च । न च स्वतंत्रफलार्थस्यापि नवग्रहमखस्य महारुद्रेण सहैकतंत्रेणानुष्ठानमाग्नेयादिवदिति वाच्यम् । महारुद्रनवग्रहयज्ञयोः फलभेदश्रवणेनाग्नेयादिवत्फलसाम्याभावात् । एकफलानां हि कर्मणां योगपद्येनानुष्ठानप्रसक्तावंगानां तंत्रता स्यादिति वाच्यम् । फलभेदे हि तंत्रभेदस्यैव जैमिनीकात्यायनादिभिरभिहितत्वात् । तस्मान्नांगभूतस्य प्रधानभूतस्य वा नवग्रहमखस्य महारुद्रेण सहैकतंत्रेणानुष्ठानं युक्तम् । अत एव आदित्य इंदुरंगारकः सौम्यो गुरुर्भार्गवः शनैश्चरो राहुःकेतुरिति नवग्रहास्ते हि स्वगत्या जगदभिगृह्णंति तानयनादिषु पुण्यकालेषु यजेच्छांतये सद्योऽद्भुतेषु चाभ्युदयिकं करिष्यमाणो ग्रहयज्ञं कुर्यात् । "अनाभ्युदयिकं हि शांतिकर्म यदि तदानुकूल्यकामः स्यात्कामं प्रागभ्युदयात्सप्ताहान्यंतरीत्य कुर्यात्" इति स्मृतिकौस्तुभोदाहृतबह्वृचपरिशिष्टेऽपि तथैव विधानम् । अभ्युदयकामं प्रत्ययनादिपुण्यकालनियममुक्त्वा अद्भुताख्योत्पातेषु तच्छांत्यर्थप्रयोगेनायनादिपुण्यकालापेक्षेति सद्य इत्यनेनोक्तम् ॥ आभ्युदयिकमित्यादेर्व्याख्यानमुक्तं पारिजाते । विवाहोपनयादिषु आभ्युदयिकेषु कर्मसु आदौ ग्रहयज्ञं कुर्यात् । अनाभ्युदयिकेषु श्राद्धातिरिक्तकर्मसु ग्रहानुकूल्यकामो ग्रहयज्ञं कुर्यादिति। आभ्युदयिककर्माव्यवहितपूर्वकालेऽसंभवतो ग्रहयज्ञस्य नियतव्यवहितकालेनानुष्ठानमभ्यनुजानाति । व्यवहितानुष्ठानेऽपि सप्तदिनाधिकव्यवधानं न कार्यमित्यर्थः । अनेनैतदुक्तं भवति आभ्युदयिककर्मातिव्यवहितपूर्वकाले ग्रहयज्ञासंभवे व्यवहितकालेनापि पूर्वं तदनुष्ठानं न पुनः प्रधानकर्मणा सहैकतंत्रेणानुष्ठानमिति । अत एव मूलशांत्यादौ स्मृतिकौस्तुभे "तस्मिन् काले ग्रहातिथ्यं कर्तव्यं भूतिमिच्छता । पृथक् प्रशस्तं तेनैव नक्षत्रेष्ट्या सहैव वा" इति वाक्ये पक्षे एक प्रयोगेण नक्षत्रेष्ट्या सह ग्रहयज्ञविधानं पृथक् प्रशस्तं न्यायसिद्धमित्यर्थः ॥ अतश्च महारुद्रेण सहैकतंत्रेण ग्रहयज्ञानुष्ठानं वदंतो वंद्या एव । एतेन श्रीमहारुद्रेण सहैकतंत्रेण शतचंड्यादिकमपि कैश्चिन्मूखैरनुष्ठीयमानमपास्तमेव। तंत्रताबोधकप्रमाणानां मध्येऽन्यतम-

स्याप्यनुपलंभात् । महारुद्रस्य वैदिकतंत्रत्वेन शतचंड्याश्च तांत्रिकतंत्रत्वेन तयोरंगानां वैदिकतांत्रिकाणां मिथो विरुद्धानां तंत्रेणानुष्ठानासंभवाच्चेत्यलं प्रसंगागतचिंतया॥

## ॥ अथ न्यासप्रकारः ॥

" पंचांगरुद्राणां न्यासपूर्वकं जपहोमार्चनविधिं व्याख्यास्यामः " इत्यनेन रुद्राणां पंचांगन्यासपूर्वकत्वमुक्तं । अतः पंचांगन्यासानाह । " यातेरुद्रेति शिखायाम् " इत्यादिना ॥ याते रुद्र शिवातनुरघोरेति मंत्रं स्वरपूर्वकं पठन् शिखायां न्यसेदिति। न्यासक्रियां प्रतिमंत्रस्य कर्मत्वेनान्वयात् करणत्वेनान्वये तु किं न्यसेदित्येवं कर्माकांक्षाया अनिवृत्तेः। एवं च सति " मंत्रांतैः कर्मादिः " इति परिभाषा नेह प्रवर्तते । मीमांसकैर्मंत्राणां प्रयोगसमवेतार्थस्मारकत्वेनान्वयोक्तेः । प्रकृतौ च तदभावादस्याश्च तद्विषयत्वात् । तथा च शिखां स्पृष्ट्वा याते रुद्रेति मंत्रं जपेदित्यर्थः । एवमग्रेऽपि सर्वत्र व्याख्येयम् । इदं च न्यासकर्म फलसंस्कारकर्मांगम् । तदुक्तं बोधायनसूत्रे " एवमात्मनि रौद्रीकरणं कृत्वा " इति । एवं मुक्तैर्वक्ष्यमाण प्रकारैश्च न्यासप्रकारैः स्वात्मनि स्वस्मिन् रौद्रीकरणं रुद्रभावं कृत्वा संपाद्येत्यर्थः। बृहत्पराशरस्मृतावपि । " रौद्रीकरणमेतद्वै कृत्वा पापात्प्रमुच्यते " इति । " एतेषु च न्यास मंत्रेषु " तानो वा नित्यत्वाद् " इति कात्यायनेनाभिहितत्वात्ताना परपर्यायैकश्रुतिस्वरस्तु न प्रवर्तते । करणमंत्रेषु हिएकश्रुतिस्वरोऽभिहितः । न न्यासमंत्राणां करणमंत्रत्वमस्तित्वं इत्युक्तम् तस्मात्रैस्वर्यमेव न्यासमंत्रेषु ध्येयम् । अत्रैतद्विचार्यंते ॥ इति ॥

किं याते रुद्रेत्यादयो वक्ष्यमाणा अंगन्यासविधिषु प्रतीकेन विनियुक्ता मंत्रास्तैत्तरीया ग्राह्याः। उत । स्वस्वशाखीया एवेति । किं तावत्प्राप्तम् । तैत्तरीया ग्राह्या इति । कुतः । सूत्रस्य तच्छाखीयत्वात् । तदुपात्तप्रतीकेन विनियुक्तमंत्राणामपि तच्छाखीयानामेव ग्रहणौचित्यादित्येवं प्राप्ते ब्रूमः ॥ "यन्नाम्नातं स्वशाखायाम् " इत्यादि पूर्वोक्तकात्यायनकार्ष्णाजिनिस्मृतिसंग्रहवचनैः स्वशाखायामाम्नातस्य शाखांतरविहितस्य विरोधिनः कर्मणः उपादेयताया अभिहितत्वाद्वाजसनेयशाखासु श्रीरुद्रस्याश्रुतेति कर्तव्यताकत्वेन प्राप्ता न्यासमंत्रा बोधायनीया न ग्राह्याः । किन्तु स्वशाखीया एव ग्राह्याः । कुत एतत् । याते रुद्रेति शिखायामित्यादौ याते रुद्रेत्यादीनां प्रतीकत्वेन विनियुक्तमंत्राणां स्वशाखायामपि समाम्नातत्वादध्ययनगोचरत्वाच्छीघ्रोपस्थितिकत्वेन स्वशाखीयानामेव ग्राह्यत्वौचित्यात् । तैत्तरीयाणां प्रतीकोपात्तमंत्राणा मध्ययनागोचरत्वेनानुपस्थित्या ग्रहणानौचित्या-

च । स्वशाखीयैरेव यातेरुद्रेत्यादिभिर्मंत्रैर्मंत्राकांक्षा विरहाच्च । स्वशाखायामसमाम्नातस्यैवान्यतो ग्रहणविधानान्मंत्रांशस्य समाम्नातत्वेनासमाम्नातस्य विध्यंशमात्रस्यैव ग्राह्यत्वाच्च । न चैवं मंत्रविनियोजकेति करणश्रुतिबाधः शंक्यः । तुल्यप्रतीकत्वेनेति करणश्रुतेरेव मंत्रविनियोजकत्वात् । किंच । कल्पसूत्रमूलभूतैः पंचदशशाखागतैः पृथग्भूतैस्तुल्यैर्विधिभिः प्रतीकेन विनियुक्तमंत्राणां पंचदशशाखासु समाम्नातत्वात्पाठवैषम्येऽपि प्रतीकैकत्वेन सर्वैः काण्वमाध्यंदिनादिभिः कल्पसूत्रे प्रतीकेन विनियुक्ता मंत्राः स्वस्वशाखीया एवोपादेया इति कल्पसूत्रं प्रणयता भगवता कात्यायनाचार्येण यथा प्रति पादितं तथेहाप्याकांक्षितत्वाद् " यन्नाम्नातं स्वशाखायाम् " इति न्यायेन " गृहीतेषु " इति कर्तव्यताबोधकविधिषु प्रतीकेन विनियुक्तमंत्राणां स्वशाखायामपि तत्तत्प्रतीकविशिष्टानां तेषां सामाम्नातत्वात् काण्वमाध्यंदिनादिभिः सर्वैर्वाजसनेयिभिरंगन्यासविधिष्वेकप्रतीकेन विनियुक्ता मंत्राः पाठवैषम्येऽपि प्रतीकैकत्वात्स्वशाखीया एवोपादेया न पुनस्तैत्तरीयाः तेषामध्ययनाभावेन तदुपादानस्यान्याय्यत्वात् । नच शाखांतरीयाध्ययनं युक्तं " स्वाध्यायोध्येतव्यः " इत्यत्र स्वाध्यायस्योपादेयत्वेन तद्गतैकत्वस्य विवक्षितत्वात् । यत्र पुनर्विधौ श्रुतो मंत्रः स्वशाखायां नास्ति । यथा सद्योजातमिति पंचानुवाकान् पंचस्वंगुलीस्विवेत्यादौ तत्र मंत्रविशिष्ट एव विध्यंशो ग्राह्यः । न च शाखांतरीयाध्ययनाभावात्कथमेतदिति वाच्यम् । विधिना तावदध्ययनाक्षेपात् । यद्येवं तर्हि यातेरुद्रेति शिखायामित्येवमादिषु प्रतीकोपात्तमंत्रेष्वप्यध्ययनाक्षेपस्तुल्य इति चेन्न । याते रुद्रेत्यादीनां प्रतीकोपात्तमंत्राणां वाजसनेयशाखासु समाम्नातत्वेन तैरेवमंत्रैर्मंत्रकार्यं सिद्धावध्ययनाक्षेपायोगात् अत एव कल्पसूत्रं प्रणयता भगवता कात्यायनाचार्येण माध्यंदिनशाखायामसंमतं परशाखीयं संपूर्णं मंत्रमुपनिबध्नता क्वचित्परशाखीयस्यापि मंत्रस्योपादेयत्वं ज्ञापितमेव । सर्वथैव परशाखीयमंत्रस्यानुपादेयत्वे भगवतः कल्पसूत्रप्रणेतुः शाखांतरीयमंत्रसमाम्नातप्रयासस्यानथक्यमेव प्रसज्येत । अत एव बोधायनसूत्रानुसारेण पद्धतिप्रणयद्भिर्दैवयाज्ञिकैर्यातेरुद्रेत्यादयो मंत्राः स्वशाखीया उक्ताः । स्वशाखायामसमाम्नाताश्च केचन मंत्राः " सद्योजातं प्रपद्यामि " इत्येवमादयः " त्वमग्रेरुद्रो असुरः " इत्येवमादयश्च तैत्तरीया उक्ता इति दिक् " नमो हिरण्य बाहवे " इत्यादीनामंगन्यासविधिषु प्रतीकमात्रेण विनियुक्तयजुर्मंत्राणां परिसमाप्तिः कंडिका परिसमाप्त्या ज्ञेया । यतो भगवता गृह्यसूत्रकृता पारस्कराचार्येण तत्रोपवेशयेद्राजानं स्त्रियं वा प्रातक्षत्र इति यज्ञांतेनेति, विक्रुत्यैनमभिमंत्रयते सुपर्णोसीति प्राग्विष्णु-

क्रमेभ्य इति, सोष्यंतीमद्भिरभ्युक्षत्ये जतु दशमास्य इति प्राग् यस्यैत, इत्यादौ मंत्राणां प्रकरणपाठाभावात्परादिना पूर्वांतताभावेन वाक्यपरिसमाप्त्या च संदिग्धाया मंत्रपरिसमाप्तेः कंडिकोपरि समाप्त्यैव ज्ञापितत्वात् । यत्तु काशीदीक्षितैर्विश्वनाथभट्टैश्च प्रयोगरत्ने रुद्रपद्धतौ च " गणानां त्वेति मंत्रस्य वसो मम " इत्यंतत्वमुक्तं तत्क्राण्वविषयम् । तेषां संहितायामेतावत्या एव कंडिकायाः समाम्नातत्वात् । यत्तु कश्चिदाह। प्रयोगरत्ने रुद्रपद्धतौ च काशीदीक्षितादिभिः गणानां त्वेति मंत्रस्य वसोममेत्यंतत्वोक्तेर्माध्यंदिनानामपि वसोममेत्यंत एवायं मंत्र इति । तदयुक्तम् । तादृशमंत्रविनियोगकल्पनायां मानाभावात्। नहि श्रौतेऽपि तादृशमंत्रविनियोगो दृष्टः। तत्र हि । अश्वं त्रिस्त्रिः परियंति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति कात्यायनाचार्यैस्तत्रत एव त्रिधा विनियोग उक्तः । ननु च श्रौते त्रयाणां प्रत्येकं वाक्यत्वेन विनियोगादयस्तु इह तु गणानांत्वेति मंत्रस्य पूजायां मंत्रैकत्वश्रवणेन प्रत्येकं मंत्रत्वायोगाद्वसो ममेति मंत्रशेषस्य योग्यत्वात्प्रत्येकं संबंधे सत्यपि मंत्रशेषः सर्वांते श्रूयते इति तावत एकवाक्यत्वाद्वसोममेत्यंतत्वं मंत्रस्योक्तमिति चेन्न। एकस्यैव वाक्यस्य मंत्रत्वे आकांक्षितत्वेन मंत्रशेषस्य प्रत्येकं संबंधात्प्रत्येकं वाक्यांतरत्वेन प्रियाणामित्यस्य मंत्रांतरत्वमेवापद्येत न पुनः पूर्वमंत्रशेषत्वम्। तस्मात्कंडिकापरिसमाप्त्यैव मंत्रपरिसमाप्तिरिति युक्तम्। शिष्टाचारोऽप्येवम् यत्तु केचिदत्रासनोपवेशनानंतरं प्रागाचमनाद्वामदक्षिणयोः क्रमेण तैलघृतदीपौ स्थापयंति । तथा । " उत्तिष्ठंतु महद्भूता ये चैतत्स्थानवासिनः । भूतानामविरोधेन जपकर्म समारभे । अपसर्पन्तु ये भूता ये भूता भुवि संस्थिता।। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया " इति मंत्राभ्यां वामपार्ष्णिना भूमौ त्रिः प्रहृत्य भूतोत्सारणं कुर्वन्ति । तन्नेत्यन्ये । अस्य तंत्रोक्तत्वात्तां त्रिकेष्वेव मंत्रजपादिष्वंगत्वे प्रमाणाभावात् । यत्तु केचिदाहुः संकल्पानंतरं प्राग्न्यासासंभवाद्भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासांश्च कुर्वन्ति सर्वमंत्रजपांगत्वेन तंत्रोक्तत्वादिति । तन्न । "दह्यन्ते ध्यायमानानां धातूनां हि यथा मलाः । तथेंद्रियाणां दह्यंते दोषाः प्राणस्य निग्रहणात् । प्राणायामैस्त्रिभिः पूतस्तत्क्षणाज्ज्वलतेऽग्निवत् । यथा पर्वतधातूनां दोषान् दहति पावकः ॥ एवमंतर्गतं पापं प्राणायामेन दह्यते " इति योगीयाज्ञवल्क्येन प्राणायामैरेवेंद्रियदोषांतर्गतपापदाहप्रतिपादनद्वाराऽत्मशुद्धिप्रतिपादनाद्वैदिकमंत्रजपादियोग्यतायास्तैरेव सिद्धेस्तांत्रिकाणां भूतशुद्ध्यादीनां हि तांत्रिकमंत्रजपादियोग्यता प्रतिपादकत्वाच्च न वैदिकरुद्रजपादिषु तद्योग्यता प्रतिपादकत्वेन तेषामपेक्षा । अत एव सन्ध्योपासनादौ भूतशु-

द्धयाद्यापत्तेः । किंच । " बौधायनोक्तमेवाहं प्रवक्ष्ये कौशिको द्विजः । कामिनां सर्वं कामानामकामानां च मुक्तये । अकामः सर्वकामो वा जपेद्यः शतरुद्रियम् । परस्यार्थेऽथवा तीर्थे स्नानं कृत्वा यथाविधि। रक्षार्थं तु शिखाग्रंथिरुर्ध्वकेशीति मंत्रतः" इति देवयाज्ञिकपद्धत्यनुसारी पाठः। सहस्राणीति मंत्रेण प्रार्थयेच्च ततो महीम् । ककुभं प्रार्थयेत्तिष्ठन् य एतावंत मंत्रतः । उपविश्य शुचौ देशे प्राणानायम्य वाग्यतः । संकल्पजपहोमैस्तु यदर्थं येन वेति च। रुद्रप्रश्नस्य छंदोऽत्र स्यादनुष्टुदृषिर्यथा । अघोरः सर्षपाकारः आदित्यो देवताऽपरः। न्यासंभवादिभिः कृत्वा नमोन्तैः प्रणवान्वितैः" इति हेमाद्रौ बौधायनकल्पे सर्वकर्मांगत्वेन स्मृतिविहितानेवोपवेशन प्राणायामसंकल्पाननूद्य ऋष्यादिस्मरणपूर्वकं न्यासकर्तव्यता विधानेन मध्ये भूतशुद्धयाद्यनुष्ठानामनवगमात् । उपवेशनाद्यनुवादस्य च सर्वसाधारण्येन तंत्रोक्तानां भूतशुद्धयादीनां निवृत्त्यर्थत्वात् । अन्यथा स्मृतितः प्राप्तत्वे उपवेशनाद्यनुवादस्यानर्थक्यापत्तेः । किंच । भूतशुद्धयादीना मनुष्येप्यत्वे उपवेशनादिवद् भूतशुध्ध्याद्यप्यनूद्येत । अत एव देवयाज्ञिकनारायणभट्टादिभिर्भूतशुध्ध्यादिकं नोपन्यस्तम् । हेमाद्रौ महार्णवे चाप्येवम् प्राणानायम्येति प्राणायामग्रहणं तत्पूर्वभाव्याचमनोपलक्षणम् । तस्मादुपवेशनाचमनप्राणायामसंकल्पान् कृत्वा यातेरुद्रेति शिखायामित्यादीन् न्यासानारभेदिति युक्तम् । यत्तु एतस्मान्न्यासात्पूर्वं न्यासांतरे देवयाज्ञिकादयः प्राहुः । " ब्रह्मयज्ञारंभे यथाविधि स्नात्वा छंदः पुरुषमेनो निर्णोदनं शरीरे न्यसेत्तिर्यग्गिलश्च मस ऊर्ध्वं बुध्नस्तस्याक्षिणी गौतमभरद्वाजौ, विश्वामित्रजमदग्नी श्रोत्रे वसिष्ठ कश्यपौ नासिके वाचात्रिर्गायत्रीछंदोऽग्निर्देवतां शिरसि विन्यसेदुष्णिहं सवितारं ग्रीवास्वनूके बृहतीं बृहस्पतिं बाह्वोर्बृहद्रथंतरे द्यावापृथिवी मध्ये त्रिष्टुप्मित्रं श्रोण्योर्जगतीमादित्यं मेढ्रेऽतिछंदसं प्रजापतिं पायौ यज्ञायज्ञीयं वैश्वानरमूर्वोरनुष्टुभं विश्वान् देवानष्ठीवतोः पक्तिं मरुत पादयोः द्विपदां विष्णुं प्राणेषु विछंदसं वायुं न्यूनातिरिक्तेष्वंगेषु न्यूनाक्षरं छंद आयो देवतेत्येवं सर्वांगेषु योजयित्वा वेदमयः संपद्यते शापानुग्रहसमर्थो भवति ब्राह्मं तेजश्च वर्धते न कुतश्चिद्भयं विंदते ऋङ्मयो यजुर्मयः। साममयस्तेजोमयो ब्रह्ममयोऽमृतमयः संभूय ब्रह्मैवाभ्येति तस्मादेतं ना ब्रह्मचारिणे ना तपस्विने ना संवत्सरोपिताय ना प्रवक्त्रेऽनुब्रूयादनेनाधीतेन चांद्रायणाद्बहुफलमवाप्नोत्यनेन च सम्यक् ज्ञातेन ब्रह्मणः सायुजा सालोकतामाप्नोतीति " अत्र सूत्रकृता न्यूनाक्षराछंद इति श्रुतौ पाठेपि छंदो विशेषणत्वान्न्यूनाक्षरमिति पठितम् । असौ सवानुक्रमसूत्रविहितो न्यासो रुद्रजपांगतयाऽनुष्ठेयमिति । तदयुक्तम् । ब्रह्मयज्ञारंभे यथाविधि स्नात्वा छंदः पुरुषमेनोनिर्णोदनं शरीरे न्यसेदित्य-

नेन ब्रह्मयज्ञमात्रांगतयाऽस्य न्यासस्य विहितत्वेन रुद्रजपांगताया अनवगमात्। ब्रह्मयज्ञश्च "अथ ब्रह्मयज्ञः स्वाध्यायो वै ब्रह्मयज्ञः इत्यादिश्रुतिविहितः स्वाध्यायाऽपरपर्यायः प्रसिद्ध एवात्र ग्राह्यः। अतो रुद्रजपांगत्वे किं मानमिति न विद्मः। तथा। जातवेदस इति पुरश्चरणम्। चतुस्त्रक्तिरित्यासनम्। मनोजूतिरिति हृदये। अबोध्यग्निरिति शिरसि। मूर्धानं दिव इति शिखायाम्। मर्माणित इति कवचम्। विश्वतश्चक्षुरिति नेत्रम्। मानस्तोक इत्यस्त्रम्। तदेतन्निर्मूलमनावश्यकं च रुद्रजपे पाण्डित्यमात्रं मूर्खाणामिति मन्यमानैर्हेमाद्र्यादिभिः सर्वेषां शाखिनां पंचन्यासा एवोक्तास्तदनुसारेणेहापि त एवोच्यंते। याते रुद्रेति शिखायामित्यादि। सद्योजातमितिं पंचानुवाकान् पंचस्वंगुलीष्विति। अंगुष्ठतर्जन्यादिष्वित्यर्थः। ये वृक्षेषूदरे नमः शंभवायेति कक्ष्योरिति। एतच्च क्वचित्पुस्तके दृश्यमानमपि महार्णवकृता नोपात्तम्। शिखाद्यस्त्रांतमेकत्रिंशदंगन्यासः प्रसंगात्। एवमेव देवपद्धतौ नारायणपद्धतौ च। तेन निर्मूलत्वादिदमुपेक्षणीयम्। विज्यं धनुरिति जठरे इति, इदमपि महार्णवकृता नोपात्तम्। देवयाज्ञिकादिभिश्च॥ नारायणभट्टैस्तु एषु न्यासेषु शाखांतरे विशेष उक्तः। तद्यथा। प्रथमन्यासे हृदयानंतरं नमो गणेभ्य इति पृष्ठे इति पार्श्वानंतरं विज्यं धनुरिति जठर इति। जान्वनंतरं सस्त्रष्टजिदिति जंघयोर्विश्वं भूतमिति गुल्फयोरिति। प्रजननादिन्यासे च मूर्ध्नि आदित्यास्तिष्ठंतु इत्यनंतरं शिरसि महापुरुषस्तिष्ठतु। शिखायां चामुंडा तिष्ठत्वित्युक्तम्। तेनैतेषां मतेऽयं न्यासो भवत्येव। स शिराजातवेदा अपान इति। अक्षरं ब्रह्म सदनमित्यादिको मंत्रः शिर उच्यते। तेन शिरसा सह जातवेदस इत्यृचमपाने पायौ न्यसेदिति परशुरामदेवयाज्ञिकादयः। मातृदत्तस्तु शिरः शब्दो बीजस्याप्युपलक्षकः आगमशास्त्रप्रसिद्धेः। तच्च बीजमादावुच्चार्य मंत्रांते शिरः पठनीयम्। तथा च श्री बीजमादावुच्चार्य जातवेदस इत्यृचं पठित्वा भुवनेशीबीजोच्चारणपूर्वकमक्षरं ब्रह्मसदनमित्यादिकं शिरो मंत्रमपाने न्यसेदित्याह। महार्णवकारादयस्तु "तामग्निवर्णाम्" इत्यादि ऋकूचतुष्टयं शिर उच्यते। तथा च ऋक् चतुष्टयात्मकेन शिरसा सह जातवेदस इत्यृचमपाने न्यसेदित्याहुः। "सस्त्रष्टजिदिति जंघयोः। विश्वंभूतमिति गुल्फयोरिति।" इदमपि सूत्रं महार्णवकृता नोपात्तम्। नारायणभट्टदेवयाज्ञिकादिभिस्त्विदमंगन्यासद्वयमुक्तमस्ति। अत्र सस्त्रष्टजिदित्यनेन संस्त्रष्टजित्पदघटिता स इषुहस्तैरितीयमृगेवोक्ता देवयाज्ञिकादिभिः। सोऽयं शिखाद्यस्त्रांतो दिग्बंधसहित एकत्रिंशदंगन्यासश्चतुस्त्रिंशदंगन्यासो वा प्रथमः।

## अथ द्वितीयो न्यासः

अथ द्वितीयं न्यासमाह । ॐ नमो भगवते रुद्रायेति मंत्रेण नमस्कारं कृत्वा त-मेवाक्षरसमुदायं न्यसेदित्येकोऽर्थः । अथान्योऽर्थः । नमस्कारं न्यसेत्पूर्वोक्तमेव मंत्रं वक्ष्यमाणप्रकारेण नमोंऽतं न्यसेदिति । न्यासप्रकारमेवाह ॐ कारं मूर्ध्नि विन्य-स्येत्यादि । तत्रापि प्रकारद्वयम् । ॐ मूर्ध्नेनमः । नंनासिकायै नमः इत्याद्येकः । ॐ नमो मूर्धनि । नं नमः नासिकायाम् । इत्याद्यपरः ।

## ॥ अथ तृतीयन्यासः ॥

अथ तृतीयन्यासमाह । सद्यं च पादयोर्न्यस्येत्यादि । सद्यं-सद्यःपदघटितं, स-द्योजातं प्रपद्यामीत्येवमादिकं मंत्रं । वामं—वामपादघटितं, वामदेवाय नमोज्येष्ठायेत्या-दिकं मंत्रम् । ऊरू मध्यतः । ऊर्वोर्मध्यतो गुह्ये । अघोरं—अघोरपदघटितं, अघोरेभ्य इत्यादिकं मंत्रं । तत्पुरुषं—तत्पुरुषपदघटितं, तत्पुरुषाय विद्महे इत्यादिमंत्रं । ईशानं मूर्ध्नि विन्यस्य हंसोनामेति । ईशानं—ईशानपदघटितं, ईशानःसर्वविद्यानामित्यादि-कम्—अस्तु सदाशिवोमित्यंतं मंत्रं मूर्ध्नि विन्यस्य हंसहंसेति ब्रूयात् । एवं कृते सति हंसो नाम हंस इति नाम्ना प्रसिद्धः सदाशिवो भवेत् । अमुमेवार्थमनुवदति । "हंस-हंसेति यो ब्रूयाद् हंसो नाम सदाशिव" इति। एते च तैत्तरीयशाखासु प्रसिद्धाः सद्यो-जातं प्रपद्यामीत्येवमादयःपंचानुवाका एव पंचमंत्राः । सद्योजातमिति पंचानुवाकान् पंचस्वंगुलिष्वित्यत्र पूर्वं निर्दिष्टत्वात्तेषामेव यथाकथंचिदिह सद्यभावादिपदैर्निर्देशः । अत्रावसरे केचित्परशुरामकाशीदीक्षितादयः सद्योजातमित्यादिभिः पंचभिर्मंत्रैःपंच वक्त्रन्यासं "प्रालेयामलबिंदुकुंदधवलम्" इत्यादिभिः पंचश्लोकैस्तद्ध्यानमृध्ध्या-द्यष्टत्रिंशत्कलान्यासं चाहुः । तत्प्रतिष्ठायामुक्तम् । अत्र तु यजमानप्रतारणमात्रं निर्मूलमेवेत्युपेक्ष्यमित्युक्तं निर्णयसिंधौ शांतिरत्ने कमलाकरभट्टपादैः। " संपुटमार-भेदिति " । मुद्रितांजलिप्रदर्शनं संपुटीकरणम् । तच्च प्राच्यादिदिक्षु क्रमेण "त्रा-तारमिंद्रम्" इत्यादि वक्ष्यमाणमंत्रैः कार्यम् । "इंद्रादीनिति" नमस्कुर्यादिति शेषः । एवं चैतत्संपुटं मुकुलितांजलिं दिक्षु विन्यस्येंद्रादीन्नमस्कुर्यादित्यन्वयः। अत्रापि पूर्वो-क्ता एव मंत्रा ग्राह्याः। संपुटीकरणे नमस्कारे चेंद्रादिप्रकाशका मंत्रा ग्राह्या इति नि-यमो नतु पूर्वोक्ता एव मंत्रा ग्राह्या इति नियम इति महार्णवकारः । संपुटप्रदर्शनपू-र्वकं " त्रातारमिन्द्रम् " इत्यादिमंत्रैरिन्द्रादीन्दिक्षु विन्यसेदिति मातृदत्तः । एवमेव परशुरामादयोऽपि । " एवमात्मनि रौद्रीकरणं कृत्वेति " एवमुक्तेन वक्ष्यमाणेन च न्यासप्रकारेणात्मनि रौद्रीकरणं कृत्वा स्वस्मिन् रुद्रभावं संपाद्येत्यर्थः ।

## ॥ अथ चतुर्थन्यासः ॥

अथ तुरीयन्यासमाह । मनोज्योतिरित्यादि । अग्निशब्देनात्र तत्स्थानं जठरमभिधीयते । अत्रावसरे देवयाज्ञिकपद्धतौ " शीर्षिण तु विन्यसेद्रुद्रं ललाटे चन्द्रशेखरम् । नेत्रे त्रिलोचनं देवं भैरवं श्रोत्रयोर्न्यसेत् । घ्राणे तु शंकरं देवं मुखे पशुपतिं तथा । नीलग्रीवं कंठदेशे हृदये व्यापकं न्यसेत् । करे गंगाधरं देवं शिवं नाभौ तु विन्यसेत्। वामदेवं तथा गुह्ये जंघयोस्त्र्यंबकं न्यसेत्।। सर्वज्ञं विन्यसेत्पादे शिवं सर्वत्र विन्यसेत् । इति वाक्याद्रुद्रादीनां वाक्यांतराच्च कालाग्निरुद्रादीनां नाम्ना न्यास इत्युक्तम् । तथा परशुरामकारिकायाम् " अथोमादिश्चतुर्थ्यंतनाम्नां न्यासो नमोऽततः पदा कालाग्निरुद्राय नमः कूर्माय जानुनोः। नमो भीमाय जठरे शीर्षे नमः शिवाय । च न्यसेत्ततः शिखायां तु नमः सदाशिवाय च । श्रीरुद्राय नम शीर्षे भालेंदुशेखराय च । नेत्रयोस्तु त्रिनेत्राय श्रोत्रयोर्भैरवाय च। कामदेवाय वै गुह्ये जंघयोस्त्र्यंबकाय च। सर्वज्ञाय नम श्रोत्रयोर्नमः शिवाय सर्वतः । न्यसेच्चतुर्दशांगेषु नामान्यस्य चतुर्दश । योजितान्येवमंगेषु रुद्रतुल्यो भवेन्नरः। अंघ्रयोः कालाग्निरुद्राय नमो भवाय जंघयोः । वृषारूढाय जान्वंगे कटिद्वये त्रिमूर्तये । समस्तश्रीप्रदायेति नमो नाभ्यां विनिर्दिशेत् हृदये विन्यसेत्प्राज्ञो महादेवाय वै नमः । नीलकंठाय कंठे च श्रीमुखाय नमो मुखेषु। प्राणेश प्राणरक्षित्रे स्यान्नमो घ्राणयोर्द्वयोः । कर्णयोर्भैरवायेति त्रिनेत्राय च नेत्रयोः । श्रीचंद्रशेखरायेति भाले शिवाय मस्तके । नमः शिवं शिवायेति शिखास्थाने च विन्यसेत् । व्यापकत्वेन सर्वस्मिन् देहे नमः शिवायच । अंगेष्वंगेषु नामानि रुद्रस्यैवं न्यसेत्तु यः रुद्रतुल्यो भवेत्सोपि जपहोमाधिकारवान् । " इत्युक्तं तन्निर्मूलमित्युक्तं निर्णयसिंधौ शांतिरत्ने कमलाकरभट्टपादैः । अत्र देवयाज्ञिकैः । " न्यासं भवादिभिः कृत्वा नमोऽतैः प्रणवान्वितैः। मंत्रैरष्टभिरीशान व्रतादुक्तैः शुभप्रदैः। भवं च पादयोर्न्यस्य शर्वन्यस्योरुमध्यतः । ईशानं गुह्यदेशेतु नाभौ पशुपतिंन्यसेत् । रुद्रं च हृदये मुखे चोग्रं तु विन्यसेत् । भीमं ललाटपट्टे च महांतं शीर्षिण विन्यसेत्। सर्वैस्तु कवचं कार्यमेकैकेनास्त्रमुत्तमम् । तथैवांत्यानुवाकस्य मंत्राँश्चतुर्दश न्यसेत् । प्रथमं पादयोर्न्यस्य द्वितीयं जानुदेशतः उर्वोर्न्यसेत्तृतीयं च न्यसेद्गुह्ये चतुर्थकम् । पंचमंनाभिदेशे तु षष्ठं तु हृदये न्यसेत्। सप्तमं कंठदेशे तु मुखे चाष्टममुत्तमम्। नवमं नासिकायां तु दशमं नेत्रयोर्द्वयोः। एकादशे ललाटे तु द्वादशे शीर्षिण विन्यसेत् । त्रयोदशं तु कवचं हुं कृत्वाऽस्त्रे तु फट् ततः । एवं न्यासविधिं कृत्वा ततो मुद्रां प्रदर्शयेत् । शिवमुष्टिः शिवस्योक्ता सैव शांतिप्रदायिनी। एषते रुद्रभाग इति मुद्राप्रदर्शनम्। इति हेमाद्रौ

बौधायनकल्पोक्तेर्भवादीनां नाम्नामंत्यानुवाकस्य चतुर्दशमंत्राणां च न्यास उक्तः। महार्णवकृता बौधायनसूत्रेऽनुक्तत्वान्नैते न्यासा उक्ताः। अत एवैतेषामनुष्ठानं कृताकृतम्। कृते त्वभ्युदयोऽकरणे तु न रुद्रवैगुण्यम्॥

## ॥ अथ पंचमन्यासः ॥

अथ पंचमन्यासमाह॥ " शिवसंकल्पं हृदयमित्यादिः " शिवसंकल्पेन ऋषिणा दृष्टमनुवाकं शिवसंकल्पपदघटितमृक्जाते, वा शिवसंकल्पं तद्धृदयं हृदयरूपमंगं रुद्रस्य रौद्राध्यायं लक्षणमंत्रस्य जानीयात्। अतो न्यासकाले हृदये न्यसनीयम्। यथाह हेमाद्रौ कौशिकः। " हृदयं हृदयं जप्त्वा शीर्ष्णि सूक्तं च पौरुषम् " इति। यदा तु काण्वानां शिवसंकल्पघटिता चानुवाकात्मिका एकैव ऋक् पठ्यते तदा शिवसंकल्पमनुवाकं शिवसंकल्पमंत्रं वा रुद्रस्य हृदयं जानीयादिति व्याख्येयम्। एवमुत्तरत्रापि। पुरुषसूक्तं " सहस्रशीर्षेत्यादि षोडशर्चात्मकं अनुवाकं रुद्रशिरो जानीयात्। उत्तरनारायणम् "अद्भ्यः संभृतः" इत्यादि षडृगात्मकमनुवाकं रुद्रशिखां जानीयात्। अप्रतिरथमप्रतिरथेन ऋषिणा दृष्टं " आशुः शिशानः " इत्यादि सप्तदशर्चात्मकमनुवाकं रुद्रकवचं जानीयात्।[1]

१ अत्र एकस्मिन्पुस्तके विशेषो यथा—केचित्तु " आशुः शिशानः " इत्यादीनां सप्तदशानामृचामप्रतिरथऋषिरिति संहिताभाष्ये उव्वटभट्टोक्तिमश्नन् सुजपेद् व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत्त्रिवा रक्षोघ्नीः पित्र्यमंत्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणीति सूत्रव्याख्यावसरे अप्रतिरथं " आशुः शिशानः " इत्यादि सप्तदशर्चमिति कर्कोपाध्यायहेमाद्र्यादीनां व्याख्यानं चाश्रित्य सप्तदशर्चेनानुवाकेन कवचन्यासमाहुः। तदेतदनुपपन्नम्। यतोऽप्रतिरथं द्वादशर्चमेव न सप्तदशर्चम्। तदुक्तं सर्वानुक्रमसूत्रे. आशु- रैन्द्रीद्वादश त्रिष्टुभोप्रतिरथः " इति। एतत्सूत्रं देवयाज्ञिकैरित्थं व्याख्यातम्। " आशुः शिशानः " इत्याद्याः " अमीषां चित्तम् " इत्यंता द्वादशऋचस्त्रिष्टुभास्त्रिष्टुप्छंदस्काइंद्रदैवत्या इंद्रपुत्रोऽप्रतिरथसंज्ञकः ऋषिरपश्यदिति। शतपथश्रुतावपि। तस्माद्ब्रह्माऽप्रतिरथं जपतीति प्रकृत्योक्तम्। "आशुःशिशानो वृषभो न भीमः" इत्यैंद्र्योभिरूपा द्वादश भवंतीति। बृहत्पराशरस्मृतावपि। "आशुः शिशान इत्यादि प्रतिरथ उच्यते। एतन्नाम्ना मुनिस्तत्र देवता चामरेश्वरः। त्रिष्टुप्छंदो जपादौ तु विनियोगो यथोचितम्।" इति। अत्र द्वादशानामृचां त्रिष्टुप्छंदस्कत्वस्य क्रमेण समधीतत्वात् " अवसृष्टा " इत्यादीनां कासांचिदृचां छंदोत्तरत्वाच्च द्वादशैवाप्रतिरथ इति गम्यते। अतश्च। द्वादशभिः ऋग्भिः कवचन्यास इति युक्तम्। नच सर्वानुक्रमसूत्रे ऋष्यंतरानुपदेशाद् "अवसृष्टा" इत्यादीनां पंचानामृचा-

 

## ॥ अथ शतरुद्रियविचारः ॥

"शतरुद्रियमन्त्रमिति" अत्र शतरुद्रियशब्देन षट्षष्ठिकंडिकात्मको रौद्राध्यायोऽभिधीयते "अथातः शतरुद्रियं जुहोति" इत्यादिकया "नमस्ते रुद्रमन्यवे" इत्यंतया श्रुत्या शतरुद्रियहोम उत्तरपक्षस्यापरस्यांस्त्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन् संततं जर्तिलमिश्रान् गवेधूकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ्मुख "नमस्ते" इत्यध्यायेनेत्यादिकेन कात्यायनसूत्रेण च शतरुद्रियहोमे रोद्राध्यायस्य विनियोगात् । शतरुद्रियहोमस्य तु क्रियारूपत्वेन तेनाम्नन्यासासंभवात् । तत्साधनेन रौद्राध्यायलक्षणेन मंत्रेणैव तत्संभवात् । अतश्च रौद्राध्याय एव शतरुद्रियमित्यवगम्यते । अत्रकेचित्परशुरामकाशिदीक्षिताद्य आहुः । रौद्राध्यायस्य षोडशर्चात्मक आद्योऽनुवाक एव शतरुद्रियम् । शिवसंकल्पमित्याद्यनुवाकपाठसामानाधिकरण्यात् । शतरुद्रियत्वधर्मस्य वेदत्वादिवत्पर्याप्तवृत्तिकत्वाच्छिष्टसमाचाराच्चेति । तदयुक्तम् । शतरुद्रियशब्दस्य संपूर्णरौद्राध्यायाभिधायकत्वात् तथाहि । "अथातः शतरुद्रियं जुहोति" इत्यत्राग्निहोत्रशब्द इव मुख्यया वृत्त्या शतरुद्रियाख्यं होम विशेषमभिधत्ते। प्रकृते तु । "अथ हैनं ब्रह्महारिण ऊचुः, किं जप्येनामृतत्वं गच्छंति तन्नो ब्रूहीति

---

मप्यप्रतिरथऋषिः स्यादिति वाच्यम् । विशेषतोऽनुक्तार्षाणां मंत्राणां "इषेत्वादि खं ब्रह्मांतं विवस्वानपश्यद्" इत्यनेन सर्वसाधारणतया ऋषेरुपदिष्टत्वेनानुपदिष्टर्षित्वाभावात् । अत एव "आशुरैंद्री" इति सूत्रव्याख्यावसरे देवयाज्ञिकेरुक्तम् । अवसृष्टेत्यादीनां पंचानामग्नौ कात्यायनेन विनियोगानभिधानान्नैतासामग्निसंधिनः प्रजापतिः साध्या वा ऋषयः। किंतु विवस्वानेव सर्वसाधारणः पंचानामृषि इति । "उद्यच्छेधासुपयच्छेपयमनीरग्नये प्रह्रियमाणायानुब्रूह्य........नुदेहि ब्रह्मन्नग्नाविति प्रतिरथं जपेत्" इति कात्यायनसूत्रव्याख्यावसरे देवभाष्येऽपि, आहवनीये प्रणीयमानेऽप्रतिरथस्य द्वादशब्रुवन्नग्नाविति सूत्रं। तस्माद् ब्रह्माऽप्रतिरथं जपतीति श्रुतिं चोदाहृत्योक्तम्। अत एवान्यत्रापि स्मार्तयत्रांऽप्रतिरथं जपेदिति विधिः श्रूयते। तत्र सर्वत्र द्वादशर्चो जप्तव्याः न सप्तदशेति। हेमाद्रचावपि वृषोत्सर्गप्रकरणे। "यथालंकृत्य तान् सर्वान् रुद्राध्यायं समाहितः॥ "श्रावयेत्पौरुषं सूक्तं तथा प्रतिरथानि च" इति पारस्करवाक्यमुदाहृत्योक्तम्। "आशुः शिशानो वृषभो न भीमः" इत्याद्यद्वादशर्चोऽप्रतिरथसंज्ञा इति । यत्तु आशुरित्यादीनां सप्तदशानामृचामप्रतिरथऋषिरिति संहिताभाष्यकारैरुवटभट्टैरुक्तं । यच्चाप्रतिरथमाशुः शिशान इत्याद्याः सप्तदशर्च इति श्राद्धसूत्रव्याख्यायां कर्कोपाध्यायहेमाद्रयादिभिरुक्तं तत्पूर्वोक्तसर्वानुक्रमसूत्रशतपथश्रुतिबृहत्पराशरस्मृतिविरुद्धत्वाच्चोपेक्षणीयमिति ।

सहोवाच याज्ञवल्क्यः शतरुद्रियेण " इति जाबालश्रुत्यादौ जपविध्यन्यथानुपपत्त्या शतरुद्रियहोमसाधनं संपूर्णरौद्राध्यायलक्षणं मंत्रसमुदायं लक्षणया शतरुद्रियशब्दोऽभिधत्ते । एवं च सति जपे विनियुक्तस्यैव रौद्राध्यायापरपर्यायस्य शतरुद्रियस्य "शतरुद्रियमन्त्रम्" इति बौधायनसूत्रे, तद्वद् "अन्ते तु शतरुद्रियम्" इति कौशिकस्मृतौ, "शतरुद्रियमन्त्रेषु देवस्यास्त्रं प्रकल्पयेद्" इति बृहत्पराशरस्मृतौ चास्त्रन्यासे विनियोगाभिधानात् संपूर्णरौद्राध्यायबोधकत्वेन प्रसिद्धस्य शतरुद्रियशब्दस्य प्रथमानुवाकपरतया संकोचो न युक्तः । प्रमाणाभावात् । प्रथमानुवाकमात्रबोधकत्वेन शतरुद्रियशब्दस्य प्रसिद्ध्यभावाच्च । शिवसंकल्पादिशब्दानां तु तत्तदनुवाकाभिधायकत्वप्रसिद्धेर्युक्तमनुवाकाभिधायकत्वम् [1]एतेन शतरुद्रियत्वधर्मस्याद्यानुवाकमात्रे वेदत्वादिवत्पर्याप्तिवृत्तिकत्वादिति यदुक्तं तन्निरस्तम् । पूर्वोदाहृतैर्वाक्यैः शतरुद्रियत्वधर्मस्य पर्याप्तेः संपूर्णरौद्राध्याय एव साधितत्वेनाद्यानुवाकमात्रे तस्य पर्याप्तिकल्पने प्रमाणानुपलंभात् । नच समुदाये पर्याप्तिवृत्तिकस्य वेदत्वादिधर्मस्य तदेकदेशेऽपि वेदत्वव्यवहारदर्शनेन पर्याप्तिस्वीकारवदाद्यानुवाकमात्रेऽपि तत्स्वीकार आवश्यक इति वाच्यम् । दृष्टांतासिद्धेः । तथाहि । वेदत्वव्यवहारो हि वेदैकदेशभाक्त इत्यनन्यलभ्यो हि शब्दार्थ इति न्यायं मन्वानैरभियुक्तैरंगीकृतमिति प्रकृतेऽपि तथैवेति दिक् । यच्चोक्तं शिष्टसमाचारादिति तदपि श्रुतिस्मृतिविरुद्धशिष्टसमाचारस्य स्मृतिचरणे भाट्टैः प्रामाण्यानभ्युपगमान्निरस्तम् । किंच शतरुद्रियशब्दश्च श्रुतावेव व्याख्यातः "षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथत्रिंशदथ पंचत्रिंशदिति । पंचविंशत्यधिकचतुः शतसंख्याका होमाः शतरुद्रियमित्यर्थः । रौद्राध्याये देवतासंबंधबोधकानां यजुषां तावत्त्वात् । यथाहुः । "शतरुद्रियहोमः" इति सूत्रे कर्कोपाध्यायादयः नमस्ते इत्यध्यायेन मंत्रद्रव्यं सततं जुहोति, बहूनि चैतानि कर्माणि श्रूयंते। षष्टिश्च ह वै त्रीणि शतानि, एतच्छतरुद्रियमथत्रिंशदथ पंचत्रिंशदिति, एतावंतो रुद्रदेवता संबंधाः " इति । तस्मात्पंचविंशत्यधिकचतुःशतसंख्याकेषु होमेषु विनियुक्तानामेव यजुषां शतरुद्रियत्वम् कथं[2] पुनरत्र रौद्राध्याये पंचविंशत्यधिकानि चत्वारि शतानि यजूंषि भवंतीति चेच्छृणु । उच्यते । नमस्ते इत्यध्याये तावन्नवानुवाकाः संति । तत्र प्रथमानुवाके प्रथमा कंडिका, त्रिपदा, गायत्री, तानि त्रीणि यजूंषि ।१। याते रुद्र शिवातनूरित्या-

---

१ एतेन—इत्यारभ्य-ह्युपगमांन्निरस्तम्—इत्यंतःपाठ एकस्मिन्पुस्तके नास्ति ।

२ अत्राप्येकस्मिन् पुस्तके क्वचित्क्वचित्पाठभेदो दृश्यते.

रभ्य तिस्रश्चतुष्पदास्तानि द्वादश ।४। अध्यवोचदित्याद्यास्तिस्रः पंचपदास्तानि पंचदश पूर्वैः सह त्रिंशत् ।७। नमोस्तु नीलग्रीवायेत्यारभ्य सप्तचतुष्पदास्तान्यष्टाविंशतिः । पूर्वैः सहपंचाशत् ।१४। मानो महांतमित्यादिके षट्पदे तानि द्वादश । पूर्वैः सह सप्ततिर्भवति " हिरण्य वाहवे " इत्यादिषु " द्रापे अंधसस्पते " इत्यतः प्राक्तनेषु सप्तस्वनुवाकेषु चतुश्चत्वारिंशदधिके द्वेशते यजुषाम्। तदाह । सर्वानुक्रमसूत्रे कात्यायनः । मध्ये सर्वाणि यजूंषि हिरण्य बाहव इति तिस्रोऽशीतयो रुद्राणामित्यादिना नमो वः किरिकेभ्य इत्यग्निवायुसूर्यहृदयभूताः पंचव्याहृतयो बहुरुद्रदैवत्या इत्यंतेन।। तत्रैवं प्रकारः। "नमो हिरण्य बाहवे सेनान्ये " इत्यावदेकं यजुः। एवमुत्तराण्यपि । ततश्चैकैकस्यां कंडिकायामष्टावष्टौ यजूंषि भवंति । तानि दशसु कंडिकास्वशीतिः संपद्यते । एवं त्रिंशत्कंडिकासु नमो वः किरिकेभ्य इत्यतः प्राक् तिस्रोऽशीतयश्चत्वारिंशदधिकानि शतद्वयं यजूंषि भवंति । यद्यपि नमोवः किरिकेभ्यः इत्यग्निवायुसूर्यहृदयभूताः पंचव्याहृतय इत्युक्तं भगवता कात्यायनेन तथापि नमो वः किरिकेभ्यः इत्यादीनि चत्वार्येव यजूंषि नतु पंच । चतुर्णामादौ नमः शब्दादीति संहिता भाष्यकारो महीधरः । देवयाज्ञिकादयः कल्पसूत्रभाष्यकारा अप्येवम् । अत्र च नमो विचिन्वत्केभ्य इत्यादिषु त्रिषु मंत्रेषु विशेषणं विशेष्येण विना पर्यवसानाभावाद्विशिष्यत्वेन देवानां हृदयेभ्य इत्यस्यानुषंगः कार्यः । अनुषंगस्तु होमादिकर्मसु यत्र मंत्राणां पृथक् पृथक् विभज्य प्रयोगस्तत्रैव न पुनर्जपादौ । तत्र तु यथाध्ययनमेव पाठः । अवशिष्टो विंशतिकंडिकात्मकश्चरमानुवाकस्तस्मिन् मीढुष्टमेत्येकां नमोस्तु रुद्रेभ्य इति तिस्रश्च वर्जयित्वाऽवशिष्टाः षोडशकंडिकाश्चतुष्पदा तानि चतुः षष्टिः । मीढुष्टमेत्येका पंचपदा तानि पंच । एवं तान्येकैकोनानि सप्ततिर्भवंति । नमोस्तु रुद्रेभ्य इति तिसृषु कंडिकासु चतुर्दश यजूंषि । तानि । द्विचत्वारिंशत् एवमेकोनसप्तत्या सहैकादशाधिकानि शतं भवंति । सर्वेष्वेकीकृतेषु पंचविंशत्यधिकचत्वारि शतानि यजूंषि भवंति । अत्रैवं मंत्रसंख्यावशेन होमसंख्या ज्ञेया। "षष्टिश्च हवै त्रीणि च" इत्यादि श्रुतिवशाच्चैवं मंत्रविभागः । अपेतवीतेतियच्छ इतिवत्। वचनात्साकांक्षाणामपि मंत्रत्वम् । दिवो मात्रयेतिवत् । जहामि सेदिमिति वच्च। देवभाष्येऽप्येवं मंत्रविभाग उक्तः । षष्टिश्चेत्यादि श्रुतिमुदाहृत्यैतावंतो द्रव्यदेवता संबंधा इत्युक्तत्वात्कर्कोपाध्यायादीनामप्ययमेव मंत्रविभागोऽभिमतः । यत्तु श्री अनंतभाष्ये आद्यः षोडश चत्वारिंशत् द्वेशते तिसृणामशीतीनां। पंचव्याहृतयः। द्रापे सप्त अवताना दश । त्रीण्येतानि यजूंषि, इत्येवमेकाशीत्यधिकं शतद्वयं यजूंषि भवंति, इत्येतावंतोऽत्र होमा इत्येवं मंत्रविभोगोऽभिहितः । स-

षष्टिश्चेत्यादिश्रुतिविरोधात्कर्कदेवभाष्यादिग्रंथविरोधाच्चोपेक्षणीयः । अतश्च रौद्राध्याय एव शतरुद्रियशब्देनाभिधीयते । अस्त्रन्यासे जपे च तस्यैव विनियोग इति युक्तम् । बृहत्पराशरोऽपि रौद्राध्यायस्यैवास्त्रन्यासे विनियोगमाह । तथाहि । " शतरुद्रियमन्त्रेषु देवस्यास्त्रं प्रकल्पयेत् । " इत्यनेनास्त्रन्यासे शतरुद्रियस्य विनियोगमभिधाय " छंदोदैवतमार्षेयमथातः शतरुद्रिये । ज्ञानस्य कर्म संज्ञत्वं द्विजानां येन-जायते " इत्यनेन शतरुद्रियस्य ऋष्यादिकं कर्तुं प्रतिज्ञाय " आद्यानुवाके रुद्राणामाद्यायां तु ऋषिर्द्विजः " इत्यादिना "रुद्रः सर्वासु दैवत्यं विनियोगो यथोचितम्" इत्यंतेन ग्रंथेन रौद्राध्यायस्यैव ऋष्यादिकमभिदधता संपूर्णो रौद्राध्याय एव शतरुद्रियमिति । अस्त्रन्यासे च तस्यैव संपूर्णस्य विनियोग इति च स्पष्टमुक्तम् । यदि तु प्रथमानुवाकमात्रस्यैव शतरुद्रियत्वेनास्त्रन्यासे विनियोगः स्मृतिकर्तुरभिमतः स्यात्तर्हि जपे विनियुक्त शतरुद्रियापेक्षयाऽस्त्रन्यासे विनियुक्तशतरुद्रियनिष्ठो भेदः स्मृतिकृतैवोक्तः स्यात्। सच नोक्तः । वस्तुतस्तु शतरुद्रियपदेनोपक्रम्य यदत्र रौद्राध्यायस्यार्षाद्यभिधानं तद्रुद्रशतरुद्रियपदयोरर्थभेद निराकरणार्थम्। अत एवोक्तमग्निपुराणे "शतरुद्रियसंज्ञस्य रुद्रस्यांगानि पंच हि। पंचांगं न्यस्य तं ध्यात्वा जपेद्रुद्राँस्ततः क्रमादिति । तस्माज्जपे विनियुक्तस्यैव रौद्राध्यायलक्षणस्य शतरुद्रियस्यास्त्रन्यासे विनियोग इति युक्तमुत्पश्यामः । महार्णवानुसारि गो देवयाज्ञिकादयस्तु " शतरुद्रियमस्त्रम् " इत्यत्र "त्वमग्ने रुद्रो असुरः" इत्यादिः " यत्कामेदं जुहोमि तन्मे समृध्यतां वयं स्यामपतयोरयीणाम् भूर्भुवः स्वः स्वाहा " इत्यंतस्तैत्तरीयशाखायां समाम्नातोऽनुवाकः एव शतरुद्रियं न पुनर्नमस्ते रुद्र मन्यव इति रौद्राध्यायलक्षणशतरुद्रियमित्याहुः । अत्र च चतस्र एता आहुतीर्जुहोति। "त्वमग्ने रुद्र" इतिशतरुद्रियस्य रूपम् । " अग्नाविष्णू" इति वसोर्धारायाः । " अन्नपते " इत्यन्नहोमः । " सप्ततेअग्ने समिधः सप्तजिह्वा " इति विश्वप्रीरिति। इति नाचिकेतप्रकरणे तैत्तरीयशाखायां समाम्नाताश्रुतिर्मूलम् । तथा तत्रैवापरा श्रुतिः । "संवत्सरो वा अग्निर्नाचिकेतः। तस्य वसंतः शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षा उत्तरः । शरत्पुच्छम् । मासाः कर्मकाराः। अहोरात्रे शतरुद्रियम्। पर्जन्यो वसोर्धारा । यथा वै पर्जन्यः। सुवृष्टं वृष्टचा प्रजाभ्यः सर्वान्कामान्पूरयति एवमेव स तस्य सर्वान्कामान् संपूरयति। योग्नि नाचिकेतं चिनुते यदुवाचैनमेवं वेद " इति। एतच्च श्रुतिद्वयं श्रीविद्यारण्याद्यैर्व्याख्यातम्। त्वमग्ने रुद्रेत्यादिभिश्चतुर्भिरनुवाकैश्च तस्य आहुतीर्जुहुयात् । यश्च महाग्नौ शतरुद्रियमंत्रो यश्च वसोर्धारामंत्रस्तयोरुभयोः प्रतिनिधिरूपं " त्वमग्नेरुद्राग्नाविष्णू " इत्यनुवाकद्वयम् । अन्नपते इत्यनुवाकेनान्नहोमः कार्यः। सप्तते अग्ने इत्ययमनुवाको विश्वप्रीसंज्ञको विश्वं प्रीण-

यति विश्वमीरिति । योऽयं नाचिकेताग्निरुक्तः सोऽयं संवत्सरात्मकत्वेन ध्यातव्यः । तस्य नाचिकेताग्नेः संवत्सररूपस्य पक्ष्याकारस्य वसंतर्तुः शिरःस्थानीयः । ग्रीष्मवर्षर्तू दक्षिणोत्तरपक्षस्थानीयः। शरदृतुः पुच्छस्थानीयः। चैत्रादयो मासाः कर्मकाराः ऋत्विक् स्थानीयाः। अहोरात्रे तु " त्वमग्नेरुद्र " इत्यस्य शतरुद्रियमंत्रस्य स्थाने वर्तेते । योऽयं पर्जन्यः सोऽयं " अग्नाविष्णू " इत्यस्य वसोर्धारा मंत्रस्य स्थाने वर्तते । तदेवमुक्तावयवविशिष्टो नाचिकेताग्निः सम्यक् पूरयति । तत्र दृष्टांतः । यथा लोके पर्जन्यः सम्यक् वृष्टं यथा भवति तथा वृष्टिं संपाद्य प्रजार्थं सर्वान्कामान् व्रीह्यादिरूपान् संपूरयति एवमेवायं नाचिकेतनाग्निरिति दृष्टव्यमिति । एवं चोक्तश्रुत्योः श्रीविद्यारण्यपादकृतव्याख्यापर्यालोचनेन " त्वमग्नेरुद्र " इत्यनुवाकस्य शतरुद्रियमंत्रत्वं तावदवगम्यते । तथा च " शतरुद्रियमस्त्रम् " इत्यत्र रौद्राध्यायलक्षणशतरुद्रियमसक्तावपि " शिवसंकल्पम् " इत्याद्यनुवाकपाठसमानाधिकरण्यात् " त्वमग्नेरुद्र " इत्यनुवाकरूपस्यैव शतरुद्रियमंत्रस्य शतरुद्रियशब्देनोपादानं युक्तमिति तेषामाशयः। अपरे तु " त्वमग्ने रुद्र " इत्यनुवाकस्य शतरुद्रियमंत्रत्वमयुक्तं मन्यमानाः पूर्वोक्तां श्रुतिमन्यथा वर्णयंति । " चतस्र एता आहुतीर्जुहोति " इति वाक्यविहितासु चतसृष्वाहुतीषु " त्वमग्ने रुद्र" इति शतरुद्रियस्य रूपमित्यादिभिश्चतुर्भिर्वाक्यैः "त्वमग्ने रुद्र" इत्यादयश्चत्वारोऽनुवाकाः करणत्वेन विधीयंते इति तु सर्वेषां तावन्निर्विवादम्। अत्र च " त्वमग्ने रुद्र " इत्यस्येति करणेनान्वयः। इति करणेन च करणत्वमभिधीयते। तच्च क्रियासाकांक्षम्। अतश्च शतरुद्रियस्य रूपमित्यनेन न तस्यान्वयः । तेन क्रियाया अनभिधानात् । " त्वमग्नेरुद्र " इत्यस्य शतरुद्रियस्य रूपमित्यनेनान्वये तु "त्वमग्नेरुद्र" इत्यनुवाकस्य होमसंबंधो न स्यात्। "त्वमग्नेरुद्र" इत्यनुवाकः शतरुद्रियस्य रूपमित्यन्वयेन होमांगत्वबोधकप्रमाणानुपलंभात्। इति करणस्य चानुवाकनिर्देशार्थकत्वात्तेन करणत्वानभिधानेन तस्य क्रियाकांक्षाया अनुदयाच्च । ननु च होमस्य तावदुपकारकाकांक्षा । अतश्चोभयाकांक्षालक्षणप्रकरणेन होमसंबंधो भविष्यतीति । नैतदेवम् । " त्वमग्नेरुद्र " इत्यनुवाकस्य वाक्याद्धोमसंबंधलाभे सति प्रकरणेन तल्लाभकल्पनाया अयुक्तत्वात् । प्रकरणाद्वाक्यस्य बलीयस्त्वात्। इदमेव वाक्यं तत्संबंधबोधकमिति चेत्, तर्हि अनेनैव वाक्येन "त्वमग्नेरुद्र" इत्यनुवाकस्य होमसंबंधो विधेयः । तस्यैवानुवाकस्य तेनैव वाक्येन शतरुद्रियमंत्ररूपत्वं च विधेयमिति वाक्यभेदापत्तिः । "त्वमग्नेरुद्र" इत्यनुवाक्यमुद्दिश्य प्रतिनिधित्वापरपर्यायशतरुद्रियमंत्ररूपत्वस्य " अग्नाविष्णू " इत्यनुवाकमुद्दिश्य वसोर्धारा मंत्ररूपत्वस्य च विधेयत्वे होमवाचकतया प्रसिद्धयोः शतरुद्रियवसोर्धारा श-

ब्दयो र्मंत्रपरत्वे विधौ लक्षणापत्तिश्च । " न देवताशब्दक्रियमन्यार्थत्वादिति " । " न देवताशब्दक्रियाः परार्थत्वात् " इति जैमिनिकात्यायनाभ्यां तत्कार्यकारित्वलक्षणप्रतिनिधित्वस्य मंत्रेषु निराकरणात् " त्वमग्ने रुद्राग्नाविष्णू " इत्यनुवाकयोः शतरुद्रियवसोर्धारामंत्रयोः प्रतिनिधित्वासंभवश्च । किं तर्हि । पूर्ववाक्ये श्रुतेनजुहोतीति पदोपस्थापितहोमक्रिययाऽन्वयः । " त्वमग्नेरुद्र " इत्यनुवाककरणहोमः शतरुद्रियस्य " अथातः शतरुद्रियं जुहोति " इति श्रुतिविहित शतरुद्रियहोमस्य रूपं " त्वमग्नेरुद्र " इत्यनुवाककरणको होमः शतरुद्रियहोमरूपतया ध्येय इत्यर्थः । एवम् " अग्नाविष्णू " इत्यनुवाककरणहोमो वसोर्धारायाः । " अथातो वसोर्धारां जुहोति " इत्यादि श्रुतिविहितवसोर्धारा होमस्य रूपम् । वसोर्धारा होमरूपत्वेन "अग्नाविष्णू" इत्यनुवाककरणको होमो ध्येय इति । न चैवं वाक्यभेदः । "त्वमग्नेरुद्र" इत्यनुवाककरणको होमः शतरुद्रियहोमस्य रूपं विजानीयादित्येवं विशिष्टविधानेन तदप्रसक्तेः । नच विशिष्टविधौ गौरवम् । " चतस्र एता " इति वाक्यविहितहोमेऽप्राप्तमंत्रसंबंधांशे शतरुद्रिय होमरूपत्वांशे च विधिव्यापारस्य पर्यवसन्नत्वेन होमे तात्पर्यवसानाभावात् । अन्यथा वाक्यांतरप्राप्तहोमोद्देशेन मंत्रसंबंधे शतरुद्रियमंत्ररूपत्वे च विधीयमाने प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेदः स्यात् । न च पूर्ववाक्यविहितायामाहुतावनेन वाक्येन मंत्रविधानात्तस्यैव शतरुद्रियमंत्ररूपत्वप्रतिपादनं युक्तमिति वाच्यम् । इति करणेनाभिहित करणत्वस्य क्रियाकांक्षायां पूर्ववाक्ये श्रुतेन " जुहोति " इति पदेन होमक्रियाया एवोपस्थापितत्वेन तस्यैव शेषिणो होमस्य शतरुद्रियरूपत्वप्रतिपादनसंभवे तच्छेषस्य " त्वमग्नेरुद्र " इत्यनुवाकस्य शतरुद्रियमंत्ररूपत्वप्रतिपादनस्य पूर्वोक्तदूषणगणस्य तदवस्थत्वेनायुक्तत्वात्। न चैवंविधौ लक्षणा। शतरुद्रियवसोर्धाराशब्दाभ्यां होमस्यैवाभिहितत्वात्। "शतरुद्रियं जपेत्" इति "शतरुद्रियमधीते" इत्यादौ तु जपादिविध्यन्यथानुपपत्त्या लक्षणया शतरुद्रियहोमसाधनीभूतरौद्राध्यायलक्षणशतरुद्रियमंत्रपरतत्वं शतरुद्रिय शब्दस्येत्युक्तम्। तस्मात् "त्वमग्नेरुद्र" इत्यनुवाककरणकहोमस्य शतरुद्रियहोमरूपत्वप्रतिपादनद्वारा "अग्ना विष्णू" इत्यनुवाककरणकहोमस्य वसोर्धारा होमरूपत्वप्रतिपादनद्वारा च नाचिकेताग्निरेव स्तूयते। यथा सौत्रामण्यंगेषु सोमांगरूपता प्रतिपादनद्वारा सौत्रामणिरेव स्तुतः। "दीक्षायै रूपं शष्पाणि प्रापणीयस्य तोक्मानि। क्रयस्य रूपं सोमस्य लाजाः सोमांसवो " इत्याद्याभिरेकोनविंशतिकंडिकाभिः । व्याख्याताश्च ता उव्वटश्रीविद्यारण्यपादमहीधरभट्टादिभिः नवप्ररूढव्रीहितरूपाणि दीक्षणीयत्वेन ध्येयानि । एवमग्रेऽपि । नवप्ररूढयवरूपाणि तोक्मानि प्राणी

यस्य प्रापणीयेष्टरूपत्वेन ध्येयानि। सोमस्य क्रयस्य रूपं लाजाः सोमक्रयोऽस्ति सोमे। अत्र लाजास्तस्य रूपं। लाजाः सोमक्रयेण रूपेण ध्येया इत्यर्थः। सोमक्रयस्येति समासे युक्ते तदभावः सोमक्रयपदयोर्व्यत्ययो रूपपदेन व्यवधानं च छांदसं। सोमांशवः सोमखंडास्तद्रूपत्वेन मधु ध्येयम्। यद्वा। मधुरस्वादा लाजा एव सोमांशवो ध्येया इति। शेषकंडिकाव्याख्यास्तु भाष्येभ्योऽवगंतव्याः। इहोपयोगाभावाद्‌ ग्रंथभूयस्त्वभयाच्च न ता उपन्यस्ताः। एतादृशः प्रशस्यः प्रशस्तोऽयं नाचिकेताग्निर्यत्र महाग्नेरप्यत्र महाग्नेरप्यंगभूतौ शतरुद्रियवसोर्धाराहोमौ स्तः। अतोऽवश्यमनुष्ठातव्य इति। या त्वपराश्रुतिरुदाहृता तस्यां तु स्पष्टतया कालात्रयवेषु क्रयत्वयवबुद्धिः कर्तव्येति प्रतिपादितत्वान्न विरोधः। तस्मात्‌ " त्वमग्ने रुद्र " इत्यनुवाककरणकहोमस्य शिष्यादीनां दीक्षणीयत्वादेरिव शतरुद्रियहोमत्वाभावेन तच्छेषस्य " त्वमग्नेरुद्र " इत्यनुवाकस्य शतरुद्रियमंत्रत्वाभावान्न " शतरुद्रियमस्त्रम्‌ " इत्यत्र शतरुद्रियशब्देन तदुपादानं युक्तम्‌। अनुवाकपाठसाहचर्यं तु " त्वमग्नेरुद्र " इत्यनुवाकस्य शतरुद्रियमंत्रत्वे सति नियामकं। नच तस्य तदस्तीत्य किंचित्करम्‌। तस्माद्रौद्राध्यायस्यैव शतरुद्रियमंत्रत्वेन विनियोगो युक्तः। बृहत्पराशरोऽपि रौद्राध्यायस्यैव शतरुद्रियत्वं मन्यमानो रौद्राध्यायस्यैवास्त्रन्यासे स्पष्टतया विनियोगमाह। तथाहि। " शतरुद्रियमस्त्रेषु देवस्यास्त्रं प्रकल्पयेद्‌ " इत्यनेनास्त्रन्यासे शतरुद्रियस्य विनियोगमुक्त्वा " छंदोदैवतमार्षेयमथातः शतरुद्रिय " इत्यनेन शतरुद्रियस्य ऋष्यादिकं वक्तुं प्रतिज्ञाय " आद्यानुवाके रुद्राणामाद्यायांतु ऋचिद्विजः " इत्यादिना " रुद्रः सर्वासु दैवत्यं विनियोगो यथोचितम्‌ " इत्यन्तेन ग्रंथेन रौद्राध्यायस्य ऋष्यादिकमभिदधता रौद्राध्याय एव शतरुद्रियमिति। अस्त्रन्यासे च रौद्राध्यायस्यैव विनियोग इति चाभिहितं भवति। अग्निपुराणेऽप्येवम्‌। अतएव " यज्जाग्रतादि षट्के शिवसंकल्पमार्षकम्‌ " इत्यादिना हृदयादिनेत्रांतांगपंचकमंत्राणामृष्यादिकमुक्तम्‌। न पुनरस्त्रन्यासे विनियुक्तमंत्रस्य। यतोऽस्त्रन्यासे रौद्राध्यायस्यैव विनियुक्तत्वात्तदीयस्य ऋष्यादेश्चेत्युक्तत्वेन पुनरुक्तापत्तेः। यदितु जपे विनियुक्तशतरुद्रियमंत्रापेक्षयाऽस्त्रन्यासे विनियुक्त शतरुद्रियमंत्रो भिन्नः स्यात्तर्हि तन्मंत्रोपदेशपुरः सरं तदीयमृष्यादिकमप्यभिधीयेत। नचाभिहितम्‌। तस्मान्न " त्वमग्नेरुद्र " इति तैत्तरीयानुवाकस्य शतरुद्रियमंत्रत्वाभावाच्च नास्त्रन्यासे विनियोग स्तस्य युक्त इत्यलं भूयसा श्रमेण। चतुष्षष्टि कंडिकात्मकोरौद्राध्याय इति काण्वानां विशेषः

अत्र नेत्रवर्जं पंचांगान्युक्तानि सूत्रकृता बौधायनेन। हेमाद्रौ कौशिकोऽपि " हृदये हृदयं जप्त्वा शीर्षिण सूक्तं च पौरुषम्‌। शिखायामुत्तरं षट्कं नारायणम-

नुत्तमम् । कवचेऽप्रतिरथं तदस्त्रे तु शतरुद्रियम् " इति पंचांगान्याह । बृहत्पराशर-स्तु " शिखा तस्य तु रुद्रस्योत्तरं नारायणं स्मृतम् । शिरः पुरुषसूक्तं च शिवसंकल्पकं च हृत् । कवचं चाप्रतिरथं नेत्रं विभ्राट् बृहत्स्मृतम् । शतरुद्रियमस्त्रेषु देवस्यास्त्रं प्रकल्पयेत्" इति षडंगान्याह । विधानपारिजाते जाबालश्रुतिरपि । शिवसंकल्पं हृदयं सूक्तं स्यात्पौरुषं शिरः । प्राहुर्नारायणं चैव शिखां तस्योत्तराभिधम् । आशुः शिशानः कवचं नेत्रं विभ्राड् बृहत्स्मृतम् । शतरुद्रियमस्त्रं स्यात्षडंग क्रम ईरीतः ।" । इति अत्र विभ्राडित्य नुवाक एव ग्राह्यः । इतरानुवाकपाठसाहचर्यात् । शिष्टाचारोऽप्येवम् । अत्रापि पंचांगन्यास-योर्विकल्प एव तुल्यशास्त्रत्वात् । केचित्तु बौधायनानां पंचांगन्यासो वाजसनेयिनां तु षडंगन्यास इति व्यवस्थामाहुः । युक्ततरं चैतत् । बृहत्पराशरस्मृतेर्वाजसनेयिपरताया उक्तत्वाद् बौधायनसूत्रस्य बौधायनशाखापरत्वाच्च । विकल्पस्तु बौधायनवाजसनेयिव्यतिरिक्तपरो ज्ञेयः । यत्तु परशुरामकारिकायाम् । "सकामो न जपेद्रुद्रं नेत्र-युक्तं जगुर्बुधाः । तत्कामदहनं त्यक्त्वा द्विनेत्रं तु जपेदिह । नेत्रहीनः कथं सोऽधः कुर्यात्पुंसां महत्फलम् । निष्कामस्तु जपेत्सम्यक् त्रिनेत्रं मुनिसत्तम" इति सकामजपे द्विनेत्रो-रुद्रो निष्कामजपे तु त्रिनेत्र इति व्यवस्थाभिधानं तच्चिन्त्यम् । एतादृशव्यवस्थायां मूलवाक्यस्य बृहत्पराशरस्मृतिहेमाद्रिमहार्णवादिष्वनुपलंभात् । शैवीषडंगमुद्राशैवागमे । " कृतमुष्टिपुटैर्हस्तैः कृत्वांगुष्ठौ हृदि न्यसेत् । हृन्मुद्रेयं समाख्याता शिरोमुद्रा प्रकीर्त्यते । ललाटाग्रे समाधाय कृतमुष्टिपुटौ करौ । कुर्यादूर्ध्वप्रसक्ताग्रे तर्जन्यौ ज्येष्ठबाह्यतः । करौ शिखायां संयोज्य कृतमुष्टिपुराकृती । ज्येष्ठावधः प्रसक्ताग्रौ कनिष्ठे-चोर्ध्वतस्तथा ॥ कुर्यात्सेयं शिखामुद्रा सर्वोपद्रवनाशिनी । कृत्वांगुष्ठौ प्रसक्ताग्रौ तर्जन्यै च त्रिकोणवत् । मूर्ध्नि पश्चान्मुखं कृत्वा नयेदुभयपार्श्वतः ॥ करौ हृदंतं मुद्रेयं कवचस्याभयप्रदा । कृत्वा नेत्रोन्मुखं हस्तं सक्तांगुष्टकनिष्ठिकाम् । प्रसार्य मध्यमां किंचिन्नमयेदितरांगुलीः । नेत्रमुद्रेयमुद्दिष्टा रक्षोभूतार्तिभंजिनी । परस्परतलद्वंद्वं पुनरास्फोटयेद् भृशम् । अस्त्रमुद्रेयमुदिता सर्वविघ्नविनाशिनी" । इति । अमुं पंचमं न्यासं सर्वादौ केचिदाहुस्तन्निर्मूलम् । तेन सर्वे न्यासाः सर्वेषां शाखिनां समाना एव । अत एव हेमाद्रिमहार्णवनारायणभट्टकमलाकरभट्टादिभिर्देवयाज्ञिकादिभिश्च पंचैव न्यासा उक्ताः । समूलं चैतत् । " अथाभिधास्ये रुद्राणां शांतये गृहमेधिनाम् । पंचांगानां विधानं तु " इति बृहत्पराशरस्मृतौ ॥ " अथातः पंचांगरुद्राणां न्यासपूर्वकम् " इति बौधायनसूत्रे । " वक्ष्ये रुद्रविधानं तु पंचांगं सर्वदं परम् " इति वह्निपुराणे च पंचानामेव न्यासानां विधानदर्शनात् । एतेन निर्मूलत्वादेकादशन्यासान्वदंतः परशुरामादयो निरस्ताः । पंचांगं सकृज्जपेदष्टांगं प्रणम्येति । पंचांगं कृत्वाऽष्टांगं प्रणम्य स-

कृज्जपेदित्यर्थः । पंचांगं कृत्वा सकृज्जपेदिति वचनात्सकृदावर्तनरूपकाख्य आद्ये रुद्रे शिवसंकल्पादिन्यास एव नत्वन्ये न्यासा इति केचित् । मातृदत्तस्तु पंचांगं तदुपलक्षितन्यासमात्रं सकृज्जपेत्सकृदेवावर्तनेऽप्यन्ये न्यासा भवंतीत्याह । शिष्टाचारोऽप्येवम् । अत्र च । "उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टांग उच्यते" इति वाक्योक्तो नाष्टांगप्रणामः। किं तर्हि । उक्तमंत्रपाठमात्रं निर्वर्त्येति महार्णवादयः सर्वे निबंधाः। अष्टांगप्रणामे मंत्रविशायकं सूत्रं महार्णवकारैरित्थं पठितम् । हिरण्यगर्भो यः प्राणतो, ब्रह्मयज्ञानं, महीद्यौ, रुपश्वासया, अग्नेनय, याते अग्ने यथावः, स्वाहाग्नये, इत्यष्टावृचो जपेदिति। देवयाज्ञिकनारायणभट्टादिभिस्त्वन्यत् सर्वं पूर्ववत्पठित्वा "याते अग्न इमं यम" इत्यष्टावृचो जपेदिति पठितम् । हेमाद्रौ व्रतखंडे । "एवं न्यासविधिं कृत्वा ततो मुद्रां प्रदर्शयेत् । शिवपुष्टिः शिवस्योक्ता सर्वशांतिप्रदायिनी। एषते रुद्रभाग इति मुद्राप्रदर्शनम्। श्रीकामः शीर्ष्णि कुर्वीत तेजस्कामस्तु नेत्रयोः। मुखे त्वन्नाद्यकामस्तु ग्रीवायां रोगनाशने। हृदये सर्वकामस्तु नाभौ ज्ञानी प्रदर्शयेत्। प्रजाकामस्तु गुह्ये वै पशुकामस्तु जंघयोः। जानुभ्यां ग्रामकामस्तु राष्ट्रकामस्तु पादयोः । वशीकरणकामस्तु वामहस्ते प्रदर्शयेत् । पापक्षयेऽभिचारे च व्याधेरपगमे तथा। बहिः शरीरात्कुर्वीत शिवस्याज्ञेति च स्मरन्। एवं प्रदर्शयित्वा तु ततो ध्यानं समारभेत् " इति । शिवपुष्टिर्योनिमुद्रेति संप्रदायविदः ॥ "यजनमारभेदिति" । जपो होमोऽभिषेकश्चेति त्रिविधमिह यजनम् । जपहोमार्चनविधिं व्याख्यास्याम इति पूर्वं प्रतिज्ञातत्वात् । महार्णवकृतापि । यजनं जपः पूजाहोमश्चेत्युक्तम् । तेन बौधायनमते जपहोमयोः पूजा नास्त्येव । अतश्च पूर्वोक्तमखिलं न्यासजातं विधायाष्टांगं प्रणम्य मुद्रां प्रदर्श्य स्वात्मानं श्रीरुद्रं ध्यात्वा जपादिकं कार्यम्। बृहत्पराशरेण तु "संप्रध्वस्तंतरायः सन् ततो यजनमारभेत् " इति यजनमुपक्रम्य। "अनुगुप्ते सुलिप्ते च देशे गोचर्ममात्रके। स्थंडिलेंऽबुजमालिख्य शुभ्रैः क्षालिततंदुलैः। तत्र पूजादिकं कुर्याच्छंभवायेति मंत्रतः ।" इत्यादिना पूजाया विधानाच्छ्रीरुद्रपूजनमेव यजनमुक्तम् । अतश्चैतन्मते स्वात्मनो रुद्ररूपविभावनांते वक्ष्यमाणां पूजां विधाय जपादिकं कार्यम्[1] । इति ॥ अत्र बृहत्पराशरोक्तो विशेष उच्यते ।

## ॥ अथ पंचप्रकारन्यासः ॥

"इषेत्वादिषु मंत्रेषु खं ब्रह्मांतेषु याः क्रियाः।दशप्रणवसंयुक्ता भूर्भुवः स्वरितीरिता" इति। दशप्रणवा द्वेधा । "आदौ प्रणवमुच्चार्य व्याहृतिः प्रणवान्विताः।मंत्रादौ प्रणवः

१ अत्र कस्मिंश्चित्पुस्तके श्रीरुद्रकल्पद्रुमे रुद्रपरिच्छेदे बौधायनसूत्रोक्तो रुद्रजपविधिः इति विशेषः॥

कार्यो मंत्रांते प्रणवः पुनः। ततो व्याहृतिसंयुक्तस्त्वंते च प्रणवः सदा'' इत्येकः प्रकारः। अपरस्तु। आदौ प्रणवमुच्चार्य सप्तव्याहृतयस्ततः। मंत्रादौ प्रणवः कार्यो मंत्रांते प्रणवः पुनः ।'' इति परशुरामकारिकायां तु " यद्वारंभेऽवसाने च कार्य एकैक एव सः'' इत्युक्तम् । तथा। " मनोजूतिरबोध्यग्निर्मूर्धानं च मर्माणि ते । मानस्तोक इति ह्येतत्प्रथमं पंचकं स्मरेत्।'' इति प्रथमो न्यासः। "प्रथमं पंचकं स्मरेत्" इत्युक्तत्वात्।

अथ द्वितीयो न्यासः।। " यातेरुद्रेति चूडायां शिरोऽस्मिन्महत्यर्णवे। असंख्याता सहस्राणि ललाटे विन्यसेद् द्विजः । चक्षुषोर्विन्यसेद् द्रेतु त्र्यंबकं तु यजामहे । मानस्तोक इति ह्येतन्नासिकायां न्यसेद् बुधः । अवतत्य धनुवक्त्रे नीलग्रीवौ तथा गले । नमस्तआयुधेत्येतत् स्मरन्मंत्रं प्रकोष्ठयोः । विन्यसेद् व्यस्तमंत्रोऽयं येतीर्थानीति हस्तयोः। नमोवः किरिकेभ्यो हृदये मलनाशनम्। नाभ्यां विद्वान्न्यसेन्मंत्रं नमोहिरण्यबाहवे। गुह्ये मंत्रस्तु संस्मर्य इमा रुद्राय इत्यपि । मानोमहांतमित्यूर्वोरेषते रुद्र-जानुनोः। अवरुद्रमिति ह्येतज्जंघयोर्मंत्रमुच्चरेत्। कवचमध्यवोचद्वै तदुपविल्विने इति। नेत्रे तु नीलग्रीवाय प्रमुंचधन्वनोऽस्त्रकम्। य एतावंत एतेन विदध्याद् दिक् प्रबंधनम्।'' इति । सोऽयं शिखाद्यस्त्रांतो दिग्बंधसहित एकोनविंशत्यंगन्यासो द्वितीयः ।।

अथ तृतीयो न्यासः " ॐ मिति च नमस्कारं भगवते ततः पुनः । रुद्रायेति विधानज्ञो दशाक्षरं ततो न्यसेत् । प्रणवं विन्यसेन्मूर्ध्नि नकारं नासिकांतरे । मोकारं तु ललाटे वै भकारं मुखमध्यतः । गकारं कंठदेशे तु वकारं हृदये न्यसेत् । तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् । द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत्''

अथ चतुर्थो न्यासः । त्रातारमिंद्रं त्वन्नोअग्ने सुगंन्नुपंथामिति ह्यपि । असुंवंतं तत्वायाम्यानोनियुद्भिरितीरयेत् । वयं सोम तमीशानमस्मे रुद्रा इति स्मरेत् । स्योनापृथिविनोह्येतत्कुर्वीत संपुटं द्विजः। सुत्रामादि दिशां पालान् प्राच्यादिषु स्मरेदथ ॥ रौद्रीकरणमेतद्वै कृत्वा पापैः प्रमुच्यते । यक्षरक्षःपिशाचाद्याः प्रेतभूतग्रहादिकाः । दुष्टदैत्याश्च शाकिन्यो रेवत्यो वृद्धसंज्ञकाः । सिंहव्याघ्रादयोऽरण्या ये दुष्टाः श्वापदा-द्विजाः । म्लेच्छवेधकचोराद्या यमदूतपृदाकवः । रुद्रीभूतमिमं सर्वे द्विजं पश्यंति वन्हिवत् । देदीप्यमानमर्चिभिर्दुष्टदृग्बंधकारकम् । दह्यमाना दवीयांसः सप्तधाम्नः सुधामभिः । प्रणश्यंति हि ये दुष्टा द्विजास्ते रुद्ररूपिणः ।'' इति । अत्र " दिक्षु वासवमुख्यानां न्यासः संपुट उच्यते '' इत्यभियुक्तोक्तेः संपुटमुद्रया न्यस्यमानत्वाच्च संपुटत्वम् । इति ॥

अथ पंचमन्यासः । स च शिखा तस्य तु रुद्रस्योत्तरं नारायणं स्मृतमित्यादि-नाग्रेव क्ष्यमाणोऽप्यत्रैवानुसंधेयः। एवं चास्य दृष्टार्थता संपद्यते। निर्णीतं च दृष्टार्थता-

नुरोधेन पाठक्रमादर्थक्रमस्य बलीयस्त्वं पंचमे । न चात्र पराशरेण न्यासनिष्ठं त्रैविध्यं चातुर्विध्यं वा समाम्नातम् । न पुनः पंचविधत्वमित्याशंकनीयम् । " अथाभिधास्ये रुद्राणां शांतये गृहमेधिनाम् । पंचांगानां विधानं तु यत्कृतं हंति पातकम् " इति वाक्ये तेनैव पंचांगानामेव रुद्राणामुपक्रमात् । उपक्रमानुरोधेन च न्यासनिष्ठपंचविधत्वस्य संपुटन्यासमादायैवोपादानस्य युक्तत्वात् एवं पंचविधान्न्यासान् कृत्वा ध्यायेत् । इति ॥

## ॥ अथ सदाशिवध्यानम् ॥

पंचास्यं सौम्यमात्मानं सर्वाभरणभूषितम् । मृगलांछनमूर्धानं शुद्धस्फटिकसन्निभम् । फणासहस्रविस्फूर्जदुरगेंद्रोपवीतिनम् । सप्तार्चिर्विज्वलज्ज्वालजटाजूटकिरीटिनम् । सहस्रकरविभ्राजत्खट्वांगादिविभूषितम् । ब्रह्मांडखंडवत् काशत्कपालवरधारिणम् । देदीप्यमानं चंद्रार्कज्वलदग्नित्रिनेत्रिणम् । त्रैलोक्यद्योतिकुद्भास्वत्स्कंधे कपालमालिनम् । दीप्तनक्षत्रमालावदक्षमालाधरं द्विजाः । निःशेषवारिसंपूर्णं कमंडलुकरं त्वजम् जगद्बाधीर्यकृन्नादं मुंचन् डमरुधारिणम् । केयूरबद्धनागेंद्रमूर्धरत्नविराजितम् । मेखलाकिंकिणीमालामुक्तारावविराजितम् । घर्घराव्यक्तनिर्गच्छद्गंभीरारावनूपुरम् । सहेमपट्टनीलाभव्याघ्रचर्मोत्तरीयकम् । विद्युल्लताप्रभागंगाभासमूर्धं सुरार्चितम् । समस्तभुवनाधारधरणोक्षासनस्थितम् ॥ त्रैलोक्यवनितामूर्धनतदेहार्धपार्वती । लक्षसूर्यप्रभाभास्वत्त्रैलोक्यकृतपांडुरम् ॥ अमृतस्रुतहृष्टांगं दिव्यभोगसमाकुलम् । दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं शाश्वतमव्यक्तं व्यापिनं नंदिनं ध्रुवम् । द्विजो ध्यात्वैवमात्मानं सम्यक् रुद्रस्वरूपिणम् । संप्रध्वस्तांतरायः सन् ततो यजनमारभेत् " इति ।

## ॥ अथ पूजनप्रकारः ॥

यजनं पूजनं तदाह अनुलिप्ते सुलिप्ते च देशे गोचर्ममात्रके । स्थंडिलेऽबुजमालिख्य मंत्रमालिख्य तं पुनः दशाक्षरमित्यर्थः तत्र पूजादिकं कुर्यान्नमः शंभवायेति च । देवयाज्ञिकपद्धतौ तु । "अनुगुप्ते सुलिप्ते च देशे गोचर्ममात्रके । स्थंडिलेंबुजमालिख्य शुभ्रैः क्षालिततंदुलैः । तत्र पूजादिकं कुर्याच्छंभवायेति मंत्रतः " इति पाठः समाम्नातः । अस्मिन् पाठेऽबुजमात्रमेव रुद्रपीठम् । निर्णयसिंधौ शांतिरत्ने कमलाकरभट्टपादधृतपाठानुसारिपूर्वोक्तपाठे तु अंबुजे दशाक्षरलेखनमात्रमेवाधिकम् । स्कंदपुराणे स्कंदमहादेवसंवादे तु प्रकारांतरेण रुद्रपीठमुक्तम् । तद्यथा । मध्ये वृत्तं समालिख्य तन्मध्ये च दशाक्षरम् बहिरष्टदलं पद्मं ततः षोडशपत्रकम् । चतुर्विंशतिपत्राब्जं

द्वात्रिंशत्पत्रकं तदा । चत्वारिंशत्पत्रकं तु वृत्तं सूर्यसमप्रभम् । पंचपद्मात्मकं वृत्तं चतुरस्रं च भूगृहम् सत्वं रजस्तमश्चेति त्रिगुणैः परितो वृतम् । चतुर्द्वारं द्वारदेशाद्बहिर्नागसमावृतम् । रुद्रपीठमिति ख्यातं देवतास्तत्र विन्यसेत् । चत्वारिंशच्छतं चैकं देवतानामुदाहृतम् । कर्णिकामध्यदेशे तु रुद्रं पंचास्यमालिखेत् । नमो भगवते रुद्रायेति तारादिकं न्यसेत् । सोऽयं दशाक्षरो मंत्रः सर्वकामार्थसिद्धिदः । प्रणवादिनमोंतानि पंचास्यानि ततः परम् । सद्योजातं वामदेवमघोरं तदनंतरम् । ततस्तत्पुरुषं प्रोक्तमीशानं पंचमं क्रमात् । प्रधानमिदमाख्यातं प्रथमावरणे ततः । दलेष्वष्टसु नंद्यादीन् पूर्वादि क्रमतो न्यसेत् । पूज्यपूजकयोर्मध्ये प्राची स्याद्यंत्रलेखने । आदौ नंदिमहाकालौ गणेशवृषभौ क्रमात् । ततो भृंगिरिटि स्कंदोमाचंडेश्वरसंज्ञकाः । षोडशारे ततः पद्मे द्वितीयावरणे यजेत् । अनंतं च तथा सूक्ष्मं शिवं चैकपदं तथा । एकरुद्रं त्रिमूर्तिं च श्रीकंठं वामदेवकम् । ज्येष्ठं श्रेष्ठं तथा रुद्रं कालं कलविकरणम् । बलं बलविकरणं बलप्रथमनं तथा ॥ तृतीयावरणे पद्मे चतुर्विंशद्दले तथा । अणिमा महिमा चेति लघिमा गरिमा तथा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः । ततःपरं क्रमेणैव न्यसेद् ब्रह्मादि देवताः । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराह्यैंद्री च चामुंडा चंडिका चेति ताः क्रमात् । ततोऽष्टस्वसितांगादीन् भैरवान् विन्यसेत्पुनः । असितांगो रुरुश्चंडःक्रोध उन्मत्तभैरवः । कालभीषणसंहारा भैरवाश्चाष्टकीर्तिताः । द्वात्रिंशत्पत्रके पूर्वं भवाष्टकमुदाहृतम् । ततोऽनंतो वासुकिश्च तक्षकश्च कुलीरकः । कर्कोटकः शंखपालः कंबलोऽश्वतरस्तथा । ततोऽष्टसु न्यसेद्वैन्यं पृथुं हैहयमर्जुनम् । शाकुंतलेयं भरतं नलं राममिति क्रमात् । ततः कुलाचलानष्टौ दलेष्वष्टसु विन्यसेत् । हिमवान्निषधो विंध्यो माल्यवान् पारियात्रकः । मलयो हेमकूटश्च गंधमादनसंज्ञकः । चत्वार्यावरणान्येवं पंचमावरणे ततः । चत्वारिंशद्दले पद्मे पंचमावरणे न्यसेत् । इंद्राद्यष्टौ लोकपालानष्टसु क्रमतो न्यसेत् । इंद्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा । वायुं कुबेरमीशानं दलेष्वष्टसु विन्यसेत् । इंद्रादिलोकपालानामष्टौ शक्तीस्तु विन्यसेत् । शची स्वाहा च वाराही खड्गिनी वारुणी तथा ॥ मृगारूढा च कौबेरी मलिनी च तथाष्टमी । ततोष्टनामायुधानि वज्रादीनि च विन्यसेत् । वज्रं शक्तिं दंडखड्गौ पाशांकुशगदा अपि । त्रिशूलं लोकपालानामायुधानि क्रमाल्लिखेत् । ततोऽष्टौ वाहनान्येषामष्टसु क्रमतो लिखेत् । ऐरावतं तथा मेषं महिषं प्रेतसंज्ञितम् । मकरं च मृगं चैव नरं च वृषभं तथा । ऐरावतादयोऽप्यष्टौ दिग्गजास्तदनंतरम् । ऐरावतः पुंडरीको वामनः कुमुदोंऽजनः । पुष्पदंतः सार्वभौमः सुप्रतीकश्च दिग्गजाः । भूगृहांतः पुनर्लेख्याः पंचपद्मात्मकाद्बहिः । इंद्रं विन्यस्य पूर्वस्यामाग्नेयामग्निमेव च । दक्षिणस्यां यमं चैव नैर्ऋत्यां निर्ऋतिस्तथा । प्रतीच्यां वरुणं वायुं वा-

यव्यां विन्यसेत्ततः। कुबेरं चैव कौबेर्यामीशान्यामीशमालिखेत्। विरूपाक्षं तु विन्य-सेदाग्नेयामग्नियोगतः। नैर्ऋत्यां निर्ऋतेर्योगे विश्वरूप च विन्यसेत्। वायव्यां वायु-योगे च लिखेत्पशुपतिं तथा। ईशान्यामूर्ध्वलिंगं तु न्यसेदीशानयोगतः। प्रागादिक्रमतो-लेख्याः शेषाद्या भूगृहाद्बहिः। विप्रवर्णं श्वेतवर्णं सहस्रफणसंयुतम्। शेषं विन्यस्य-पूर्वस्यां पूजयेदुपचारकैः। तक्षकं वैश्यवर्णं च नीलं पंचशतैः फणैः। युक्तमुत्तुंगकायं च आग्नेयां दिशि विन्यसेत्। अनंतं विप्रवर्णं च तथा कुंकुमवर्णकम्। सहस्रफण-संयुक्तं दक्षिणस्यां प्रपूजयेत्। वासुकिं क्षत्रियं पीतवर्णं सप्तशतैःफणैः। युक्तमुत्तुंग-कायं च नैर्ऋत्यां दिशि विन्यसेत्। शंखपालं क्षत्रियं च पीतं सप्तशतैः फणैः। युक्त-मावाह्य वारुण्यां पूजयेद् गंधधूपकैः। महापद्मं वैश्यवर्णं नीलं पंचशतैः फणैः। युक्त-मुत्तुंगकायं च वायव्यां दिशि पूजयेत्। कंबलं शूद्रवर्णं च कृष्णं त्रिशत्फणैर्युतम्। कौ-बेर्यां दिशि विन्यस्य पूजयेच्च विधानतः। कर्कोटकं शूद्रवर्णं श्वेतं त्रिशत्फणायुतम्। ईशान्यां दिशि विन्यस्य पूजयेद्विधिवत्ततः। रुद्रपीठमिदं सर्वं रुद्रकल्पे च विश्रुतम्। शंभुना स्वयमाख्यातं भक्तानुग्रहकारिणा। कुंकुमागरुकर्पूरैर्भूर्जपत्रे तथा पटे। लिखितं पूजितं भक्त्या सर्वकामार्थसिद्धिदम्। यंत्रं मंत्रमयं प्रोक्तं यंत्रात्मा देवतेति च। पूज-नीयं प्रयत्नेन तेनेदं देवतामयम्। नाग्निचोरभयं तत्र नच राजभयं क्वचित्। यत्रेदं लि-खितं यंत्रं पूज्यते विधितः सदा।" इति स्कंदपुराणोक्तं रुद्रयंत्रम्॥ नच बृहत्प-राशरवाक्ये "अंबुजपदग्रहणस्य स्कांदोक्तरुद्रयंत्रोपलक्षणार्थत्वमित्याशंकनीयम्॥ स्कांदोक्तावरणपूजाविधेर्बृहत्पराशरोक्तपूजायामदर्शनात्। अत एव बृहत्पराशरोक्त-रुद्रपीठपूजापक्षे स्कांदोक्तावरणपूजा न भवति। यत्तु परशुरामकारिकायाम्। त-स्मिन् पीठे सवस्त्रे वा पट्टे वा मंडलेऽपि वा। पद्मं गंधादिना लेख्यमष्टपत्रं सकर्णिकम्। चतुरस्रं ततो बाह्ये चतुरस्रोपशोभितम्। तस्य पत्रेषु संस्थाप्या अणिमाद्यष्टसिद्धयः। अणिमा पूर्वपत्रे च लघिमा दक्षिणे दले। महिमा पश्चिमे पत्रे प्राप्तिस्तस्योत्तरे दले। प्राकाम्यमग्निकोणे च वशित्वं नैर्ऋते दले। ईशित्वं वायुकोणस्थं सर्वज्ञत्वं तथेश्वरे" इति रुद्रयंत्रमुक्तम्। तत्र मूलमन्वेषणीयम्॥ गोचर्ममानं तु यत्र भ्रमति बद्धा गौः सवत्सा क्षितिमंडले। तत्सूत्रसं मितं क्षेत्रं गोचर्ममानमुच्यते। गोशतं वृषसंयुक्तं यत्रोपविशते भुवि। तद्भूमानं वदंत्येके गोचर्ममानमुत्तमम् इति।[1] अत्र गोचर्मणः स्वरूपमात्रमेव विवक्षितं नतु पारिभाषिकं गोचर्ममानमित्यपरे। यत्तु एकादशकलशस्थापनमुक्त्वा

---

१ अत्रैकस्मिन् पुस्तके " यत्तु दशहस्तेन दंडेन त्रिंशद्दंडानिवर्तनम्। दश तान्येव गोचर्म इति गोचर्ममानमुक्तं तद्दानादिविषयम्। क्वचित् " सप्तहस्तेन दंडेन " इत्य-पि पाठः " इत्यधिकम्।

तत्र रुद्रपूजनं रुद्रैश्चाभिमंत्रणमुक्तम् तत्काम्यं प्रयोगांतरं नतु रुद्रांगम्। यथाह वृद्धपराशरः। "एकादशशुभान्कुंभानाहृत्य विधिवच्च तान्। सहिरण्यान् सवस्त्रांश्च फलपुष्पोपशोभितान्। गंधोदकाक्षतैर्युक्तान् पूजयेद्रुद्रभक्तितः। अथैकादशभीरुद्रैरेकैकमभिमंत्रयेत्। रुद्रैः रुद्राध्यायैः। एवं संपूज्य तान्कुंभान्नमस्कृत्याभिमंत्र्य च। एकादशाहमात्मानमन्यं वा हितकाम्यया। विनायकोपसृष्टं वा स्नापयेत्काकवंध्यतम्। मृतवत्सां काकवंध्यां स्नापयेच्च तथाऽऽतुरान्। जपन्नेतत्सकृद्विप्रः सर्वदोषैर्विमुच्यते। अनडुवाहं च वस्त्रं च दद्याद्धेनुं च दक्षिणाम्। भोजयेद्विदुषो विप्रान् समाप्तौ कर्मणो द्विजः। भक्त्यैकादशवस्त्राद्यैर्यथाशक्त्या समर्चयेत्।" इति।

## ॥ अथ शिवपार्वतीसंवादः

उक्तं च व्रतखंडे हेमाद्रौ रहस्यकल्पेपि श्रीपार्वत्युवाच। " प्रेतप्रजाऽप्रजा वापि स्त्रीप्रजा वापि भावयेत्। ग्रहयोगान्विताया च त्यक्ता त्यजति वा पतिः। वद देव कथं तस्याः सर्वमेतद् व्यपोहति। जायते च तथाभीष्टं तत्सर्वं वद मे प्रभो!। श्री शिव उवाच। शृणु देवि प्रवक्ष्यामि सर्वमेतद् व्यपोहति। जायते च तथाभीष्टं तत्सर्वं कथयामि ते। गोमूत्रगोमयाभ्यां च भूशुद्धिः परिकल्पयेत्। आवृते च ततो देशे यत्र नान्यः प्रपश्यते। कुंभान समानयेत्तद्वद्दशैकं च तथा द्विजान् आहूय प्रार्थयेत्सर्वानर्चयेद् प्रियकृत्प्रियान्। प्रक्षाल्य स्थापयेत्कुंभान् पूरयेत्तीर्थवारिणा। कृत्वात्मरक्षां विधिवत् स्वस्तिकं च तथासनम्। ध्यायन्मां सर्वकामेशं प्राणानायम्य वाग्यतः। संकल्प्यावाह्य कुंभेषु मामेवात्रावहत्विति। आसादितसमस्तं च तथैव परिकल्पयेत्। आसादितं समस्तं पूजोपकरणं देवाय परिकल्पयेत्। आसादितैः समस्तपूजोपकरणैवमर्चयेदित्यर्थः। कुंभस्य बाह्यदेशे तु लोकपालान् प्रपूजयेत्। बौद्धायनोक्तविधिना गंगामीशानसन्निधौ त्रातारमिंद्रमित्यादयो मंत्राः संपुटे बोधायनोक्तास्तैर्मंत्रैर्लोकपालानर्चयेदिति बौधायनोक्तविधिनेत्यस्यार्थः ईशानमभ्यर्च्य तत्सन्निधौ गंगामपि पूजयेदिति। त्वरितेन च नत्वा मामिंद्रादीन्मूलमंत्रतः। प्रणवश्चादितः कार्यो नमश्चांते तथैव च। इंद्रादिपदमध्यस्तु मूलमंत्रः प्रकीर्तितः। त्वरितमंत्रस्तु "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वाभुवनाविवेश। तस्मै रुद्राय नमो अस्तु" इति तैत्तरीयशाखासु प्रसिद्धः। अस्याथर्वा ऋषिः अनुष्टुप्छंदः। त्वरितो रुद्रो देवता। नम इति बीजं। अस्त्विति शक्तिः। नमस्कारे विनियोग इति। रुद्रैकादशिनीमेकां स्पृष्ट्वा कुंभोदकं जपेत्। पुनः संपूज्य विधिवत् मामिंद्रादींस्तथैव च। एवं सर्वेषु कुंभेषु सर्वैः कार्यं द्विजोत्तमैः। ततः कुंभान समादाय क्रमात्मूर्ध्नि विसर्जयेत्। सर्वं कुंभो-

दकं तस्या यस्या दोषो निवर्तते। शिवः शिवमितीत्युक्त्वा ततः कुंभान् विसर्जयेत् । एतदेकादशगुणं कर्तव्यं द्विजसत्तमैः। एकादशेऽह्नि विधिवत्कर्तव्यं द्विजतर्पणम्। दत्त्वा च दक्षिणास्तेभ्यो नमस्कृत्य विसर्जयेत् एवं दोषाः प्रणश्यंति जायते च यथेप्सितम् । पुरुषस्यापि कर्तव्यं ग्रहरोगान्वितस्य च। पुष्ट्यायुर्बलकामस्य क्षत्रियस्य च पार्थिवः। प्रतिसंवत्सरं यस्तु चैत्रशुक्ले शुभे दिने । करोति श्रद्धया युक्तमनेकापद्विहन्यते । पृष्ठं त्वया यद् हृदि संस्थितं यत्प्रीतश्च येनाहमुवाच तुभ्यम् । दोषच्छिदं सर्वफलप्रदं च रहस्यमेतन्मतमुत्तमं मम " इति । अत्र च ऋत्विग्वरणांतं कर्म यजमानकर्तृकम् । कलशस्थापनादिविसर्जनांतं कर्म एकैकस्मिन् कलश एकैकऋत्विक्कर्तृकम् । एतेन यत्प्राचीनपद्धतिकारैः श्रीमहारुद्रांगत्वेन कलशस्थापनविधिना एकादशकलशस्थापनपूर्वकं तेष्वेकादशरुद्रपूजनमित्युक्तं तन्निर्मूलमित्युपेक्षणीयम् । "मानोमहांतमिति च सिद्धमंत्रं स्मरेत् द्विजः । स्वललाटे पुनर्ध्यायेत्तेजोरूपं शिवं द्विजः । इदं तु ध्यानमावाहनार्थम् । दशाक्षरेण मंत्रेण दद्यात्पादार्घकौ पुनः। न्यासमंत्रैश्च सोंकारैर्मानस्तोक इति ह्यपि । शंभवायेति मंत्रेण दद्याद् गंधोदकादिकम् । पुष्पधूपप्रदीपादीन् यथा लाभं निवेद्य च। दशाक्षरेण तेनैव नमस्कुर्यात्पुनर्द्विजः। शिखा तस्य तु रुद्रस्योत्तरं नारायणं स्मृतम् । शिरः पुरुषसूक्तंच शिवसंकल्पकं च हृत् । कवचं चाप्रतिरथं नेत्रं विभ्राड् बृहत्स्मृतम्। शतरुद्रियमस्त्रेषु देवस्यास्त्रं प्रकल्पयेत् "। इति। अत्र पठितोऽप्ययं षडंगन्यासः संपुटानंतरं ध्यानात्प्रागेवानुसंधेय इत्युक्तम् । पंचांगानि स्मरेदष्टप्रणवं च जपेद्द्विजः । उद्धृत्य प्रणवेनेशं विकिरीति विसर्जयेत्।" इति पंचांगानि सद्योजातादीनि पंचास्यानि स्मरेत् ध्यायेत् । अनेन च " पंचास्य सौम्यमात्मानम् " इत्यादिना विहितध्यानस्य कृतस्यापि पुनस्तत्कृत्वाजपेदिति विधीयते । तेनोक्तविधिना अष्टप्रणवं रुद्रं जपेदित्यर्थः । अथवा पंचांगानि सद्योजातादीनि पंचास्यानिस्मरेत्पूजयेत् । स्मरणपूर्वकत्वात्पूजनस्येत्यर्थः । एवं च पंचवक्त्रपूजनविषयकः शिष्टाचारोऽप्यनुगृहीतो भवति। " दशप्रणवसंयुक्ता " इत्यनेन दशप्रणवयोगविधानादष्टप्रणवं च जपेदित्यनेनेह रुद्रजपेऽष्टप्रणवयोगो विधीयते । अनेन रुद्रजपविधायकेन वाक्येनाष्टप्रणवयुक्तरौद्राध्यायापरपर्यायरुद्रमात्रस्यैवजपविधानाद् " वयंसोम " इत्यष्टकंडिकात्मकस्य सप्तकंडिकात्मकस्य वा महच्छिरसोजपोऽस्मिन्पक्षेऽनुक्तत्वान्नैव भवति । तेनाष्टप्रणवयुक्तरौद्राध्यायमात्रस्यैव जपः कार्यः। एवंविधरौद्राध्यायमात्रस्यैव जपः कार्यः । एवंविधरौद्राध्यायमात्रस्यैकादशगुणावृत्त्यैकोरुद्रो भवति । इत्थंभूतरुद्रस्यैकादशावृत्त्या एकादशावृत्त्या एकारुद्री भवति । एतादृश्याश्चरोप्या एकादशावर्तनेनैको महारुद्रो भवति । एतादृशस्य महारुद्रस्यैकादशगुणा वर्त-

नेनैकोऽतिरुद्रो भवतीत्येको रुद्रजपादिषु प्रकारः। नचायं प्रकारो बृहत्पराशरेणनोक्तः। "अष्टप्रणवं जपेत्" इति । "एकादशगुणान्नुद्रानावर्त्य" इत्यादिनाऽनेक-स्मृतिसिद्धपूर्वोक्तपंचप्रकारैकदेशभूतप्रकारद्वयकथनेनावशिष्टप्रकारत्रयस्यापि सूचित-त्वात् । अस्मिन् पक्षे चाविरुद्धत्वात्परोक्तश्चमकानुवाकजपः प्रवर्तत एव । यत्तु शिरसा सह रुद्राणां जप्तैर्दशशतैर्ध्रुवम् । सर्वे मंत्रा भवंत्यस्य ब्राह्मणस्योक्तकारि-णः" इति । यच्च "अथवा चरुभिक्षाशी सशिरं रुद्रसहस्रकं। जपेत्" इति बृह-त्पराशरेण शिरसा सह रुद्रजपविधानमुक्तं तदुक्तप्रकारापेक्षया प्रकारांतरमेव ज्ञेयम्। सहस्रसंख्यानिर्देशात्फलांतरनिर्देशाच्च । अत्र सहस्रसंख्याया रुद्रावृत्तिपक्षे "वयं-सोम" इति । शिरसः प्रतिरुद्रमावृत्तिः । शिरसा सहेति सहयोगे सहः । उक्तं च भगवता पाणिनिना "सहयुक्तेऽप्रधाने" इति । तृतीया शिरस अप्राधान्यं द्योतयति । अस्मिन् पक्षे च रुद्रजपानंतरं चमकजपविधानाच्छिरसो जपो नैव प्रवर्त्तत इति॥ इति बृहत्पराशरोक्तो रुद्रजपविधौ विशेषः ॥

## ॥ अथाभिषेकविधिः ॥

"अथातो रुद्रस्नानार्चनम्" इत्यादिना रुद्रेण करणभूतेनाथाद्रुद्रस्य स्नाना-भिन्नमर्चनं रुद्रस्नानार्चनं श्रीरुद्राभिषेक इत्यर्थः । तस्य विधिमिति कर्तव्यतामनुष्ठा-नप्रकारमिति यावत् । ननु च "जपहोमार्चनविधिं व्याख्यास्यामः" इति हि प्रा-गुक्तम् । अतः कथं होमविधिमनभिधायैवाभिषेकविध्यभिधानमिति चेत्सत्यम् जपविध्यपेक्षया होमविधौ न्यासादिविशेषविध्यभावाद्धोमेति कर्तव्यताश्च सर्वे कर्मसाधारण्येनान्यत्राभिहितत्वान्नात्र पृथक् तस्याभिधानम् । अभिषेके तु न्यासा-दिविशेषविधेः सत्वात्तस्य पृथगभिधानं युक्तमेव । तत्र न्यासविशेषमाह। "आ-त्मनि देवता स्थापयेत्" इत्यादिना । अत्र न्यासविशेषविधानान्नपूर्वोक्तन्यासनि-वृत्तिः । "जपहोमार्चनविधिम्" इत्यनेनाभिषेकेऽपि पूर्वोक्तन्यासानां विहितत्वा-त् । किंतु पूर्वोक्तानां पंचांगन्यासानां विहितानां "प्रजनने ब्रह्मा तिष्ठतु" इत्या-दीनां न्यासानां समुच्चयः । तेन "यातेरुद्र इति शिखायाम्" इत्यादीन्न्यासा-न्निधाय "प्रजनने ब्रह्मा तिष्ठतु" इत्यादयो न्यासा विधेयाः। "अग्निर्मे वाचि श्रि-तः" इति यथालिंगमंगानि समृज्येति । "अग्निर्मे" इत्यादिभिर्मंत्रैर्यथालिंगमंगा-नि संस्पृशेत् । अग्निर्मे " इत्यादयो मंत्राः प्रयोगे वक्ष्यंते । "अथैनं गंधादिभि-रात्मानं प्रत्याराधयेद्" इति। एनं रुद्रं आत्मानं प्रत्याराधयेत् रुद्ररूपिणं जीवात्मानं स्वशरीरं पूजयेदित्यर्थः । तत्रावाहनमंत्र आराधित इत्यादिकः । आवाहनव्यतिरि-क्तेतरोपचारेषु पंचसु षट्सु वा "त्र्यंबकं यजामहे" इत्ययं मंत्रः। अत्र नैवेद्यमपि मान-

सं परिकल्पयेदिति महार्णवकारः । एवमात्मपूजानंतरं शिवपूजाप्रकारमाह " आत्रा-वहंतु हरय " इत्यादिना " त्र्यंबकं यजामहे " इति मंत्रेण सह समुच्चितैः " सद्यो-जातं प्रपद्यामि " इत्येवमादिभिर्मंत्रैरावाहनाद्युपचाराः कार्या इत्युक्तं निर्णयसिंधौ शांतिरत्ने कमलाकरभट्टपादैः । " अब्लिंगाभिश्च " इति । अब्लिंगाः " आपो हिष्ठा " इत्याद्यास्तिस्रः । " अथास्याघोरतनूरघोरेभ्य इत्युपतिष्ठत इति । अथ पूर्वोक्तपूजानन्तरं अस्य रुद्रस्याघोरतनूरघोरादिशराण्युपतिष्ठते ॥ केन ॥ अघोरे-भ्य इत्यादिना सदाशिवों इत्यन्तेन ॥ उपस्थानानन्तरं कृत्यमाह ॥ अथैतस्य हिरण्येन मूर्ध्नि कलशेन इत्यादिना संततधारां इति ॥ संततधारापदं सहस्र-कलशाभिषेकस्याप्युपलक्षणं॥ एतदेव घटीस्नानमित्युच्यते॥ अतः स्थापनविधावपि पूर्वोक्तपंचांगन्यासादिकार्यम् । " नमस्ते रुद्र मन्यवे " इत्येकादशानामनुवाकानां जपांते जपांते " अग्नाविष्णू सजोषसा " इत्येकादशानुवाकानामेकमेकं जपेदिति । अत्रैकादशानुवाकशब्देन रौद्राध्यायो विवक्षितः । तैत्तरीयशाखासु रौद्राध्यायस्यैका-दशानुवाकात्मकत्वात् । वाजसनेयशाखासु नवानुवाकात्मकत्वेन रौद्राध्यायस्यैका-दशानुवाकात्मकत्वाभावाच्चातश्चैवमर्थः । " नमस्ते रुद्रमन्यव " इत्येकादशानुवा-कानां जपांते जपांते " नमस्ते रुद्रमन्यव " इत्याध्यायजपस्यांते समाप्तौ " अग्ना-विष्णू सजोषसा " इत्यादिकानामेकादशचमकानुवाकानां मध्ये एकैकं चमकानु-वाकं जपेदिति । इदं तु तैत्तरीयशाखाविषयम् । " अग्नाविष्णू सजोषसा " इ-त्यादिकानामेकादशचमकानुवाकानां तेषामेव समाम्नातत्वात् । वाजसनेयिनां तु चमकानुवाकानां " वाजश्चमे " इत्यादिकानामष्टानामेव समाम्नातत्वेनैकादश चमकानुवाकाभावादेकादशिन्यां चमकं विनैव रौद्राध्यायस्यैकादशधाऽऽवृत्तिः । " ए-कादशगुणान् वापि रुद्रानावर्त्य धर्मवित्। महापापैरपि स्पृष्टो मुच्यते नात्र संशयः " इति मिताक्षरायामत्रिणा "एकादशगुणान् रुद्रानावर्त्य याति रुद्रताम्" इति बृहत्प-राशरेण च रुद्रमात्रस्यैव जपोक्तेश्चमकानां रुद्रशब्दवाच्यत्वाभावाच्चेति केचिदाहुः । अपरे त्वाहुः परोक्तस्याविरोधिन उपादानस्य शाखांतराधिकरणन्यायमूलकत्वा-त्पूर्वोक्तकात्यायनादिवचनैरभिहितत्वादविरुद्धत्वाच्च वाजसनेयिनां चमकजपानु-ष्ठानं युक्तमेव सर्वांगोपसंहारेणानुष्ठातुं शक्तिमतां पुरुषधौरेयाणाम् । परन्तु एतावा-न्विशेषः । तैत्तरीयाणां चमकानुवाका एकादशसंतीति रुद्रशतरुद्रियापरपर्यायद्वयस्य रौद्राध्यायस्य प्रत्यावृत्त्येकैकस्य चमकानुवाकस्य विनियोगो युक्तः । वाजसनेयिनां तु चमकानुवाकानामष्टानामेव सत्वेन शतरुद्रियस्य प्रत्यावृत्त्येकैकस्य चमकानुवाक-स्य विनियोगासंभवादृषिवचनेषु चमकमात्रस्यैव जपे विनियोगश्रवणाच्च रुद्रस्य सर्वावृत्त्यंतेऽष्टौ चमकानुवाकाः पठनीया इत्यवगम्यते । यथा वसोर्धाराहोमे

" वसोर्धारां जुहोत्यौदुंबर्य्या पंचगृहीतं संततं यजमानोऽरण्येऽनूच्येऽग्निमात्रे वाजश्चम इत्यष्टानुवाकेन " इत्यष्टानुवाकात्मकचमकमंत्रसमुदायस्यैकमंत्रत्वेन विनियोगः कात्यायनेनोक्तस्तेनैव न्यायेनेहाप्यष्टानुवाकानामेकमंत्रत्वमेव युक्तमिति । अत्र च यद्वाजसनेयिनां श्रीरुद्रस्य सर्वावृत्त्यंते चमकानुवाकानामेकमंत्रत्वेन विनियोग इत्युक्तं तदयुक्तम् । यतः " नमस्ते रुद्रमन्यव " इत्येकादशानामनुवाकानां जपांते " अग्नाविष्णू सजोषसा " इत्येकादशानुवाकानामेकमेकं जपेदिति बौधायनेन चमकानुवाकानामेकादशधा विनियोगाभिधानात् । हेमाद्रौ कौशिकोऽपि । " जपित्वा सर्वरुद्रांश्च चमकाद्यं ततो जपेत् । पुनरेतज्जपेत्सर्वं द्वितीयं चमकं तथा । एवमेकादशगुणान् क्रमेण चमकाँस्तथा । रुद्रैकादशिनी त्वेषा सर्वकामफलप्रदाः इति । चमकानां तथैव विनियोगमाह। अतः शास्त्रेण यथा विनियोग उक्तस्तथैव वक्तुं युक्तः । यद्यपि वाजसनेयिनाम् "अग्नाविष्णूसजोषसा" इत्यादिकतंत्रं चमकानुवाकेषु नास्ति। नापि चमकानुवाकनिष्ठमेकादशत्वं तथापि " वाजश्चमे " इत्यादिकानष्टौ अनुवाकानेकादशधाश्रुत्यनुसारेण विभज्य श्रीरुद्रस्य प्रत्यावृत्त्येकैकस्य चमकविभागस्य विनियोगः संभवतीति न किंचिद्वैषम्यम् । हेमाद्रावप्येवम् । यत्तु ऋषिवचनेषु चमकमात्रस्य जपे विनियोगश्रवणादित्युक्तं तन्न । विशेषविधिना सामान्यविधेरुपसंहारात् । यच्च वसोर्धाराहोमे कात्यायनेनाष्टानुवाकात्मकचमकमंत्रसमुदायस्यैकमंत्रत्वमुक्तं तत्तस्य वसोर्धाराहोमविषयत्वेन श्रुत्यैवाभिहितत्वान्न प्रकृतश्रीरुद्रजपादिविषयमिति सर्वमनवद्यम् । शिष्टाचारोऽप्येवम् ।

## अथ चमकानुवाकानामेकादशधाविभागःश्रुत्यनुसारेणेत्थं कल्प्यते

तत्र श्रीरुद्रस्यावृत्तिचतुष्टयपर्यंतमेकैकानुवाकः पठनीयः । तत्राद्यावृत्तौ " वाजश्चमे " इति चतस्रः। द्वितीयावृत्तौ "सत्यं चमे" इति चतस्रः। तृतीयावृत्तौ " ऊर्क्चमे " इति चतस्रः । तुरीयावृत्तौ " अश्माचमे " इति तिस्रः ।अतःपरं श्रुत्यनुसारेण विभागः कल्पनीयः। तथाहि। " अथार्धेंद्राणि जुहोति " इति श्रुत्या " अग्निश्चमे " इत्यादीनां तिसृणां कंडिकानामर्धेंद्रसंज्ञा विहिता । अतः पंचमावृत्तौ तास्तिस्रो जपेत्। " अथ ग्रहान् जुहोति " इति श्रुत्या " अंशुश्चमे " इत्यादीनां तिसृणां कंडिकानां ग्रहसंज्ञाभिहिता अतः षष्ठावृत्तौ तास्तिस्रो जपेत् । " अथैतान् यज्ञक्रतून् जुहोति " इति श्रुत्या "अग्निश्चमे घर्मश्चमे" इति द्वयोः कंडिकयोर्यज्ञक्रतुसंज्ञाभिहिता। ततश्च सप्तमावृत्तौ ते द्वे जपेत्। "अथायुजस्तोमान् जुहोति" इत्यनया श्रुत्या " एकाचमे तिस्रश्चमे " इत्येतस्या अयुक्स्तोमसंज्ञाभिहिता। अतश्चाष्टमावृत्तौ तामेकामेव जपेत्। अथ युग्मतो जुहोति " इति श्रुत्या " चतस्रश्चमे " इत्येतस्या युग्मस्तोमसंज्ञाभिहि-

ता। अतो नवमावृत्तौ तामेव जपेत्। “ अथ वयांसि जुहोति ” इति श्रुत्या “ अयवि-श्रमे ” इत्यनयोः कंडिकयोर्वयः संज्ञा विहिता। अतो दशमावृत्तौ ते द्वे जपेत्। “ अथ नामग्राहं जुहोति । अथ कल्पान् जुहोति ” इति श्रुत्या “ वाजाय स्वाहा । आयुर्यज्ञेन कल्पताम् ” इति द्वयोर्नामग्राहकल्पसंज्ञे क्रमादभिहिते। अत एकादशावृत्तौ परिशेषात्ते द्वे जपेदिति चमकानुवाकानां श्रुतिसंमत एकादशधा विभागः ।

अयं चमकानुवाकजपप्रकार एकादशधावृत्त्यात्मके रुद्रे एव। रौद्राध्यायात्मकरूपकाख्यरुद्रजपादौ तु अष्टानुवाकात्मकचमकमंत्रसमुदायस्यैकमंत्रत्वमेव । यतः कात्यायनादिभिः कल्पसूत्रकारैर्वसोर्धारायां चमकमंत्रसमुदायस्यैकमंत्रत्वेनाभिहितत्वात्तेनैव न्यायेनेहाप्येकमंत्रताया एव युक्तत्वात्। “ सर्वेषां पारे पुनराराधयेदुत्तमाराधनेन ” इति । सर्वेषामभिलषितनमकावृत्तिविशेषाणां पारे समाप्तौ उत्तमाराधनेन पुनराराधयेत् अभिषेकानंतरं पूर्ववद्देवं पुनः पूजयेदित्यर्थः । “ पुनराराधयेदुत्तमाराधनम् ” इति पाठे तु उत्तमाराधनमभिषेकानंतरं पूजां पुनः पश्चादाराधयेत्कुर्वीतेत्यर्थः । पुनः शब्दः प्रथमपूजापेक्षया नत्वभिषेकांते द्विःपूजापेक्षया ॥ “ तदेतद्विधानं प्रोक्तम् ” इति । आदावेव पूजाविधानं प्रोक्तमित्यर्थः। अथवा तदेतद्विधानमुत्तमाराधनमभिषेकादिषु प्रोक्तमित्युपसंहारः ।

## ॥ अथ काम्यप्रयोगे विशेषः “ दक्षिणाविषयः ” ॥

अधुना व्याधिविमोचनार्थे कर्मणि विशेषं दर्शयन्नधिकारिभेदाद्भिन्नानि फलानि दर्शयति । “ तेनाभिषिक्तेनोदकेन ” इत्यादिना । अक्षीभ्यामित्यनुवाकस्तु प्रयोगे वक्ष्यते। “ आचार्याय दक्षिणां ददाति दशगाः सवत्साः” इत्यादि। इदं सूत्रमृत्विक्कर्तृकपक्षपरतया व्याख्येयम् । पक्षांतरपरत्वे तस्य वैयर्थ्यप्रसंगात् । आचार्यग्रहणमृत्विजामुपलक्षणम् । यद्यपि ऋत्विग्भ्यो दक्षिणा पृथक् न विहिता तथापि आचार्याय देयत्वेन विहिताया दक्षिणाया अर्धमृत्विग्भ्योऽपि देया। सर्वत्र ऋत्विग्दक्षिणापेक्षया आचार्यदक्षिणाया द्वैगुण्यविधानात् । यद्वा विशेषाश्रवणात्समा वा देया । समं स्यादश्रुतत्वादिति न्यायात् । अपरे त्विदमन्यथा व्याचक्षते । अत्र सूत्रकृता मुख्यतयाभिषेकस्य स्वकर्तृकस्यैव विहितत्वात् ॥ “ स्वयं कर्तुमशक्तश्चेद् ऋत्विग्भिः कर्म कारयेत् ” इति परशुरामेणापि स्वकर्तृकत्वासंभवे ऋत्विक्कर्तृकत्वस्य विहितत्वादभिषेकस्य स्वकर्तृकत्वे आचार्याभावात्तदभावे च “ आचार्याय दक्षिणां ददाति ” इत्यस्य वैयर्थ्यप्रसंगात्स्वकीयाचार्याय कर्मणः सगुणत्वार्थमिदं दक्षिणादानं कर्तव्यमिति विधीयते विवाहे “ आचार्याय वरं ददाति ” इतिवत् । किंचास्य ऋत्विक्कर्तृकपक्षपरत्वे ऋत्विग्दक्षिणाप्युपदिश्येत । न च सेहोपदिष्टा । न चाचा-

र्यग्रहणमुपलक्षणम् । लक्षणाप्रसंगात् । तस्मात्कर्मणः सगुणत्वार्थमिदं दक्षिणादानं स्वकीयाचार्यसंप्रदानकं विधीयत इति । यद्वा । आचार्यशब्देन ऋत्विगेवोच्यते। आचार्यश्चेदिदं ब्रूयादिति पूजायामाचार्य आचारं ग्राहयत्याचिनोत्यर्थान्" इति यास्कोक्तेः । तदर्थमिदं दक्षिणादानं विधीयत इति न काप्यनुपपत्तिः आचार्यायेत्ये कत्वमविवक्षितम् । उद्देशविशेषणत्वात् । तेन ऋत्विग् बहुत्वे सर्वेभ्यो दक्षिणा देया । प्रत्यक्षाया गोरभावेतु तन्मूल्यं देयम् । "गवामभावे दातव्यं तुल्यं मूल्यं न संशयः" इत्युक्तेः । मूल्यं तु "गवामभावे निष्कं स्यात्तदर्धं पाद एव च" इति ज्ञेयम् । निष्कस्तु चतुः सौवर्णिकः । "निष्कं सुवर्णाश्चत्वारः" इति याज्ञवल्क्योक्तेः । मूल्यभूतैतावद्धिरण्यासंभवे सौवर्णनिष्कपरिमितं रजतं ग्राह्यम् । तदसंभवे तदर्धम् । अत्यशक्तौ पादार्धम्॥ तत्समं धान्यादीति स्मृत्यर्थसारः। यत्तु षट्त्रिंशन्मते । "धेनुः पंचभिराढ्यानां मध्यानां त्रिपुराणिका । कार्षापणैकमूल्या हि कनिष्ठानां प्रकीर्तिता" इत्युक्तम् । यत्तु कात्यायनेन मूल्याध्याये "द्वात्रिंशत्पणिका गावः" इत्युक्तं तस्य शक्तितारतम्येन व्यवस्था बोध्या । द्वात्रिंशत्कृष्णतिलपरिमितं रजतं पुराणम्। महार्णवे सिद्धांतशेखरे विशेषः। दक्षिणा ह्युत्तमा मध्या चाधमेति त्रिधा मता॥ तत्र सौवर्णनिष्काणां दशसाहस्रिकोत्तमा । तदर्धं मध्या प्रोक्ता तृतीया त्रिसहस्रिका । उत्तमा त्रिशती वा स्यान्मध्यमा द्विशती भवेत्। शतमात्राधमा ज्ञेया प्रकारः कीर्त्यतेऽपरः। उत्तमा च चतुःषष्ठिस्तदर्धं मध्यमा स्मृता । चतुर्विंशतिरन्या स्यादथान्यो त्रिविधिरुच्यते । सहस्रं दक्षिणा देया दशपुरुषकर्तृके। शतानि पंचदेयानि ऋत्विक् पंचककर्तृके। अथैककर्तृके देयं शतत्रयमिति स्थितिः । सर्वत्र द्विगुणां दद्यादाचार्याय तु दक्षिणाम् । बहुपुरुषनिष्पाद्ये उत्तमा प्रतिपूरुषम् अथैककर्तृके कर्तुरेकस्यैवोत्तमा मता । राज्ञां तत्सदृशानां च दक्षिणा कथितोत्तमा । अन्येषां मध्यमादीति दक्षिणादाननिर्णयः । अनुक्तदक्षिणाकेषु प्रयोगेष्वियमीरिता । विभवे सति यो मोहान्न कुर्याद्विधिविस्तरम् । नैव तत्फलमाप्नोति प्रलोभाक्रान्तमानसः। " इति ॥

## ॥ अथात्राधिकारिणः ॥

ते च त्रैवर्णिका एव न पुनः स्त्रीशूद्रानुपनीताद्यास्तेषां वैदिकमंत्रयुक्तकर्मस्वध्ययनाद्यभावेन साक्षाद्वचनाभावेऽनधिकारात् । अन्यत्रैतस्य विस्तरेण निर्णीतत्वाच्च । [1] हेमाद्रौ कालिकापुराणे सनत्कुमार उवाच "अक्रोपः श्रद्दधानाश्च निर्दंभ-

---

१ एकस्मिन् पुस्तके तु । परशुरामोऽप्याह "त्रैवर्णिकाधिकारं स्यान्नैव सर्वाधिकारिकम् नाधिकारो हि शूद्राणां यतः कर्मणि वैदिके । नैवास्ति वेदवाक्यस्य श्रवणेऽप्यधिकारिता॥ तस्य स्यादधिकारित्वं कथं कर्मणि वैदिके । अतो रुद्राद्यनुष्ठाने सर्वस्मिन्नपि वैदिके । त्रैवर्णिकोधिकारी स्यान्न शूद्रादिरिति स्थितिः" । इत्यधिकम्.

विवर्जितः । शूद्रान्नेन संस्पृष्टस्तस्य ते फलदोऽनघ । यश्च ब्रूते सदा सत्यं न वाचेति यथेष्टतः । तानेवाशृण्वतः शूद्राँस्तस्य ते फलदः सदा । परस्वं परदारांश्च कामयेत हरेत्तु यः। गुरोश्चालीकनिर्बंधी न तस्य फलदो ध्रुवम् । यः क्रुद्धो हसते लोकान् ब्राह्मणाँश्च तपस्विनः। शपत्यहं कृतोमूढ अफलास्तस्य ते ध्रुवम् । नैत्यकं विधिमुत्सृज्य हीनः स्तेयी यथेष्टभुक् । तिष्ठते सततं मृत्योर्यस्तस्य फलदा नते" इति । अयं च श्री रुद्रजपोऽग्निहोत्रदर्शपूर्णमासादिवन्नित्यः काम्यश्च । तत्र श्रुतिस्मृतिपुराणेषु फलश्रवणात्काम्यः । नित्योऽपि । यावज्जीवं जपेद्रुद्रं पोरुषं सूक्तमेव वा। ते विशंति महादेवं गृहं गृहपतिर्यथा । " इति वाक्ये यावज्जीवं रुद्रजपकर्तव्यताविधानात् । "यो हि रुद्रानधीत्यापि न चाभ्यसति मूढधीः। अभाग्यो नैव तत्तुल्यः पृथिव्यामस्ति कश्चन" इति हेमाद्रौ कालिकापुराणे जपापरपर्यायाभ्यासाकरणे निंदाश्रवणाच्च। तदिदं रुद्रजपादिकमसति सामर्थ्ये ऋत्विग्द्वारा कुर्यात् । तदाह परशुरामः "स्वयं कर्तुमशक्तश्चेदृत्विग्भिः कर्म कारयेत् " इति । ऋत्विजस्त्वनूचाना बाह्यांतःशुद्धाः समदर्शिनो यजुःशाखाध्यायिनो रुद्रजपनिरता मितवाचो मिताहारा इत्यादि लक्षणलक्षिता ज्ञेयाः । परशुरामोऽपि । "विप्राः कार्याः सदाचाराः श्रोत्रियाः सत्यवादिनः। षट्कर्मनिरताः श्रेष्ठाः साधवश्च बहुश्रुताः । जपनिष्ठास्तपोनिष्ठा धर्मिष्ठा वेदवादिनः । अनूचानाः कुलीनाश्च शैवशास्त्रविशारदाः । पुण्यपापविचारज्ञा वेदवेदांगपारगाः । इति ॥ अनूचाना प्रवचनसमर्थाः ।

## ॥ अथ बृहत्पराशरोक्तषट्कर्माणि ॥

संध्या स्नानं जपश्चैव देवतानां च पूजनम् । वैश्वदेवं तथातिथ्यं षट्कर्माणि दिने दिने " इति । पर्वतं दीपितं दृष्ट्वा सर्वे यांति मृगादयः । तथा सर्वाणि पापानि वेदाभ्यासरतं द्विजम् । वेदः शिवः शिवो वेदो वेदाध्यायी द्विजः शिवः । तस्मात्सर्वप्रयत्नेन वेदाध्ययनमाचरेत् । शरीरे यस्य वेदस्य कंडिकैकापि तिष्ठति । न स लिप्येत पापेन पद्मपत्रमिवांभसा । वेदाक्षराणि यावंति पठितानि द्विजातिभिः । तावंति हरिनामानि पावनानि द्विजन्मनाम्। " इत्यादिवाक्येभ्यो वेदाध्यायिनोऽति श्रेष्टाः रुद्रजपनिरतास्तु तेभ्योऽपि श्रेष्ठतमाः । यथोक्तं बृहज्जाबालोपनिषदि । अनुपनीतशतमेकमेकेनोपनीतेन तत्समम् । उपनीतशतमेकमेकेन गृहस्थेन तत्समम् । गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समम् । वानप्रस्थतमेकमेकेन यतिनातत्समम् । यतीनां च पूर्णशतमेकमेकेन रुद्रजापकेन तत्सममिति । यजुर्विधानेपि । "बहूनां समवेतानां वेदांगविदुषामपि । रुद्रजाप्ये स्थितं दृष्ट्वा हव्यकव्ये नियोजयेत् । न पिशाचा न रक्षांसि न देवविद्विषो जनाः। हविर्विलुप्य गच्छंति संस्थिते रुद्रजापिनि । अनुपनीतशतं चैकमुपनीतस्तु तत्समः । उपनीतशतं चैकं वेदाध्यायी तु तत्समः ।

वेदाध्यायिशतं चैकं वानप्रस्थश्च तत्समः । वानप्रस्थशतं चैकं यतिरेकश्च तत्समः । यतीनां शतमेकं तु रुद्रजापी तु तत्समः। " इति बृहत्पराशरोपि " द्विजः स्वदार संतुष्टः शुचिः स्नातो जितेंद्रियः। जपतर्पणहोमादौ रतो यो वत्सरं जपेत् । दशाना-मश्वमेधानां फलं प्राप्नोति वै द्विजः । सुवर्णपृथिवीदानपुण्यभाक् प्रजायते । महापापो-पपापैश्च मुक्तो रुद्रत्वमृच्छति। एकादशगुणान् रुद्रानावर्त्य याति रुद्रताम्। रुद्रजापी शुचिः पुण्यः पांक्तेयः श्राद्धभुक् वरः । वंशानां विंशतिं चैकां तारयेद्रुद्रजाप्यकृत्। एकतो यो-गिनः सर्वे ज्ञानिभिः सह सद्व्रतैः। एकतो रुद्रजापी तु मान्यः सर्वदिवौकसाम् पात्रमत्र-पवित्रं च नाधिकं रुद्रजापिनः। तस्मै दत्तं हुतं भुक्तं तदानंत्याय कल्प्यते ।" इति । ननु च यजुः शाखाध्यायिन एवेत्ययं कुतो नियम इति चेदुच्यते । " अथातः शत-रुद्रियं जुहोति " इत्यादि श्रुतिविहितशतरुद्रियहोमशेषभूतरौद्राध्यायलक्षणमंत्र-समुदायस्य रुद्रशतरुद्रियरूपसमाख्याद्वयपुरस्कारेण यजुर्वेदशाखास्वेव समाम्नात-त्वेन तदितरवेदशाखासु तदभावेन च यजुर्वेदभिन्नवेदशाखीयानां शतरुद्रियाप-रपर्यायश्रीरुद्राध्ययनाभावेन तज्जपादावनर्हत्वात् । अत एव बह्वृचाश्छंदोगा आथर्वणिकाश्च विप्रा रुद्रजपादावार्त्विज्ये वर्ज्याः । यथाह शाट्यायनः । " बह्वृचः सामगाश्चैव तथा चाथर्वणा द्विजाः । महारुद्रजपे नैव शस्तास्ते श्रुतिधर्मतः " इति । कैश्चिदिदं कात्यायननाम्नोदाहृतम् । उशना अपि । ऋग्वेदी ब्रह्मवेदी वा पितृवेदी तु यो द्विजः । घोराशांततरे रौद्रे जपे तान् परिवर्जयेत् "। इति । पितृवेदी छंदोगः। "यद्येकं भोजयेच्छ्राद्धे छंदोगं तत्र भोजयेत् ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते " । इत्यादिवचनैः । पैत्र्ये कर्मणि छंदोगस्य प्रशस्तत्वेन वि-प्रद्वारा सामवेदस्यापि पितृसंबंधात् । ब्रह्मवेदी आथर्वणः । घोराश्चाशांताश्चघोरा-शांताः । अतिशयेन घोराशांतास्ते घोराशांततराः । तथाच श्रुतिः । तेषां वा उभ-यतो नमस्कारा अन्येऽन्यतरतो नमस्कारा अन्ये ते हते घोरा अशांततरा य उभयतो नमस्कारा उभयत एवैतानेतद्यज्ञेन नमस्कारेण शमयति ते विद्यंते यस्मिन् सघोरा शांततरस्तस्मिन् अर्श आदित्वात्मत्वर्थीयोऽच् । रौद्रे रुद्रदेवताकशतरुद्रियविषयके जपे इत्यर्थः । बह्वृचाद्या अपि याजुष रुद्राध्ययनवंतो रुद्रजपसमर्थास्तु वरीतव्याः । याजुषश्चेद् यजमानस्तदा सर्वेऽप्यृत्विजो यजमानसमशाखीया एव न पुनर्भिन्न भिन्नशाखीयाः। तथा सति " अक्रिया त्रिविधा प्रोक्ता " इति पूर्वोदाहृत-छंदोगपरिशिष्टस्थकात्यायनवाक्ये परशाखोक्तकर्मानुष्ठानस्याकरणपरपर्यायाक्रिया-त्वोक्तिर्विरोधापत्तेः । स्वशाखाविहिते श्रीरुद्रजपादावनुष्ठेयेऽन्यशाखीयानामार्त्विज्य प्रसक्तेरभावात्। एतेनानेकयजुःशाखीयर्त्विजां वरणमाचरतो मूर्खा एवेत्युपेक्षणीयाः

यजुर्वेदशाखातो भिन्नबहृच्चादिशाखीयश्चेद्यजमानस्तदा यजमानपरंपरागृहीतयजुः शाखीया एवार्त्विजो नत्वनियमेन यत्किंचिद्यजुः शाखीयाः । " वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् " इति याज्ञवल्क्येन वेदाध्ययनं विदधताऽनेकवेदाध्ययनपक्षे वेदशब्देन तत्तद्वेदनिष्ठस्वपरंपरागृहीतशाखीया विवक्षिततत्वेन स्वपरंपरापरिगृहीतयजुः शाखायाः स्वशाखात्वबोधनात् । एतच्च प्राक् सविस्तरं निर्णीतम् । क्षत्रियवैश्ययोरन्यतरश्चेद्यजमानस्तदा पुरोहितशाखायाः। पुरोहितश्च वरणसंपादितः पारंपर्यागत एव न पुनर्यः कश्चित् । वरणेन पुरोहितसंपादनं च वरणेन पुरोहितं भावयेदित्यर्थकात् "पुरोहितं वृणीत " इति श्रुतिवाक्यात्सिद्धम् । तन्नाशादौ तु तत्सदृशं पुरोहितांतरमुपादनीयम् । सादृश्यं चैकगोत्रैकवेदशाखाध्ययनत्वमादाय ज्ञेयम्।

## ॥ अथ रुद्रजपादौ वर्जनीयाविप्रा उच्यन्ते ॥

ते च परशुरामेणोक्ताः। " काणः कुष्ठिर्जडः क्रोधी पुनर्भूः श्यावदंतकः। निंदितः पतितः क्लीवः कुदेशी वेदवर्जितः। हीनांगोप्यधिकांगो वा छिन्नांगः कर्कशः शठः। मागधो वामनः कृष्णो द्विजो वर्ज्यो जपादिषु " इति । अक्षतायां क्षतायां वोत्पन्नः पुनर्भूः । छिन्नांगो विद्धप्रजननः । अंगांतरछिन्नोऽपि । कृष्णोऽत्यंतं कृष्णवर्णः ।

## ऋत्विग्संख्यामाह परशुरामः

" आहूय ब्राह्मणान सर्वान् पूर्वमेव परीक्षितान् । रुद्रसंख्यास्तु कर्तव्याः स्वशक्त्यापेक्षयाथवा । एको वा स्याद्विधानज्ञः कुर्याद्वा सर्ववित्स्वयम् । " इति ॥ महार्णवे तु । " युग्मशो ऋत्विजः प्रोक्ता अष्टौ ते वेदपारगाः। कंदमूलफलाहारा दधिक्षीराशिनोऽपि वा । " अतो यत्र कर्मातिवेगेन निर्वाह्यं भवति तत्र यावद्भिः ऋत्विग्भिः कर्मवेगेन निर्वहति तावतो वृणीत इत्युक्तम् । नारायणभट्टास्तु । रूपक एक एव॥ रुद्री लघुरुद्र महारुद्रेष्वेक एकादश वा । अतिरुद्रे एकादश, एकविंशत्युत्तरं शतं चेति ऋत्विक्संख्या । प्रतिनिधिपक्षे त्वनियम इति साम्प्रदायिका इति विशेषमुक्तवंतः । स्वस्याशक्तौ तु स्वप्रतिनिधित्वेन जपहोमाभिषेकार्थं ब्राह्मणान वृणुयादित्युक्तं नारायणभट्टैः । सति सामर्थ्ये तु स्वयमृत्विङ्निरपेक्षः कुर्यात् । तदाह परशुरामः । " एको वा स्याद्विधानज्ञः कुर्याद्वा सर्ववित्स्वयम् । " इति ।

## ॥ अथ कर्तृनियमानाह बृहत्पराशरः ॥

" अथातः सिद्धिकामः सन् कंदमूलफलाशनः। गोमूत्रयावकक्षीरदधिशाकाद्यभोजनः। हविष्यभोजनो वासो विप्रो मुन्यंन्न भोजनः । जपहोमादिकुर्वाणो यथोक्तफलभाग्भवेत् " इति । याज्ञवल्क्योऽपि । शाकयावकभक्ष्याणि पयोमूलफलानि च। विशशृंगाटकं चैव हविष्यान्नानि यानि च दधिसर्पिस्तथा ह्यापः प्रशस्तान्युत्तरोत्त-

रम्। चरवो ह्युपवासश्च भैक्ष्यनक्तमयाचितम्। एतान्यत्र व्रतान्याहुः शस्तानि जपकर्मणि " इति। बृहत्पराशरः। धीरो दृढव्रतो मौनी जितक्रोधो जितेंद्रियः। धौतवासास्त्वधःशायी रुद्रलोके महीयते "। अत्राधः शब्दः खट्वा व्युदासार्थो नास्तरणव्युदासार्थः।

## ॥ अथ जपधर्माः ॥

तत्र योगी याज्ञवल्क्यः। विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः। उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः " इति। उपांशु मानसयोर्लक्षणमाह स एव। "विना शब्दं जपो यस्तु चलजिह्व द्विजच्छदः। उपांशुं तं जपं प्राहुर्मनसा मानसं बुधाः। ध्यायेत मनसा मंत्रं जिह्वोष्ठौ न विचालयेत्। न कंपयेच्छिरो ग्रीवां दंतान्नैव प्रकाशयेत् " इति। तत्र हेतुमाह स एव। यक्षराक्षसभूतानि सिद्धविद्याधरोरगाः। हरंति प्रसभं यस्मात्तस्माद् गुप्तं समाचरेत्। " इति। " प्रच्छन्नानि च दानानि ज्ञानं च निरहं कृतम्। जपानि च सुगुप्तानि तेषां फलमनंतकम्। मानसः शांतिकजप उपांशुः पौष्टिकः स्मृतः। सशब्दश्चाभिचारश्च जपस्तु त्रिविधः स्मृतः" इति। तथा। " नच क्रमन्न व हसन् न पार्श्वमवलोकयन्। नापाश्रितो न जल्पँश्च न प्रावृतशिरास्तथा। जपकाले न भाषेत व्रतहोमादिकेषु च। एतेष्वेवावसक्तस्य यद्यागच्छेद् द्विजोत्तमः। अभिवाद्य ततो विप्रं योगक्षेमं च कीर्तयेत्। स्त्रीशूद्रपतिताँश्चैव पाखंडिनो रजस्वलाम् जपकाले न भाषेत व्रतहोमादिकेषु च यदिवाग्यमलोपः स्याज्जपादिषु कथंचन। व्याहरेद्वैष्णवंमंत्रं स्मरेद्वाविष्णुमव्ययम्। तूष्णीमासीनश्च जपँश्चंडालपतितादिकान्। दृष्ट्वा तीर्थमुपस्पृश्य भाष्य स्नात्वा पुनर्जपेत्। आचम्य प्रयतो भूत्वा जपेदशुचिदर्शने " इति। बृहस्पतिः। " नमः संहरणं शौचं मौनं मंत्रार्थचिंतनम्। अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवे "। इति श्रीरुद्रजपस्तु स्वरपूर्वकं कार्यः। " यज्ञकर्मण्यजपन्यूंखसामसु " इति पाणिनिना " यज्ञकर्मणि सुब्रह्मण्या साम जपन्यूंखयाजमानवर्जम् " इति कात्यायनेन च यज्ञकर्मणि जपादिवर्जमेकश्रुतिविधानेन जपादिषु त्रैस्वर्यावगमात्। " मंत्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो नतमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधात्। " इति महाभाष्याच्च। अतो वैदिकमंत्रमात्रजपे त्रैस्वर्यमेवेति ध्येयम्। स्वर दर्शनं तु हस्तेनैव " हस्तेन इति प्रातिशाख्यसूत्रात्। हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्। ऋग्यजुः सामभिः पूतो ब्रह्मलोके महीयते। हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्। ऋग्यजुः सामभिर्दग्धो वियोनिमधिगच्छति " इति नामदेवान्हिके पाणिनिनाऽभिहितत्वाच्च। तत्र विशेषः सोन्नतंतुकरं कृत्वा सुव्यक्तांगुलिरंजितम्। स्वरविच्च स्वरं कुर्यात्प्रादेशदेश गामिनम्। इति। अभिषेकादौ तु हस्तस्य

व्यापृतत्वान्न हस्तेन स्वरप्रदर्शनम्। एवं गायत्रीजपादावपि न हस्तेन स्वरप्रदर्शनम्। गणनायां हस्तस्य व्यापृतत्वात्।

## ॥ अथ मुहूर्तविचारः ॥

श्रीरुद्रजपाद्यारंभस्तु[1] यदैव श्रद्धोत्पद्यते तदैव कार्यः। "न श्वःश्वमुपासीत कोहि मनुष्य श्वो वेद" इति श्रुतेः। श्वःश्वःकरवाणीत्येवमुपासनाकालांतरप्रतीक्षा न कार्या। हि यस्मात् मनुष्यस्य श्वः कालसंबंधिजीवनं को वेद को नाम जानीयात्। आयुषोऽस्थिरत्वादिति श्रुत्यर्थः। परशुरामोऽप्याह। "यदैव जायते वित्तं चित्तं श्रद्धासमन्वितम्। तदैव पुण्यकालोऽयं यतोऽनियतजीवितम्। अतः सर्वेषु कालेषु जपस्यारंभणं शुभम्" इति। सति संभवे तु दिनं शोध्यमेव। जपश्चानध्यायान् वर्जयित्वा स्वाध्याये कार्यः। यथोक्तं परशुरामकारिकायाम्। "अल्पं जपेदनध्याये पर्वण्यल्पतरं जपेत्। वेदाँश्चैव तथा रुद्रान् स्वाध्याये केवलं जपेत्। अनध्यायेष्वधीयंते शक्रः किं न हनिष्यति। हता नारद देवेन मृताः स्वर्गं न यांति ते" इति। तथा तत्रैव। इंदोर्वृद्धिक्षये प्राप्ते ब्रह्मयज्ञं नकारयेत्। न जपेदैदिकं जाप्यं गायत्र्यष्टोत्तरं शतम्" इति। अन्ये त्वाहुः। स्वाध्याय उपक्रांतो नियमेनान्वहमनुष्ठीयमानः श्रीरुद्रजपोऽनध्यायेऽपि कर्तव्य एव। यथाहांगिराः। दशोत्तरोत्तरगुणः प्रकाशोपांशुमानसः। जपो वेदोपनिषदां य उक्तः सर्वपापहा। अनध्यायेऽप्ययं कार्य इत्याह भगवान् मनुः" इति। मनुरपि। "वेदोपकरणे चैव जपे चैव तु नैत्यके। नानुरोधोऽस्त्यनध्याये होममंत्रेषु चैव हि"। इति। वेदोपकरणमुपाकर्म। एवं नियमेनान्वहमनुष्ठीयमानः सहस्रादिसंख्याविशिष्टो गायत्रीजपोऽनध्यायेऽपि कर्तव्य एव। "अनध्यायेऽप्ययं कार्यः इत्युक्तेः। "जपे चैव तु नैत्यके" इत्युक्तेश्च। "तेनेह तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशश्च" इत्यापस्तंबोक्तौ ब्रह्मयज्ञतदात्मनो देशस्य चाशुचितारूपौ द्वावेवानध्यायौ नत्वन्येऽनध्यायाः। अतः स्मृत्युक्ताः परशुरामोदाहृताः। अन्येऽनध्याया अध्ययनविषया नियमवद्विषयाश्च। तेनानियमतःकादाचित्कानुष्ठाने त्वनध्याये श्रीरुद्रजपो न भवत्येव। एवं गायत्रीजपोऽप्यनध्यायेऽल्पीयानेव कर्तव्यो न तु सहस्रादिसंख्याविशिष्टः। तथा। आशौचप्रवृत्तेः पूर्वं देवार्चनश्रीरुद्रजपादेरुपक्रमे कृते समा-

---

१ एकस्मिन् पुस्तके "पराशरेणोक्तः। "वैशाखे श्रावणे मासे वाश्विनेमार्गशीर्षके। माघफाल्गुनयोर्वापि सिते पक्षे शुभे दिने। रुद्रारंभः प्रकर्तव्यः पुत्रपौत्रादिवृद्धये। कार्तिके स्वर्णलाभःस्यादिति केचित्।" वर्ज्यानि तु संग्रहे। "अनध्यायतिथिं रिक्तां तथा षष्ठीं विहाय च। इतरासु च कर्तव्यो रुद्रारंभ शुभप्रदः। अनध्याये च संध्यायामपराह्ने कथंचन। स्त्रियां रजस्वलायां च रुद्रारंभो न सिद्धिदः" इति। रत्नमालायाम्। सोमसौम्यगुरुशुक्रवासराः कर्मसु भवंति सिद्धिदाः" इत्यधिकम्॥

ग्नेः पूर्वं मध्ये आशौचोत्पत्तावुपक्रांतं देवार्चनं श्रीरुद्रजपादिकं च समापनीयमेव नत्वाऽऽशौचवशादसमापितस्यैव तस्य त्यागः । एवं नियमेनान्वहमनुष्ठीयमानं सहस्रादिसंख्याविशिष्टं पुरश्चरणरूपं गायत्रीमंत्रादेर्मंत्रजपानुष्ठानं समापनीयमेव । अथवा । आशौचात्पूर्वमेव प्रारब्धं नियमेनान्वहमनुष्ठीयमानं सहस्रादिसंख्याविशिष्टं पुरश्चरणरूपं वा गायत्रीमंत्रादेर्मंत्रजपानुष्ठानं श्रीरुद्रजपाद्यनुष्ठानं देवार्चनं वा शौचमध्ये कार्यमेव । नत्वाशौचवशात्तस्य त्यागः । यथाह लघुविष्णुः। " व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे । आरब्धे सूतकं न स्यादनारंभे तु सूतकम्। प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नांदीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया " इति । अत्र प्रारंभो वरणं–मधुपर्कांतं ज्ञेयम् । "गृहीतमधुपर्कस्य यजमानाच ऋत्विजः" इत्युक्तेः। एतच्च वरणवत्ज्ञेयं । अवरणवत्स्वाधानेष्टिपशुबंधादिषु तु स्वीयाद्यपदार्थे प्रवर्तनमेवारंभः । अत एव । " ऋत्विजां दीक्षितानांच यज्ञियं कर्म कुर्वताम् " इति याज्ञवल्क्येन स्वीयाद्यपदार्थकरणानंतरमेवाशौचाभाव उक्तः । तथाच दर्शपूर्णमासयोरवृतस्य होतुः सामिधेनीषु प्रवृत्तस्यैवाशौचाभाव उपपद्यते । एवं च स्मार्ते महारौद्रादौ लक्षहोमकोटिहोमादौ तुलापुरुषदानादौ च मंत्रवद्वरणाभावादृत्विजां लौकिके वरणे कृते मधुपर्के चाकृते स्वीयाद्यपदार्थारंभाभावे च सत्यंतराऽऽशौचोत्पत्तावन्ये ऋत्विजो वरितव्या इति । कन्यापितरं प्रतिदानमेव विवाहः। वरं प्रति तु होमपाणिग्रहणादि । प्रारब्धपाके श्राद्धे श्राद्धकर्तुः । कृतनिमंत्रणे श्राद्धभोक्तुः । इति व्यवस्थेति कालतत्वविवेचनकारादयः । शंकरभट्टकृतधर्मप्रकाशे तु । " तत्तत्स्मृतिषु पाकनिष्पत्तिकृतसंकल्पता निमंत्रणानां त्रयाणामप्याशौचाभाव निमित्तत्वोक्तेर्निमित्तत्रयसमुच्चय एव श्राद्धे नाशौचम् । तथैव शिष्टसमाचारादित्युक्तम् । " होमोऽयुतलक्षकोटिहोममहारुद्रादिः । मदनपारिजाते प्रायश्चित्ताध्याये देवपद्धतौ नागदेवाह्निके च याज्ञवल्क्योऽपि । "शिवविष्ण्वर्चने दीक्षा यस्य चाग्निपरिग्रहः । स तत्कर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात् । " इति । शिवार्चनं श्रीरुद्राभिषेकः । " जपहोमार्चनविधिं व्याख्यास्यामः " इत्यत्र " रुद्रस्नानार्चनविधिं व्याख्यास्यामः " इत्यत्र चार्चनशब्दाभिधेयः श्रीरुद्राभिषेक इति महार्णवकारादिभिर्व्याख्यातत्वात् । पार्थिवलिंगाद्यर्चनादि वा शिवार्चनशब्दाभिधेयम् । विष्ण्वर्चनमपि पुरुषसूक्तसाध्यं मंत्रांतरसाध्यं वा वैदिकमागमोक्तं वा । तथा निर्णयसिंधौ शूलपाणौ लैंगे । " वरं प्राणपरित्यागः शिरसो वापि कर्तनम् । न चैवापूज्य भुंजीत शिवलिंगे महेश्वरम् । सूतके मृतके चैव न त्याज्यं शिवपूजनम् । " इति । एतानि च सहस्रादिसंख्याविशिष्टगायत्रीजपश्रीरुद्रजपश्रीरुद्राभिषेकश्रीविष्ण्वर्चनान्यन्वहं नियमेनानुष्ठीयमानान्यसाधारणनियमवत एवाशौचे भवंति । तदुक्तं निर्णयसिंधौ ब्राह्मे । " गृही-

तनियमस्यापि न स्यादन्यस्य कस्यचित् " इति । स्मृतिरत्नावल्यामपि । " गृहीतनियमादृते " इति । अत्र नियमनिष्ठमसाधारण्यं तु प्राणविपत्तितुल्ये महति संकटे उपस्थितेऽपि यस्यानुष्ठानमंतरेणोदकमात्रस्याप्यनभ्यवहरणमेव । एतादृशनियमाभावे तूक्तसंख्याविशिष्टगायत्रीजप श्रीरुद्राभिषेकाद्यनुष्ठानाभाव एव । "नित्यानि निवर्तेरन् वैतानवर्जंशालाग्नौ चैकेऽन्य एतानि कुर्युः " इति पारस्करगृह्ये नित्यानां कर्मणां निषेधेन तदधः पातिनो नित्यदेवार्चनादेरपि निषेधात् । अत एव सर्वदेशीयशिष्टानामाशौचे नित्यदेवार्चनाद्यचरणमेव दृश्यते । इति ।

" अथ जपदेशाः "—योगीयाज्ञवल्क्यः। जलांते वाभ्यगारे वा जपेद्देवालये तथा। गवां गोष्ठे दशगुणमग्न्यागारे दशाधिकम् । सिद्धक्षेत्रेषु सर्वेषु देवता याश्च सन्निधौ । सहस्रं शतकोटीनामनंतं विष्णुसंनिधौ ।" तथा "जपेद् गोष्ठे तथारण्ये सिद्धक्षेत्रे शिवालये। अग्न्यागारे समुद्रे च नदीनिर्झरपर्वते। जपेदन्यत्र वा विद्वान् शुद्धदेशे मनोरमे"। इति शुद्धदेशे तथा गृहे" इति क्वचित्पाठः। दीपस्थानं विचिंत्य रुद्रजपादिकं कार्यमिति केचित् । दीपस्थानं तु "युग्मं स्वराणां विलिखेच्च पूर्वं कादींश्च वर्णान् क्रमतः क्षमीशे। स्थानाधिपस्याक्षरमस्ति यत्र तं दीपदेशं मुनयो वदंति" इत्येतल्लक्षणलक्षितं ज्ञेयम् । अस्य तांत्रिकमंत्रजपपरत्वाद्वैदिकमंत्रजपपरत्वाद्वैदिकमंत्रजपे न विचिंत्यमिदमित्यपरे । दीपस्थानापवादो निर्णयसिंधौ । " कुरुक्षेत्रे प्रयागे च गंगासागरसंगमे । महाकाले च काश्यांच दीपस्थानं न चिंतयेत् " । इति । अयं च त्रिविधोऽपि रुद्रो भस्मना त्रिपुंड्रधारणं रुद्राक्षधारणं कृत्वा कार्यः। "विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः । " इति लिंगे भस्मत्रिपुंड्ररुद्राक्षधारणं विना शिवार्चनादावनधिकारोक्तेः । भस्मरुद्राक्षधारणविधिस्तु बृहज्जाबालोपनिषदि कालाग्निरुद्रोपनिषदि ब्रह्मोत्तरखंडे च ज्ञेयः। श्रीरुद्रजपमहिमातुहेमाद्रौ कालिकापुराणे ब्रह्मोत्तरखंडे च सविस्तरं निरूपित इत्युपरम्यते ग्रंथगौरवभयादिति दिक् ।

धीमतानंतदेवेन श्रीमदुद्धवसूनुना । त्रैविद्यमोढसंज्ञेन काशीपुरनिवासिना । १ ।
श्रुतिस्मृत्यालवालोऽयं रुद्रकल्पद्रुमोऽर्पितः। मदीयनाथयो र्विष्णुवंद्ययोः शिवपादयोः।२।
मुहुर्मुहुः प्रार्थयेहं सज्जनान् शुद्धमानसान्। मयोक्तमिह संशोध्यं विचार्य सदसच्च यत्

इति श्रीसूर्यपुरनिवासिना भीतडाखेडावालविप्रजातीयेन
द्विवेद्युपनामकपरशुरामात्मजेन जगन्नाथशर्मणा
संशोधिते श्रीरुद्रकल्पद्रुमे शास्त्रार्थपरिच्छेदः

समाप्तः ॥

# ॥ अथाभिषेकपरिच्छेदः ॥४॥

सिद्धिबुद्धिप्रदातारं विघ्नव्यूहविदारणम् । महागणपतिं वंदे लक्ष्मीविष्ण्वादिभिर्स्तुतम् ॥
सच्चिदानंदरूपाय शिवादेहार्धधारिणे । तत्र ॐकारवाच्याय शिवायाभीष्टदायिने ॥
श्रीनृसिंहं रमानाथं सच्चिदानंदविग्रहम् । विधींद्रोपासितं वंदे भक्तकल्पमहीरुहम् ॥
कात्यायनं गुरूंन्नत्वा श्रीमदुद्धवसूनुना । तन्यतेऽनंतदेवेन रुद्रार्चापद्धतिर्मया ॥
पद्धत्यो विविधा अन्याः स्फुटाः संतीह यद्यपि। ताभ्यस्त्वस्या विशेषोयः पंडितैःसोऽवधार्यताम्

अथ काण्वमाध्यंदिन्यादि वाजसनेयिशाखानुसारेण रुद्राभिषेकप्रयोग उच्यते । तत्रादौ कर्तृविशेषं प्रतिशाखाविशेषेण रुद्रानुष्ठानं निर्णीयते । यद्यपि वाजसनेयिशाखासु श्रुतेऽपि रुद्रे रुद्रजपादिर्विधिस्तस्येति कर्तव्यताविधिश्च न श्रूयते । बौधायन सूत्रहेमाद्र्युदाहृतशौनकमतबृहत्पराशरस्मृतिकालिकापुराणादौ तु रुद्रेति कर्तव्यता विधिर्नानाविधो दृश्यते । अतस्तेषामन्यतमः प्रकारो वैकल्पिकः प्रसक्तस्तथापि " अथाभिधास्ये रुद्राणां शांतये गृहमेधिनाम् । पंचांगानां विधानं तु यत्कृतं हंति पातकम् " इत्युपक्रम्य समधीते " इषेत्वादिषु मंत्रेषु खंब्रह्मांतेषु याः क्रियाः । दशप्रणवसंयुक्ताः भूर्भुवः स्वरिति च " इति बृहत्पराशरवाक्ये खंब्रह्मांततोपादानात् । इषेत्वादिकानां खंब्रह्मांतानां मंत्राणां माध्यंदिनशाखायामेव समधीतत्वात्ततो भिन्नासु तैत्तरीयशाखासु " समुद्रो अश्वस्य योनिः समुद्रः " इत्यंतताया समधीतत्वेन खंब्रह्मांतताया अभावात् बृहत्पराशरस्मृतिविहितो रुद्रेति कर्तव्यताविधिर्माध्यंदिनशाखाविषय इत्यध्यवसीयते अत एव बृहत्पराशरस्मृतिविहिते रुद्रेतिकर्तव्यताविधा काण्वमाध्यंदिनशाखासमधीतमंत्राणामेव विनियोगो दृश्यते । न पुनस्तयोरनधीतानामन्यशाखासमधीतानां मंत्राणाम् । तेन बौधायनाद्युक्तो रुद्रेति काण्वमाध्यंदिनादीनाम् । खंब्रह्मांततायाः काण्वशाखायामपि माध्यंदिनशाखायाः सर्ववाजसनेयिशाखासाधारण्यात् । पराशरोक्तो रुद्रेति कर्तव्यताविधिः सर्ववाजसनेयिशाखासाधारण एव,। उक्तं च ग्रहयज्ञमभिधाय वसिष्ठेन । " माध्यंदिनीतु याशाखा सर्वसाधारणी हि सा । तामेव च पुरस्कृत्य वसिष्ठेन प्रभाषितम् " इति । कथं माध्यंदिनि शाखायाः सर्ववाजनेयि शाखासाधारण्यमिति चेदुच्यते । नैमित्तिककाम्यवैकल्पिकानि कर्माणि भगवता सूत्रकृता माध्यंदिनिशाखायाः सर्ववाजसनेयिशाखासाधारण्येनोपनिबद्धानीति माध्यंदिनीशाखा काण्वादिसर्ववाजसनेयिशाखासाधारणेत्यर्थः । यद्यप्यद्यन्वाधानमध्वर्युर्यजमानो वेति सूत्रव्याख्यावसरे शाखाद्वयमधिकृता तात्पर्येणानुप्रवृत्त आचार्यस्तत्र नित्यनैमित्तिकवैकल्पि-

कानि कात्स्र्येनोपबद्धानि। शाखाद्वयव्यतिरेकेण नैयमिकमात्रमेवेति कर्तव्यतायां कर्को-
पाध्यायैरुक्तम् । तथापि माध्यंदिनिशाखामेवाधिकृत्याचार्यप्रवृत्तिर्मुख्या । आ-
चार्याभिप्रायात् । तथाहि । ये मंत्रा माध्यंदिनिशाखातः काण्वशाखायामधिकाः
समधीताः मित्रस्य त्वा चक्षुषा प्रतीक्ष इति । नमः कृताय कर्मण इति । यस्ते प्राणः
शुपष्वित्ति । आप्यायतं ध्रुवा हविषा घृतेनेति । उलूखले मुसले यच्चेत्येवमादयस्ते तु
मंत्राः संपूर्णा एव भगवता सूत्रे उपनिबद्धाः । येतु काण्वशाखातो माध्यंदिनशाखा-
यामधिकाः समधिताः। अयमग्निः पुरीष्योरयिमानिति। शिवोनामासि स्वधितिस्त इति।
अंगिरसो नः पितर इत्येवमादयस्ते तु द्वयोः शाखयोः समाम्नाता मंत्रा इव प्रतीकमात्रेणै-
वोपनिबद्धा इति द्वयोः शाखयोः समुख्यप्रवृत्तित्वे माध्यंदिनशाखायामनधीताः का-
ण्वशाखामंत्रा इव काण्वशाखायामप्यधीताः माध्यंदिनशाखामंत्राः संपूर्णा एव सूत्रे
भगवतोपनिबद्धा भवेयुः। यत्तु सूत्रकृता काण्वमाध्यंदिनशाखयोः समाम्नातोपि
" अस्मात्त्वमधिजातोऽसि " इति मंत्रः सूत्रे संपूर्ण उपनिबद्धस्तस्य पत्न्यामप्यनूह-
प्रज्ञप्त्यर्थत्वेन प्रयोजनत्वान्न दोषः । अत एवोक्तं भर्तुयज्ञपितृभूतिवासुदेवकर्को-
पाध्यायानंतदेवयाज्ञिकादिभिर्भाष्यकारैः सकलमंत्रपाठः पत्न्यामप्यनूहप्रज्ञप्त्यर्थं इति ।
तस्मान्माध्यंदिनिशाखैव पंचदशसु वाजसनेयिशाखासु मुख्या सर्वसाधारणा।
अत एवोक्तं वसिष्ठेन। " माध्यंदिनी तु या शाखासर्वसाधारणी हि सा " इति।
तस्मात् बृहत्पराशरेण खंब्रह्मांतताग्रहणलिंगाद्यो माध्यंदिनशाखापरतया रुद्रेति
कर्तव्यता प्रकारोऽभिहितः स काण्वादि सर्वत्रावाजसनेयिशाखासाधारण एवज्ञेयः।
एवं च सति मनोज्योतिरबोध्यग्निर्मूर्धानं मर्माणिते । मानस्तोक इति ह्येतत्प्रथमं
पंचकं स्मरेत् " इति पराशरवाक्ये काण्वशाखासमधीतपाठस्य मनोज्योतिरिति मं-
त्रस्य प्रतीकोपादानमुपपद्यते । यत्तु देवयाज्ञिकादिभिर्बौधायनसूत्रविहितं पंचांगरुद्र-
न्यासादिकमुक्तं तत्काण्वमाध्यंदिन्यादिवाजसनेयिशाखास्वनधीतानामपि मंत्राणां
केषांचिद्विनियोगस्य मंत्राणां केपांचिद्विनियोगस्य तत्र दर्शनात् वाजसनेयिनां
काण्वमाध्यंदिनानां तदध्ययनाक्षेपापत्तेः। सूत्रस्यासाधारणत्वेन बौधायनैकवि-
षयत्वाच्चायुक्तम् । तस्मात्काण्वमाध्यंदिनादिभिर्वाजसनेयिभिर्बृहत्पराशरस्मृतिविहि-
तेन विधिना पंचांगन्यासपूजापूर्वकं रुद्रजपादिकं विधेयम् । रुद्राभिषेकविधिस्तु
बौधायनसूत्रविहित एवोपादेयः । बृहत्पराशरस्मृतावनुक्तत्वादनुरुद्धत्वाच्च । ते-
नाभिषेकविधौ विहितानां काण्वमाध्यंदिन्यादिवाजसनेयिशाखासमधीतानां मंत्रा-
णामध्ययनमनन्यगत्यांगीकार्यम् । अन्यथा रुद्राभिषेकसांगत्वासिद्धेः सर्वयजुः
शाखासमधीतात्वाजसनेयिशाखासमधीतो रुद्रो जपादिष्वतिप्रशस्तः । " आदित्या

नीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायंते" इति शतपथश्रुतेः। आदित्यादधीतानां यजुषां शुक्लत्वेन प्राशस्त्यमनया श्रुत्योक्तम्। तेन तदंतः पातिनो रुद्रस्यापि प्राशस्त्यमुक्तमेव। आदित्यादनधीतानामन्ययजुषां तु कृष्णत्वेनाप्राशस्त्यं तदंतः पातित्वाद्रुद्रस्याप्यप्राशस्त्यं चार्थादुक्तश्रुत्यैव बोधितम्। एतेनान्ययजुः शाखासमधीताद्रुद्राभिषेकः तैत्तिरीयशाखासमधीतो रुद्रोऽतिप्रशस्त इत्यपास्तम्। बह्वृचादिभिस्तु श्रौतकर्मानुष्ठानार्थं स्वपरंपरापरिगृहीतयजुःशाखासमधीतरुद्रजपादिकं कार्यम्। यजुर्वेदशाखाव्यतिरिक्तवेदशाखासु रुद्राभावात्। स्वपरंपरापरिगृहीतयजुःशाखायास्तु यतः स्वशाखात्वमस्ति। निरूपितमेतच्छ्रीरुद्रकल्पद्रुमे प्रमाणनिरूपणावसरे जपहोमरुद्रप्रयोगादौ च विस्तरेण प्रागित्यलम्।

## ॥ अथ रुद्राभिषेकप्रयोगः ॥

तत्रादौ रुद्रारंभदिनात्पूर्वस्मिन्नन्यस्मिन् वाहन्यसंभवे तस्मिन्नहनि वा यजमानेन स्वस्याधिकारसिद्धये षडब्दचतुरब्दद्व्यब्दैकाब्दानामन्यतमं षडब्दत्र्यब्द सार्धाब्दैकाब्दपंचदशकृच्छ्राणामन्यतमं वा यथाशक्तिप्रायश्चित्तं यथाविधि कर्तव्यम्। अथ संभृतसंभारो यजमानः श्री रुद्राभिषेकमारभेत्तद्यथा। ज्योतिर्विदुपदिष्टे उत्तरायणादौ गुरुभार्गवयोर्मौढ्यबाल्यवार्धकादिरहिते शुभकाले शुक्लपक्षादौ रिक्ताभौमव्यतीपातविष्ट्यादिदोषरहितायां द्वितीयादिस्वाध्यायशुभतिथौ चंद्रानुकुल्ये पूर्वाह्णे निर्णेजनांतपंचमहायज्ञांतकृतनित्यक्रियेण सपत्नीकेन यजमानेन विधिना स्नातेन शुचिना परिहिताहतशुक्लवाससा सोत्तरीयेण नूतनयज्ञोपवीतिना दक्षिणपार्श्वे बद्धशिखेन शिखाभिन्नबद्धकेशेन सुप्रक्षालितपाणिपादेन सव्ये पाणौ कृतकुशोपग्रहेण दक्षिणे पाणौ धृतपवित्रेण स्वाचांतेन श्रीपर्ण्यादिप्रशस्तदारुनिर्मिते कुशोत्तरकंबलाद्यास्तृते स्वासने प्राङ्मुखेनोदङ्मुखेन वोपवेशनम्। तद्दक्षिणतः पत्न्या च। ततः स्मार्तेन विधिनाचम्य त्रीन् प्राणायामान् कृत्वा त्रिमात्रप्रणवोच्चारणम्। यथाचारमिष्टदेवतादिस्मरणम्। तद्यथा। ॐ श्री गुरुभ्यो नमः। ॐ सिद्धिबुद्धिसहिताय श्रीगणेशाय नमः। ॐ लक्ष्मीनारायणाभ्यां नमः। ॐ उमामहेश्वराभ्यां नमः। इत्येवं श्रीगुरुं गणेशं लक्ष्मीनारायणावुमामहेश्वरौ च प्रणम्य। सुमुखश्चैकदंतश्चेत्यादि श्लोकान् पठित्वा दक्षिणहस्तेन ताम्रपात्रेण वा सकुशकुसुमयवजलादानम्। देशकालयोः संकीर्तनांते कायिकाद्यशेषपापक्षयकामो व्याधिविमोचनकामो वा जीवनकामः श्रीकामो वा शांतिकामः पुष्टिकामो वा तुष्टिकामो मोक्षकामो वा श्रीसांबशिवप्रीतिकामो वा अमुकरुद्रेण श्रीरुद्राभिषेकमृत्विग् द्वारा वा करिष्य इति संकल्पः कार्यः। नैमित्तिकरुद्रकरणे तु अमुकनिमित्तममुकरुद्रेण

श्रीरुद्राभिषेकं करिष्य इति संकल्पः । उपात्तदुरितक्षयार्थमुत्पन्नदुरित प्रतिबंधार्थं वेति तु नित्ये । पुत्रकामेन दीर्घायुः सुपुत्रावाप्त्यर्थं महारुद्रेण रुद्राभिषेकं करिष्ये इति महारुद्रस्यैव संकल्पः । परप्रेरितश्चेदमुकशर्मणो यजमानस्याज्ञयाऽमुकरुद्रेण रुद्राभिषेकं करिष्यामीति संकल्पः कार्य एवं प्रधानसंकल्पं विधाय तदंगत्वेन मातृ-पूजा वसोर्धारायुष्यजपाभ्युदयिकश्राद्धस्वस्तिवाचनाचार्यादिऋत्विग्वरणानि करिष्ये । तत्रादौ चिकीर्षितामुकरुद्राभिषेककर्मणो निर्विघ्नफलसिद्ध्ये गणपतिपूजां च करिष्य इति संकल्पः । प्रत्येकं वा सर्वेषां संकल्पः । गणानां त्वेत्यनेन प्रणव-पूर्वकेन मंत्रेण षोडशभिः पंचभिः वोपचारैर्यथाविधि गणपतेरभ्यर्चनम् । ततो मातृपूजा वसोर्धारायुष्यजपाभ्युदयिकश्राद्धानि वा प्रत्येकं वा संकल्पपूर्वकं यथा विधि कर्तव्यानि । ततः पुनर्देशकालौ संकीर्त्य रुद्राभिषेकांगतया स्वस्तिवाचनं करिष्ये इति संकल्पं विधाय कलशस्थापनपूर्वकं स्वस्तिवाचनं यथोक्तम् । ततो यथोक्तलक्षणान् शांतान् वेदविदः कुटुंबिनो विप्रानाहूयाचार्यादिवरणम् तद्यथा । अंगणादौ शुचौ देशे गोमयलिप्ते चतुःकोणमंडले स्वस्तिकोपेते चंदनादिभिश्चर्चिते सुमंडपे (सदीपे) सपत्नीकेन यजमानेन श्रीपर्ण्याद्यासने उदङ्मुखेनैवोपवेशनम् । य-जमानदक्षिणतः पत्न्या च । आसनगंधाक्षतपुष्पमाल्यादिवरणोपहाराणामुपक-ल्पनम् । वरिष्यमाण ब्राह्मणानां प्राङ्मुखानां पीठोपर्युपवेशनम् । ततो यजमानेन कु-शकुसुमतिलयवजलादानम् । देशकालयोः संकीर्तनांते रुद्राभिषेकांगतया आचार्यस्य ब्रह्मणश्च वरणं करिष्य इति संकल्पः । कुरुष्वेति प्रत्युक्ते कुशकुसुमतिलयवजलानां भूमौ प्रक्षेपः । तत आचार्यत्वं कर्तुं योग्यं विप्रं प्राङ्मुखमुपवेश्य गंधाक्षतपुष्पमालादिभिरभ्य-र्चनम् । एकर्त्विग्देयद्विगुणितवस्त्रयुग्मोपवीतमुद्रिकाकुंडलांगदकंठाभरणादिभिश्च । बद्धांजलिना यजमानेनामुकरुद्रेण रुद्राभिषेकं करिष्ये तत्र मे त्वमाचार्यो भवेति प्रार्थना । भवामीति प्रत्युक्ते साक्षतेन पाणिना विप्रस्य दक्षिणजानुमालभ्य अमुकस-गोत्रोऽमुकामुकाप्रवरोमुकशर्माहं अमुकसगोत्रममुकामुकप्रवरं यजर्वेदांतर्गतकाण्वशाखा-ध्यायिनं माध्यंदिन शाखाध्यायिनं वामुकशर्माणं ब्राह्मणं अमुकरुद्रेण श्रीरुद्राभिषेकक-र्मणि आचार्यत्वेन त्वां वृणे इत्येवं वरणम् । वृतोऽस्मीत्याचार्येणोक्ते "आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिनाचार्यो भव सुव्रत" इति । "यथा शक्रस्य वागीश आचार्यः सर्वकर्मसु । तथा मया त्वमाचार्यो वृतोऽस्मिन् यज्ञकर्मणि" इति मंत्रयोरन्यतरमंत्रेणाचार्यप्रार्थना । ततो ब्रह्मत्वयोग्यं विप्रं प्रा-ङ्मुखमुपवेश्य गंधादिभिरेकर्त्विग्देयवस्त्रादिभिश्चाभ्यर्चनम् । बद्धांजलिनामुकरुद्रे-

ण रुद्राभिषेकं करिष्ये तत्र मे त्वं ब्रह्मा भवेति प्रार्थना । भवामीति प्रत्युक्ते, अमुकसगोत्रोऽमुकामुकप्रवरोऽमुकशर्माहं अमुकसगोत्रममुकामुकप्रवरममुकवेदांतर्गतामुकशाखाध्यायिनममुकशर्माणं ब्राह्मणममुकरुद्रेण रुद्राभिषेककर्मणि कृताकृतावेक्षणत्वेन ब्रह्माणं त्वां वृणे इत्येवं दक्षिणहस्तं गृहीत्वा स्वशाखीयस्यैव ब्रह्मणो वरणम् । वृतोऽस्मीति ब्रह्मणा प्रत्युक्ते "यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम" इति प्रार्थना । नारायणभट्टरुद्रपद्धतौ तु "सर्वलोकपितामहः । ब्रह्माणं त्वामहं वृणे" इति पाठः समाम्नातः । ततो मृद्गोमयैर्जलैश्चाभिषेकार्थं भूमिशोधनम् । तस्यामर्थपरिमाणवेदीकरणम् । "ॐ उत्तिष्ठंतु महद्भूता ये चैतत्स्थानवासिनः । भूतानामविरोधेन पूजाकर्म समारभे" मंत्रेण भूतवासनम् । ॐ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि । पृथिवि ब्रह्मदत्तासि काश्यपेनाभिवंदिते" इति मंत्रेण महीप्रार्थना "ॐ उद्धृतासि वराहेण कृष्णेन शतबाहुना । दंष्ट्राग्रे लीलया देवि ! पूजार्थं प्रणमाम्यहम्" इति मंत्रेण पृथिव्या अर्घप्रदानम् । अथ ब्रह्माचार्यसंन्निधौ यथोक्ते देशे वक्ष्यमाणेन विधिना रुद्राभिषेकः स्वयं यजमानेन कार्यः । ऋत्विजामनुपदेशात् स्वस्याशक्तौ त्वभिषेकार्थस्त्वप्रतिनिधित्वेन ऋत्विग्त्वेन वा ब्राह्मणवरणम् । तद्यथा । यथोक्तानामाहूतानां विप्राणामेकं विप्रं प्राङ्मुखमुपवेश्य गंधादिभिरेकर्त्विग्देय वस्त्रादिभिश्चाभ्यर्चनम् । बद्धांजलिनाऽमुकरुद्रेण रुद्राभिषेकमहं करिष्ये । तत्र त्वं मे ऋत्विग् भवेति प्रार्थना । भवामीति प्रत्युक्ते साक्षतेन दक्षिणेन पाणिना विप्रस्य दक्षिणजानुमालभ्य अमुकसगोत्रोऽमुकामुकप्रवरोऽमुकशर्माहं अमुकसगोत्रामुकामुकप्रवरं यजुर्वेदांतर्गतं काण्वशाखाध्यायिनं माध्यंदिनशाखाध्यायिनं वाऽमुकशर्माणं ब्राह्मणममुकरुद्रेण रुद्राभिषेकार्थमृत्विगुत्वेन त्वामहं वृणे इति यजमानेनोक्ते वृतोऽस्मीति प्रत्युक्तिः एवमेकादशानां यजुः शाखिनां यजमानसमशाखिनां वरणम् अष्टानां वा चतुर्णां वा द्वयोर्वैकस्य वा वरणमिति परशुरामादयः । नारायणभट्टपादैस्तु रूपके एक एव । रुद्री लघुरुद्र महारुद्रेष्वेक एकादश वा । अतिरुद्रे एकादश । एकविंशत्युत्तरशतं चेति ऋत्विक् संख्या । प्रतिनिधिपक्षे त्वनियम इति सांप्रदायिका इति विशेष उक्तः । पुत्रकामेन तु ऋत्विजो वृत्वा प्रत्येकं प्रार्थना । "ॐ भगवन् सर्वधर्मज्ञ सर्वधर्मभृतां वर । वितते मम यज्ञेऽस्मिन्नृत्विक् त्वं भव सुव्रत" इति मंत्रेणेत्युक्तं नारायणभट्टपादैः । ततो वरणक्रमेणैवाचार्यादीनामाचार्यस्यैव वा मधुपर्केणार्हणं कृत्वा वस्त्रालंकारादिभिरर्हणं कार्यम् । प्रतिनिधित्वेनाभिषेकार्थवरणे तु वस्त्रादिपूजैव न मधुपर्कः । तेषामृत्विक्त्वाभावात् । अत्रा-

वसरे स्वस्तिवाचनं केचित्कुर्वंति । न त्वाभ्युदयिकांते । हेमाद्रिणा दानखंडे वृद्धिश्राद्धं ऋत्विग्वरणं मधुपर्केणार्हणं चोपन्यस्य स्वस्तिवाचनोपन्यासात् । यत्र तु मधुपर्काभावस्तत्र ऋत्विग्वरणानंतरमेव स्वस्तिवाचनमिति ॥ अत एव परशुरामः "कृत्वैवं वरणं पूर्वं वाच्यं पुण्याहवाचनमिति । अन्ये तु नेह स्वस्तिवाचनं कुर्वंति । किंतु आभ्युदयिकानंतरमेव । दानखंडे मदनरत्नकृता सर्वैर्ग्रहयज्ञमहारुद्रादिपद्धतिकारैस्तथैवोक्तत्वाच्च ।

## ॥ अथब्राह्मणप्रार्थना ॥

अथ गृहीतकुसुमांजलिना यजमानेन ब्राह्मणप्रार्थना ॥ ब्राह्मणाः संतु शास्तारः पापात्पांतु समाहिताः । देवानां चैव दातारः पातारः सर्वदेहिनाम् । जपयज्ञैस्तथा होमैर्दानैश्च विविधैः शुभैः । देवानां च पितॄणां च तृप्त्यर्थं याचकाः स्मृताः । येषां देहे स्थिता देवाः पावयंति जगत्त्रयम् । ते मां रक्षंतु सततं पूजायज्ञे व्यवस्थिताः । अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः । रुद्रध्यानपरा नित्यं प्रसन्नमनसः सदा । माश्लीषभाषणाः संतु मा संतु परनिंदकाः । ममाप्येते हि नियमा भवंतु सततं द्विजाः"

अथ शिवायतनादौ पुण्यनद्यादितीरे गोष्ठादिपुण्यदेशे ब्राह्मणगृहे यजमानगृहे वा तदीशानदिग्भागे वा शुचौ देशेऽभिषेकार्थं भूमिशोधनवेदिकरणभूतत्रासनमहीप्रार्थना पृथिव्या अर्घदानानि पूर्वोक्तप्रकारेण कर्तव्यानि । अथर्त्विजो वक्ष्यमाणेन विधिना यजमानाचार्यब्रह्मसन्निधौ यथोक्तनियमयुक्ताः स्थिरांतःकरणाः संतो मंत्रार्थमनुसंदधानाः प्रलापांतरमकुर्वाणाः श्रीरुद्रं ध्यायंतो यजमानकामः सिद्ध्यतामिति चिंतयंतश्च श्रीरुद्राभिषेकं कुर्युः ।

## ॥ अथ नित्यकर्मप्रयोगः ॥

यथाविधिस्नातेन कृतसंध्योपासनेन सति संभवे हुतौपासनहोमाग्निहोत्रहोमेन कृतनव्यावस्थ्यान्यतर भस्मत्रिपुंड्र रुद्राक्षधारणेन बद्धशिखेन यज्ञोपवीतिना परिहितधौतश्वेतवाससा सोत्तरीयेण स्वाचांतेन सव्यपाणौ कृतकुशोपग्रहेण दक्षिणे पाणौ धृतपवित्रेण यथोक्ते गोमयोपलिप्ते गोचर्ममात्रे शुचौ देशे स्वासनस्थाने प्रागग्राणामुदगग्राणां वा त्रयाणां कुशानामास्तरणम् तदुपरि यथाकामं व्याघ्रादिचर्मण उत्तरो लोम्नः प्राग्ग्रीवस्यास्तरणम् । तदभावे श्वेतकंबलस्य चित्रकंबलस्य वा तदुपरि मृदुवस्त्रस्य च । "ॐ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने । तिष्ठ देवि शिखामध्ये चामुंडे ह्यपराजिते" इति मंत्रेण रक्षार्थं शिखाग्रंथिस्पर्शनम् । पृथ्वीति मंत्रस्य मेरुपृष्ठऋषिः सुतलं छंदः कूर्मो देवता आसने विनियोगः ।

" ॐ पृथ्वी त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् " इति मंत्रेण तस्मिन्नासने उदङ्मुखेनैवोपवेशनम्

## ॥ अथ भस्मरुद्राक्षधारणप्रयोगः ॥

अथ पूर्वं न कृतं चेदत्र भस्मत्रिपुंड्र रुद्राक्षधारणम् । तद्यथा । सद्योजातमित्यस्य सद्योजातऋषिः त्रिष्टुबूछंदः ब्रह्मा देवता । वामदेवायेत्यस्य वामदेवऋषिः जगतीछंदः । विष्णुर्देवता । अघोरेभ्य इत्यस्य अघोरऋषिः अनुष्टुप्छंदः रुद्रो देवता । तत्पुरुषायेत्यस्य तत्पुरुषऋषिः गायत्रीछंदः रुद्रो देवता । ईशान इत्यस्य ईशांन ऋषिः अनुष्टुप्छंदः रुद्रो देवता सर्वेषां भस्मपरिग्रहणे विनियोगः ।

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनमः । भवे भवेनातिभवे भवस्वमां भवोद्भवाय नमः ॥१॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूत दमनाय नमो मनोन्मनायनमः ।२। अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।३। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ।४। ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।५। इति पंचभिर्मंत्रैर्नव्यसंभवस्यावसथ्यसंभवस्य वा भस्मनः सव्यहस्ते परिग्रहणम् । दक्षिण हस्तेनाच्छादनम् अग्निरित्यादि भस्माभिमंत्रणं " मंत्राणां पिप्पलाद ऋषिः। गायत्रीछंदः। कालाग्निरुद्रोदेवता। भस्माभिमंत्रणे विनियोगः । " ॐ अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म सर्वंहवा इदं भस्म मन इत्येतानि चक्षूंषि भस्मानि तस्माद्व्रतमेत त्पाशुपतं यद्भस्मनांगानि संस्पृशेत्तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय " इति मंत्रेण । त्रिः कृत्वो भस्मनोऽभिमंत्रणम् । आपोज्योतिरित्यस्य प्रजापतिऋषिः यजुः ब्रह्माग्निवायुसूर्याश्च देवताः भस्मन्यप आसेचने विनियोगः । " ॐ आपो ज्योती रसोमृतं ब्रह्म भूर्भुवः स्वरोम् " इति मंत्रेण जलाधिपं विष्णुमभिध्यायन् भस्मन्यपामासेचनम् । ॐ नमः शिवायेति षडक्षरेण वा । ततः संमर्दनम् । सर्वांगे भस्मोध्धूलनम् । तद्यथा । ईशान इत्यस्य ईशानऋषिः । अनुष्टुप्छंदः । रुद्रो देवता। शिरसि भस्मोध्धूलने विनियोगः । " ॐ ईशानः सर्वविद्यानाम् " इति मंत्रेण शिरसि । तत्पुरुषायेत्यस्य तत्पुरुष ऋषिः । गायत्रीछंदः । रुद्रोदेवता। मुखे भस्मोद्धूलने विनियोगः । ॐ तत्पुरुषायेति मुखे । अघोरेभ्य इत्यस्य अघोरऋषिः । अनुष्टुब् छंदः । रुद्रो देवता हृदये भस्मोध्धूलने विनियोगः। ॐ अघोरेभ्य इति हृदये । वामदेवायेत्यस्य वामदेवऋषिः । जगतीछंदः । विष्णुर्देवता । गुह्ये भस्मोध्धूलने विनियोगः। ॐ

षामदेवायेति गुह्ये । सद्योजातमित्यस्य सद्योजातऋषिः । त्रिष्टुप्छंदः । ब्रह्मादेवता । पादयोर्भस्मोध्धूलने विनियोगः । ॐ सद्योजातं प्रपद्यामि इति पादयोः । प्रणवेन मस्तकात्पादतलपर्यंतं सर्वांगे ।

## ॥ अथ त्रिपुंड्रधारणविधिः ॥

तद्यथा । मानस्तोक इत्यस्य कुत्सऋषिः जगतीछंदः । एको रुद्रो देवता । भस्मोद्धरणे विनियोगः । ॐ मानस्तोक इति भस्मोद्धरणम् । त्र्यंबकमित्यस्य वसिष्ठ ऋषिः । अनुष्टुप्छंदः । त्र्यंबको रुद्रो देवता । त्र्यायुषमित्यस्य नारायणऋषिः । उष्णिक् छंदः आशीर्देवता । भस्मना त्रिपुंड्रधारणे विनियोगः । इति स्मृत्वा । यास्य प्रथमा रेखा सा गार्हपत्यश्चाकारो रजो भूर्लोकश्चात्मा क्रिया शक्तिः ऋग्वेदः प्रातः सवनं महादेवो देवता यास्य द्वितीया रेखा । सा दक्षिणाग्निरुकारः सत्वमंतरिक्षमंतरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यंदिनं सवनं महेश्वरो देवता । यास्य तृतीया रेखा सा आहवनीयो मकारस्तमोद्यौः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयं सवनं शिवो देवतेति ध्यायन् ॐ त्र्यम्बकं यजामहे त्र्यायुषं जमदग्नेरिति द्वाभ्यामृग्भ्यां मध्यमांगुलीभिस्तिसृभिः शिरसि त्रिपुंड्र धारणम् । एवमेताभ्यामृगभ्यां नेत्रयुगमप्रमाणं भ्रुवोरंतरं यावत्त्रिपुं ललाटे। एताभ्यामेवग्भ्यां वक्षसि । एवमेव दक्षिणोत्तरयोः स्कंधयोश्च । एवं पंचसु स्थानेषु त्रिपुंड्र धारणम् यद्वा । ललाटे बाह्वोर्हृदये नाभौ चेत्येवं पंचसु स्थानेषु त्रिपुंड्रधारणम् । इदं च भस्मोध्धूलनं त्रिपुंड्रधारणं च चतुराश्रमिणां साधारणं नित्यं च । भस्मोध्धूलनेऽशक्तश्चेच्छिरोललाटवक्षः स्कंधेषु त्रिपुंड्रधारणमेव कुर्यात् ॥ इति भस्मधारणम् ।

## ॥ अथ रुद्राक्षधारणविधिः ॥

तत्र–" विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः शरीरः ॥ अंत्याश्रमस्थः सकलेंद्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥ हृत्पुंडरीकं विरजं विशुद्धं विचिंत्य मध्ये विशदं विशोकम् ॥ तथादिमध्यांतविहीनमेकं विभुं चिदानंदमरूपमद्भुतम् ॥ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशांतम् ॥ " इति बृहज्जाबालोपनिषदुक्तप्रकारेणोमासहायं शिवं ध्यात्वा ॐ " त्र्यंबकं यजामहे " इत्यनेन शैवषडक्षरेण वा मंत्रेण प्रतिष्ठितरुद्राक्षधारणं प्रतिष्ठामंत्रयोरन्यतरेण मंत्रेण ॥ " रुद्राक्षान् कंठदेशे दशनपरिमितान् ३२ मस्तके विंशतीद्वे ४० षट्षट्कर्णप्रदेशे ६ करयुगलकृते द्वादशद्वादशैव १२॥ बाह्वोरिंदोःकलाभिः १६ नयनयुगकृते एकमेकं १ शिखायां वक्षस्यष्टाधिकं १०८ यः कलयति सततं स स्वयं नीलकंठः "

[१]इत्युक्तप्रकारेण॥ क्वचित्तु "इंदोः कलाभिः पृथगथशिखामूर्ध्नयोरेकमेकम्" इत्येवं पाठः ॥ ब्रह्मोत्तरखंडेऽपि । रुद्राक्षधारणं पुण्यं केन वा सदृशं भवेत् । महाव्रतमिदं प्राहुर्मुनयस्तत्त्वदर्शिनः इत्युपक्रम्य॥ सहस्रं धारयेद् यस्तु रुद्राक्षाणां धृतव्रतः। तं नमंति सुराः सर्वे यथारुद्रस्तथैव सः॥ अभावे तु सहस्रस्य [२]बाह्वोः षोडश षोडश। एकं शिखायां करयोर्द्वादशद्वादशैव हि॥ द्वात्रिंशत्कंठदेशे तु चत्वारिंशच्च मस्तके॥ एकैककर्णयोः षट् षट्[३] वक्षस्यष्टोत्तरं शतम्॥ यो धारयति रुद्राक्षान् रुद्रवत्सोऽपि पूज्यते। मुक्ताप्रवालस्फटिकरौप्यवैडूर्यकांचनैः॥ समेतान् धारयेद् यस्तु रुद्राक्षान् सशिवो भवेत् । केवलान् वापि रुद्राक्षान् यथालाभं बिभर्ति यः। तं न स्पृशंति पापानि तमांसीव विभावसुम् । इति[४]

## ॥ अथ पूजाप्रयोगः ॥

अथ स्ववामभागे अग्रोदककलशस्थापनम् । स्वदक्षिणभागे घंटादिपूजोपकरणानाम् । पुरतो गंधादिपात्राणां च । करादिक्षालनार्थं पात्रं स्वपृष्ठतः स्थापनीयम् ॥ घृतदीपस्याभावे तिलदीपस्थापनम्। अथ स्मार्तेन विधिनाऽऽचम्य त्रीन् प्राणायामान् कृत्वा त्रिमात्रप्रणवोच्चारणम्

ॐ श्रीगुरुभ्यो नमः । ॐ सिद्धिबुद्धिसहिताय श्रीगणेशाय नमः ॐ लक्ष्मीनारायणाभ्यां नमः ॐ उमामहेश्वराभ्यां नमः। इत्येवं श्रीगुरुगणेशं लक्ष्मीनारायणावुमामहेश्वरौ च प्रणम्य दक्षिणहस्तेन ताम्रपात्रेण वा सकुशकुसुमजलादानम् । देशकालौ संकीर्त्य सर्वपापक्षयपूर्वकं श्रीसांबप्रीतिकामोऽमुकरुद्रेण श्रीरुद्राभिषेकं करिष्ये । इति संकल्पो यजमानेन कार्यः । रुद्रानुष्ठानस्य स्वकर्तृकत्वे । ऋत्विक्कर्तृकत्वेऽमुकशर्मणो यजमानस्याज्ञयामुकरुद्रेण रुद्राभिषेकं करिष्यामि। इत्येवं ऋत्वि-

---

१ ३२।४०।६।६।१२।१२।१६।१६।१।१।१। १०८ योगः २५१

२ १।३००।३६।३२।२४।५००। १०८ योगः १००१

३ १६।१६।१।१२।१२।३२।४०।६।६। १०८ योगः २४९

४ सहस्ररुद्राक्षधारणप्रकार उक्तो बृहज्जाबालोपनिषदि=शिखायामेकरुद्राक्षं त्रिशतं शिरसा वहेत् । षट्त्रिंशतं गले दद्याद्बाह्वोः षोडशषोडश मणिबंधे द्वादशं च स्कंधे पंचशतं वहेत् । अष्टोत्तरशतं मालामुपवीतं तु कारयेत्। मणिबंध इत्येकवचनात् उभयोर्द्वादश। स्कंधशब्दो ग्रीवापरः । इति रुद्राक्षधारणम्. ॥ इत्येकस्मिन पुस्तकेऽत्र विशेषः । वस्तुतस्तु बृहज्जाबालोपनिषदि " शिखायामेकरुद्राक्षं " इत्यादिनोपलभ्यते परं च रुद्राक्षजाबालोपनिषदि समुपलभ्यते.

ग्भिः संकल्पः कार्यः । ततो रुद्राभिषेकं कर्तुं योग्यतासिद्धये भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासाँश्च करिष्ये । इति संकल्पपूर्वकं भूतशुद्धयादिकं कार्यमिति परशुरामादयः । नैवेति देवयाज्ञिकनाराणयभट्टादयः। हेमाद्रौ महार्णवे चाप्येवम् भूतशुद्धयाद्यकरणे न रुद्रवैगुण्यम् । करणे तु फलभूयस्त्वमिति केचित् ।

## ॥ अथ न्यासविधिः ॥

ते चानादेशे सर्वेऽप्यंगुष्ठानामिकाभ्यां कार्याः । आदेशे तु यथादेशम् । तत्र तावच्छंदः पुरुषस्य शरीरे न्यासः । ॐ तिर्यग् बिलाय चमसायोर्ध्वबुध्नाय छंदः पुरुषाय नमः इति शिरसि । ॐ गौतमभरद्वाजाभ्यां नमः इति नेत्रयोः । ॐ विश्वामित्र जमदग्निभ्यां नम इति श्रोत्रयोः । ॐ वसिष्ठकश्यपाभ्यां नम इति नासापुटयोः । ॐ अत्रये नम इति वाचि । ॐ गायत्र्यै छंदसे नमः अग्नये नम इति शिरसि । ॐ उष्णिहे छंदसे नमः सवित्रे नमः इति ग्रीवायाम् । ॐ बृहत्यै छंदसे नमः बृहस्पतये नम इति अनूके अनूकः पृष्ठवंशः । ॐ बृहद्रथंतराभ्यां नमः द्यावापृथिवीभ्यां नम इति बाह्वोः । ॐ त्रिष्टुभे छंदसे नमः इंद्राय नम इति मध्ये । मध्यमुदरं । ॐ जगत्यै छंदसे नमः आदित्याय नमः इति श्रोण्योः । ॐ अतिछंदसे नमः प्रजापतये नम इति लिंगे । ॐ यज्ञायज्ञियाय छंदसे नमः वैश्वानराय नम इति पायौ। ॐ अनुष्टुभे छंदसे नमः विश्वेभ्यो देवेभ्यो नम इत्यूर्वोः । ॐ पंक्त्यै छंदसे मरुद्भ्यो नम इत्यष्ठीवतोः। अष्ठीवान् जानु । ॐ द्विपदायै छंदसे नमः विष्णवे नम इति पादयोः । ॐ विछंदसे नमः वायवे नम इति प्राणेषु । प्राणवायोः संचारस्थाने नासिकाप्राणशब्देनोच्यते । ॐ न्यूनाक्षराय छंदसे नमः अद्भ्यो नम इति हस्तद्वयविपर्यासेन मस्तकादिपादांतं सर्वांगेषु । इति सर्वानुक्रमसूत्रविहितः छंदः पुरुषन्यासः । अथ बृहत्पराशरस्मृतिविहितः पंचांगरुद्राणां न्यासः ॥ न्यासमंत्राः सर्वे सस्वरा एव न्यस्तव्याः । मनोजूतिरित्यस्य आंगिरसो बृहस्पति ऋषिः यजुः । विश्वेदेवा देवता हृदये न्यासे विनियोगः इति स्मृत्वा हृदयं स्पृष्ट्वा । ॐ मनोजूतिरिति मंत्रं सस्वरं हृदयाय नम इत्यंतमुक्त्वा हृदये न्यासः कर्तव्यः । एवं वक्ष्यमाणेषु सर्वेष्वंगन्यासेषु तत्तदंगं स्पृष्ट्वा स्वरपूर्वकं मंत्रन्यासः कर्तव्यः जूतिजूषतामित्यस्य स्थाने ज्योतिजुषतामित्येवं पाठः । एवं न्यासपूजादौ प्रतीकेन विनियुक्ता मंत्रा स्वशाखासमधीतपाठाः पठनीयाः । न पुनर्माध्यंदिनशाखासमधीतपाठा इति तेषां विशेषः । अबोध्यग्निरित्यस्य बुधगविष्ठिरावृषी । त्रिष्टुप्छंदः । अग्निर्देवता शिरसि न्यासे विनियोगः । ॐ अबोध्यग्निरिति मंत्रं शिरसि स्वाहेत्यंतमुक्त्वा शिरसि । मूर्धानमित्यस्य भरद्वाजऋषिः । त्रिष्टुप्छंदः वैश्वानरोग्निर्देवता

शिखायां न्यासे विनियोगः । ॐ मूर्धानं दिवमिति मंत्रं शिखायै वषडित्यंतं शि-
खायाम् ३ । मर्माणित इत्यस्य विवस्वानृषिः त्रिष्टुप्छंदः । लिंगोक्ता देवता । क-
वचन्यासे विनियोगः । ॐ मर्माणिते इति मंत्रं कवचाय हुमित्यंतं कवचम् ४ । मा-
नस्तोक इत्यस्य कुत्सऋषिः जगतीछंदः। एको रुद्रो देवता । अस्त्रन्यासे विनियोगः।
ॐ मानस्तोक इमि मंत्रं अस्त्राय फडित्यंतं अस्त्रम् । ५ सोऽयं पंचांगन्यासः प्रथमः ।

अथ द्वितीयन्यासः । यातेरुद्रेत्यस्य परमेष्ठी ऋषिः । अनुष्टुप्छंदः । ए-
को रुद्रो देवता शिखायां न्यासे विनियोगः । ॐ याते रुद्र शिवातनुरघोरेति शिखा-
याम् १ । अस्मिन् महत्यर्णव इत्यस्य परमेष्ठी ऋषिः । अनुष्टुप्छंदः । बहवो रुद्रा
देवता । शिरसि न्यासे विनियोगः । ॐ अस्मिन् महत्यर्णवे इति शिरसि २ । अ-
संख्यातेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छंदः । बहवो रुद्रा देवता । ललाटे न्यासे
विनियोगः । ॐ असंख्याता सहस्राणीति ललाटे ३ । त्र्यंबकमिति द्वयोराद्यस्य व-
सिष्ठऋषिः । द्वितीयस्य प्रजापतिऋषिः । अनुष्टुप्छंदः त्र्यंबको रुद्रो देवता ।
नेत्रयोर्न्यासे विनियोगः । ॐ त्र्यंबकं यजामहे इति द्वौ मंत्रौ नेत्रयोः । ४
मानस्तोक इत्यस्य कुत्सऋषिः । जगतीछंदः । एको रुद्रो देवता । नासिकायां
न्यासे विनियोगः । ॐ मानस्तोके इति नासिकायाम् ५ । अवतत्येत्यस्य
परमेष्ठी ऋषिः । अनुष्टुप्छंदः । एको रुद्रो देवता । मुखे न्यासे विनियोगः ।
ॐ अवतत्यधनुरिति मुखे ६ । नीलग्रीवा इति द्वयोः परमेष्ठी ऋषिः अनुष्टुप्छंदः ।
बहवो रुद्रा देवता । कंठे न्यासे विनियोगः। ॐ नीलग्रीवाः शितिकंठा दिवं०। नील
ग्रीवाः शितिकंठाः शर्वा इति द्वौ मंत्रौ कंठे ७। नमस्त आयुधायेत्यस्य परमेष्ठी ऋषिः।
अनुष्टुप् छंदः । एको रुद्रो देवता ॥ प्रकोष्ठयोर्न्यासे विनियोगः। ॐ नम आयुधाये-
ति प्रकोष्ठयोः । मणिबंधादुपरि कूर्परादधोभागः प्रकोष्ठः। ८ " येतीर्थानीत्यस्य पर-
मेष्ठीऋषिः । अनुष्टुप् छंदः बहवो रुद्रा देवता । हस्तयोर्न्यासे विनियोगः । ॐ ये-
तीर्थानीति हस्तयोः ९ । नमो वः किरिकेभ्य इत्यस्य परमेष्ठी ऋषिः। साम्नोष्णिक् ।
यजुरुष्णिक् । दैवीजगती वा छंदांसि । किरिकादयो मंत्रवर्णावगता अन्यतरतो नम-
स्कारा बहवो रुद्रा देवता । हृदये न्यासे विनियोगः । ॐ नमोवः किरिकेभ्यः इति
हृदये १०। नमो हिरण्यबाहव इत्यस्य परमेष्ठी ऋषिः । अत्रैकादशाक्षराणां यजुस्त्रि-
ष्टुप् । अष्टाक्षराणां यजुरनुष्टुप् । दशाक्षरस्य यजुः पंक्तिरिति छंदांसि। हिरण्यबा-
हादयो मंत्रवर्णावगता उभयतो नमस्कारा बहवो रुद्रा देवता। नाभौ न्यासे विनियो-
गः । ॐ नमो हिरण्यबाहवे० पुष्टानां पतये नम इति नाभौ ११। इमा रुद्रायेत्यस्य

कुत्सऋषिः। जगतीछंदः। एको रुद्रो देवता गुह्ये न्यासे विनियोगः। ॐ इमारुद्रायेति गुह्ये १२। मानोमहांतमित्यस्य कुत्सऋषिः। जगती छंदः। एको रुद्रो देवता ऊर्वो-र्न्यासे विनियोगः। ॐ मानोमहांतमित्यूर्वोः १३। एषत इत्यस्य प्रजापतिऋषिः। सा-मपंक्तियजुर्जगती छंदांसि। रुद्रो देवता। जान्वोर्न्यासे विनियोगः। ॐ एषते रुद्र-भाग इति जान्वोः१४। अवरुद्रमित्यस्य प्रजापतिऋषिः। पंक्तिछंदः। रुद्रो देवता। जंघयोर्न्यासे विनियोगः। ॐ अवरुद्रमिति जंघयोः। जानुगुल्फयोरंतरालं जंघा। १५ अध्यवोचदित्यस्य परमेष्ठीऋषिः। पंक्तिछंदः। एको रुद्रो देवता। कवचन्यासे विनियोगः। ॐ अध्यवोचदिति कवचायहुमित्यंतं मंत्रमुक्त्वा कवचमुद्रया कवचम् १६। नमोबिल्मिने चेत्यस्य परमेष्ठीऋषिः। अत्र षडाक्षराणां यजुर्गायत्री। पंचाक्ष-रयोर्दैवीपंक्तिः। सप्ताक्षरस्य यजुरुष्णिगिति छंदांसि। बिल्मादयो मंत्रवर्णावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता। उपकवचन्यासे विनियोगः। ॐ नमो बि-ल्मिने दुंदुभ्याय चाहनन्याय चेत्युपकवचम्। कवचाद्विपरीतमुपकवचमिति महार्णव-कारानुसारिणः सर्वे निबंधकाराः पद्धतिकाराश्च। कवचोपरि कवचमुपकवचमित्यपरे १७। नमोस्तु नीलग्रीवायेत्यस्य परमेष्ठीऋषिः। अनुष्टुप्छंदः।एको रुद्रो देवता। तृतीय-नेत्रन्यासे विनियोगः। ॐ नमोस्तु नीलग्रीवायेति मुष्टितो विमुक्तया मध्यमया तृतीय-नेत्रम् १८। प्रमुंचेत्यस्य परमेष्ठीऋषिः। अनुष्टुप् छंदः। एको रुद्रो देवता अस्त्र-न्यासे विनियोगः। ॐ प्रमुंचधन्वनस्त्वमिति मंत्र अस्त्राय फडित्यंतं अस्त्रम् १९ य एतावंतश्चेत्यस्य परमेष्ठीऋषिः। अनुष्टुप्छंदः बहवो रुद्रा देवताः दिग्बंधने विनि-योगः। ॐ य एतावंतश्चेति मंत्रेण दिक्षु विदिक्षु च परस्परं तर्जन्यंगुष्ठाग्रास्फोट-नेन दिग्बंधः। २० सोयं शिखाद्यस्त्रांतो दिग्बंधसहितएकोन विंशत्यंगन्यासो द्वितीयः

अथ तृतीयो न्यासः। ॐ नमो भगवते रुद्रायेति दशाक्षरस्य प्रजापतिऋषिः विराट् छंदः श्री रुद्रो देवता। न्यासे विनियोगः। ॐ नमो मूर्धनि। ॐ नंनमः ना-सिकायाम्। ॐ मों नमः ललाटे। ॐ भं नमः मुखमध्ये। ॐ गं नमः हृदये। ॐ तेंनमःदक्षिणहस्ते। ॐ रुंनमः वामहस्ते। ॐ द्रां नमः नाभौ। ॐ यं नमः पादयोः॥

अथ संपुटाख्यश्चतुर्थो न्यासः। सच मुद्रितांजलिना प्राच्यादिदिक्षु वक्ष्यमाण-मंत्रैः कार्यः। तद्यथा। त्रातारमित्यस्य गर्गऋषिः। त्रिष्टुप्छंदः। इंद्रो देवता प्रा-च्यां संपुटीकरणे विनियोगः। ॐ त्रातारमिति प्राच्याम्। १ त्वन्नो अग्न इत्यस्य हिरण्यस्तप आंगिरस ऋषिः। जगतीछंदः। अग्निर्देवता। आग्नेयां संपुटीकरणे विनियोगः। ॐ सुगन्नुपंथामिति दक्षिणस्याम् २ असुन्वंतमित्यस्य प्रजापतिऋषिः।

त्रिष्टुप् छंदः । निर्ऋतिर्देवता । नैर्ऋत्यां संपुटीकरणे विनियोगः । ॐ असुन्वंत मिति नैर्ऋत्याम् ४ । तत्त्वायामीत्यस्य शुनः शेप ऋषिः । त्रिष्टुप् छंदः । वरुणो देवता । प्रतीच्यां संपुटीकरणे विनियोगः । ॐ तत्त्वायामीति प्रतीच्याम् ५ । आनो नियुद्भिरित्यस्य वसिष्ठऋषिः । त्रिष्टुप्छंदः । वायुर्देवता । वायव्यां संपुटीकरणे विनियोगः । ॐ आनोनियुद्भिरिति वायव्याम् ६ । वयंसोमेत्यस्य बंधुऋषिः । गायत्रीछंदः । सोमो देवता । उदीच्यां संपुटीकरणे विनियोगः । ॐ वयंसोमेत्युत्तरस्याम् । तमीशानमित्यस्य गौतमऋषिः । जगतीछंदः । ईशानो देवता । ईशान्यां संपुटीकरणे विनियोगः । ॐ तमीशानमित्यैशान्याम् । ८ । अस्मे रुद्रा इत्यस्य प्रगाथऋषिः । त्रिष्टु् छंदः । ब्रह्मा देवता । ऊर्ध्वायांदिशि संपुटीकरणे विनियोगः । अस्मे रुद्रा इत्यूर्ध्वायां दिशि ।९। स्योनापृथिवीत्यस्य मेधातिथिऋषिः। गायत्रीछंदः । अनंतो देवता । अधोदिशि संपुटीकरणे विनियोगः ॐ स्योना पृथिवीत्यवाच्यम् १० । अथ त्रातारमित्यस्य ऋष्यादिकं प्राग्वत् स्मृत्वा नमस्कारे विनियोगः । ॐ त्रातारमिंद्रमिति मंत्रांते इंद्राय नमः इत्यंतमुच्चार्य इंद्रं प्राच्यां प्रणमेत् । ॐ त्वन्नो अग्ने तवदेवेत्यादिभिः संपुटीकरणोक्तैर्मंत्रैराग्नेयादिदिक्षु ऋष्यादिस्मरणपूर्वकमेवाग्न्यादीन् प्रणमेत् ॥ इति चतुर्थो न्यासः ।

अथ पंचमो न्यासः। यज्जाग्रत इति षड्ऋचां शिवसंकल्पऋषिः । त्रिष्टुप्छंदः । मनो देवता । हृदये न्यासे विनियोगः । इति स्मृत्वा मुष्टिविनिर्गतांगुष्ठौ संयुक्तौ कृत्वा हृदये संस्थाप्य ॐ यज्जाग्रत इति षड्ऋचो जप्त्वा हृदयाय नमः इत्युच्चार्य हृदये न्यसेत् । काण्वशाखायां त्वेकस्या एव ऋचः शिवसंकल्पदृष्टायाः समाम्नातत्वात् यज्जाग्रत इत्येकया ऋचा हृदयन्यास इति काण्वानां विशेषः । सहस्रशीर्षेति षोडशर्चस्य पुरुषसूक्तस्य नारायणपुरुषऋषिः । आद्यानां पंचदशानामनुष्टुप्छंदः । यज्ञेनयज्ञमित्यस्याः त्रिष्टुप्छंदः । जगद्बीजं पुरुषो देवता । शिरसि न्यासे विनियोगः इति स्मृत्वा मुष्टिविनिर्गतांगुष्ठौ संयुक्तौ निस्तर्जनीकौ । ललाटे कृत्वा ॐ सहस्रशीर्षेति षोडशर्चपुरुषसूक्तं जप्त्वा शिरसे स्वाहेत्युच्चार्य शिरसि ॥ अद्भ्यः संभृत इति षडर्चस्योत्तरनारायणस्य नारायणपुरुषऋषिः आद्यानां तिसृणां त्रिष्टुप्छंदः । चतुर्थपंचमयोरनुष्टुप्छंदः । अंत्यायाः त्रिष्टुप्छंदः । आदित्यो देवता । शिखायां विनियोगः । इति स्मृत्वा मुष्टिपुटौ करौ कृत्वांगुष्ठावधः प्रसक्ताग्रौ कनिष्ठे चोर्ध्वत प्रसक्ताग्रे कृत्वा शिखां स्पृष्ट्वा ॐ अद्भ्यः संभृत इति षडर्चं जप्त्वा शिखायै वषडित्युक्त्वा शिखायाम् । आशुः शिशान इति द्वादशानामृचां अप्रतिरथऋषिः । त्रिष्टुप्छंदः । इंद्रो देवता । कवचन्यासे विनियोगः । ॐ आशुः शिशान इत्यादिकं

तमसां सचंतामित्यंतं द्वादशर्चमप्रतिरथं जप्त्वा कवचाय हुमित्युच्चार्यांगुष्ठौ प्रसक्ताग्रौ तर्जन्यौ च त्रिकोणवत्कृत्वा मूर्ध्नि पश्चान्मुखं कृत्वोभयपार्श्वतः करौ हृदंतं नयन् कवचं न्यसेत् । विभ्राडित्यस्य विभ्राट्सौर्यऋषिः । जगती छंदः । सूर्यो देवता । उदुत्यमिति तिसृणां प्रस्कण्वऋषिः । गायत्रीछंदः सूर्यो देवता । तंप्रत्नथेत्यस्य ब्रह्म स्वयंभूऋषिः । जगतीछंदः । विश्वेदेवा देवता । अयं वेन इत्यस्य ब्रह्मस्वयंभूऋषिः । त्रिष्टुप्छंदः । सोमो देवता । चित्रमित्यस्य ब्रह्म स्वयंभूऋषिः त्रिष्टुप्छंदः । सूर्यो देवता । आन इत्यस्यागस्त्यऋषिः । त्रिष्टुप्छंदः । सूर्यो देवता । यद्द्येत्यस्य श्रुतकक्षसुतकक्षावृषी । गायत्रीछंदः । सूर्यो देवता । तरणिरित्यस्य प्रस्कण्वऋषिः गायत्रीछंदः। सूर्यो देवता। तत्सूर्यस्येति द्वयोः कुत्सऋषिः। त्रिष्टुप्छंदः। सूर्यो देवता । वण्महानिति द्वयोः जमदग्निऋषिः आद्यस्य बृहतीछंदः । द्वितीयस्य सतो बृहतीछंदः । सूर्यो देवता । श्रायंत इवेत्यस्य नृमेधऋषिः । बृहतीछंदः । सूर्यो देवता । अद्यादेवा इत्यस्यकुत्सऋषिः। त्रिष्टुप् छंदः । सूर्यो देवता । आ कृष्णेत्यस्य हिरण्यस्तुप आंगिरस ऋषि त्रिष्टुप्छंदः। सूर्यो देवता । नेत्रत्रये न्यासे विनियोगः इति स्मृत्वा नेत्रोन्मुखं हस्तं कृत्वा सक्तांगुष्ठे कनिष्ठे च कृत्वा मध्यमां किंचित्प्रसार्य इतरांगुली नमयन् ॐ विभ्राडित्यादिकं भुवनानि पश्यनित्यंतं प्रतीक चोदिताभिस्तिसृभिः सह सप्तदशर्चमनुवाकं जप्त्वा नेत्रत्रयाय वौषडिति उच्चार्य नेत्रेषु न्यसेत् । शतरुद्रियमन्त्रं। शतरुद्रियाख्यस्य नमस्ते रुद्रेति रौद्राध्यायस्य परमेष्ठीऋषिः। देवा वा ऋषयः । प्रजापतिर्वा ऋषिः। नमस्ते रुद्रेत्यस्या गायत्रीछंदः। यातेरुद्रेत्यादीनां तिसृणामनुष्टुप् छंदः॥अध्यवोचदित्यादि तिसृणां पंक्तिछंदः॥नमोस्तु नीलग्रीवायेत्यादि सप्तानामनुष्टुप्छंदः । मानो महांतमिति द्वयोः कुत्सोऽपि ऋषिः जगतीछंदः । सर्वासामेको रुद्रो देवता । नमोहिरण्यबाहव इत्यादीनां आनिर्हतेभ्य इत्यंतानां यजुषामनियताक्षरत्वाच्छंदो नास्तीत्येकेषां मतम् पिंगलमते तु एकाक्षरप्रभृत्येकैकाक्षरवृध्याऽनियताक्षराणां षडधिकशताक्षर पर्यंतानां यजुषां छंदोविशेषनियमोऽस्त्येव । तथाहि । चतुरक्षराणां यजुषां दैवी बृहतीछंदः । पंचाक्षराणां दैवीपंक्तिछंदः। षडक्षराणां दैवी त्रिष्टुप्यजुर्गायत्री वा । सप्ताक्षराणां दैवी जगतीछंदः यजुरुष्णिग्वा । अष्टाक्षराणां यजुरनुष्टुप् प्राजापत्या गायत्री वा । नवाक्षराणां यजुः बृहती आसुरी जगती वा । दशाक्षराणां यजुः पंक्तिः । एकादशाक्षराणां यजुस्त्रिष्टुप् आसुरीपंक्तिर्वा । द्वादशाक्षराणां यजुर्जगती आसुरी बृहती वा । प्राजापत्योष्णिक् वा । साम गायत्री वा । चतुर्दशाक्षराणां सामोष्णिगेकमेव । नमोवः किरिकेभ्य इति । एतान्येवात्र छंदांसि । नमो हिरण्य बाहव इत्यादीनां श्वपतिभ्यश्चवो नम इ-

त्यंतानां पंचचत्वारिंशत्संख्याकानां यजुषां हिरण्यबाहुः सेनानीर्दिशांपतिरित्यादि मंत्रवर्णावगतनामका उभयतो नमस्कारा बहवो रुद्रा देवताः। ततो नमो भवाय च रुद्राय चेत्यादीनां प्रखिदते चेत्यंतानां पंचसप्ततिसंख्याकानां यजुषां भवादयो मंत्रलिंगावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवताः। ततो नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नम इत्यस्य यजुष उभयतो नमस्कारा बहवो रुद्रा देवताः। नमो हिरण्य बाहव इत्यादयो नमस्तिष्ठद्भ्यो धावद्भ्यश्चवो नम इत्यंता द्वंद्विनो ( रुद्राः ) नमः सभाभ्यः इत्यादयो नम आनिर्हतेभ्य इत्यंता जाताख्याः। तत्र देवता मंत्र वर्णादेव चतुर्थ्यंता प्रसिद्धा। नमोवः किरिकेभ्यः इत्यादीनामग्निवायुसूर्यहृदयभूभूतव्याहृतीनां अन्यतरतो नमस्कारा बहवो रुद्रा देवताः। द्रापे इत्यस्या उपरिष्टाद् बृहतीच्छंदः। इमारुद्रायेत्यस्याः कुत्सोऽपि ऋषिः। जगतीछंदः। यात इत्यस्या अनुष्टुपछंदः। परित इति द्वयोस्त्रिष्टुपछंदः। विकिरिद्-सहस्राणीति द्वयोरनुष्टुप् छंदः। सप्तानामेको रुद्रो देवता। असंख्यातेत्यादीनां दशानामनुष्टुपछंदः। बहवो रुद्रा देवताः। नमोस्तु रुद्रेभ्य इत्यादीनां त्रयाणां यजुषां धृतिछंदः। बहवो रुद्रा देवताः। सकलाध्यायस्य शतशीर्षा रुद्रो देवता सकलाध्यायस्यास्त्रन्यासे विनियोगः। इत्यार्षेयादिकं स्मृत्वा ॐ नमस्ते रुद्रमन्यव इत्यादिकं तमेषां जंभे दध्मः इत्यंतं षट्षष्टिकंडिकात्मकं शतरुद्रियाख्यं रौद्राध्यायं जप्त्वा अस्त्राय फडित्युचार्य परस्परं तालं कुर्वन्नस्त्रं न्यसेत्। चतुः षष्टिकंडिकात्मको रुद्राध्याय इति काण्वानां विशेषः। इति पंचमो न्यासः। अथ षष्ठो न्यासः। सचाभिषेके एव भवति। प्रजने ब्रह्मा तिष्ठतु पादयोर्विष्णुस्तिष्ठतु २। हस्तयोर्हरस्तिष्ठतु ३। बाह्वोरिंद्रस्तिष्ठतु ४। जठरेऽग्निस्तिष्ठतु ५। हृदये शिवस्तिष्ठतु ६ कंठे वसवस्तिष्ठंतु ७ वक्त्रे सरस्वती तिष्ठतु८। नासिकयोर्वायुस्तिष्ठतु ९ नयनयोः सूर्याचंद्रमसौ तिष्ठेताम् १०। कर्णयोरश्विनौ तिष्ठेताम् ११। ललाटे रुद्रास्तिष्ठंतु २१। मूर्ध्नि आदित्यास्तिष्ठंतु १३ शिरसि महापुरुषस्तिष्ठतु १४। शिखायां चामुंडा तिष्ठतु १५। पृष्ठे पिनाकी तिष्ठतु १६। पुरतः शूली तिष्ठतु १७। पार्श्वयोः शिवशंकरौ तिष्ठेताम् १८। सर्वतो वायुस्तिष्ठतु १९। ततो बहिः सर्वतोऽग्निः ज्वालामालापरिवृतस्तिष्ठतु २०। सर्वेष्वंगेषु सर्वा देवतास्तिष्ठंतु मां रक्षंत्विति सर्वांगे। इति षष्ठो न्यासः॥

अथाग्निर्मे वाचि श्रितः। इत्यादिभिर्मंत्रैर्यथालिंगमंगानि संस्पृशेत्। तद्यथा। ॐ अग्निर्मे वाचि श्रितः। वाक् हृदये॥ हृदयं मयि। अहममृते। अमृतं ब्रह्मणीति वाचं स्पृशेत् १। ॐ वायुर्मे प्राणे श्रितः। प्राणो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणीति हृदयम् २। ॐ सूर्यो मे चक्षुषि श्रितः। चक्षुर्हृदये। हृदयं मयि।

अहममृते । अमृतं ब्रह्मणीति चक्षुषी ३ । चंद्रमा मे मनसि श्रितः । मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणीति वक्षः । मनसः स्थानत्वात् ४ । ॐ दिशो मे श्रोत्रे श्रिताः श्रोत्रं हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणीति श्रोत्रे ५ । ॐ आपो मे रेतसि श्रिताः। रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणीति लिंगे ६ । ॐ पृथिवी मे शरीरे श्रिता । शरीरं हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणीति शरीरम् ७ । ॐ ओषधिवनस्पतयो मे लोमसुपाश्रिताः । लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणीति सर्वांगे। ८ ॐ इंद्रो मे बले श्रितः। बलं हृदये हृदयं मयि अहममृते । अमृतं ब्रह्मणीति सर्वांगे ९ । ॐ पर्जन्यो मे मूर्ध्नि श्रितः मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणीति मस्तके १० । ॐ ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । दयं मयि । अहममृते । अमृतं ब्रह्मणीति वक्षः । चित्तस्थानत्वात् । ११ । ॐ पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात् । वैश्वनरो रश्मिभिरावृधानः । अंतस्तिष्ठत्वमृतस्य गोपा इति सर्वशरीरं स्पृशेत् । ॐ एषते रुद्रभाग इति योनिमुद्राप्रदर्शनम् । तदुक्तं हेमाद्रौ व्रतखंडे बौधायनकल्पे ॥ एवं न्यासविधिं कृत्वा ततो मुद्रां प्रदर्शयेत् । शिवपुष्टिः शिवस्योक्ता सैव शांतिप्रदायिनी । एषते रुद्रभाग इति मुद्राप्रदर्शनम् । श्रीकामः शीर्ष्णि कुर्वीत तेजस्कामस्तु नेत्रयोः । मुखे त्वन्नाद्यकामस्तु ग्रीवायां रोगनाशने । हृदये सर्वकामस्तु नाभौ ज्ञानी प्रदर्शयेत् । प्रजाकामस्तु गुह्ये वै पशुकामस्तु जंघयोः । जानुभ्यां ग्रामकामस्तु राष्ट्रकामस्तु पादयोः । वशीकरणकामस्तु वामहस्ते प्रदर्शयेत् । पापक्षयेऽभिचारे च व्याधेरपगमे तथा । बहिः शरीरात् कुर्वीत शिवस्याज्ञेति च स्मरन् । एवं प्रदर्शयित्वा तु ततो ध्यानं समाचरेत् । इति॥

## ॥ अथ रुद्रपूजाखंडः ॥

पंचास्यं सौम्यमात्मानं सर्वाभरणभूषितम् । मृगलांछनमूर्धानं शुद्धस्फटिकसन्निभम् १ । फणासहस्रदुस्फूर्जदुरगेंद्रोपवीतिनम् । सप्तार्चिर्विज्वलज्ज्वालजटाजूटकिरीटिनम् ।२। सहस्रकरविभ्राजद्खट्वांगादिविभूषितम् । ब्रह्मांडखंडवत्काशत्कलापवरधारिणम् । ३ । देदीप्यमानचंद्रार्कज्वलदग्नित्रिनेत्रिणम् । त्रैलोक्यद्योतिकृद्भास्वत्स्कंधे कपालमालिनम् । ४ । दीप्तनक्षत्रमालावदक्षमालाधरं द्विजाः । निःशेषवारिसंपूर्णकमंडलुकरं त्वजम् । ५ । जगद्बाधीर्यकृन्नादमुचं डमरुधारिणम् । केयूरबद्धनागेंद्रमूर्धमणिविराजितम् । ६ । मेखलाकिंकिणीमालामुक्तारावविराजितम् । घर्घराव्यक्तनिर्गच्छद् गंभीरारावनूपुरम् ।७।[1] व्याघ्रचर्मपरीधानं व्याघ्र-

---

[1] एकस्मिन् पुस्तके " सहेमपट्टनीलाभव्याघ्रचर्मोत्तरीयकम् " इति पाठः

चर्मोत्तरीयकम् । विद्युल्लताप्रभागंगाभालमूर्धसुरार्चितम् । ८ । समस्तभुवनाधार धारणोल्लासनस्थितम् । त्रैलोक्यवनितामूर्धनतदेहार्धपार्वती । ९ । लक्षणसूर्यभाभास्वत्त्रैलोक्यकृतपांडुरम् । अमृतप्लुतहृष्टांगं दिव्यभोगसमाकुलम् । १० । दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं शाश्वतमव्यक्तं व्यापिनं नंदिनं ध्रुवम् । ११ । द्विजो ध्यात्वैवमात्मानं सम्यग्रुद्रस्वरूपिणम् । संप्रध्वस्तांतरायः सन् ततो यजनमारभेत् इति । यजनमर्चनम् । इत्थं श्री रुद्रस्वरूपमात्मानं ध्यात्वा । ॐ आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां मां गृहाण महेश्वर । इति मंत्रांते श्रीरुद्र इहागच्छेह तिष्ठ इत्यात्मनि पुष्पाक्षतप्रक्षेपेण श्री रुद्रस्यावाहनम् । ॐ त्र्यंबकमित्यस्य वसिष्ठऋषिः । अनुष्टुप् छंदः । त्र्यंबको रुद्रो देवता । स्वात्मनि श्रीरुद्रपूजने विनियोगः ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टि इति मंत्रेण स्वशरीरेऽवस्थितस्य श्रीरुद्रस्वरूपस्य जीवात्मनो गंधादिभिः पंचोपचारैरभ्यर्चनम् अत्र नैवेद्यमपि मानसं परिकल्पयेदिति महार्णवकारः [१] । ततः स्वदक्षिणभागे साधारणस्य ताम्रपात्रस्य स्थापनम् । नमः शंभवायेत्यस्य परमेष्ठी ऋषिः । अत्र सप्ताक्षरयोर्यजुरुष्णिक्छंदः । षडक्षराणां यजुर्गायत्री छंदः । शंभवादयो मंत्रवर्णावगता अन्यतो नमस्कारा बहवो रुद्रा देवता अर्घपूरणे विनियोगः ॐ नमः शंभवायेति तीर्थोदकेनार्घपूरणम् । गंधपुष्पाक्षतानां तत्र प्रक्षेपः । ॐ नमः शंभवायेत्यस्यार्षादिकं पूर्ववत्स्मृत्वाऽर्घाभिमंत्रणे विनियोगः । ॐ नमः शंभवायेति मंत्रेणाष्टकृत्वोऽभिमंत्रणम् । ॐ नमः शंभवायेत्यस्यार्षादिकं पूर्ववत्स्मृत्वा संभारप्रोक्षणे विनियोगः । ॐ नमः शंभवायेति मंत्रेण पात्रांतरे गृहीतेन तदुदकेन पूजासंभारप्रोक्षणम् । आसनाद्युपचारसमर्पणादि वक्ष्यमाणं सर्वं देवकार्यपनेनैवार्घोदकेन कर्तव्यम् अथाक्षतैः पुष्पैर्वा पीठपूजा । पीठस्याधोभागे । ॐ आधारशक्त्यै नमः १ ॐ कूर्माय नमः २ ॐ अनंताय नमः ३ ॐ वराहाय नमः ४ ॐ पृथिव्यै नमः ॥ ॐ विचित्रदिव्यमंडपाय नमः ६ मंडपपरितः ॐ कल्पवृक्षेभ्यो नमः ७ ॐ सुवर्णवेदिकायै नमः ८ ॐ रत्नसिंहासनाय नमः ९ एभिर्मंत्रैरुपर्युपरि पूजा । सिंहासनपादेषु । ॐ धर्माय नमः इत्याग्नेयाम् । ॐ ज्ञानायनम इति नैर्ऋत्याम् । ॐ

---

१ अत्रैकस्मिन् पुस्तके विशेषः । "तद्यथा । स्थंडिले वस्त्रावृते तंदुलैः सकर्णिकमंबुजमष्टदलं विलिख्य तन्मध्ये दशाक्षरं विलिखेत् इत्येवं पीठकल्पनम् । नमः शंभवायेत्यस्य ऋष्यादि स्मृत्वा स्थंडिलपूजायां विनियोगः । तेन स्थंडिलपूजनम् । मानो महांतमित्यस्य कुत्सऋषिः । जगतीछंदः । एको रुद्रो देवता सिद्धमंत्रस्मरणे विनियोगः · -

वैराग्याय नम इति वायव्याम् । ॐ ऐश्वर्याय नम इत्यैशान्याम् । अथ गात्रेषु । ॐ अधर्माय नम इति पूर्वस्याम्। ॐ अज्ञानाय नमः इति दक्षिणस्याम्। ॐ अवैराग्याय• इति पश्चिमायाम्। ॐ अनैश्वर्याय नम इति उत्तरस्याम् अथ सिंहासनोपरि। ॐ तल्पा- कारायानंतायनमः। ॐ पद्माय नमः। ॐ आनंदकंदाय नमः। ॐ संविन्नालाय नमः। ॐ प्रकृतिमयपत्रेभ्यो नमः । ॐ विकारमयकेसरेभ्यो नमः । ॐ पंचाशद्वर्णाढ्यक- र्णिकायैनमः । अथ पद्मस्य दलकेसरकर्णिकास्वर्चनम् । ॐ अंसत्वाय नमः इति पद्मदलेषु । ॐ उंरजसे नमः इति केसरेषु । ॐ मं तमसे नमः इति कर्णिकासु । एवं प्रतित्रिकं सर्वत्र । ॐ अंद्वादशकलात्मनेऽर्कमंडलायनमः ॐ उं षोडशकलात्मने सो- ममंडलाय नमः । ॐ मं दशकलात्मनेऽग्निमंडलाय नमः। इति । ॐ अं ब्रह्मणे नमः। ॐ विष्णवे नमः। ॐ मं महेश्वराय नमः। इति । ॐ अं आत्मने नमः। ॐ उं अंतरा- त्मने नमः । ॐ मं परमात्मने नमः। इति ॐ ज्ञानात्मने नम सर्वपद्मार्चनम्। अथ स्वा- ग्रतः पद्मपूर्वादिपत्रेष्वर्चनम् ॐ वामायै नमः । ॐ ज्येष्ठायै नमः ॐ रौद्र्यैनमः। ॐकाल्यैनमः ॐ कलविकरण्यैनमः । ॐ बलविकरण्यैनमः । ॐ बलप्रमथिन्यैनमः । ॐ सर्वभूतदमन्यैनमः । इत्यष्टौ शक्तीः संपूज्य । ॐ मनोन्मन्यैनमः इति नवम्याः कर्णिकायां पूजनम् ।। ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानंताय योगपीठा- त्मने नम कर्णिकायां पुष्पांजलिना पीठं संपूज्य ।। सत्यज्ञानानंतानंदरूपं परंधामैव सकलं पीठमिति चिंतयेदिति पीठपूजा ।। अथ पीठोपरि स्थापितपात्रे शिवलिंगं धातुमयीं शैवीप्रतीमां वा प्रतिष्ठाप्यावाहनम् । तद्यथा । अंजलिना पुष्पाण्यादाय सूर्यमंडले स्वहृत्कमले वा श्रीरुद्रं पूर्ववद् ध्यात्वा ॐ आत्वा वहतुं हरयः सचेतसः श्वेतरश्वैः सह केतुमद्भिः । वाताजवैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय श- र्वोम् । भगवंतं सहस्राक्षं विरूपाक्षं महादेवं सांबशिवमावाहयामीति सूर्यमंडले स्वहृत्कमले वा स्थिताया देवमूर्तेः सकाशाद् द्वीपांतरमिव निर्गतं दक्षिणनासापुटे- नांजलिस्थपुष्पेष्वागतं देवं विभाव्य पीठस्थे शिवलिंगादावंजलिस्थपुष्पप्रक्षेपेण शिवमावाह्य संस्थापिते त्वावाहनम् । ॐ त्र्यंबकं यजामहे इति मंत्रेण सह समुच्चितेन सद्योजातं प्रपद्यामि भगवते सांबशिवायावाहनं समर्पयामीति मंत्रेणावाहनं द- दाति । एवं त्र्यंबकं यजामहे इति मंत्रेण सह समुच्चितैर्वक्ष्यमाणमंत्रैः सर्वेऽप्युप- चाराः कार्या इति कमलाकरभट्टपादाः । ॐ त्र्यंबकं यजामहे० सद्योजाताय वै नमो नमः भगवते सांबशिवायासनं समर्पयामीत्यासनं ददाति । ॐ त्र्यंबकं यजामहे० भवे भवे नाति भवे भवस्वमां भगवते सांबशिवाय पाद्यं समर्पयामिति पाद्यं ददाति। ॐ त्र्यंबकं यजामहे० भवोद्भवायनमः वामदेवायनमः भगवते सांबशिवाय स्नानं

समर्पयामिति मंत्रेण आपोहिष्ठेति तिसृभिश्च स्नानं ददाति । अथाद्भिस्तर्पयति । ॐ भवं देवं तर्पयामि ॐ सर्वं देवं तर्पयामि २ ॐ ईशानं देवं तर्पयामि ३ ॐ पशुपतिं देवं तर्पयामि ४ ॐ रुद्रं देवं तर्पयामि ५ ॐ उग्रं देवं तर्पयामि ६ ॐ भीमं देवं तर्पयामि ७ ॐ महांतं देवं तर्पयामि ८ इति तर्पयित्वा । ॐ त्र्यंबकं यजामहे ज्येष्ठाय नमः भगवते सांबशिवायाचमनीयं समर्पयामीत्याचमनीयं ददाति ॥ ॐ त्र्यंबकं यजामहे श्रेष्ठाय नमो रुद्राय नमः भगवते सांबशिवाय मधुपर्कं समर्पयामीति मधुपर्कं ददाति । ॐ त्र्यंबकं यजामहे० कालाय नमः । भगवते सांबशिवाय गंधं समर्पयामीति गंधं ददाति । ॐ त्र्यंबकं यजामहे० कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रथमनाय नमः भगवते सांबशिवाय पुष्पाणि समर्पयामीति पुष्पाणि ददाति । ॐ त्र्यंबकं यजामहे० सर्वभूतदमनाय नमः भगवते सांबशिवाय धूपं समर्पयामीति धूपं ददाति । ॐ त्र्यंबकं यजामहे० मनोन्मनायनमः । भगवते सांबशिवाय दीपं समर्पयामीति दीपं ददाति । ॐ त्र्यंबकं यजामहे भवोद्भवायनमः भगवते सांब शिवाय नैवेद्यं समर्पयामीति काले नैवेद्यं [1]ददामि । ततस्तूष्णीमाचमनीयं ददाति । अथाष्टाभिर्मंत्रैरष्टौ पुष्पाणि ददाति । ॐ भवाय देवाय नमः १ ॐ शर्वाय देवाय नमः २ ॐ ईशानाय देवाय नमः ३ ॐ पशुपतये देवाय नमः ४ ॐ रुद्राय देवाय नमः ५ ॐ भीमाय देवाय नमः ६ ॐ महते देवाय नमः ७ अघोरेभ्य इत्यस्याघोरऋषिः अनुष्टुप्छंदः रुद्रो देवता । तत्पुरुषऋषिः गायत्रीछंदः रुद्रो देवता । ईशान इत्यस्येशानऋषिः अनुष्टुप्छंदः रुद्रो देवता । सर्वेषामघोरादिशरीरोपस्थाने विनियोगः । अघोरेभ्योऽथघोरेभ्य इत्यादिना अस्तु सदा शिवोमित्यंतेनानुवाकत्रयेणास्याघोरतनूरघोरादिशरीराण्युपतिष्ठते ।

## ॥ अथ पंचवक्त्रपूजा ॥

सद्योजातो ऽयमिमीत इत्यस्य जमदग्निऋषिः त्रिष्टुप् छंदः स्वाहाकृतिर्देवता पश्चिमवक्त्रपूजने विनियोगः ॐ सद्योजातो ऽयमिमीत इति मंत्रांते सद्योजाताय पश्चिमवक्त्राय नमः इति गंधादिभिः सिताक्षतैः श्वेतपुष्पैः पश्चिमवक्त्रपूजनम् । वाममद्येत्यस्य भरद्वाजऋषिः त्रिष्टुप्छंदः सवितादेवता उत्तरवक्त्रपूजने विनियोगः । ॐ वाममद्येति मंत्रांते वामदेवायोत्तरवक्त्राय नमः इति गंधादिभिस्तुलसीशतपत्रैश्चोत्तर-

---

१ विष्वक्सेनाय दातव्यं नैवद्यस्य शतांशकम् । पादोदकं प्रसादं च लिंगे चंडेश्वराय च । बाणरावणचंडेशनंदिभृंगिरटादयः । सदाशिवप्रसादोऽयं सर्वे गच्छन्तु शांभवा इति.

क्षवत्र पूजनम्। यातेरुद्रशिवेत्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः एको रुद्रो देवता दक्षिणवक्त्रपूजने विनियोगः । ॐ याते रुद्र शिवेति मंत्रांते अघोराय दक्षिणवक्त्रायनमः॥ इति गंधादिभिर्नीलाब्जैः करवीरैश्च दक्षिणवक्त्रपूजनम् । यत्पुरुषमित्यस्य नारायणऋषिः अनुष्टुप्छंदः जगद्बीजं पुरुषो देवता प्राग् वक्त्र पूजने विनियोगः । ॐ यत्पुरुषमिति मंत्रांते तत्पुरुषाय पूर्ववक्त्रायनमः इति गंधादिभिर्दूर्वांकुरैरर्कपुष्पैश्च पूर्ववक्त्रपूजनम् तमीशानमित्यस्य गौतमऋषिः जगतीछंदः ईशानो देवता ऊर्ध्ववक्त्रपूजने विनियोगः । ॐ तमीशानमित्यस्यांते ईशानायोर्ध्ववक्त्रायनमः इति गंधादिभिर्बिल्वैः कनकपुष्पैश्चोर्ध्ववक्त्रपूजनम् ॥

## ॥ अथ प्रकारांतरेण पंचवक्त्रपूजा ॥

तत्रादौ पश्चिमवक्त्रपूजा । तत्र सद्योजातमित्यस्य सद्योजातऋषिः त्रिष्टुप्छंदः सद्योजातो देवता श्वेतवर्णं हंसवाहनं पृथिवीतत्त्वंपश्चिमवक्त्रे नमस्कारे विनियोगः ॐ सद्योजातं प्रपद्यामीत्यस्यांते सद्योजाताय श्वेतवर्णाय हंसवाहनाय पश्चिमवक्त्राय पृथिवीतत्त्वाय सृष्टिरूपात्मने ब्रह्मणे नमो हां इति प्रणम्य धनुर्बाणमुद्रा प्रदर्शनम् । वामस्य मध्यमाग्रं तुं तर्जन्यग्रे नियोजयेत् । अनामिकां कनिष्ठां च तस्यांगुष्ठेन पीडयेत् । दर्शयेद्दक्षिणस्कंधे धनुर्मुद्रेयमीरितेति । " दक्षिणमुष्टिस्थस्य तर्जन्या दीर्घया बाणमुद्रिकेति । सद्योजातमित्यस्य ऋष्यादिकं प्राग्वत् पश्चिमवक्त्रपूजने विनियोगः । ॐ सद्योजातं प्रपद्यामिति मंत्रांते सद्योजाताय श्वेतवर्णाय हंसवाहनाय पश्चिमवक्त्राय नम इति गंधादिभिः पूजनम् । अत्र मनः शिलाचंदनं । श्वेता अक्षताः । श्वेतपुष्पाणि । गुग्गुलधुपः । घृतदीपः । सर्वत्र पायसं नैवद्यम् । ततः कलापूजनम् ॐ ऋद्ध्यैनमः १ ॐ सिध्यैनमः २ ॐ धृत्यैनमः ३ ॐ लक्ष्म्यैनमः ४ ॐ मेधायैनमः ५ ॐ कांत्यैनमः ६ ॐ स्वधायैनमः ७ ॐ प्रभायैनमः ८ इत्यष्टौ ॥ सद्योजातकला ह्येता अष्टौ च परिकीर्तिताः ॥ श्वेताक्षतैः सितैः पुष्पैः पूजयेद्धंसवाहनम् । सिध्यंति सर्वकार्याणि पूजनेन न संशयः । अथ ध्यानम् ॥ प्रालेयामलबिंदुकुंदधवलं गोक्षीरफेनप्रभं भस्माभ्यंगमनंगदेहदमनं ज्वालावलीलोचनम् ॥ ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यर्चितं योगिभिर्वंदेहं सकलं कलंकरहितं स्थाणोर्मुखं पश्चिमम् ॥ इति पश्चिमवक्त्रपूजा ॥

## ॥ अथोत्तरवक्त्रपूजा ॥

वामदेवायेति वामदेवऋषिः जगतीछंदः विष्णुर्देवता कृष्णवर्णं गरुडवाहनं आपस्तत्वं उत्तरवक्त्रं नमस्कारे विनियोगः । वामदेवायनमो ज्येष्ठायनम इति मंत्रांते वामदेवाय कृष्णवर्णाय गरुडवाहनायोत्तरवक्त्रायापस्तत्वायामृतरूपात्मने

विष्णवे नमः हीं इति प्रणम्य पद्ममुद्रा प्रदर्शनम् ॥ द्वौ करौ संहतौ कृत्वा सन्मुखावु-न्नतांगुली ॥ तलांतर्मिलितांगुष्ठौ कुर्यादेषाब्जमुद्रिका " इति तल्लक्षणम् । वामदेवायेत्यस्य ऋष्यादिकं पूर्ववत्कृत्वा उत्तरवक्त्रपूजने विनियोगः । ॐ वामदेवाय नमो ज्येष्ठायेति मंत्रांते वामदेवाय कृष्णवर्णाय गरुडवाहनायोत्तरवक्त्रायनमः इति गंधादिभिः पूजनम् । अत्र हरिचंदनम् । तुलसीशतपत्राणि पुष्पाणि । " कंकोल-पूगकर्पूरजातीफललवंगकैः । सुगंधपंचकं प्रोक्तमायुर्वेदप्रकाशकैः " इत्युक्तं पंच-सौगंधिको धूपः । घृतपक्वं गोधूमान्नं नैवेद्यम् ॥ ततः कलापूजनम् ॐ रजसेनमः १ ॐ रक्षायै० २ ॐ रत्यै० ३ ॐ पाल्यायै० ४ ॐ कामायै० ५ ॐ संजीविन्यै० ६ ॐ प्रियायै० ७ ॐ बुद्ध्यै० ८ ॐ क्रियायै० ९ ॐ धात्र्यै० १० ॐ भ्रामिण्यै० ११ ॐ मोहिन्यै० १२ ज्वरायै० १३ इति त्रयोदश। "वामदेवकला ह्येतास्त्रयोदश । वरानने । तुलसीशतपत्रैश्च पूजयेद्गरुडासनम् । अथ ध्यानम् ॥ गौरं कुंकुमपिंगलं सुतिलकं व्यापांडुगंडस्थलं भ्रूविक्षेपकटाक्षवीक्षणलसत्संसक्तकर्णोत्पलम् ॥ स्निग्धं बिंबफलाधरं प्रहसितं नीलालकालं कृतं वंदे पूर्णशशांकमंडलनिभं वक्त्रं हरस्योत्तरम्॥

## ॥ अथ दक्षिणवक्त्रपूजा ॥

अघोरेभ्य इत्यस्याघोरऋषिः । अनुष्टुप्छंदः रुद्रोदेवता नीलवर्णं कूर्मवाहनं तेजस्तत्वं दक्षिणवक्त्रनमस्कारे विनियोगः ॐ अघोरेभ्य इति मंत्रांते अघोराय नीलवर्णाय कूर्मवाहनाय दक्षिणवक्त्राय तेजस्तत्वाय विश्वरूपात्मने कालाग्नि-रुद्राय नमो हूं इति प्रणम्य ज्ञानमुद्रा प्रदर्शनम् । " तर्जन्यंगुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् ॥ ज्ञानमुद्राभवेदेषा " इति तल्लक्षणम् । अघोरेभ्य इत्यस्या-र्षादि पूर्ववत् दक्षिणवक्त्रपूजने विनियोगः । ॐ अघोरेभ्य इति मंत्रांते अघोराय नीलवर्णाय कूर्मवाहनाय दक्षिणवक्त्राय नम इति गंधादिभिः पूजनम् । अत्र कृ-ष्णागरुचंदनम् । नीलोत्पलानि करवीराणि च पुष्पाणि । सितागरुधूपः । माषा-न्नं नैवेद्यम् । ततः कला पूजनम् । ॐ तमसेनमः । ॐ मोहायै० २ ॐ क्षमायै० ३ ॐ निद्रायै० ४ ॐ व्याधये० ५ मृत्यवे० ६ ॐ क्षुधायै० ७ ॐ तृष्णायै० ८ इ-त्यष्टौ ॥ नीलोत्पलैः करवीरैः पूजयेत्कूर्मसंस्थितम् । सर्वबाधाविनाशाय ज्ञानमोक्ष प्रसाधकम् ॥ अथ ध्यानम् ॥ कालाभ्रभ्रमरांजनाचलनिभं व्यावृत्तपिंगेक्षणं खंडे न्दुद्वयमिश्रितांशुदशनप्रोद्भिन्नदंष्ट्रांकुरम् ॥ सर्पप्रोतकपालशक्तिसकलं व्याकीर्णस-च्छेखरं वंदे दक्षिणमीश्वरस्य कुटिलं भ्रूभंगरौद्रं मुखम् ॥ इति ॥

## ॥ अथ पूर्ववक्त्रपूजा ॥

तत्पुरुषायेत्यस्य तत्पुरुषऋषिः । गायत्रीछंदः रुद्रो देवता । पीतवर्णमश्व-वाहनं वायुस्तत्वं पूर्ववक्त्रनमस्कारे विनियोगः ॐ तत्पुरुषायेति मंत्रांते तत्पु-

रुषाय पीतवर्णायाश्ववाहनाय पूर्ववक्त्राय वायुस्तत्वाय चैतन्यात्मने आदित्याय नमो हैं इति प्रणम्य कवचमुद्रा प्रदर्शनम् । " करद्वंद्वांगुलयो वर्मणि स्युरिति तल्लक्षणम् ।" तत्पुरुषायेत्यस्यार्षादिकं पूर्ववक्त्रपूजने विनियोगः । ॐ तत्पुरुषायेति मंत्रांते तत्पुरुषाय पीतवर्णायाश्ववाहनाय पूर्ववक्त्राय नम इति गंधादिभिः पूजनम् ॥ अत्र हरितालं चंदनम् ॥ दूर्वांकुराः । अर्कपुष्पाणि च पुष्पाणि । कृष्णागुरुधूपः । मोदकं नैवद्यम् । ततः कला पूजनम् । ॐ निवृत्त्यैनमः १ ॐ प्रतिष्ठायै २ ॐ विद्यायै० ३ ॐ शांत्यै ४ इति चतस्रः कला । दूर्वांकुरैरर्कपुष्पैः पूजयेदश्ववाहनम् । आयुष्यं वर्धते तत्र विशिष्टफलदायकम् ॥ अथ ध्यानम् ॥ संवर्त्ताग्नितडित्प्रतप्तकनकप्रस्पर्द्धितेजोऽरुणं गंभीरस्मृतिनिःसृतोग्रदशनप्रोद्भासिताम्राधरम् । बालेंदुद्युतिलोलपिंगलजटाभारप्रबद्धोरगं वंदे सिद्धसुरासुरेंद्रनमितं पूर्वं मुखं शूलिनः । इति॥

## ॥ अथोर्ध्ववक्त्रपूजा ॥

ईशानेत्यस्य ईशानऋषिः। अनुष्टुप्छंदः रुद्रो देवता । गोक्षीरवर्णं वृषभवाहनं०॥ ऊर्ध्ववक्त्रायाकाशतत्वायाऽव्यक्ताय सर्वव्यापकात्मने हौं इति प्रणम्य महामुद्रा प्रदर्शनम् । " उत्तानौ तादृशावेव व्यापकांजलिकं करौ " इति ॥ तादृशौ संयुक्तावेव उत्तानौ करौ व्यापकांजलिकं ॥ महामुद्रेति तल्लक्षणम् । ईशानेत्यस्य ऋष्यादिकं प्राग्वत् ऊर्ध्ववक्त्रपूजने विनियोगः । ईशानः सर्वविद्यानामिति मंत्रांते ईशानाय गोक्षीरवर्णाय वृषभवाहनायोर्ध्ववक्त्रायनम इति गंधादिभिः पूजनम्॥ अत्र भस्म चंदनम् । बिल्वपत्रकनकपुष्पाणि । ऋतुभवान्यन्यान्यपि पुष्पाणि । हरिचंदनं धूपः॥ शर्करादध्योदनं नैवेद्यम् । ततः कला पूजनम् । ॐ शशिन्यै नमः। १ ॐ अंगदायै० २ ॐ ज्येष्ठायै० ३ ॐ मरीच्यै० ४ ॐ ज्वालिन्यै० ५ इति पंच। ईशानस्य कलाः पंच निरंजनपदानुगाः । हंस हंसेति यो ब्रूयाद्धंसो नाम सदाशिवः । बिल्वैः कनकपुष्पैश्च अन्यैः ऋतुभवैस्तथा ॥ पूजनीयं प्रयत्नेन सौख्यमोक्षप्रदायकम् अथ ध्यानम् व्यक्ताऽव्यक्तगुणोत्तरं सुवदनं षट्त्रिंशतत्वाधिकं तस्मादुत्तरतत्वमक्षयमिति ध्येयं सदा योगिभिः । वंदे तामसवर्जितेन मनसा सूक्ष्मातिसूक्ष्मं परं शांतं पंचममीश्वरस्य वदनं खं व्यापि तेजोमयम् ॥ इत्यूर्ध्ववक्त्रपूजा ॥

## ॥ अथाभिषेकमंत्रविनियोगः ॥

अस्याश्च पंचवक्त्रपूजाया देवप्रतिष्ठायां विहितत्वेन रुद्रजपरुद्रहोमरुद्राभिषेकार्चनेष्वविहितत्वेन च प्रमाणाभावादाचार एव तस्यां प्रमाणम् अथैतस्य शिवस्य मूर्धनि सौवर्णेन राजतेन ताम्रेण वा कलशेन मधुना गव्येन सर्पिषा पयसा वा त-

दभावे माहिषेण वा इक्षुरसेन नालिकेररसेनाम्ररसेन वा गंधोदकेन वा केवलोदकेन वा वक्ष्यमाणैर्मंत्रैरभिषेकः [1]कर्तव्यः । तत्रादावभिषेकमंत्राणां ऋष्यादिकस्मरणम् ॥ तद्यथा । यज्जाग्रत इति षण्णामृचां शिवसंकल्पऋषिः त्रिष्टुप्छंदः मनोदेवता अभिषेके विनियोगः । सहस्रशीर्षेति पुरुषसूक्तस्य नारायणपुरुषऋषिः । आद्यानां पंचदशानामनुष्टुप् छंदः । यज्ञेन यज्ञमित्यस्य त्रिष्टुप्छंदः । जगद्बीजं पुरुषो देवता अभिषेके विनियोगः । अद्भ्यः संभृत इत्युत्तरनारायणस्य नारायण पुरुष ऋषिः । आद्यानां तिसृणां त्रिष्टुप् छंदः । चतुर्थपंचमयोरनुष्टुप्छंदः । अंत्यस्यास्त्रिष्टुप्छंदः आदित्यो देवता अभिषेके विनियोगः । आशुः शिशान इति द्वादशानामप्रतिरथ ऋषिः त्रिष्टुप् छंदः । इंद्रो देवता । अभिषेके विनियोगः । विभ्राडित्यस्य विभ्राट् सौर्यऋषिः । जगतीछंदः । उदुत्यमिति तिसृणां प्रस्कण्व ऋषिः । गायत्री छंदः । सूर्यो देवता । तंप्रत्नथेत्यस्य ब्रह्मस्वयंभू ऋषिः । जगती छंदः । विश्वेदेवा देवता । अयंवेन इत्यस्य ब्रह्मस्वयंभू ऋषिः । त्रिष्टुप् छंदः । सोमो देवता । चित्रमित्यस्य ब्रह्मस्वयंभू ऋषिः । त्रिष्टुप् छंदः । सूर्यो देवता । आन इत्यस्य अगस्त्यऋषिः । त्रिष्टुप् छदः । सूर्यो देवता । यदद्येत्यस्य श्रुतकक्षसुतंकक्षावृषी । गायत्री छंदः । सूर्यो देवता । तरणिरित्यस्य प्रस्कण्वऋषिः । गायत्रीछंदः । सूर्यो देवता । तत्सूर्यस्येति द्वयोः कुत्सऋषिः । त्रिष्टुप् छंद । सूर्यो देवता बण्महाँनिति द्वयोर्जमदग्निऋषिः । आद्यस्य बृहतीछंदः । द्वितीयस्य सतो बृहती छंदः । सूर्यो देवता । श्रायंत इवेत्यस्य नृमेधऋषिः । बृहतीछंदः । सूर्यो देवता । अद्यादेवा इत्यस्य कुत्सऋषिः । त्रिष्टुप्छंदः । सूर्यो देवता । अभिषेके विनियोगः ॥ ॐ कारस्य ब्रह्माऋषिः दैवी गायत्री छंदः । अग्निः परमात्मा देवता । महाव्याहृतीनां प्रजापतिर्देवाः । अग्निर्गंधर्वा वा ऋषयः। दैवीगायत्री दैव्युष्णिक् दैवी गायत्री छंदांसि । अग्निवायुसूर्याः क्रमेण देवताः॥ नमस्ते रुद्रेति रौद्राध्यायस्य परमेष्ठीऋषिः । देवा वा ऋषयः। प्रजापतिर्वा ऋषिः नमस्ते रुद्रेत्यस्या गायत्री छंदः । याते रुद्रेत्यादीनां तिसृणामनुष्टुप् छंदः । अध्यवोचदित्यादितिसृणां

---

१ अत्रैकस्मिन् पुस्तके विशेषः ॥ मध्यमानामिकांगुष्ठैः पुष्पं संगृह्य पूजयेत् ॥ अंगुष्ठतर्जन्यग्राभ्या निर्माल्यमपनोदयेत् ॥ अपनीतं च निर्माल्यं चंडेशाय निवेदयेत् ॥ अशून्यमस्तकं लिंगं सदा कुर्वीत पूजकः इति शिवरहस्यवचनान्निर्माल्यं तर्जन्यंगुष्ठाग्राभ्यामुत्तरतस्त्यक्त्वा मध्यमानामिकांगुष्ठैर्मस्तकोपरि पुष्पपत्राद्यन्यतमं निधायोत्तरतस्त्यक्तनिर्माल्यमादायेशान्यां चंडोऽस्तीति भावनयेशान्यां निवेदयेदित्येवं विधिरभिषेके स्नाने शयने च ज्ञेय इत्युक्तं शिवार्चनदीपिकायाम् ॥ इति ॥

पंक्तिछंदः ॥ नमोस्तु नीलग्रीवायेत्यादि सप्तानामनुष्टुप् छंदः । मानोमहांतमिति द्वयोः कुत्सोऽपि ऋषिः । जगतीछंदः । सर्वासामेको रुद्रो देवता । नमो हिरण्य बाहवे इत्यादीनि द्रापे इत्यतः प्राक्तनानि सर्वाणि यजूंषि। तत्र यजुषामनियताक्षरत्वादेकेषां छंदो न विद्यत इति कात्यायनोक्तेर्यजुषां छंदो विशेषनियमो नास्तीत्येके । नमो हिरण्यबाहव इत्यादीनां श्वपतिभ्यश्चवो नम इत्यंतानां यजुषां हिरण्यबाहुः सेनानीर्दिशांपतिरित्यादिमंत्रवर्णावगतनामका उभयतो नमस्कारा बहवो रुद्रा देवताः । ततो नमो भवाय च रुद्राय चेत्यादीनां प्रखिदते चेत्यंतानां यजुषां भवादयो मंत्रलिंगावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवताः । ततो नम इषुकृद्भ्यो धनुष्कृद्भ्यश्चवो नम इत्यस्य यजुष उभयतो नमस्कारा बहवो रुद्रा देवताः। नमो वः किरिकेभ्य इत्यादीनामग्निवायुसूर्यहृदयभूतव्याहृतीनां अन्यतरतो नमस्कारा बहवो रुद्रा देवताः । द्रापे इत्यस्या उपरिष्टाद् बृहतीछंदः। इमा रुद्रायेत्यस्याः कुत्सोऽपि ऋषिः । जगती छंदः । यात इत्यस्या अनुष्टुप् छंदः । परित इति द्वयोस्त्रिष्टुप् छंदः । विकिरिद्र रुद्रस्राणीति द्वयोरनुष्टुप् छंदः सप्तानामेको रुद्रो देवता । असंख्यातेत्यादीनां दशानामनुष्टुप् छंदः । बहवो रुद्रा देवताः । नमोऽस्तु रुद्रेभ्य इत्यादीनां त्रयाणां यजुषां धृतिछंदः। बहवो रुद्रा देवताः सकलाध्यायस्य शतशीर्षा रुद्रो देवता । अभिषेके विनियोगः । वयं सोमेत्यस्य बंधुऋषिः । गायत्रीछंदः । सोमो देवता । एषत इत्यनयोः प्रजापतिः ऋषिः । सामपंक्तियजुर्जगती छंदांसि । रुद्रो देवता । अवरुद्रमित्यस्य प्रजापतिऋषिः । पंक्तिछंदः । रुद्रो देवता । भेषजमसीत्यस्य प्रजापतिऋषिः । ककुप् छंदः । रुद्रो देवता । त्र्यंबकमित्यनयोः क्रमेण वसिष्ठप्रजापती ऋषी । अनुष्टुप्छंदः । त्र्यंबको रुद्रो देवता । एतत्त इत्यस्य प्रजापतिः ऋषिः । आस्तार पंक्तिछंदः । रुद्रो देवता । त्र्यायुषमित्यस्य नारायणऋषिः । उष्णिक्छंदः । आशीर्देवता शिवो नामेत्यस्य प्रजापतिः ऋषिः । प्राजापत्या बृहतीछंदः । क्षुरोदेवता । निवर्तयामीत्यस्य प्रजापतिः ऋषिः । प्राजापत्या त्रिष्टुप्छंदः । लिंगोक्तादेवता अभिषेके विनियोगः । नतंविदाथ विश्वकर्मेत्यनयोः विश्वकर्मा भौवन ऋषिः । त्रिष्टुप्छंदः । विश्वकर्मादेवता अभिषेके विनियोगः । उग्रश्चेत्यस्य प्रजापतिऋषिः। परमेष्ठी प्राजापत्यो वा ऋषिः। गायत्रीछंदः मरुतो देवता । अग्निहृदयेनेत्यादीनां यजुषां प्रजापति ऋषिः । लिंगोक्ता देवता । आयासाय स्वाहेत्यादीनां प्रजापतिऋषिः । लिंगोक्ता देवता । अभिषेके विनियोगः । वाजश्चमे प्रसवश्चम इत्यादीनां चमकमंत्राणां अनड्वाँश्चमे धेनुश्चमे यज्ञेन कल्पन्तामित्यंतानां तथा

स्वाहेत्यादिनां वेट् स्वाहेत्यंतानां देवा ऋषयः। छंदांसि पिंगलोक्तानि । तानि यथा। वाजश्चम इत्यादीनां चतुरक्षराणां दैवी बृहतीछंदः । ऊर्क्चम इत्यादीनां त्र्यक्षराणां दैव्यनुष्टुप् । प्रयतिश्चम इत्येवं पंचाक्षराणां दैवीपंक्तिः । आधिपत्यं चम इत्यादीनां दैवी त्रिष्टुप् । यजुर्गायत्री वा । हारियोजनश्चम इत्यादीनां सप्ताक्षराणां दैवीजगती। यजुरुष्णिग्वा । आयुर्यज्ञेन कल्पंतामित्यादीनां अष्टाक्षराणां यजुरनुष्टुप्। प्राजपत्या गायत्री वा भुवनस्य पतये स्वाहेत्यादीनां नवाक्षराणां यजुर्बृहती। आसुरी जगती वा। मुग्धाय वैनंशिनायेत्यादीनां दशाक्षराणां यजुः पंक्ति । आसुरी त्रिष्टुप्वा । विनशिन आंत्यायेत्यादीनामेकादशाक्षराणां यजुस्त्रिष्टुप् आसुरी पंक्तिर्वा । अंगुलयः शक्करयो दिशश्चम इत्यस्य द्वादशाक्षरस्य यजुर्जगती साम गायत्री वा । प्राजापत्योष्णिग्वा । आसुरी बृहती । एवमनुक्तानामपि सर्वेषां यजुषां छंदः कल्पनीयः । सर्वेषामग्निर्देवता सर्वेषामभिषेके विनियोगः। ऋचं वाचमिति शांत्यध्यायस्य दध्यंङाथर्वण ऋषिः सकलाध्यायस्यैव विश्वेदेवा देवताः । ऋचं वाचमिति चतुर्णां यजुषां दैवी जगतीछंदः । ऋगादयो लिंगोक्ता देवताः । वागोज इत्यस्य यजुर्जगतीछंदः । वागादि लिंगोक्ता देवताः । यन्मे इत्यस्य पंक्ति छंदः । बृहस्पतिर्देवता । तिसृणां महाव्याहृतीनां दध्यङाथवर्णऋषिः । दैवीगायत्री दैव्युष्णिक् । दैवी गायत्री छंदांसि अग्निवायुसूर्याः क्रमेण देवताः । तत्सवितुरित्यस्य दध्यङाथर्वणऋषिः । गायत्रीछंदः। सविता देवता । कयान इति त्र्युचस्य दध्यङाथवर्णऋषिः । द्वयोर्गायत्रीछंदः । तृतीयायाः पाद निचृद्गायत्रीछंदः । इंद्रो देवता । कयात्वमिंद्रस्यानिरुक्ता गायत्री छंदः । इंद्रो देवता इंद्रो विश्वस्यति द्विपदा विराट् छंदः । इंद्रो देवता । शन्नो मित्रः शन्नो वात इति द्वयोरनुष्टुछंदः। मित्रावरुणादयो लिंगोक्ता देवताः । अहानि शमित्यस्य द्विपदा गायत्रीछंदः अहानि रात्रयश्च देवताः। शन्न इंद्राग्नीत्यस्य त्रिष्टुप्छंदः। इंद्राग्नी इंद्रावरुणौ इंद्रापूषणौ इंद्रासोमौ च देवता । शन्नो देवीरित्यस्या गायत्री छंदः आपो देवताः । स्योना पृथिवीत्यस्य दध्यङाथर्वणऋषिः गायत्रीछंदः । पृथिवी देवता । आपोहिष्टेति त्र्युचस्य दध्यङाथर्वण ऋषिः गायत्री छंदः ।आपो देवताः। द्यौः शांतिरित्यस्य शक्करीछंदः द्यौरादयो लिंगोक्ता देवताः । दृते दृंहेत्यस्य ब्राह्मी अनुष्टुप्छंदः आशीर्देवता दृतेदृंहेत्युष्णिक् छंदः आशीर्देवता । नमस्ते हरसे इत्यस्य दध्यङाथवर्णऋषिः । बृहतीछंदः । अग्निर्देवता । नमस्ते अस्तु यतोयत इत्यनयोरनुष्टुप्छंदः । आद्याया विद्युत्स्तनयित्नुर्भगवान् देवता द्वितीयाया महावीरो देवता । सुमित्रियान इत्यस्य दध्यङाथर्वणऋषिः । प्राजापत्या जगती । आपो देवताः । तच्चक्षुरित्यस्य पुरउष्णिक्छंद इति कात्यायनः । ब्राह्मी त्रिष्टुप्छंदः व्यूहनाद ? त्य-

ष्टिर्वेति सर्वानुक्रमसूत्रभाष्यकारः । अक्षरातीतं पुर उष्णिक्छंद इत्याहुराचारादर्शकाराः श्रीदत्तोपाध्यायाः । सूर्यो देवता । सर्वस्याध्यायस्य शांतिकरणे विनियोगः । एवं ऋष्यादीनि स्मृत्वाऽभिषेकः कार्यः । स यथा । ॐ यज्जाग्रत इत्यादिभिर्विभ्राडित्यनुवाकांतैः पंचभिरंगमंत्रैः पूर्वमभिषेकः कार्यः । ॐ भूः ॐ भुवः ॐ स्वः ॐ नमस्ते रुद्रेत्यादिना तमेषां जंभे दध्मः ॐ भूः ॐ भुवः ॐ स्वः ॐ इत्यंतेनाष्टप्रणवयुक्तेन रौद्राध्यायेन चाभिषेकः । ॐ वयंसोमेत्यादिभिरष्टभिः कंडिकाभिश्च।। काण्वानां तु सप्तकंडिकाभिरिति विशेषः । ॐ नतं विदाथेति द्वाभ्यां चाभिषेक इत्युक्तं देवपद्धतौ ।। ॐ उग्रश्चेति तिसृभिः सप्तभिर्वा रुद्रजटानाम्नीभिश्चेति परशुरामादयः । निर्मूलत्वान्नेति देवयाज्ञिकादयः । ॐ वाजश्चमे इत्यष्टानुवाकात्मकेन चमकेन चेति देवयाज्ञिकाः । महच्छिरसाभिषेकपक्षे न चमकानुवाकैरभिषेकः । चमकानुवाकैरभिषेकपक्षे तु न महच्छिरसाभिषेक इत्यपरे ॐ ऋचं वाचमिति शांत्यध्यायेन शांतिकरणम् । ॐ शांतिरिति त्रिरुच्चारणम् । इत्येको रुद्राभिषेकप्रकारः । अयमेव प्रकारश्चमकवर्जं सर्वैर्वाजसनेयिभिराहृतः ।।

## ॥ अथापरः प्रकारः ॥

ॐ यज्जाग्रत इत्यादिभिर्नमस्ते रुद्रेति रौद्राध्यायांतैः षड्भिरंगमंत्रैः पूर्वमभिषेकः । ॐ भूः ॐ भुवः ॐ स्वः ॐ नमस्ते रुद्रेत्यादिना तमेषां जंभे दध्मः । ॐ भूः ॐ भुवः ॐ स्वः इत्यंतेनाष्टप्रणवयुक्तेन रौद्राध्यायेनाभिषिंच्य । ॐ वयंसोमेत्यष्टभिः कंडिकाभिरभिषेकः । ॐ उग्रश्चेति तिसृभिः सप्तभिर्वा महच्छिरो रुद्रजटाभ्यामभिषेकाभावपक्षे तु ॐ वाजश्चमेत्यष्टानुवाकेनाभिषेकः । ॐ ऋचं वाचमिति शांत्यध्यायेन पक्षद्वयेऽपि शांतिकरणम् । ॐ शांतिरिति त्रिरुच्चारणम् वा । इति द्वितीयः प्रकारः । ।। बृहत्पराशरस्मृतिमते तु षडंगमंत्रपूर्वको रौद्राध्यायस्यैव जपांते च शांतिकरणमित्ययमेव रुद्रजपो नतु पुनरन्यस्य कस्यचिन्मंत्रस्य जप इति विशेषः।। एवमभिषिच्य ॐ सद्योजातं प्रपद्यामीत्येवमादिभिर्मंत्रैरावाहनाद्युपस्थानांतं पूर्ववदभ्यर्चनम् ।। इमारुद्रायेति कुत्सऋषिः जगतीछंदः एको रुद्रो देवता । अभिषेकनिवेदने विनियोगः । ॐ इमारुद्रायेति मंत्रांतेऽनेन श्री रुद्राभिषेकेन भगवान् रुद्रः परमात्मा प्रीयतामित्यभिषेकनिवेदनम् ॥ द्रापे इत्यस्य परमेष्ठी ऋषिः उपरिष्टाद्बृहती छंदः एको रुद्रो देवता अष्टांगप्रणामे विनियोगः । ॐ द्रापे इत्यष्टांगप्रणामः । " पद्भ्यां कराभ्यां जानुभ्यां शिरसा चोरसा तथा । मनसा च तथा वाचा दृष्ट्या प्रणामोऽष्टांग उच्यते " इति तल्लक्षणम् । विकिरिद्रेत्यस्य परमेष्ठी ऋषिः । अनुष्टुप्छंदः । एको रुद्रो देवता विसर्जने विनियोगः । ॐ विकिरिद्रेति

विसर्जनम् । ततो ध्यानम् । त्रिलोचनं चतुर्बाहुं सर्वाभरणभूषणम् । नागयज्ञोपवीतं च व्याघ्रचर्मोत्तरीयकम् ॥ वृषस्कंधसमारूढमुमादेहार्धधारिणम् । अमृतेनाप्लुतं शांतं चंद्रार्धकृतशेखरम् । शुद्धस्फटिकसंकाशं जटामुकुटमंडितम् । वरदाभयहस्तं च सर्वकामफलप्रदम् । एवं ध्यात्वा द्विजः सम्यगनंगांगहरं हरम् ॥ इति । अथ स्तुतिः । अनादिनिधनो रुद्रो गीयते श्रुतिभिः सदा ॥ राजतेन स्वयं ब्रह्मा सात्विकेन स्वयं हरिः । तामसेन स्वयं रुद्रस्त्रितयं त्वयि संस्थितम् ॥ नमामि त्वां विरूपाक्ष नीलग्रीव नमोऽस्तुते । त्रिनेत्राय नमस्तुभ्यमुमादेहार्धधारिणे । त्रिशूलधारिणे तुभ्यं भूतानां पतये नमः । पिनाकिने नमस्तुभ्यं नमो मीढुष्टमाय च । नमामि त्वां महाभूतपतये त्वां नमाम्यहम् ॥ स्वयं भिक्षान्नभोक्ता भक्तानां राज्यदः स्वयम् । सूर्यरूपं समासाद्य देहिनां देहदायकः । यतीनां मुक्तिदस्त्वं च भुक्त्यर्थिनां च भुक्तिदः । यदृच्छया सर्वमिदं तत्तन्मध्ये च पालितम्। अंते च विलयं नीतं शक्तिः कस्य भवादृते । मंत्रहीना क्रीयाहीना भक्तिहीना महेश्वर । पूजा संपूर्णतां यातु त्वत्प्रसादात्रिलोचन । अनुस्वारेण हीनस्य जपस्याम्रेडितस्य च । दोषाः प्रयांतु नाशं च त्वत्प्रसादात्सुरेश्वर । महारुद्राभिषेकोऽयं न्यूनो वाप्यधिकोपि वा । संपूर्णस्त्वत्प्रसादाच्च भूयाद् भूतिविभूषण ॥ इति श्रीपरशुरामात्मजेन जगन्नाथशर्मणा संशोधिते रुद्रकल्पद्रुमे रुद्रपरिच्छेदे रूपकाख्याद्यरुद्राभिषेकपद्धतिः ॥

## ॥ अथ द्वितीयो रुद्र उच्यते ॥

तत्रादौ संकल्पमारभ्य षड्विधांगन्यासपूर्वकं पूर्ववदुपस्थानांतं श्रीरुद्रस्याभ्यर्चनम् ॥ यज्जाग्रत इत्यादीनां विभ्राडित्यनुवाकांतानामंगपंचकमंत्राणां प्रणवस्य तिसृणां महाव्याहृतीनां रौद्राध्यायस्य वयं सोमेति महच्छिरसो नतं विदाथेति द्वयोः उग्रश्चेति जटायाश्च पूर्ववदार्षादिस्मरणम् । शांत्यध्यायस्य च । ॐ यज्जाग्रत इत्यादिभिर्विभ्राडित्यनुवाकांतैः पूर्वोक्तैः पंचभिरंगमंत्रैः पूर्वमभिषेकः । ततः ॐ भूः ॐ भुवः ॐ स्वः ॐ नमस्ते रुद्रेत्यादिकस्य तमेषां जंभे दध्मः ॐ भूः ॐ भुवः ॐ स्वः ॐ इत्यंतस्य रौद्राध्यायस्य दशधाऽऽवृत्तिभिरभिषेकः । ततः ॐ यज्जाग्रत इत्यादिभिर्विभ्राडित्यनुवाकांतैः पूर्वोक्तैः पंचभिरंगमंत्रैः समन्वितया केवलया वा एकावृत्त्याभिषेकः । ॐ वयं सोमेति अष्टभिर्महच्छिरोनाम्नीभिश्च । काण्वानां तु वयं सोमेति सप्तभिरिति विशेषः । ॐ नतंविदाथेति द्वाभ्यां चेति देवपद्धतौ । ॐ उग्रश्चेति तिसृभिः सप्तभिर्वा रुद्रजटानाम्नीभिश्चेति परशुरामादयः । नैवेति देवयाज्ञिकादयः । ॐ ऋचंवाचमित्यध्यायेन शांतिकरणम्। ॐ शांतिरिति त्रिरुच्चारणम् वा॥ अयं प्रकारस्तु " सांगमाद्यं' जपेद्रुद्रं केवलानि नवांतरा ॥ सांगं सशीर्षकं चांत्यं निरंगमिति केचन " इति परशुरामकारिकाकाण्वमाध्यंदिनाचारानुसारी ॥

## ॥ अथापरः प्रकारः ॥

तत्रादावभिषेकमंत्राणां पूर्ववदार्षादिस्मरणम् । ॐ यज्जाग्रत इत्यादिभिर्नमस्ते रुद्रेति रौद्राध्यायांतैः षड्भिरंगमंत्रैः पूर्वमभिषेकः । ततः ॐ भूः ॐ भुवः ॐ स्वः ॐ नमस्ते रुद्रेत्यादिकस्य तमेषां जंभे दध्मः ॐ भूः ॐ भुवः ॐ स्वः ॐ इत्यंतस्याष्टप्रणवयुक्तस्य रौद्राध्यायस्यैकादशधाऽऽवृत्तिभिरभिषेकः । तदंते ॐ वयं सोमेत्यष्टभिः शांत्यध्यायेन चाभिषेक इति द्वितीयः ॥ अथ तृतीयः प्रकारः । ॐ यज्जाग्रत इत्यादिभिर्विभ्राडित्यनुवाकांतैः पंचभिरंगमंत्रैरभिषेकपूर्वकमष्टप्रणवयुक्तरौद्राध्यायस्यैकादशधाऽऽवृत्तिभिरभिषेकः । तदंतरा प्रत्यावृत्त्यष्टौ चमकानुवाकानेकादशधा विभज्यैकैकेन चमकविभागेन । तत्रेत्थं प्रकारः । रौद्राध्यायस्यैकावृत्तौ कृतायां ॐ वाजश्चम इति चतसृभिः कंडिकाभिरभिषेकः । ॐ सत्यं चम इति चतसृभिर्द्वितीयावृत्तौ ॥ ॐ ऊर्क्चम इति चतसृभिस्तृतीयावृत्तौ । ॐ अश्माचम इति तिसृभिस्तुरीयावृत्तौ ॥ ॐ अग्निश्चम इंद्रश्चम इति तिसभिः पंचमावृत्तौ ॥ ॐ अंशुश्चम इति तिसृभिः षष्टावृत्तौ ॥ ॐ अग्निश्चमे घर्मश्चम इति द्वाभ्यां सप्तमावृत्तौ ॥ ॐ एका चमे तिस्रश्चम इत्येकयाऽष्टमावृत्तौ । ॐ चतस्रश्चम इत्येकया नवमावृत्तौ । ॐ त्र्यविश्चम इति द्वाभ्यां च दशमावृत्तौ ॥ ॐ वाजाय स्वाहेति द्वाभ्यामेकादशावृत्तौ ॥ अयमेकादशधाविभक्तेन चमकेनाभिषेकः कौशिकबौधायनयोर्मत एव ॥ पराशरादीनां मते तु न चमकानुवाकैरभिषेकः । अस्मिन् पक्षे चमकानुवाकानामृष्यादिस्मरणाभावः । ॐ ऋचं वाचमिति शांत्यध्यायेन ततः शांतिकरणमिति तृतीयः प्रकारः ॥ बृहत्पराशरस्मृतिमते तु अंगपंचकमंत्रैरभिषेकपूर्वकं रौद्राध्यायस्यैकादशभिरावृत्तिभिरभिषेकोत्तरं च शांतिकरणमित्येतावानेव द्वितीयो रुद्र इति विशेषः ॥ यत्तु महार्णवानुसारिणां मतम् ॥ शिवसंकल्पाद्यंगमंत्रवर्जं प्रणवस्य महाव्याहृतीनां रौद्राध्यायस्य वाजश्चम इत्यष्टानुवाकानां शांत्यध्यायस्य च पूर्ववदार्षादिस्मरणम् ॥ पूर्ववदष्टप्रणवयुक्तस्य रौद्राध्यायस्यैकादशभिरावृत्तेभिरंगमंत्रवर्जमभिषेकः तदंतरा प्रत्यावृत्त्यष्टौ चमकानुवाकानेकादशधा विभज्यैकैकेन चमकविभागेन । तत्प्रकारश्च पूर्ववत् । ततः शांत्यध्यायेन शांतिकरणमिति । एतदेव द्वितीयस्वरूपमिति ॥ एतच्च शिवसंकल्पं हृदयं, पुरुषसूक्तं शिरः, उत्तरनारायणं शिखा,ऽप्रतिरथं कवचं । शतरुद्रियमस्त्रं, पंचांगं सकृज्जपेदिति ॥ " वक्ष्ये रुद्रविधानं तु पंचांगं सर्वदं परम् हृदयं शिवसंकल्पं शिरः सूक्तं तु पौरुषं ॥ शिखाद्भ्यः संभृतं सूक्तमाशुः कवचमेव च ॥ वेदवादिभिराख्यातमस्त्रं वै शतरुद्रियम् ॥ शतरुद्रियसंज्ञस्य रुद्रस्यांगानि पंच हि ॥ पंचांगान्न्यस्य तं ध्यात्वा जपेद्रुद्रांस्ततः क्रमाद् । इति बोधायनसूत्राग्निपुराण-

वचनविरुद्धम् ॥ षडंगव्रतादिषट्के च शिवसंकल्पपार्षकम् । रुद्रास्तु देवता षट्सु विनियोगो जपादिषु॥ सहस्रशीर्षा इत्यादि द्विगुणा अष्टदेवता॥ पुरुषो यो जगद्बीज-मृषिर्नारायणः स्मृतः छंदः सर्वासु चानुष्टुप् विनियोगो जपादिषु ॥ अद्भ्यः संभृत इत्यादौ उत्तरनारायणस्त्वृषिः। पूर्वानुवाकदैवत्यं त्रिष्टुप् छंदः प्रकीर्तितम् ॥ आशुः शिशान इत्यादीरप्रतिरथ उच्यते । एतन्नाम्नामुनिस्तत्र देवता चामरेश्वरः । त्रिष्टु-प्छंदो जपादौ तु विनियोगो यथोचितम्॥ विभ्राड् बृहत्पिबेत्यादौ सूर्यो दैवतमुच्य-ते ॥ इति बृहत्पराशरस्मृतिविरुद्धं च ॥ एवमभिषिच्य ॥ ॐ सद्योजातं प्रपद्यामी-त्येवमादिभिर्मंत्रैरावाहनाद्युपस्थानांतं पूर्ववदभ्यर्चनम् । ततोऽभिषेकनिवेदनादि-स्तुत्यंतं पूर्ववत्कुर्यात् । व्याधिविमोचनार्थाभिषेकनिवेदनादिस्तुत्यंतं पूर्ववत्कुर्यात् । व्याधिविमोचनार्थाभिषेके तु विशेषः । अक्षीभ्यामित्यनुवाकेनापोहिष्ठेति ति-सृभिश्चाभिषिक्तोदकेन मस्तकादीनि पादांतानि सर्वाण्यंगानि मार्जयेत् ॥ तद्यथा अ-क्षीभ्यां त इति षण्णां विवृहाऋषिः अनुष्टुप्छंदः । यक्ष्महा देवता । सर्वरोगशांत्यै अभिषिक्तोदकेन मार्जने विनियोगः । ॐ अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छु-बुकादधि । यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते ॥१॥ ग्रीवाभ्यस्त उष्णि-हाभ्यः कीकसाभ्योऽअनूक्यात् ॥ यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां विवृहामि ते ॥२॥ आंत्रेभ्यस्ते गुदाभ्यो वनिष्टो र्हृदयादधि । यक्ष्मं मतस्नाभ्यां यक्नः प्लाशि-भ्यो विवृहामि ते ॥३॥ ऊरुभ्यां ते अष्टीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् । यक्ष्मं श्रोणिभ्यां भाससाद् भंससो विवृहामि ते ॥४॥ मेहनाद्वनं करणाल्लोमभ्यस्ते न-खेभ्यः । यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ॥५॥ अंगादंगाल्लोम्नोलोम्नो जातं पर्वणि पर्वणि ॥ यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ॥६॥ इति ॥ आपो हिष्ठेति तिसृणां सिंधुद्वीप ऋषिः । गायत्रीछंदः । आपो देवताः । सर्वरोगशांत्यै अभिषिक्तोदकेन मार्जने विनियोगः ॥ ॐ आपो हिष्ठा० १ । ॐ योवः शिवतमो रसः ० ॥ ॐ तस्मा अरंगमाम० ३ ॥ इति मंत्रैर्मस्तकादीनि मार्जयेदिति द्वितीयो रुद्रः । अयमेव रुद्रो रुद्रैकादशिनी रुद्री रुद्रेति संज्ञात्रयं लभते ॥ एतस्यैव रुद्रस्यैका-दशावृत्त्या एका रुद्री भवति । इयमेव रुद्री रुद्रैकादशिनी लघुरुद्र इति व्यपदेश-भाग्भवति ॥ अयं च तृतीयो रुद्रः लघुरुद्ररुद्रैकादशिनी पर्यायनाम्नीभिरेताभिरेका-दशभीरुद्रीभिरेको महारुद्रो भवति । अयं च तुरीयः । एकादशभिर्महारुद्रैरेकोऽ-तिरुद्रो भवति । अयं च पंचमः । एकोऽयं प्रकारः । बृहत्पराशरेण तु प्रकारांतर-मप्युक्तम् । शिरसा सह रुद्राणां जप्तैर्दशशतैर्ध्रुवम्॥ सर्वे मंत्रा भवंत्यस्य ब्राह्मणस्यो-क्ताकारिणः । इति । तथा । अथवा चरुभिक्षाशी सशिरं रुद्रसहस्रकं जपेदिति ।

एतच्च पूर्वोक्तप्रकारापेक्षया प्रकारांतरमेव ज्ञेयम् । रुद्रनिष्ठसहस्रसंख्यानिर्देशा-त्फलांतरनिर्देशाच्च । अत्र रुद्राणां सहस्रसंख्ययाऽऽवृत्तिपक्षे वयंसोमेति शिरसः प्रतिरुद्रमावृत्तिः शिरसा सह रुद्रजपविधानात् । अस्मिन् पक्षे न चमकजपः ॥ तद्विधानाभावात् । एकमुक्तेन विधिना पंचविधरुद्राणां मध्ये प्रक्रांतमन्यतमं रुद्रं रुद्राणां सहस्रं वा स्वयं समापयेत् । ऋत्विजो वा समापयेयुः ॥

" अथ प्राङ्मुखा ऋत्विजः " उदङ्मुखयजमानहस्ते श्रेयः संपादनं कुर्युः ॥ तद्यथा ॥ ॐ शिवा आपः संत्विति मंत्रेण यजमानहस्ते जलप्रक्षेपः ॥ ॐ सौमनस्यमस्तु इति पुष्पाणाम् । ॐ अक्षतं चारिष्टं चास्त्विति अक्षतानाम् । ॐ दीर्घमायुः शांतिः पुष्टिस्तुष्टिश्चास्तु इति पुनर्जलस्य । मया भवन्नियोगेनाभिषेकात्मकामुक-रुद्रमध्ये यथांशेन कृतोऽभिषेकस्तस्माद्यज्जातं श्रेयस्तत्तुभ्यं संप्रददे इति । एवं वरणक्रमेण सर्वेऽपि श्रेयो दद्युः । इदं च निर्मूलत्वाद्यजमानप्रतारणमात्रमेव । पुत्रकृतवैतरणीदानजन्यश्रेयो दानवन्माघस्नानादिजन्यपुण्यदानवच्चेदमपि श्रेयो दानम-विरुद्धमित्यपि केचित्

अथ उदङ्मुखोपविष्टेन यजमानेन प्राङ्मुखोपविष्टानामाचार्यादीनामभ्यर्चनम् । उत्तममध्यमाधमपक्षेण यथाशक्ति वित्तशाठ्यवर्जं वरणक्रमेण तेभ्यो दक्षिणा दानम् ॥ [1]तत्रैवं प्रकारः । अद्येत्यादि देशकालौ संकीर्त्य कृतस्याभिषेकात्मकामुकरु-

---

१ अत्रेदं बोध्यम्. श्रीकृष्णजन्मखंडे अध्याय ८७—" दक्षिणाभिश्च फलदो हतयज्ञो ह्यदक्षिणः। दक्षिणा विप्रमुद्दिश्य तत्काले तु न दीयते। एकरात्रव्यतीते तु तद्दानं द्विगुणं भवेत् । मासे शतगुणं प्रोक्तं द्विमासे तु सहस्रकम्। संवत्सरे व्यतीते तु स दाता नरकं व्रजेत्। वर्षाणां च सहस्रं च मूत्रकुंडे निपत्य च। ततश्चांडालतां याति व्याधियुक्तश्च पातकी। दात्रा न-दीयते दानं गृहीत्रा चेन्न गृह्यते। उभौ तौ नरकं यातःवर्षाणां च सहस्रकम्। यजमानश्च चांडालो ब्राह्मणस्तत्पुरोहितः। व्याधियुक्तावुभौ तौ च पापिनौ कर्मणः फलात् " इति। अग्रेच तत्रैवाध्याये १२९ सनत्कुमार उवाच " सर्वस्वं दक्षिणां देहि तूर्णं लक्ष्मीपतेः पितः। सार्थकं कुरु कर्मेदं वेदोक्तं वचनं शृणु । दक्षिणां विप्रमुद्दिश्य तत्काले चेन्न दीयते । मुहूर्ते तु व्यतीते सा दक्षिणा द्विगुणा भवेत्। वासरे च बहिर्भूते भवेत्सापि चतुर्गुणा। त्रिरात्रे समतीते तु षड्गुणा दक्षिणा भवेत्। पक्षांते तु शतगुणा मासांते च चतुर्गुणा । षण्मासेऽप्यधिके न्यूने च साहस्रगुणाधिका । वर्षांते सा लक्षगुणा ब्रह्मणोक्तं हि यादव। उभौ च नरकं यातः कर्मकर्तृपुरोहितौ। " इति । "यागोऽमंत्रोऽदक्षिणश्च न फलं दास्यति कचिद्" इति श्रीमद्भागवते स्कंध ४ अध्याय ६ श्लोक ९० वंशीधर्याम् । भगवद्गीतायाम् अध्याय १७ श्लो. १३ " विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम् । श्रद्धाविरहितं चैव तामसं परिकी-

द्रकर्मणः सांगत्वसिद्धये आचार्यादीनां पूजनं करिष्ये इत्याचारात्संकल्पं कृत्वा । आचार्यायेदं पाद्यम् । इदं बार्हस्पत्यं वासो युगलमित्यादि गंधपुष्पधूपदीपतांबूलानि दत्वा पूर्वोक्तविशेषणवतिकाले कृतस्याभिषेकामुकरुद्रकर्मणः प्रतिष्ठासिध्यर्थं अमुकगोत्राय यजुर्वेदांतर्गतवाजसनेयिमाध्यंदिनशाखाध्यायिने काण्वशाखाध्यायिने वा अमुकशर्मणे आचार्याय यथाशक्त्यलंकृतमिमां सवत्सां गां रुद्रदैवत्यमिदं च हिरण्यमग्निदैवतं तुभ्यमहं संप्रददे । इति विप्रहस्ते सकुशाक्षतजलप्रक्षेपपूर्वकं दक्षिणा दत्वा नममेति ब्रूयात् ॥ विप्रस्तु । ॐ द्यौस्त्वा ददातु पृथिवीत्वा प्रतिगृह्णातु " इति मंत्रांते रुद्राय गाम् ॐ प्रतिगृह्णामीत्युक्त्वा । ॐ कोदात्कस्मा

---

र्तितम् ॥ " भावप्रकाशटीकायाम्- " विधिहीनं यथाशास्त्रावबोधितविपर्ययम् । अन्नदानविहीनं च स्वरतो वर्णतस्तथा । मंत्रहीनं यथाशास्त्रं दक्षिणाहीनमध्वरम्। आस्तिक्यबुद्धिशून्यं तं तामसं कथयंति वै ॥ अयं पंचविधो यज्ञस्त्याज्यःश्रेयोऽर्थिभिः सदा । यथाशास्त्रमनुष्ठानाद्राजसेऽस्ति फलं मनाग् । तामसे त्वयथाशास्त्रानुष्ठानान्न फलं मनागिति ।

"अथ दक्षिणानियमो महार्णवे सिद्धान्तशेखरे च"॥ दक्षिणा चोत्तमा मध्याचाधमेतित्रिधामता॥तत्र सौवर्णनिष्काणि दशसाहस्त्रिकोत्तमा॥तदर्धं मध्यमा प्रोक्ता तृतीया त्रिसहस्त्रिका॥

## १ सुवर्णपक्षे उत्तमपक्षः ॥

| गुंजा | कर्ष | वाल | रुपीया | निष्क | कर्प | एकनिष्कनुं |
|---|---|---|---|---|---|---|
| ८० | १ | २७। | वाल ३० | १ | ४ | तोल रुपीया ३॥≈ |

१ उत्तम–दशहजार निष्कनुं तोलरुपीया ३६२५० भार ॥ मध्यम—पांचहजार निष्कनुं तोलरुपीया १८१२५ भार ॥ कनिष्ठ त्रण हजार निष्कनुं तोलरुपीया १०८७५ भार ॥ इति ॥

२ अपरो मध्यमः प्रकारः सुवर्णपक्षे तत्रव ॥ उत्तमा त्रिशति वा स्यान्मध्यमा द्विशती भवेत् ॥ शतमात्राधमा ज्ञेया प्रकारः कीर्त्त्यतेऽपरः॥ उत्तमपक्षे निष्क ३०० तोलरुपीया १०८७॥ भार ॥ मध्यपक्षे निष्क २०० तोलरुपीया ७२५ भार ॥ कनिष्ठ पक्षे निष्क १०० निष्कनुं तोलरुपीया ३६२॥ भार ॥

३ अपरः कनिष्ठः प्रकारः सुवर्णपक्षे तत्रैव ॥ उत्तमा च चतुःषष्ठी तदर्धं मध्यमा स्मृता ॥ चतुर्विंशतिरन्या स्यादथान्यद्विधिरुच्यते ॥ अत्र अन्यद्विधिरित्यनेन ऋत्विक्संख्यादक्षिणादिविधिः ॥ श्रेष्ठपक्षे निष्क ६४ तोलरुपीया २३२ भार ॥ मध्यम पक्षे निष्क ३२ तोल रुपीया ११६ भार ॥ कनिष्ठपक्षे निष्क २४ तोल रुपीया ८७ भार ॥ इति ॥

ऽदादित्यादि कामस्तुतिं पठित्वा ॐ स्वस्तीति वदेत् । प्रत्यक्षाया गोरभावे तु तन्नि- ष्क्रयत्वेन सौवर्णिकनिष्कदानम् । निष्कस्तु चतुः सौवर्णिकः । तदसंभवे तदर्धस्य तस्याप्यसंभवे तदर्धस्य । एतावद्धिरण्यासंभवे सौवर्णनिष्कपरिमित- रजतदानम् । तदसंभवे तदर्धस्य । तस्याप्यसंभवे तदर्धस्य । एवमृत्विग्भ्यो- ऽपि संकल्पपूर्वकं वरणक्रमेण तान् संपूज्य दक्षिणादानम् ॥ यथाशक्ति आचार्या- दिभ्योऽलंकारमुद्रिकोदपात्रोपानद्व्यंजनछत्रचामराद्युपकरणदानम् । अथ कृतस्या- भिषेकात्मकामुकरुद्रकर्मणः समृद्धये यथाकालं यथोपपन्नेनान्नेन नानागो- त्रान्नानाशर्मणोऽमुकसंख्याकान् ब्राह्मणान् भोजयिष्ये इति संकल्पपूर्वकं ब्राह्म- णभोजनम् ॥ रुद्री रुद्रैकादशिनीति पर्यायद्वये लघुरुद्रे एकादश । महारुद्रे एक- विंशत्युत्तरशतम् ॥ अतिरुद्रे एतदेवैकादशगुणं त्रयोदशशतान्येकत्रिंशच्चेति । ततः श्रीरुद्रस्य सांगत्वसिद्धये " अनादिनिधनो रुद्रो गीयते० " इत्यादिका महारुद्रस्तुतिः । सदस्यानां चंदनाक्षतपुष्पमालावस्त्रतांबूलदक्षिणादिभिरभ्यर्चनम् । मयाचरिताभिषेकात्मकामुकरुद्रविधौ यन्न्यूनं यथातिरिक्तं कृतं तद्भवतां ब्रा- ह्मणानां वचनात्सर्वं परिपूर्णमच्छिद्रं चास्त्विति बद्धांजलिना यजमानेन प्रार्थिते संपूर्णमच्छिद्रं चास्त्विति विप्राणां प्रतिवचनम् । ततो मयाचरितेनाभिषेकात्म- कामुकरुद्रेण श्रीभगवान् परमात्मा सांबशिवः प्रीयताम् । ॐ तत्सत् ब्रह्मार्पणम- स्त्विति भूमौ कुशजलप्रक्षेपपूर्वकं कर्म ब्रह्मार्पणं विधाय विप्रेभ्यो मंत्राशिषां ग्रहणम् । तेषां सानुनयं विसर्जनम् । ब्राह्मणानां भोजनम् । दीनानाथादीनां चान्नादिना संतोषणम् । ततः स्वयं सुहृन्मित्रयुतः सोत्साहः संतुष्टो हविष्यं भुंजीत ॥

धीमताऽनंतदेवेन श्रीमदुद्धवसूनुना ॥ त्रैविद्यमोढसंज्ञेन काशीपुरनिवासिना । १ ।
श्रुतिस्मृत्यालवालोऽयं रुद्रकल्पद्रुमोऽर्पितः मदीयनाथयो र्विष्णुवंद्ययोः शिवपादयोः ।२।
मुहुर्मुहुः प्रार्थयेऽहं सज्जनान् शुद्धमानसान् । मयोक्तमिह संशोध्यं विचार्य सदसच्चयत् ।३।
ज्ञात्वातुच्छिष्टनर्थेयः करोति ग्रंथगोपनम् । तस्य श्रेयोर्थिनस्तन्न भूयाच्चौरो यतोहिंसः
यश्च श्रमः समुत्पन्ने ग्रंथस्यास्य विलेखने । सर्वात्मा तेन विश्वेशः प्रीयतां परमः शिवः

**इति श्रीसूर्यपुरनिवासिना भीतडाखेडावालविप्रजातीयेन द्विवेद्युपनामकपरशुरामात्मजेन जगन्नाथशर्मणा संशोधिते श्रीरुद्रकल्पद्रुमे अभिषेकपरिच्छेदः**

**समाप्तः ॥**

# ॥ अथ जपरुद्रपरिच्छेदः ॥ ५ ॥

सिद्धिबुद्धिप्रदातारं विघ्नव्यूहविदारणम्॥ महागणपतिं वंदे लक्ष्मीविष्ण्वादिभिर्द्दतम्॥१॥
श्रीभवानीशिवौ वंदे सच्चिदानंदविग्रहौ॥ विधीन्द्रादिभिराराध्यौ भक्तकल्पमहीरुहौ॥२॥
श्रीरामं रामराजेन्द्रं महामंगलमंगलं ॥ सीताभरतशत्रुघ्नलक्ष्मणैः सहितं भजे ॥३॥
कात्यायनगुरुं नत्वा श्रीमदुद्धवसूनुना ॥ तन्यतेऽनन्तदेवेन महारुद्रस्य पद्धतिः ॥४॥
पद्धत्यो विविधा अन्याः स्फुटाः सन्तीह यद्यपि॥ ताभ्यस्तस्या विशेषोयः पंडितैःसोवधार्यतां

## ॥ अथ सर्वप्रायश्चित्तप्रयोगः ॥

अथ काण्वमाध्यंदिन्यादिसर्ववाजसनेयिशाखानुसारेण रुद्रप्रयोग उच्यते ॥ तत्रादौ कर्तृविशेषं प्रतिशाखाविशेषेण रुद्रानुष्ठाननिर्णय उच्यते ॥ यद्यपि वाजसनेयिशाखासु श्रुतेपि रुद्रे रुद्रजपादिविधिस्तस्येति कर्त्तव्यता विधिश्च न श्रूयते ॥ बौधायनसूत्रहेमाद्युदाहृतशौनकमतं बृहत्पराशरस्मृतिकालिकापुराणादौ तु रुद्रेति कर्त्तव्यताविधिर्नानाविधो दृश्यते ॥ अतस्तेषामन्यतमः प्रकारो वैकल्पिकः प्रसक्तस्तथापि अभिधास्येथ रुद्राणां शान्तये गृहमेधिनां ॥ पंचांगानां विधानं तु यत्कृतं हन्ति पातकमित्युपक्रम्य समधीते इषेत्वादिषु मंत्रेषु खं ब्रह्मान्तेषु याः क्रियाः दशप्रणवसंयुक्ता भूर्भुवः स्वरितीति चेति बृहत्पराशरस्मृतिवाक्येपि खं ब्रह्मांततोपादानादिषेत्वादीकाणां मंत्राणां माध्यंदिनशाखायामेव समधीतत्वात्ततो भिन्नासु तैत्तरीयशाखासु समुद्रोऽश्वस्य योनिः समुद्र इत्यन्तताया: समधीतत्वेन खं ब्रह्मान्तताया अभावात् ॥ बृहत्पराशरस्मृतिविहितो रुद्रेति कर्त्तव्यताविधिर्माध्यंदिनशाखा विषय इत्यध्यवसीयते ॥ अत एव बृहत्पराशरस्मृतिविहिते रुद्रेति कर्त्तव्यताविधौ काण्वमाध्यंदिनशाखासमधीतमंत्राणामेव विनियोगो दृश्यते न पुनस्तयोरनधीतानामन्यशाखासमधीतानां मंत्राणां ॥ तेन बौधायनाद्युक्तो रुद्रेति कर्तव्यताविधिर्न काण्वमाध्यंदिनानां ॥ खं ब्रह्मांतताया: काण्वशाखायामभावेऽपि माध्यंदिनशाखायाः सर्ववाजसनेयिशाखासाधारण्यात् माध्यंदिनशाखापरतया पराशरोक्तौ रुद्रेति कर्त्तव्यताविधिरपि सर्ववाजसनेयिशाखासाधारणा एव ॥ उक्तं च ग्रहयज्ञमभिधाय माध्यंदिनशाखाया: सर्ववाजसनेयीशाखासाधारणं वसिष्टेन ॥ माध्यंदिनीतु शाखा सर्वसाधारणा हि सा ॥ तामेव च पुरस्कृत्य वसिष्टेन प्रभाषितमिति ॥ कथं माध्यंदिनशाखायाः सर्ववाजसनेयिशाखा साधारण्यमिति चेदुच्यते ॥ नैमित्तिककाम्यवैकल्पिकानि कर्माणि भगवता काण्वसूत्रकृता माध्यंदिनशाखायाः सर्वसाधारण्येनोपनिबद्धानीति माध्यंदिनीशाखा सर्ववाजसनेयिशाखा साधारण्ये-

त्यर्थः ॥ अत्र यद्यप्यग्न्यन्वाधानमध्वर्युर्यजमानो वेति सूत्रव्याख्यावसरे शाखाद्वयमधिकृत्य तात्पर्येणानुप्रवृत्त आचार्यस्तत्र नित्यनैमित्तिककाम्यवैकल्पिकानि कात्स्न्येनोपनिबद्धनि ॥ शाखाद्वयव्यतिरेकेण नैयमिकमात्रमेवेति कर्कोपाध्यायैरुक्तं तथापि माध्यंदिनशाखामेवाधिकृत्याचार्यप्रवृत्तिर्मुख्या ॥ आचार्योभिप्रायात् ॥ तथाहि ॥ ये मंत्राः माध्यंदिनशाखातः काण्वशाखायामधिकाः समधीताः ॥ मित्रस्य त्वा चक्षुषा प्रतीक्षः इति ॥ नमः कृताय कर्मण इति ॥ यस्ते प्राणः पशुष्विति॥ आप्यायता ध्रुवा हविषा घृतेनेति ॥ उलूखले मूसले यच्चेत्येवमादयस्ते तु मंत्राः संपूर्णा एव भगवता सूत्रे उपनिबद्धाः ॥ ये तु काण्वशाखातो माध्यंदिनशाखायामधिकाः समधीताः ॥ अयमग्निः पुरीष्यो रयिमानिति शिवोनामासि स्वधितिस्त्वः इति अंगिरसो नः पितर इत्येवमादयस्ते तु द्वयोः शाखयोः समाम्नाता मंत्रा इव प्रतीकमात्रेणैवोपनिबद्धा इति ॥ द्वयोः शाखयोः समप्रमुख्यप्रवृत्तिस्त्वेम ाध्यंदिनशाखायामनधीताः काण्वशाखामंत्रा इव काण्वशाखायामप्यनधीताः माध्यंदिनशाखामंत्राः संपूर्णा एव भगवता सूत्रे उपनिबद्धा भवेयुः ॥ यस्तु सूत्रकृता काण्वमाध्यंदिनशाखयोः समाम्नातोप्यसमात्वश्चधिजातोसीति मंत्रः सूत्रे संपूर्ण उपनिबद्धस्तस्य पत्न्यामप्यनूह प्रज्ञप्त्यर्थत्वेन प्रयोजनवत्त्वान्न दोषः ॥ अत एवोक्तं भर्तृयज्ञपितृभूति वासुदेव कर्कोपाध्या श्री अनन्तदेवयाज्ञिकादिभिर्भाष्यकारैः ॥ सकलमंत्रपाठः ॥ पत्न्यामप्यनूह प्रज्ञप्त्यर्थ इति ॥ तस्मान्माध्यंदिनशाखैव पंचदशसु वाजनेयिशाखासु मुख्या सर्वसाधारणा ॥ अत एवोक्तं वशिष्ठेन ॥ माध्यंदिनी तु या शाखा सर्वसाधारणा हि सेति ॥ तस्मात्साधूक्तं खं व्रह्मान्तता ग्रहणलिंगाद्यो माध्यंदिनशाखापरतया रुद्रेति कर्तव्यता विधिरभिहितः स सर्ववाजसनेयिशाखासाधारण इति ॥ एवं च सति मनोज्योतिरवोद्धग्निर्मूर्द्धानं मर्म्माणि ते ॥ मानस्तोक इति ह्येतत्प्रथमं पंचकं स्मरेदिति पराशरस्मृतिवाक्ये काण्वशाखासमधीतपाठस्य मनोज्योतिरिति मंत्रस्य प्रतीकोपादानं युज्यते ॥ यत्तु देवयाज्ञिकादिभिर्बौधायनसूत्रविहितं पंचांगरुद्रन्यासादिकमुक्तं तत्काण्वमाध्यंदिन्यादिवाजसनेयिखायास्वनधीतानामप्यन्यशाखामंत्राणां केषांचिद्विनियोगस्य तत्र दर्शनाद्वाजसनेयिनां काण्वमाध्यंदीनादीनां तदध्ययनाक्षेपापत्तेः सूत्रस्य साधारणत्वेन बौधायनैकविषयत्वाच्चायुक्तं सर्वयजुः शाखासमधीताद्वाजसनेयिशाखासमधीतो रुद्र जपादिष्विति प्रशस्तः ॥ आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायंत इति शतपथश्रुतेः ॥ आदित्यादधीतानां यजुषां शुक्लत्वेन प्रशस्त्यमनया श्रुत्योक्तं ॥ तेन तदन्तः पातिनो रुद्रस्यापि प्राशस्त्यमुक्तमेव ॥ आदित्यादधीतानां यजुषां शुक्लत्वेन

प्राशस्त्यमनया श्रुत्योक्तं ॥ तेन तदन्तःपातिनो रुद्रस्यापि प्राशस्त्यमुक्तमेव ॥ आदित्यादनधीतानामन्ययजुषां तु कृष्णत्वेनाप्राशस्त्यं तदन्तःपातित्वाद्रुद्रस्याप्य-प्राशस्त्यं चार्थादुक्तश्रुत्यैवबोधितं ॥ एतेनान्ययजुःशाखासमधीताद्रुद्रात्तैत्तिरीयशाखासमधीतो रुद्रो जपादिष्वतिप्रशस्त इत्यपास्तं न च तैत्तिरीयशाखासमधीतो रुद्रेति प्रशस्त एव ॥ बोधायनीयस्मार्त्तसूत्रे तत् शाखीये रुद्रेति कर्तव्यतायाः स-माम्नातत्वात् इति वाच्यं ॥ स्मार्त्तत्वात्पराशरस्मृतौ माध्यंदिन्यादिशाखापुरः स्कारेणैव तस्याविहितत्वात् ॥ अत एव पारस्कराचार्येण गृह्यसूत्रे रुद्रेति कर्त्तव्यता नोपनिबद्धाः ॥ बह्वृचादयस्तु श्रौतकर्मानुष्ठानार्थं स्वपरंपरापरिगृहीतयजुः शाखा-समधीतरुद्रजपादि कुर्युः ॥

## ॥ अथ शाखापरकत्त्वे रुद्रविचारः ॥

यजुर्वेदशाखाव्यतिरिक्तवेदशाखासु रुद्राभावात् ॥ स्वपरंपरापरिगृहीत यजुः शाखायास्तु स्वशाखात्वं यतोऽस्ति॥ कथं उच्यते ॥ वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं ॥ अविप्लुतब्रह्मचर्यो लक्षण्यं स्त्रियमुद्वहेदिति याज्ञवल्क्यस्मृतौ ॥ वेदं वेदौ तथा वेदान् वेदान् वा चतुरो द्विजः ॥ अधीत्य चाधिगम्यार्थं तत स्नायात् द्विजो-त्तम इति माधवीये कूर्मपुराणे च वेदाध्ययनाधिकारी मात्रमुद्दिश्य समर्थासमर्थपरतया वैकल्पिकमेकानेकवेदाध्ययनमुक्तं॥ तच्च सकलावशिष्टैकैकवेदाध्ययनं मनुष्यैः कर्त्तव्य-मशक्यं ॥ अतो वेदशब्देन एकशाखैव विवक्षिता ॥ तेनैकैकवेदस्यैकैकशाखाध्यय-नेन सर्ववेदाध्ययनं ॥ वेदानामनेकशाखावत्त्वादनियतशाखया वेदाध्ययने प्रसक्ते स्वीयैः पित्रादिभिरध्ययनादिना परिगृहीतो वेदः स्वाध्याय इत्यर्थकेन स्वाध्यायो-ध्येतव्य इति विधिना ॥ पारंपर्यागतो येषां वेदःसपरिबृंहणः॥ तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथेति मदनपारिजातोदाहृतवसिष्ठस्मृत्या च स्वपरंपरापरिगृहीतो वेदशाखानियमः क्रियते ॥ अतश्च सर्वेषां वेदाध्ययनाधिकारीणां प्रतिवेदमेकैकास्व-परंपरापरिगृहीता स्वाध्यायापरपर्याया स्वशाखास्तीत्यवगम्यते ॥ न चैकस्मिन् वे-दाध्ययने स्वपरंपरापरिगृहीतशाखानियमानवेदान्तराध्ययने इति वाच्यं ॥ स्वा-ध्यायोध्येतव्य इत्यस्य विधेः सर्ववेदशाखासु श्रुतत्वेन स्वाध्यायस्यैवाध्ययनविधा-नात्स्वपरंपरापरिगृहीतशाखायाः स्वाध्यायत्वाद्वसिष्ठस्मृतौ सामान्यतः श्रुतस्य वेद-पदस्य सर्ववेदसाधारण्याद्वेदान्तराध्ययनेपि स्वपरंपरा परिगृहीतशाखानियमस्तुल्य एव ॥ अत एव शतपथे पंचमहायज्ञब्राह्मणे स्वाध्यायप्रशंसा ब्राह्मणे च ॥ तस्मा-त्स्वाध्यायोऽध्येतव्य इति प्रकृत्य एवं विद्वानृचोहरहः स्वाध्यायमधीत इत्यादिना य एवं विद्वानथर्वांगिरसोहरहः स्वाध्यायमधीत इत्यन्तेन चतुर्ष्वपि वेदेषु स्वाध्याया-

ध्ययनमुक्तं ॥ स्वाध्यायश्च स्वपरंपरापरिगृहीतो वेदः स्वशाखाऽपरपर्याय इत्युक्तं ॥ अतश्च यस्य वेदस्य या या शाखा स्वपरंपरा परिगृहीतास्तस्याः स्वशाखात्वम् ॥ अत एव वेदान्तराध्ययने तद्विहितश्रौतकर्मानुष्ठानेन च वयं शाकला वयं बाष्कला वयं बौधायना वयमापस्तंबाः वयं हिरण्यकेशीया वयं काण्वा वयं माध्यंदीना इत्येवमाद्यभियुक्ता व्यवहरन्ति ॥ तेन स्वशाखातोन्यस्या एकवेदसंबंधिन्यानाध्ययनं ॥ स्वाध्यायोऽध्येतव्य इत्यत्रस्ताध्यायस्योपादेयत्वेन तद्गतैकत्वस्य विवक्षितत्वात् ॥ अत एव न तदुक्तकर्मानुष्ठानं ॥ स्वाध्यायाध्ययनस्य इष्टार्थत्वेन कर्मानुष्ठानार्थत्वात्॥ वेदान्तराध्ययनेऽप्येवं ॥ यत्तु अधीत्य शाखामात्मीयामन्यां शाखां ततः पठेदिति वचनं तद्वेदान्तराध्ययने क्रमनियमार्थं ॥ अन्यथा ऋग्वेदाध्ययने आनुपूर्व्यमनेकवेदाध्ययनकर्तुः प्रसज्येत॥ अत्रेदं सिद्धं ॥ स्वपरंपरानिष्टस्वशाखात्वप्रसिद्ध्या यद्वेदी यच्छायाः पूर्वमध्ययनं तस्याः स्वशाखात्वं मुख्यं ॥ तदध्ययनस्य श्रौतस्मार्तकर्मानुष्ठानार्थत्वात् ॥ तदन्यवेदसंबंधिशाखानां तु स्वपरंपरागृहीतत्वेपि न शाखात्वं मुख्यं ॥ किन्तु गौणं ॥ तदध्ययनस्य श्रौतकर्ममात्रानुष्ठानार्थत्वात् ॥ अत गौणत्वात्तासां पश्चादध्ययनमिति ॥ एतच्च प्रतिवेदं पृथक् पृथक् व्रतादेशविषयं ॥ उक्तश्च द्वादशद्वादशवा प्रतिवेदमिति सूत्रव्याख्यावसरे प्रतिवेदं भिन्नभिन्नव्रतादेशः कर्कोपाध्यायादिभिर्भाष्यकारैः कारिकाकारैश्च ॥ अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेदिति ॥ अस्मिन् पक्षे तु चतुर्णामपि वेदानामेक एव व्रतादेशः ॥ सर्वाश्च वेदाहुतयो होतव्या इति कर्कोपाध्यायादिभिर्भाष्यकारैः कारिकाकारैः पद्धतिकारैश्चोक्तं अतश्च यस्य पूर्वमेवमध्यवसायो मया चत्वारो वेदा अध्येतव्या इति तेनैकदा सर्ववेदारंभः कर्त्तव्यः ॥ अस्मिन्पक्षे चतुर्णामपि वेदानां व्रतादेशस्यैकत्वाद्वेदाहुतिहोमक्रमाच्च ऋग्वेदादारभ्यैव सर्ववेदाध्ययनमिति ॥ तेन सर्ववेदानामेकदेशपक्षे स्वपरंपराप्रसिद्धेरेव मुख्यस्वशाखात्वे हेतुत्वं बोध्यं ॥ अतश्च सिद्धमेत त्स्वपरंपरा गृहीतयजुः शाखायाः स्वशाखात्वमिति ॥ यद्यपि इदानींतनपुरुषाणां प्रायो वेदान्तराध्ययनादर्शनाद्वेदान्तरीया स्वपरंपरापरिगृहीता स्वशाखातैः पतिज्ञातुं न शक्यते ॥ तथाप्यनधीतवेदैर्यथा स्वपरंपरानिष्टस्वशाखात्वप्रसिध्या कर्मानुष्ठानेन वा स्वपरंपरापरिगृहीता स्वशाखा परिज्ञातुं शक्यते ॥ तस्माद्ब बह्वृचादीनां स्वपरंपरापरिगृहीत यजुः शाखासमधीत रुद्रजपाद्यनुष्ठानं युक्तं ॥ यत्तु नारायणभट्टकृतरुद्रपद्धतौ ॥ तत्र बौधायनं गृह्यं बह्वृचादिभिरादरादिति वचनं तत्स्वपरंपरया बौधायनशाखापरिगृहीत बह्वृचादि विषयम् ॥ पूर्वोक्त स्वाध्यायविधिवसिष्टवचनसिद्धार्थादनुवादकत्वे लाघवात् ॥ अपूर्वविधित्वे गौरवाच्च ॥ न चास्मिन्वाक्ये रुद्रपदमुपात्तमस्ति ॥

येनैतद्वाक्यानर्थक्यपरिहाराय बौधायनशाखासमधीतो रुद्रो नियमेन बह्वृचादि-भिरुपादीयते ॥ नापीदं वाक्यं रुद्रप्रकरणपठितं ॥ आध्वर्यवप्रतिपादकतया क्वचि-देतदुदाहृतं ॥ न च सर्वैर्बह्वृचादिभिर्बौधायनीयमेवाध्वर्यवमनुष्ठीयते ॥ उक्तार्थक स्वाध्यायविधिविरोधात् ॥ पारंपर्यागतो येषां इति स्मृतिविरोधाच्च ॥ अक्रिया त्रि-विधा प्रोक्ता विद्वद्भिः कर्मकारिणां॥ अक्रिया च परा प्रोक्ता तृतीया चायथाक्रिया॥ स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः॥कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितं॥ इति कात्यायनवचनविरोधात् ॥ यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ॥ अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जतीति स्मृत्यन्तरवचो विरोधाच्च॥ न चोदा-हृतानि वाक्यानि मुखशाखाविषयाणि॥ गौणमुख्ययोर्मुख्ये संप्रत्यय इति न्याया-दिति वाच्यं ॥ स्वशाखात्वस्या विशिष्टत्वेनोभयत्रापि तेषां प्रवृत्तेः ॥ गौणस्वशाखा-यामप्यभियुक्तानां स्वशाखात्वव्यवहारस्य दृढतरस्य सत्वेन गौणमुख्यन्यायान-वकाशात् ॥ अन्यथा वेदान्तरविहितश्रौतकर्मानुष्ठानमनियतशाखया प्रसज्येत् ॥ त-स्माद् बह्वृचादीनामावध्यर्यवमिव रुद्रजपादिकमपि स्वपरंपरापरिगृहीत यजुः शाखाया एव युक्ततरमुत्पश्यामः ॥ येतु स्वपरंपरापरिगृहीतबौधायनशाखासमाम्नातरुद्रज-पाद्याचरन्ति ॥ बह्वृचादयस्तेषां पूर्वोक्तस्वाध्यायविध्यर्थविरोधः ॥ पारंपर्यागतो येषामिति वसिष्ठस्मृतिविरोधः ॥ स्वशाखोक्तपरित्यागेन परशाखोक्तानुष्ठानस्या-करणत्वोक्तेर्विरोधः ॥ परशाखोक्तानुष्ठाने दोषोक्तिविरोधश्चेति दोषचतुष्टयं दुःप-रिहरमेव ॥ यद्यपि वेदान्तराध्ययनस्य श्रौतकर्मानुष्ठानार्थत्वान्न स्मार्त्तकर्मानुष्ठाना-र्थता तथापि ॥ यन्नाम्नातं स्वशाखायां परोक्तमविरोधी यत् ॥ विद्वद्भिस्तदनुष्ठेय-मग्निहोत्रादि कर्मवत् ॥ इति कात्यायनवचनाद्यजुर्वेदशाखान्यतिरिक्तवेदशाखासु रुद्राभावादविरुद्धत्वात् स्वपरंपरापरिगृहीत यजुः शाखायाः स्वशाखात्वेन निर्णी-तत्वाच्च तत्समधीतो रुद्रो जपादीकर्मसु बह्वृचादिभिरुपादेय इति साधूक्तं ॥ इति ॥

"कथं तासु रुद्राभाव इति चेत्"—उच्यते अथातः शतरुद्रियं जुहोतीत्यादि-कया नमस्ते रुद्र मन्यव इत्यंतया श्रुत्या विहितस्य शतरुद्रियहोमस्याध्वर्यवत्वेन य-जुर्वेदशाखास्वेव समधीतत्वेन तच्छेषस्य रौद्राध्यायलक्षणमंत्रस्य रुद्रत्वेन तस्यापि तत्रैव समधीतत्वात् ॥ प्रदर्शितं च रौद्राध्यायस्यैव रुद्रत्वं गृह्यसूत्रकृता पारस्करा-चार्येण शूलगवपशौ ॥ अनुवाकं पशुमवस्थाप्य रुद्रैरुपतिष्ठते ॥ प्रथमोत्तमाभ्यां वा-नुवाकाभ्यामिति सूत्रे पशुकर्मकोपस्थाने रुद्रैः सह प्रथमोत्तमानुवाकयोः विकल्पेन विनियोगमुक्तवता ॥ अत एव वृषोत्सर्गे रुद्रान् जपित्वेति सूत्रे रुद्रशब्दाभिधेयो नमस्ते रुद्र मन्यव इत्यध्याय इति कर्कोपाध्याय हरिहरादिभिर्व्याख्यातं ॥ श्राद्ध-

खंडे वृषोत्सर्गकरणे ॥ तत्र रुद्रान् जपित्वा तु स्थापयेत् रुद्रदैवतमिति मात्स्यमुदाहृत्याह हेमाद्रिः रुद्रो नमस्ते रुद्रमन्यत्र इत्यादिरध्यायो यजुर्वेदे प्रसिद्ध इति ॥ व्रतखंडान्तर्गतशांतिखंडेपि स एव॥ शौनकमतादित्युपन्यस्य अथातः शतरुद्रियमंत्राणां विनियोगं तद्विविधं तदर्थध्यानं तैराराधनं तद्देवतान्तदृषिं तदंगन्यासादिकं तच्छन्दश्च व्याख्यास्यामः शौनकमते ॥ तत्र शतरुद्रीयमंत्रो नमस्ते रुद्रमन्यत्र इत्येकादशानुवाचामिति मिताक्षरायामपि ॥ ब्राह्मणः स्वर्णहारी च रुद्रजापी जलेस्थितः ॥ इति रहस्यप्रायश्चित्तप्रकरणस्थयाज्ञवल्क्यावसरे नमस्ते रुद्रमन्यत्र इति शतरुद्रीय जप उक्तः शुद्ध्यतीति व्याख्यातं ॥ अत एव बह्वृचादिवेदशाखासु रुद्रो नास्तीत्यनूचानाः प्रवदन्ति ॥ शौनकेनापि ऋग्वेदाचार्येण मूलशान्तिविधाविदमेव स्पष्टतया प्रदर्शितं ॥ तथाहि ॥ मध्यकुंभं प्रकृत्याह शौनकः अर्चितं गंधपुष्पाद्यैः ॥ श्रीरुद्रं च स्पृशन् जपेत् ॥ षडंगसहितं सम्यक् जपेद्रुद्रसंख्ययेत्यनेन यजुर्वेदिनं प्रतिरुद्रजपमभिधाय बह्वृचादीनां रुद्राभावमभिप्रेत्य तां प्रतिविशेषमाह॥ बह्वृचा रुद्रसूक्तैर्वा छंदोगा रुद्रसूक्तैर्वा छंदोगा रुद्रसामभिः ॥ एकादशाष्टत्रिद्व्येकसंख्यया शक्तितो जपेदिति ॥ अत्र वा शब्दो विकल्पार्थः ॥ स च विकल्पो यजुः शाखासमधीतरुद्राध्ययनभावे सूक्तादिजपविधिः ॥ तदध्ययनसत्त्वे तु रुद्रजपविधिरेवेत्येवं व्यवस्थितो ज्ञेयः ॥ यदि यजुर्वेदव्यतिरिक्तवेदशाखास्वपि रुद्रः समाम्नातः स्यात्तदा रुद्रजपविधिनैव तेषां तत्सिद्धौ बह्वृचा रुद्रसूक्तैर्वेत्यादिशास्त्रस्य वैयर्थ्यमेव प्रसज्येत ॥ तस्मात्तासु रुद्रो नास्त्येव ॥ अत एव कात्यायनो रुद्रजपादावार्त्विज्यार्थं यजुर्वेदव्यतिरिक्तबह्वृचादिवेदशाखिविप्रवरणं प्रतिषेधति॥ बह्वृचाः सामगाश्चैव तथा चाथर्वणा द्विजाः॥महारुद्रजपेनैव नियोज्या श्रुतिधर्मत इति॥ कैश्चिदिदं कात्यायनीयत्वेनोदाहृतं॥ बह्वृचादीनां वेदशाखासु शतरुद्रियापरपर्यायस्य रुद्रस्यानधीतत्वेन तज्जपादौ तेषामनर्हत्वादिति श्रुतिधर्मत इति अस्यार्थः ॥ उशना अपि ॥ ऋग्वेदी ब्रह्मवेदी वा पितृवेदी तु यो द्विजः॥ घोराशांततरे रौद्रे जपे तान्परिवर्जयेत् ॥ पितृवेदी छंदोगः ॥ ब्रह्मवेदी आथर्वणः ॥ घोराश्च अशान्ताश्च घोराशान्ताः ॥ अतिशयेन घोराशान्तास्ते घोराशान्ततराः ॥ तथा च शातपथीश्रुतिः॥ तेषां वा उभयतो नमस्कारा अन्ये अन्यतरतो नमस्कारा अन्ये ते हते घोरतरा अशान्ततरा य उभय उभयतो नमस्कारा उभयत एवैतान् एतदग्रेन नमस्कारेण शमयतीति ॥ ते विद्यन्ते यस्मिन् सघोराशान्ततरस्तस्मिन् अर्श आदित्वान्मत्वर्थीयोच ॥ रौद्रे रुद्रदेवता एकशतरुद्रिय विषयके जपे इत्यर्थः ॥ यत्तु ऋग्विधाने चतुर्थेध्याये ॥ अत्रैवत्वावपेन्दध्ये ॥ पितृसूक्तान्यनेकशः ॥ पित्र्यान्तां संहितां विद्यात् पितॄन् प्रीणन्ति चैतया ॥ एवमेव

समाहृत्य वासवीसंहिता भवेत् ॥ रौद्र्यादित्या वैश्वदेवी यद्दैवत्यां च कामयेदित्युक्तं ॥ यच्च छंदोगानां सामविधानब्राह्मणे ॥ आवो राजा तद्वो वर्ग आज्यदोहानि देवव्रतानि चैषा रुद्री नाम संहीतैतां प्रयुंजन् रुद्रं प्रीणातीत्युक्तं आवो राजेत्येकं साम ॥ तद्वोवर्गश्चत्वारि ॥ आज्यदोहानि त्रीणि ॥ देवव्रतानि त्रीणीति तत्फलान्तरार्थप्रयोगांतरं तत्रैते महारुद्रादिकरणं युक्तं ॥ रौद्रीसंहितायां रुद्रत्वाभावात् ॥ अत एव हेमाद्रौ वृषोत्सर्गप्रकरणे सौरपुराणे ॥ रुद्रमावाह्य कलशे गंधमाल्याक्षतादिभिः॥ संपूज्य संस्पृशन् कुंभं रुद्राध्यायं जपेत्ततः ॥ तथैव पौरुषं सूक्तं गायेद्रौद्रीं च संहितामिति ॥ रौद्रीसंहितातत्सामविधानब्राह्मणमुदाहृत्यावो राजेत्याद्येकादशसामानीति हेमाद्रिणा व्याख्यातं॥ अत्र रौद्राध्यायजपस्य रौद्रीसंहितागानस्य च समुच्चय उक्तः॥ तेन रुद्राद्रौद्रीसंहिता भिन्नेति स्पष्टमुक्तं ॥ यत्तु रुद्रजपेन्नित्यं चिन्तयन्मामनन्यधीः॥ स तेनैव च देहेन शिवः संजायते ध्रुवं ॥ जपेद्यो रुद्रसूक्तानि तथाथर्वशिवः परं ॥ कैवल्योपनिषत्सूक्तं श्वेताश्वतरमेव च॥ ततः परतरो भक्तो मम लोके न विद्यत इति पद्मपुराणे शिवगीतायां रौद्रसूक्तानां रुद्रस्य च भेदेन निर्देशाद्रौद्रसूक्ततोपि रुद्रो भिन्न इत्यपि स्पष्टमुक्तं ॥ किंच ॥ षडंगैकादशी रुद्रो रुद्रैकादशरुद्रतः ॥ एकादशभिरेताभिर्महारुद्रस्तु कथ्यते ॥ एकादशमहारुद्रैरतिरुद्र इतीरित इत्येवमादिभिः शातातपादिवाक्यैरध्वर्युः वेदसमधीत रुद्रावृत्तिनिष्टसंख्या॥ विशेषेण रुद्ररुद्री महारुद्रादिसंज्ञाविधानमिव बह्वृचछंदोगादीनां रौद्रसूक्तानां रौद्रसाम्ना चावृत्तिनिष्टसंख्या ॥ विशेषेणाकरग्रंथेषु रुद्ररुद्रीमहारुद्रादिसंज्ञाविधानाभावाच्च ॥ एतेन यत्केषांचिदेतत्सामविधानब्राह्मणवशात्सामभिर्महारुद्राद्याचरणं यच्च ऋग्वेदीनां रौद्रसूक्तैस्तन्निर्मूलं भ्रान्तिनिबंधनमभिमानमात्रमित्युपेक्ष्यमित्युक्तं निर्णयसिंधौ शान्तिरत्ने कमलाकरभट्टपादैः॥ यत्तु कश्चित्॥ आद्यवेदोदिता मंत्रा महारुद्रे विशेषतः॥ विनियोज्या सदा यस्माद्विश्वस्यार्थहिते मताः ॥ शतरुद्रियसंज्ञाश्च यजुषाः श्रुतिचोदिताः तस्मात्तेषु सदा योगा रुद्ररूपनिरूपकाः ॥ न साम्ना रुद्र इत्युक्तेस्तल्लिंगात्सामतोपि च ॥ तस्मात्त्रयैव कर्तव्यो महारुद्रो विजानतेति ॥ सहस्रसप्तकं चैव तथा सप्तशतानी च ॥ चत्वारिंशचतुर्युक्तो होमस्यादाद्यवेदके ॥ चतुर्न्यूनशतान्यष्टौ सहस्रद्वयमेव ॥ महारुद्रेति होमः स्यात्सामवेद उदाहृत इत्यादि रघुनाथकृतपद्धतिधृतवाक्येभ्यो वेदत्रयैव महारुद्र कर्तव्य इत्याह ॥ तन्मूर्खप्रलपितमिव ॥ नहि ऋग्वेदेनैव होत्रमकुर्वत यजुर्वेदेनाध्वर्यत्र सामवेदेनोद्गीथं यदेवत्रयै विधायै शुक्रं तेन ब्रह्मत्वमितिवदिह विभागेन त्रैविधकर्मविधिरस्ति ॥ येन वेदत्रयैव महारुद्रः क्रियते ॥ किंच ॥ महारुद्रस्य हि रौद्राध्यायजपात्मकत्वाच्चदंगहोमस्य नमः शंभवायेति मंत्रेणव सिद्धेः प्रधानभूतरुद्रहोमस्य च

रौद्राध्यायमंत्रैरेव सिद्धेर्वेदान्तरोक्तकर्तव्यकर्मविशेषस्याभावेन महारुद्रोवेदान्तरस्योपयोगाभावाच्च॥ यानि त्वाद्यवेदोदिता मंत्रा इत्यादीनि वाक्यानि तानि तु यस्माद्विवक्ष्यार्था हिते मता इत्यादीनां हेतूनामुपन्यस्तत्वेन कल्पितत्वावगमात् निर्मूलानि ॥ श्रुतिमूलकत्वे तु हेतूपन्यासोऽनर्थकः ॥ यानि च सहस्रमप्यकं चैवेत्यादिनि तानि त्वत्राकरेष्वदर्शनात् जाबालकैवल्यश्रुतिविरोधात शातातपात्रिवृत्यबृहत्पराशरादि स्मृतिविरोधाद्धेमाद्रिमहार्णवादिनिखिलनिबंधविरोधान्निर्मूलत्वाच्चोपेक्षणीयानि ॥ अत एव बृहत्पराशरेणोक्तं ॥ कुर्याद्विधानं रुद्राणां यजुर्वेदविनिर्मितमिति ॥ शंकराचार्यकृतविष्णुसहस्रनामभाष्येपि ॥ ईश्वरो देवीं प्रतिमुक्तिकारणं प्रकृत्याह ॥ यावज्जीवं प्रणवमथवाऽवर्त्तयेद्रौद्रियं वा याजुर्वेद्यं वसतिमथवा देविकाश्यां विदध्यात् ॥ हित्वा लज्जां कलिमलकुलध्वंसनानिरयद्वा विष्णोर्नामान्यनिशममृतप्राप्तिरेवं चतुर्द्धा ॥ महाकल्पे नंदिकेश्वरशतानंदसंवादेपि ॥ जपेद्रुद्रं याजुर्वेद्यं प्रयत्नतः ॥ प्रणवं वापि जप्त्वा वा विष्णोर्नामानुकीर्त्तनं ॥ वसतीर्वा तथा काश्यां मुक्तिरेषा चतुर्विधा ॥ परशुरामकारिकायामपि ॥ पंचांगान् जपितुं रुद्रान् याजुर्वेद्यां द्विजन्मनां ॥ मद्विधानां च मुग्धानां प्रबोधाय प्रबोधिनीति ॥ तस्माद्यजुर्वेदशाखाव्यतिरिक्तवेदशाखासु रुद्रो नास्त्येव॥ यत्तु जप्तव्यं शतरुद्रियमृग्वेदोक्तं पदक्रमैः एवं कृते तु देवेशं पश्यध्वं नेतरेण चेति वामनपुराणवचनं तस्यायमर्थः ॥ ऋग्वेदेनैव होत्रमकुर्वतेतिश्रुत्या होत्रस्य ऋग्वेदैकं समधिगम्यत्वेपि क्वचित् शतपथादौ यजुर्वेदेपि हिंकृत्यान्वाहेत्यादिकया श्रुत्या ऋग्वेदभागो हौत्रं यथोपलभ्यते॥ एवं शाकलवाष्कलभिन्नायां कस्याचित् बह्वृचशाखाया मध्वर्यु वेदभाग एव समंत्रकः शतरुद्रियहोमविधिः समाम्नातोऽस्तीति वामनपुराणवाक्यान्यथानुपपत्या कल्प्यते ॥ अतस्तत्प्रतिषेधार्थं ॥ कुर्याद्विधानं मंत्राणां रुद्राणां यजुर्वेदविनिर्मितमित्यादिषु बृहत्पराशरादि स्मृतिवाक्येषु यजुर्वेदविनिर्मितमिति विशेषणं ॥ ऋग्वेदेनैव होत्रमकुर्वतेत्यत्रैवकारस्याध्वर्युवेदोक्तहोत्रप्रतिषेधार्थत्वावत्॥ अन्यथा विशेषणार्थवाक्यापत्तेः॥ तेन याजुर्वेदिकहोत्रवद् ऋग्वेदोक्तं शतरुद्रियमिति वामनपुराणवाक्यं ॥ एवं च सति यस्मिन् ऋग्वेदशाखाविशेषे सांगः शतरुद्रियहोमविधिः समाम्नातोऽस्ति ॥ तच्छाखिनां यजुःशाखासमधीतं हौत्रवच्छाखासमधीतं वा शतरुद्रियं जपादिषु वैकल्पिं अतिरात्रे षोडशी ग्रहणाग्रहणवत् ॥ विप्रचरवदस्थयोः शाकलवाष्कलयोर्बह्वृचशाखयोस्तु सांगस्य शतरुद्रियहोमविधेः सर्वथैवाभावात् तच्छाखिभिः स्वपरंपरापरिगृहीतयजुः शाखासमधीतमेव शतरुद्रियं जपादिषु ग्राह्यं ॥ तच्च निर्णीतं रुद्रक-

ल्पद्रुमे विस्तरतः प्राग् इत्यलं ॥ एवं कर्तृविशेषं प्रतिशाखाविशेषेण रुद्रानुष्ठानं नि-र्णीतं ॥ अधुना बृहत्पराशरस्मृतिं काण्वीं माध्यंदिनीं च वाजसनेयिशाखामनुसृत्य जपात्मक होमात्मक होमांगरुद्राणां प्रयोग उच्यते इति ॥

## ॥ अथ पर्षद्प्रार्थना. ॥

तत्र तावत् श्री रुद्रानुष्ठाने त्रैवर्णिकानामेवाधिकारो न स्त्रीशूद्रानुपनीतानां ॥ तेषां वैदिकमंत्रयुक्तकर्मस्वध्ययनाद्यभावेन साक्षाद्वचनाभावेऽनधिकारात् ॥ नी-र्णीतमेतद्विस्तरेण जैमिनिकात्यायनादिभिः ॥ तत्रादौ महारुद्रारंभदिनात्पूर्वदिनेऽस-संभवे तस्मिन्वाधिकारसिद्धये यजमानेन षडब्द चतुरब्द त्र्यब्द द्व्यब्दैकानामन्यतमं षडब्दत्र्यब्दसार्द्धाब्दाब्दैकाब्दपंचदशकृच्छ्राणामन्यतमं वा यथाशक्तिप्रायश्चित्तं यथा-विधि कर्त्तव्यं ॥ तद्यथा चत्वारो वेदधर्मज्ञाः ॥ पर्षद्त्रैविद्यमेव वा ॥ सो ब्रूते यः स धर्मः स्यात् ॥ एकोवाऽध्यात्मवित्तम इति याज्ञवल्क्योक्तपर्षल्लक्षणलक्षितानां वे-दधर्मशास्त्रविदां स्वाचारनिष्ठानां पर्षदर्हाणां चतुर्णां ऋग्यजुसामात्मिकविद्यात्रया-ध्येतॄणां धर्मशास्त्रविदां त्रयाणांमेकस्य वा धर्मशास्त्राध्यात्मशास्त्रविदो ब्राह्मणस्य प-र्षत्त्वेनोपवेशनं ॥ अनुतापवता देशकालयोः संकीर्त्तनान्ते पारिप्सितप्रायश्चितांगतया विहितं सचैलं स्नानं करिष्ये ॥ इति संकल्पपूर्वकं सचैलस्नानं ॥ अशक्तौ तु पा-दयोः पाण्योश्च प्रक्षालनं वा ॥ अथ वाग्यतेनाभुंजानेन शक्तिश्चेत् क्लिन्नवाससा प-र्षत्समीपे गमनं शक्तौ सत्यां पर्षदं प्रदक्षिणीकृत्य हृदयेन हूयमानेन साष्टांगः प्रणामः॥ ततः पर्षत् प्रणिपातेनोपस्थितस्याग्रतः स्थितस्योपवेशनपूर्वकं द्विजास्तं पृच्छेयुः ॥ किंते कार्यं वदास्माभिः किं वा मृगयसे द्विज॥ तत्वतो ब्रूहि तत्सर्वं सत्यं हि गतरा-त्मनः॥ अस्माकं चैव सर्वेषां सत्यमेव परं बलं॥ यदि चेद्रक्षसे सत्यं नियतं प्राप्स्यसे शुभं ॥ यद्यागतोसि सत्येन त्वं शुद्ध्यसि कर्हिचिदिति ॥ द्विजैः पृष्टेन प्रायश्चित्तिना गोवृषयोः प्रत्येकं प्रत्याम्नायत्वेन यथाशक्तिस्वर्णरूप्ययोर्निष्कं तदर्धं तदर्धं वा पर्षत्पुरतो निधाय करिष्यमाण प्रायश्चित्तांगत्वेनेदं गोवृषनिष्क्रयं इदं सभ्येभ्यो दा-तुमहमुत्सृजे नममेति तद्दानं ॥ सभ्याश्च तद्द्रव्यं विभज्य गृह्णियुः ॥ अत्र च पापं विख्यापये पापी दत्वा धेनुं तथा वृषमिति पराशरवचनात्सति संभवे प्रत्यक्षत एव गोवृषयोर्दानं प्रतीयते तथापि निष्क्रयेणैव तद्दानं॥ बहुभ्यो न प्रदेयानि गौ गृहं शयनं स्त्रियः॥ विभक्तदक्षिणा ह्येता दातारं तारयन्ति हीत्यंगीरसो बहुभ्यः प्रत्य-क्षैकगोदानस्य प्रतिषिद्धत्वात् ॥ इदं गोवृषदानमेकप्राजापत्य कृच्छ्ररूप प्रायश्चित्त दाने ज्ञेयं ॥ पादतो ह्रासे तु विष्णुः ॥ पादव्रते वस्त्रदानं कृच्छ्रार्द्धे तिलकांचनं ॥ पादहीने तु गामेकां कृच्छ्रे गोमिथुनं स्मृतमिति ॥ अत एव महापातकादिष्वधिकं

कल्प्यमिति मिताक्षरायां ॥ अनयैव दिशा शक्त्याद्यपेक्षया दक्षिणाधिक्यमिति महार्णवे ॥ ततोऽमुकस्य मे जन्मप्रभृति अद्यदिनं यावत् ज्ञाताज्ञात कामाकाम सकृदसकृत् कायिकवाचिकमानसिकसांसर्गिक स्पृष्टास्पृष्ट भुक्ताभुक्त पीतापीत सकलपातकातिपातकोपपातकलघुपातकसंकरीकरण मलिनीकरण अपात्रीकरण जातीभ्रंशकरण प्रकीर्णपातकानां निरासार्थमनुग्रहं कृत्वा प्रायश्चित्तमुपदिशन्तु भवन्त इत्युक्त्वा ब्राह्मणप्रार्थनां कुर्यात् ॥

"अथ ब्राह्मणप्रार्थना"—आ ब्रह्मस्तंबपर्यन्तं भवद्वश्यमिदं जगत् ॥ यक्षरक्षपिशाचादिसदेवासुरमानुषं सर्वे धर्मविवक्तारो गोप्तारः सकला द्विजाः ॥ मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्विषं॥ प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥ पूज्यैः कृतपवित्रोऽहं भवेयं द्विजसत्तमैरिति ॥ पुत्रादिश्चेत्प्रायश्चित्तकर्त्ता अस्मच्छब्दस्थाने तन्नामनिर्देशः ॥ स यथा ॥ मम देहस्येत्यत्रास्य देहस्य संशुद्धिरित्येवमूहः ॥ मया कृतमित्यत्रैवत् कृतमिति ॥ प्रसादः क्रियतां मह्यमित्यत्र क्रियतामस्येति ॥ पवित्रोऽयं भवेच्चेति ॥ ततो मामनुगृह्णन्तु भवन्त इत्युक्त्वा पुनः प्रणामः ॥ मामित्यत्र एनमित्यन्यकर्तृके ॥ ततस्ते प्रायश्चित्तिनमुत्सार्य परस्परं प्रायश्चित्तस्वरूपं यत्र यथोचितं धर्मशास्त्रानुसारेण विचार्य तस्य शरीरद्रव्यादिं शक्तिमुत्तममध्यमादिपक्षांश्च विचार्यास्मिन्पक्षे यं शक्त इति निश्चित्यप्रत्याम्नायश्च निश्चित्य पुस्तकवाचनपूर्वकमनुवादकस्याग्रे कथयेयुः ॥ अस्मिन्नवसरे प्रायश्चिता चंदनपुष्पैः पुस्तकपूजनं ॥ सभ्यानामनुवादकस्य च पूजनं ॥ निबंधपूजात्वेन किंचिद्यथाशक्तिद्रव्यस्य निबंधपुरतो निधानं ॥ कृतांजलिपुटेन पर्षत् पुरतो नम्रतयाऽवस्थानं ॥ अत्र च पर्षदंतर्गतस्वप्रायश्चित्तानुवादकत्वे॥ प्रायश्चित्तं तु निर्दिश्य कथं पापात्प्रमुच्यते ॥ यत्पवित्रं विजानीयात् जपेद्वा वेदमातरमिति हारितवचने दोषश्रवणात्पर्षदनन्तर्गतोऽन्य एव प्रतिदानेनानुवादकः कल्पनीयः ॥ स च ब्राह्मणो ब्राह्मणानां तु क्षत्रियाणां पुरोहितः ॥ वैश्यानां याजकश्चैव प्रायश्चित्तं समादिशेदित्यंगिरोवचनाद्वर्णक्रमेण ब्राह्मणादिभिर्ज्ञेयः ॥ कदाचित्क्षत्रियादीनां पुरोहिताद्यसंनिधाने ॥ तत्रैवं ब्राह्मणस्यापि क्षत्रियाधर्दैणाग्निः अन्तरा ब्राह्मणत्वं कृत्वा व्रतमेषां समादिशेत् ॥ तथा शूद्रं समासाद्य सदा धर्मे यथेप्सितं ॥ प्रायश्चित्तं प्रदातव्यं वेदमंत्रविवर्जितमिति वचनादन्तरा ब्राह्मणं कृत्वा ब्राह्मणोपि तु वादको भवत्येव ॥ तथा च ॥ पर्षदर्हब्राह्मणालाभे ब्राह्मणः स्वयं चेद्विद्वान् तदा पर्षदमन्तरेणापि स्वयमेवालोच्य प्रायश्चित्तरूपं निर्णयमिति महार्णवे ॥ क्षत्रियादेस्तु पर्षदनुपनिष्टमेव प्रायश्चित्ताचरणे नाधिकार इति विशेषः ॥

ततो अनुवादकाय पापानुसारेण भृतिरूपदक्षिणादानं ॥ एकेन पर्षद्वृद्धेन प्रायश्चि-त्तस्वरूपस्यानुवादः कार्यः॥ सयथा ॥ शृणुध्व भो इदं विप्रा यत्नत्वाद्द्रश्यते व्रतं ॥ तत्ते यत्नेन कर्त्तव्यमन्यथा तद्वृथा भवेदिति ॥ अनुवादकेन तु अमुकशर्मणः तव जन्मप्रभृति अद्यदिनं यावत् ज्ञाताज्ञात कामाकाम सकृदसकृत् कायिकवाचिकमान-सिक सांसर्गिक स्पृष्टास्पृष्ट भुक्ताभुक्त पीतापीत सकलपातकातिपातकोपपातक लघुपातकसंकरीकरण मलिनीकरणापात्रीकरण जातीभ्रंशकरण प्रकीर्णपातकानां महापातकव्यतिरिक्तानां पातकानां मध्ये संभावितानां पातकानां क्षयोऽनेन पर्षदु-पदिष्टेन सर्वप्रायश्चित्तेनामुकप्रत्याम्नायद्वारा प्राच्योदीच्यांगसहितेनाचीर्णेन तव शु-द्धिर्भविष्यति ॥ तेन त्वं कृतार्थो भविष्यति ॥ इति उपदेशः कार्यः ॥ सर्वप्राय-श्चित्त तु शक्त्यनुसारेण षडब्दं त्र्यद्धं सार्द्धाद्धं अन्यद्वा पर्षदोनुमतं ॥ प्रत्याम्नायश्च एकगोदाने सुवर्णरूप्यनिष्कं तत्तदर्धानां गोमूल्यानां शक्त्या दाने पंचपुराणमिते त्रि-पुराणमिते वा गोमूल्यभूतरूप्यदाने षोडशवल्लपरिमाणनिष्कापरपर्यायादिनान्तरतद-र्धतत्पादान्यत्तमरूपे वा गोमूल्यभूतरूप्यदाने निवर्त्तनद्वादशब्राह्मणभोजने गायत्र्य-युतजपे गायत्र्या व्याहृतिभिर्वा तिलाहुतिसहस्रे प्राणायामशतद्वये संहितापारायणे ष-डंगरुद्रैकादशिन्या पावकेष्ट्यां पावमानेष्ट्यां शुष्ककेशस्य द्वादशस्नानेषु द्विगुणद्वाद-शामान्नदानादौ च प्रत्येकमेकप्राजापत्यमिति ॥ तत्र शक्तस्यामान्नं द्विगुणं त्रिगुणं चतुर्गुणं असंभवे द्विगुणं द्रव्यमित्यादि योज्यम् ॥ निष्कश्च लोकशास्त्रयोरेकवाक्यत-या माषाश्चत्वारिंशत् ॥ तदर्धं विंशति स्तदर्धं दशमुख्यं तदश क्तौ वा तावद्रजतं ग्राह्यं ॥ चांद्रायणस्याष्टप्राजापत्याः प्रत्याम्नायः ॥ अशक्तस्य तु षट्पंच त्रयो वा प्राजापत्याः ॥ मृगारेष्टिर्वा मित्रविंदा वा पशुर्वातिल होमायुतं वा पराकद्वयं वा ल-क्षसंख्याकगायत्रीजपो वेति चान्द्रायणप्रत्याम्नायाः॥ पराकतप्त कृच्छ्रातिकृच्छ्राणां तु त्रयः प्राजापत्याः प्रत्याम्नायाः॥ अत्र च धेनोर्यन्निष्कादिमूल्यमुक्तं तद्दतिधनिकविषयं॥ किंचित्किंचिद्धनिकविषयत्वेन तुक्तं षट्त्रिंशत्मते ॥ धेनुः पंचभिराद्यानां मध्यानां त्रिपुराणिका ॥ कार्षापणैकमूल्या हि कनिष्ठानां प्रकीर्त्तिता ॥ द्वात्रिंशत् कृष्ण-लपरिमितं रजतं पुराणः॥ कार्षापणस्तु पूर्वस्यामुत्तरस्यां वा दिशि अष्टौ ढव्वूकाः षोडशपणाः स एक कार्षापणः॥ तावता लभ्यं रूप्यं दक्षिणस्यां पश्चिमायां वा का-र्षापणः ॥ यत्तु द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेदिति ॥ तद्यज्ञविषय-मिति शूलपाणिः ॥ कात्यायनोपि ॥ यज्ञविषये आवश्यक दक्षिणादानं प्रकृत्याह ॥ द्वात्रिंशत्पणिका गावश्चतुः कार्षापणो वरः ॥ वृषे षट्कार्षापणका अष्टावनडुहि स्मृ-ताः ॥ दशकार्षापणाधेनाविति कृष्णलत्रयमितो वल्लः ॥ एवं निवेदितं प्रायश्चित्तं भ-

वदनुग्रह इत्यंगीकृत्य कालान्तरे प्रायश्चित्ताचरणे सम्मानपूर्वकं पर्षदं प्रणम्य तस्या विसर्जनं ॥ तत्कालमेव तदाचरणे तु नैव तस्या विसर्जनं ॥ अस्मिन्नहनि शक्तेनोपवासः ॥ इतरेण हविष्याशनं। । ततस्तस्मिन् यस्मिन् वाहनि रिक्तायामसंभवेऽन्यस्यां वा तिथौ कृतमाध्यान्हिकेन सायान्हे गंगादितीर्थे स्नात्वाचमनं । इति ॥

## ॥ अथ हेमाद्रिप्रयोगः ॥

तत्रादौ स्नानविधौ नारायणभट्टैः प्रदर्शितं ॥ त्रीन् प्राणायामान् कृत्वा देशकालयोः संकीर्त्तनान्ते ॥ श्रीमदनन्तवीर्यस्यादिनारायणस्याचिन्त्यापरिमितशक्त्याध्रियमाणस्य महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्मांडानामेकतमे व्यक्तमहदहंकारपृथिव्यबूतेजो वाय्वाकाशाद्यावरणैरावृतेऽस्मिन्महति ब्रह्मांडखंडयोर्मध्ये आधारशक्तिवराहकूर्मानन्ताद्यष्टदिग्गजोपरि प्रतिष्ठिते सप्तपातालोपरिभागे सत्यांतलोकषट्कस्याधोभागे महाकालायमानशेषस्य सहस्रफणामणिमंडिते दिग्दंतिदन्तशुंडादंडोत्तभिते लोकालोकाचलवलयिते लवणेक्षुसुरासर्पिदधिक्षीरोदकार्णवपरिवृतजंबुप्लक्षशाल्मलिकुशक्रौंचशाकपुष्करसप्तद्वीपोद्दिपिते कांस्यताम्रगभस्तिनागसौम्यगंधर्वचारणभारतादिनवखंडमंडिते भारतवर्षे भरतखंडे अयोध्या मथुरामाया काशी कांच्यवन्तिका॥ पुरी द्वारावती कुरुक्षेत्रपुष्करादि नानातीर्थयुक्त कर्मभूमौ मध्यरेखायाः पूर्वदिग्भागे भागीरथ्याः पश्चिमे तीरे जगत्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीयपरार्द्धस्य प्रथमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अन्हो द्वितीये यामे तृतीये मुहूर्त्ते प्रथमघटिकायां सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमचरणे बौद्धावतारे विक्रमशके वर्त्तमानेऽमुकनाम्नि संवत्सरेऽयने ऋतौ मासे पक्षे तिथौ वासरे नक्षत्रे योगे करणे अमुकराशिस्थिते चंद्रे सवितरि देवगुरौ शेषेषु ग्रहेषु यथायथास्थानस्थितेषु सत्सु एवं ग्रहगुणविशिष्टे देशकाले चेत्येवं देशकालौ संकीर्त्यामुकशर्मणो मम जन्मप्रभृति अद्यदिनं यावत् ज्ञाताज्ञात कामाकाम सकृदसकृत् कृतकायिकवाचिकमानसिक सांसर्गिक स्पृष्टास्पृष्ट भुक्ताभुक्त पीतापीत सकलपातकोपपातक लघुपातक संकरीकरण मलिनीकरणापात्रीकरण जातीभ्रंशकरण प्रकीर्णपातकानां क्षयद्वारा पूर्वोत्तरांगसहितं यथाशक्त्यहमाचरिष्ये ॥ इति संकल्पं कृत्वा प्रारिप्सितप्रायश्चित्तस्य प्राच्यांगानि करिष्य इत्यपरः संकल्पः कार्यः ॥ यानि कानि च पापानि ब्रह्महत्याशतानि च ॥ केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहमिति मंत्रं पठित्वा ॥ शिखाकक्षोपस्थवर्जं केशश्मश्रुनखरोम्णां वपनं ॥ प्रथमतो दक्षिणं कर्णमारभ्य वामकर्णपर्यन्तमुदक्संस्थं केशवपनं ॥ ततः श्मश्रुलोमनखानां क्रमेणोदक्संस्थानां वापनं ॥ केषांचिन्मते दक्षिणश्मश्रुपूर्वकं वामश्मश्रुपर्यन्तमादौ ॥ ततो द-

क्षिणं कर्णमारभ्य वामकर्णे समाप्तिर्यथा भवति तथा केशानां वापनं ॥ ब्रह्महत्यादिमहापापेषु सशिखं वापनं सर्वांगलोम्नां च ॥ यतिविधवादीनां सशिखं वपनं ॥ सधवानां तु सर्वान् केशान् समुद्धृत्य प्रान्तकेशानां क्षुरेण द्व्यंगुलछेदनमेव वपनं ॥ राजा तत्पुत्र वहुश्रुतविप्राणामिच्छया वपनाभावः ॥ तदा च द्विगुणं प्रायश्चित्तं दक्षिणा च द्विगुणा ॥ आभ्युदयार्थे प्रायश्चिते च वपनाभावः ॥ ततो दक्षिणायां द्विगुण्यं ॥ ततः क्षौरनिमित्तं शीतोदकेन स्नानं करिष्ये इति संकल्पपूर्वकं स्नात्वाचमनं ॥ ॐ आयुर्बलं यशो वर्चः प्रजां पशू वसूनि च॥ ब्रह्मप्रजां च मेधां च त्वं नो देहि वनस्पते ॥ इति मंत्रेण प्राङ्मुखेन द्वादशांगुलदन्तकाष्ठाभिमंत्रणं ॥ ॐ अन्नाद्याय व्यूहध्वमिति मंत्रेण काष्ठाग्रं किंचिद्भक्षयित्वा तेन प्रदेशेन दन्तानां शोधनं ॥ तावत्प्रमाणेन काष्ठान्तरेण च जिह्वोल्लेखनं॥ काष्ठद्वयमपि प्रक्षाल्य किंचिद्भग्नं कृत्वा स्ववामभागे तस्य निक्षेपः ॥ तूष्णीं स्नानाचमनम् ॥ इति ॥

## ॥ अथ दशविधस्नानप्रयोगः ॥

तत्रादौ देशकालयोः संकीर्त्तनान्ते करिष्यमाण प्रायश्चित्तांगत्वेन भस्मादिभिर्दशस्नानानि करिष्ये इति संकल्पः ॥ तत्रादौ भस्मस्नानं॥ नर्य्यसंभवस्य गृह्याग्निसंभवस्य वा भस्मनो ग्रहणं ॥ ॐ ईशानः सर्वविद्यानामिति शिरसि ॥ ॐ तत्पुरुषायेति मुखे ॥ ॐ अघोरेभ्य इति हृदये ॥ ॐ वामदेवायेति गुह्ये ॥ ॐ सद्योजातमिति पादयोः ॥ प्रणवेन सर्वांगे धारणं॥ गोमयस्नानं ॥ प्रातर्गोभिरुत्सृष्टस्य गोमयस्यांतरिक्षस्य ग्रहणं॥ भूमिष्ठं चेदुपर्यधश्च संत्यज्य मध्यस्थस्य संग्रहणं ॥ अग्रमग्रश्चरन्तीनामौषधीनां वने वने ॥ तासामृषभपत्नीनां पवित्रं कायशोधनं ॥ तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदेति मंत्रेण गोमयस्याभिमंत्रणं ॥ सूर्याय प्रदर्शनं ॥ ॐ मानस्तोक इति मंत्रेण गोमयेन दक्षिणहस्तेन गृहीतेन शिरसो नाभ्यन्तं वामहस्तगृहीतेन नाभितः पादान्तं विलेपनं ॥ अत्र च देशभेदान्मंत्रावृत्तिः ॥ अथ मृत्तिकास्नानं ॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे ॥ शिरसा धारयिष्यामि रक्षस्व मां पदे पदे ॥ इत्यभिमंत्रणं उद्धृतोसि वराहेण कृष्णेन शतबाहुना॥ मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिवन्दिता । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतं॥ मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितं ॥ त्वया हतेन पापेन जीवामि शरदां शतं ॥ इति मृदमुद्धरणं॥ ॐ नमो मित्रस्येत्यनया सूर्याय प्रदर्शनं॥ इदं विष्णुरित्यनया दक्षिणहस्तगृहीतया मृदा शिरसो नाभिपर्यन्तानां वामहस्तगृहीतया नाभितः पादपर्यन्तानामंगानामालेपनं ॥ अत्रापि मंत्रावृत्तिः शुद्धोदकस्नानं ॥ ॐ आपोहिष्ठा मयोभुवेति तिसृभिः सूर्याभिमुखेन स्नानं ॥ ॐ आपो अस्मानिति ॥ इदं विष्णुरिति मंत्राभ्यां

वा शुद्धोदकस्नानं ॥ अथ गोमुत्रेण गायत्र्या स्नानं ॥ ॐ गंधद्वारामित्यनेन ॐ मा-नः स्तोकइत्यनेन वा गोमयेन पूर्वं वत्सर्वांगान्यनुपलिप्य स्नानं ॥ ॐ आप्यायस्वे-ति क्षीरेण स्नानं ॥ दधिक्राव्ण इति मंत्रेण दध्ना मूर्धादिपादान्तान्यंगान्यनुलिप्य स्नानं ॐ तेजोसीत्याज्येन मस्तकादीनि पादान्तान्यंगानि अनुलिप्य स्नानं ॥ ॐ घृतं मिमिक्ष इति आज्येन॥ ॐ देवस्येत्वेत्यादिना पूष्णोहस्ताभ्यां अभिषिंचामीत्य-न्तेन मंत्रेण कुशोदकेन स्नानं ॥ एतानि च दशस्नानानि अमंत्रकाणि वेत्युक्तं महा-र्णवे ॥ स्त्रीशूद्राणां त्वमंत्रकान्येव ॥ ततो नित्यस्नानविधिना स्नानं केचिदाचरन्ति॥

## ॥ अथ विष्णुश्राद्धम् ॥

तत्रादौ स्नानांगतर्पणं कृत्वा धौते वाससी परिधाय द्विराचम्योर्ध्वपुंड्रधारणं॥ कृतकुशोपग्रहेण पार्वणेन विधिना विष्णुश्राद्धं विष्णोर्देवतात्वेन श्रवणान्नात्र पित्रा-दीनां देवतात्वं ॥ सांकल्पत्वाच्चार्घावाहनाग्नौकरणविकरणावनेजनपिंडाक्षय्योदकस्व-धावाचनानामभावः ॥ अत्र सर्वे देवधर्माः ॥ सर्वेष्वपि विप्रेषु विष्णोरे-व पूजनं ॥ तत्रैवं क्रमः ॥ आचमनं प्राणायामः ॥ देशकालसंकीर्त्तनपूर्वकं विष्णुश्राद्धांगत्वेन श्री विष्णोः पूजनमहं करिष्ये ॥ इति संकल्पः ॥ शालिग्रामशि-लादौ यथोक्तविधिना पुरुषसूक्तेन षोडशोपचारैः श्रीविष्णोः पूजनं ॥ ततः स्वा-गतं वः सुस्वागतं नः इति प्रश्नोत्तरपूर्वकं विप्रनिमंत्रणं ॥ तद्यथा ॥ ॐ दैवे-क्षणः क्रियतां ॐ तथा प्राप्नोतु भवान् ॥ प्राप्नवानि इति निमंत्रणं ॥ ॐ अक्रोधनैरिति नियमश्रावणं ॥ धुरिलोचनौ विश्वेदेवाः ॥ एषवोऽर्घः ॥ प्रद्युम्न-संकर्षणवासुदेवा एषवोर्घः ॥ स्थलान्तरे पादप्रक्षालनं ॥ एतदाचमनीयमित्युदक-दानेन ब्राह्मणान् द्विराचम्य स्वस्यापि द्विराचमनं ॥ ॐ भूर्भुवः स्वः समाध्वमित्यु-क्त्वा दैवपूर्वं श्राद्धदेशे ब्राह्मणोपवेशनं ॥ ॐ इदं विष्णुरित्याचारात् दिग्बंधः ॥ विष्णुः श्राद्धोपहारः शुचयो भवन्त्वित्युपहारप्रोक्षणं ॥ देशकालपात्रद्रव्यश्रद्धासं-पदस्तु ॥ अस्त्विति प्रत्युक्ते त्रीन् प्राणायामान् कृत्वा देशकालयोः संकीर्त्तनान्ते प्रा-यश्चित्तांगं विष्णुश्राद्धं करिष्य इति संकल्पः ॥ कुरुष्वेति प्रतिवचनं ॥ धूरिलोचन-योः विश्वेषां देवानामेतदासनमित्यासनं दत्वा हस्तप्रक्षालनार्थमुदकदानपूर्वकमुपग्र-हार्थं कुशदानं ॥ प्रद्युम्नसंकर्षणवासुदेवानामेतदासनं दत्वा हस्तप्रक्षालनार्थमुदक-दानपूर्वकमुपग्रहार्थं कुशदानं ॥ धुरिलोचनौ विश्वेदेवाः यथादत्तं गंधाद्यर्चनमक्षय्यं वः स्वाहा नमः ॥ प्रद्युम्नसंकर्षणवासुदेवाः एतद्यथादत्तं गंधाद्यर्चनमक्षय्यं वः स्वाहा नम इति गंधादिदानं ॥ आचमनं ॥ धुरिलोचनौ विश्वेदेवाः यथाकालं दास्यमानं युग्म-ब्राह्मणभोजनपर्याप्तमन्नमक्षय्यं वः स्वाहा नमः ॥ प्रद्युम्नसंकर्षणवासुदेवाः यथा-

कालं दास्यमानं युग्मब्राह्मणभोजनपर्याप्तमन्नमक्षयं वः स्वाहा ॥ नमम इति ब्राह्मणभोजनसंकल्पः॥ अथवामान्नं द्विगुणं त्रिगुणं चतुर्गुणमसंभवे येपं वा तन्निष्क्रयभूतं हिरण्यं वाक्षयं वः स्वाहा नम इति संकल्पः ॥ सकृत्सकृदपोदानं ॥ अश्नत्सु जपो यथोक्तः ॥ तृप्तान् ज्ञात्वा सकृत्सकृदपोदानं ॥ गायत्र्यास्त्रिः सकृद्वा जपः ॥ आचान्तेषु ब्राह्मणेषूदकदानं ॥ ॐ शिवा आपः सन्त्विति मंत्रेण ॥ ॐ सौमनस्यमस्त्वितीति मंत्राः पुष्पाणां ॥ ॐ सक्षतं चारिष्टं चास्त्विति अक्षतानां ॥ ॐ अघोराः प्रद्युम्नसंकर्षणवासुदेवाः सन्त्विति प्रार्थना ॥ सन्त्विति विप्रैः प्रत्युक्ते गोत्रं नोऽभिवर्द्धतामिति ब्रूयात् ॥ वर्धतामिति प्रत्युक्ते ॥ ॐ दातारो नोभिवर्द्धतां वेदाः सन्ततिरेव च ॥ श्रद्धा च नो माव्यगमद्बहुदेयं च नोस्त्विति मंत्रस्य पाठः ॥ धुरिलोचनौ विश्वेदेवाः इदं हिरण्यं तन्निष्क्रयं वा दक्षिणामक्षयं वः स्वाहा नमः ॥ प्रद्युम्नसंकर्षणवासुदेवदेवाः इदं हिरण्यं तन्निष्क्रयं वः स्वाहा नम इति दक्षिणादानं ॥ ॐ विश्वेदेवाः प्रीयन्तामिति देवे वाचयित्वा ॥ वाजे वाजेवतेति ब्राह्मणविसर्जनं ॥ ॐ अमावाजस्येत्यनुगमनं ॥ इति श्राद्धमयूखोक्तं विष्णुश्राद्धम् ॥

नारायणभट्टैस्तु विष्णुपूजनान्तरं विष्णुबुद्ध्या त्रिभ्योधिकानां युग्मब्राह्मणानाभ्यर्चनं ॥ देशकालयोः संकीर्त्तनान्ते त्रिभ्योऽधिकान् युग्मान् ब्राह्मणान् विष्णोरुद्देशेन भोजयित्वा संकल्पपूर्वकं तावतां ब्राह्मणानां भोजनदानं आमान्नदानं वा ॥ इदमेव प्रायश्चित्तांगं विष्णुश्राद्धमित्यभिधीयते ॥

## ॥ अथ गोदानविधिः ॥

तत्रादौ कर्त्ता प्राङ्मुख उपविश्य प्रतिगृहीतारमुदङ्मुखमुपवेश्याचम्य ॥ त्रीन् प्राणायामान् कृत्वा देशकालयोः संकीर्त्तनान्ते करिष्य गोदानांगभूतं यथा संभवोपचारैर्विष्णुपूजनं करिष्य इति संकल्पपूर्वकं विष्णोः पूजनं ततो गवाद्युपहाराः शुचयो भवन्त्विति गवाद्युपहाराणां प्रोक्षणं ॥ देशकालयोः संकीर्त्तनान्ते प्रारिप्सितप्रायश्चित्तस्य पूर्वांगतया विहितं गोदानं करिष्य इति संकल्पः ॥ ततो ब्राह्मणवरणं ॥ अमुकशाखाध्यायिनं अमुकशर्माणं ब्राह्मणं गोदानप्रतिगृहीतारं त्वामहं वृणे इति ॥ वृतोस्मीति प्रतिवचनं ॥ ततः पादार्घदानं गोदानपात्रभूत ब्राह्मण एतत्ते पाद्यं एषतेऽर्घः ॥ पूजा ॥ पादप्रक्षालनं एतत्ते पुष्पं ॥ स्वकीयपादौ प्रक्षाल्याचम्य ॥ ततो गंधमाल्यादिभिरर्चनं ॥ अर्चनं संपूर्णमस्तु इति प्रार्थना ॥ आचमनं ॥ अक्षंनमीमदन्तेत्यक्षतविकरणं ॥ भोजनसंकल्पः ॥ ब्राह्मणहस्तेषु प्रोक्षितादिकरणं ॥ दानकर्त्ता पुच्छदेशेन बद्धशिखेन प्राङ्मुखतया उपवेशनं ॥ कर्त्ता यथाशक्ति स सुवर्णाज्यान्वितकांस्यपात्रे गोपुच्छनिक्षेपणं ॥ सदक्षिणहस्ते सपुष्पाज्यपात्रस्य स-

तिलकुशयवकुसुमजलानां चादानं ॥ देशकालउच्चारणांते ॥ गवामंगेषु तिष्ठन्ति भुवनानि चतुर्दश॥ यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च॥ गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्यहं ॥ यज्ञसाधनभूताथ विश्वस्याघौघनाशिनी ॥ विश्वरूपधरो देवः प्रीयतामनया गवा इत्युक्त्वा अमुकगोत्रायामुकप्रवरायामुकशाखाध्यायिनेऽमुकशर्मणे ब्राह्मणायामुक गोत्रोमुकशर्माहं प्रारिप्सितप्रायश्चित्तसाद्गुण्यकामः इमां गां सवत्सां रुद्रदैवत्यां यथाशक्त्यलंकृतां तुभ्यं संप्रददे ॥ इत्युक्त्वा सतिलयवकुशकुसुमतिलाज्यपात्रज्यपात्रान्वितगोपुच्छस्य ब्राह्मणहस्ते दानं ॥ देवस्यत्वा सवितुरित्यादि पूष्णोहस्ताभ्यामित्यन्तं मंत्रं पठित्वा रुद्राय गां ॐ प्रतिगृह्णामीत्युक्त्वा प्रतिग्रहणं ॥ ॐ द्यौस्त्वा ददातु पृथिवीत्वा प्रतिगृह्णात्विति मंत्रेण वा प्रतिग्रहणं ॥ ॐ कोदादिति मंत्रस्यों स्वस्तीत्यंतस्य पठनं सुवर्णपरिमितस्य यथाशक्ति वा हिरण्यस्य सतुलसीदलस्य दक्षिणात्वेन दानं ॥ कृतस्य गोदानस्य प्रतिष्ठासिद्ध्यर्थं इदं हिरण्यं दक्षिणा तुभ्यं संप्रददे ॥ नममेति ॥ ब्राह्मणाशिषां च ग्रहणं ॥ इति गोदानं ॥ प्रत्यक्षगोदानासंभवे यथाशक्ति तन्मूल्यदानं तत्रेत्थं प्रयोगः प्रायश्चित्तपूर्वांगतया विहितगोदानप्रत्याम्नायत्वेन यथाशक्तिगोमूल्यं तुभ्यं संप्रददे ॥ नात्र दक्षिणादानं ॥ इति ॥

## ॥ अथ प्रायश्चित्तहोमविधिः ॥

तत्रादौ महाव्याहृतिहोमः ॥ कर्त्ता स्थंडिलसमीपे उपवेशनं ॥ आचमनं प्राणायामांश्च कृत्वा देशकालयोरुच्चारणान्ते प्रारिप्सितप्रायश्चित्तस्य पूर्वांगतया विहितं महाव्याहृतिभिराज्येनाष्टोत्तरशतमष्टाविंशति वा होमं करिष्य इति संकल्पः ॥ स्थंडिले पंचभूसंस्कारपूर्वकं लौकिकाग्निस्थापनं ॥ शालाग्निसत्वे तु आज्येनैव बहिः शालाग्नौ जुहूयात् ॥ व्याहृतिः पृथगिति वचनात् शालाग्नौ होमः ॥ ततो ब्रह्मोपवेशनाद्याज्यभागान्तं कर्म कुर्यात् ॥ तत्र विशेषः ॥ पात्रासादनानंतरमुपकल्पनीयानि ॥ सुवर्णादिपात्रं पद्मं पलाशादिपात्रं वा यज्ञियकाष्ठं हरितानि सप्तकुशपत्राणि ॥ पंचगव्यं च गोमूत्रादिकं पंक्तिरूपेण पृथक् पृथगिति ॥ केचिन्महाव्याहृतिहोमे गृह्योक्ते साधारणहोमेति कर्त्तव्यतां नेच्छन्ति ॥ तदयुक्तं ॥ एष एव विधिर्यत्र क्वचिद्धोम इत्यनेन अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यं स्विष्टकृच्चैतन्नित्यं सर्वत्रेत्यनेन च प्राप्ताया होमेति कर्तव्यताया अपवादमन्तरेण बाधायोगात् ॥ अन्ये तु निरूप्याज्यमग्नावधिश्रित्य कुशैः स्रुवं संमृज्योद्वास्य पवित्राभ्यामुत्पूयावेक्ष्य कुशानुपगृह्याग्निं पर्युक्ष्य जुहुयादित्येत्र मंत्रपूर्णाहुतिं कर्मातिच्छन्ति तदप्ययुक्तं ॥ श्रौतानां पूर्णाहुतिधर्माणां वचनमन्तरेण स्मार्त्तकर्मण्यप्रवृ-

त्तेः ॥ ततोऽष्टोत्तरशतमष्टाविंशतिर्वाज्याहुतीनां व्यस्तसमस्ताभिर्महाव्याहृतिभिर्होमः॥ ॐ भूः स्वाहा इदमग्नये नमम ॥ ॐ भुवः स्वाहा इदं वायवे नमम ॥ ॐ स्वः स्वाहा इदं सूर्याय नमम ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये नमम॥ केचिदत्र सर्वत्र इदं महाविष्णवे पापघ्ने इति त्यागं वदन्ति ॥ एवं सप्तवारं कृते २८ आहुतयः ॥ सप्तविंशतिवारं कृतेऽष्टोत्तरशतमाहुतयश्च भवन्ति ॥ इति

## ॥ अथ ब्रह्मकूर्चहोमः ॥

सुवर्णादिपात्रे पद्मपलाशादि पत्रे वा ताम्रायाः कृष्णायाः वा गोः पलमित्यस्याष्टमाषपरिमितस्य वा गोमूत्रस्य गायत्र्या ग्रहणं ॥ गंधद्वारामिति मंत्रेण श्वेताया गोः अंगुष्ठार्धमित्यस्य षोडशमाषपरिमितस्य वा गोमयस्य ग्रहणं ॥ आप्यायस्वेति ताम्रायाः हेमवर्णाया वा गोः सप्तपलस्य द्वादशमाषमितस्य वा गोमयाष्टस्य गोमूत्रत्रिगुणस्य वा क्षीरस्यादानं॥ दधिक्राव्ण इति रक्तायाः कृष्णवर्णाया वा गोत्रीपलस्य दशमाषपरिमितस्य वा गोमयात्पंचगुणस्य गोमूत्रात् द्विगुणस्य वा दध्नो ग्रहणं ॐ तेजोसीति मंत्रेण कपिलायातिलाया वा गोरेकपलस्याष्टमाषमितस्य वा गोमयाच्चतुर्गुणस्य वा आज्यस्य ग्रहणं ॥ देवस्यत्वेत्यादिकेन पूष्णो हस्ताभ्यां गृह्णामीत्यन्तेन मंत्रेण पलमितस्य चतुर्माषमितस्य वा कुशोदकस्य ग्रहणं ॥ देवस्यत्वेत्यादिकेन पूष्णो हस्ताभ्यां गृह्णामीत्यन्तेन मंत्रेण पलमितस्य चतुर्माषमितस्य वा कुशोदकस्य ग्रहणं ॥ गोमूत्रादि कापिलं या ग्राह्यं ॥ अलाभे गव्यमात्रं ॥ ततः प्रणवेन हस्तेनालोडनं ॥ प्रणवेनैव यज्ञियकाष्ठेन निर्मंथनं ॥ प्रणवेनाभिमंत्रणं ॥ पंचगव्येन हरितैः सप्तकुशपत्रैर्दशाहुतिहोमः ॥ स यथा ॥ इरावतीति वसिष्ठऋषिः त्रिष्टुप्छंदः विष्णुर्देवता प्रायश्चित्तांगपंचगव्यहोमे विनियोगः ॥ इरावती धेनुमतीः स्वाहा इदं विष्णवे० ॥ इदं पृथिव्यै इति केचित् ॥ इदं विष्णुरिति मेधातिथिर्ऋषि गायत्रीछंदः विष्णुर्देवता प्रायश्चित्तांगपंचगव्यहोमे विनियोगः ॥ इदं विष्णुर्वि० स्वाहा इदं विष्णवे० ॥ मानस्तोक इति कुत्सऋषिः जगतीछंदः एको रुद्रो देवता प्रायश्चित्तांगपंचगव्य० ॥ मानस्तोके इदं रुद्राय नमम ॥ उदकोपस्पर्शनं ॥ ब्रह्मयज्ञानमिति प्रजापतिर्ऋषिः त्रिष्टुप्छंदः आदित्यो देवता प्राय० ॥ ब्रह्मयज्ञानं० इदं ब्रह्मणे० ॥ अग्नये स्वाहा इदम० ॥ सोमाय० इदं० ॥ तत्सवितुरिति विश्वामित्रऋषिः गायत्री छंदः सवितादेवता प्रायश्चित्तांग० ॥ तत्सवितुरिति यावत्स्वाहा इदं सवित्रे नमम ॥ ॐ कारस्य ब्रह्मा ऋषिः दैवीगायत्रिछंदः परमात्माग्निर्देवता प्राय० ॐ स्वाहा इदं परमात्मने नमम ॥ महाव्याहृतीनां प्रजापतिर्ऋषिः दैवीगायत्री दैवी उष्णिक् दैवीगायत्री छंदांसि अग्निर्वायुसूर्यो देवताः प्राय-

श्चित्तांगपंचगव्यहोमे विनियोगः ।। ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये नमम ।। अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते नमम ।। इति प्रयोगरत्नानुसारीहोमः।।

"अन्ये तु" पंचगव्यं ऋचापूतं जुहुयादग्निसंनिधौ।। सप्तपत्रास्तु ये दर्भा अच्छिन्नाग्रां शुकत्विषः ।। एते उध्धृत्य जुहुयात्पंचगव्यं यथाविधि ।। इरावती इदं विष्णुः मानस्तोके च शंवती: ।। एताभिश्चैव होतव्यं हुतशेषं पिबेत् द्विज इति पराशरवचने मंत्रचतुष्टयस्यैवाम्नात्।। यथा।। अग्नये चैव सोमाय सावित्र्या च तथैव च ॥ प्रणवेन तथा हुत्वा स्विष्टकृच्च तथैव चेति प्रजापतिवचने मंत्रपंचस्योक्तेः ।। अग्नये स्वाहा सोमाय स्वाहा इन्द्राय स्वाहा ।। इंद्र विष्णुमानस्तोके गायत्र्या च प्रजापतेनत्वदेतानीत्याहुतीर्जुहुयात् ।। इति मारीचिवचने सप्तानामेव मंत्राणामुपादानात् अग्नये स्वाहा सोमाय इदं विष्णुर्विचक्रमे विष्णोर्नुकेन सावित्र्या प्राजापत्येन चैव हि।। देवतानामिदं कृत्वा हुतशेषं पिबेत् द्विज इति जाबालिना मंत्राणां षण्णामेवोक्तेरेकतरस्मृत्या श्रवणैकतरपक्षमवलम्ब्य होममित्याहुः ॥ तं मते शंवतींत्यनेन शन्न इन्द्रा इति मंत्रो महार्णवे ।। शन्नो देवीरितीतु मयूखे ।। ततो महाव्याहृत्यादि प्राजापत्यान्ता नवाहुतीर्हुत्वा संस्रवप्राशनादिप्रणीताविमोकान्तं कृत्वा प्रायश्चित्तांगहोमस्य सगुणतासिद्ध्यर्थं ब्रह्मणे पूर्णपात्रं वरो वा दक्षिणां तुभ्यं संप्रददे नममेत्येवं पूर्णपात्रवरयोरन्यतरस्य दानं ।। ततो ग्रामाद्बहिस्तारकोदये व्रतग्रहणं करिष्य इति विप्रान् प्रतिप्रश्नः ।। कुरुष्वेति तैः प्रत्युक्तेः ।। प्रणवेन सर्वस्यापि हुतशेषस्य पंचगव्यस्य प्राशनं ।। अशक्तौ गोमूत्रादिस्वल्पं ग्राह्यं ॥ सर्वस्य पेयत्वात् दुर्वारितस्य त्यागायोगाच्च ।। अत्र व्रतं निशामुखे ग्राह्यं ।। बहिस्तारकोदये होमावशिष्टपंचगव्यप्राशनरूपं व्रतं ग्राह्यमिति महार्णवे माधवस्तु व्रतशब्देन प्रायश्चित्तसंकल्पस्यैवोक्तेः पूर्वेद्युर्निशामुखे पर्षदुक्तप्रकारेण प्रायश्चित्तसंकल्पापरेद्युः प्रातर्होमाद्यंगसहितं प्रायश्चित्तमारभेतेत्याह ।। तेनैतन्मतेन सायंकालेनापि होमान्ते पंचगव्यप्राशनं ।। तथा च स्त्रीशूद्राणां पंचगव्यप्राशने विकल्प इति महार्णवः ॥ प्राशनपक्षे कपिलागव्यं शूद्रेण न पेयं ।। स्त्रीशूद्रौ तु विप्रैः कारयित्वा तूष्णीं पिबत स्पत्यर्थसारे।। स्त्रीणामेव पंचगव्यस्य विहितप्रतिषिद्धत्वाद्विकल्पः ।। शूद्रस्य तु नित्यं भवत्येव पंचगव्यं तु न निषिद्धं ।। रागप्राप्तं तु शूद्रस्यापि निषिद्धमेवेति तु नवीनाः ।। ततः प्रायश्चित्तांगभूतहोमः ।। स्त्रीशूद्राणामपि शालाग्नौ निषिद्धोपि लौकिकाग्नौ विप्रद्वारा भवत्येव ।। कृच्छ्रप्रत्याम्नायभूतः प्रधानरूपो होमो जपो वा सर्वथा निषिद्ध एवेति तत्र ब्राह्मणद्वारा तयोरधिकार इति महार्णवे मदनरत्ने च यत्रांगभूतस्य प्रधानभूतस्य वा जपहोमादेः प्रत्यक्षविधिना निषधं तत्राशक्तौ विप्रद्वारा प्रतिनिधिकरणे नाधिकारेऽपि प्रायश्चित्त-

प्रकरणांगभूतस्य प्रधानभूतस्य वा जपहोमादेस्तस्मात् समासाद्य सदा धर्मपक्षे स्थितं ॥ प्रायश्चित्तं प्रदातव्यं जपहोमे विवर्जितमित्यंगिरोवचनेऽविशेषेण निषेधादेवानधिकारे ब्राह्मणद्वारापि न तयोः कर्तृत्वमिति मयूखकारादयो नवीनाः ॥ तथा स्त्रीशूद्रयोर्होमाधिकारपक्षे होमावशिष्टस्यैव तस्य तद्दैवताभ्यां प्राशनं कार्यं ॥ तदनधिकारपक्षे तु तूष्णीं संपादितस्य होमादवशिष्टस्यैव प्राशनमिति विशेषः ॥ एवं पंचगव्यप्राशनरूप ब्रह्मकूर्चोपवास एव शक्तेनास्मिन्नहनि कार्योऽशक्तेन हविष्याशनं ततो गृहे आगत्य विष्णुं स्मरता मौनिना निशाया अतिवाहनं ॥ प्रातः स्नानादि कृतनित्यक्रियेण कुशकुसुमयवजलादानं ॥ पूर्ववद्देशकालयोः संकीर्त्तनान्ते अमुकशर्मणो मम जन्मप्रभृति अद्यदिनं यावत्पापादिक्षयद्वारा श्री परमेश्वरप्रीत्यर्थमित्यन्तं पूर्ववदुक्त्वा एतावत्संख्याकान् प्राजापत्यान् अमुकप्रत्याम्नायद्वाराऽहमाचरिष्ये ॥ इति प्रधानसंकल्पः ॥ प्रक्रान्तं प्रायश्चित्तं तदैव वा संकल्पितगोमूल्यादि प्रत्याम्नायैः समापनीयं ॥ देशकालयोः उच्चारणपूर्वकं कृतामुकप्रायश्चित्तस्योत्तरांगानि करिष्ये ॥ व्याहृतिभिराज्यहोमप्रायश्चित्तं ॥ विष्णुश्राद्धगोदानानां पूर्ववदाचरणं ॥ अत्रान्तेन ब्रह्मकूर्चहोमः॥ तत्संस्कृतस्य पंचगव्यस्याग्रे प्राशनाभावात्॥ तथा यथोपक्रान्तौ प्रायश्चितहोमप्रत्याम्नायेन तदा प्रधानभूतप्रायश्चित्तहोमोपि पूर्वोत्तरांगहोममात्रमेव॥ यदा तु पूर्वांगहोममग्नौ कृत्वा प्रायश्चित्तं कालान्तरसाध्यं तीर्थयात्रादिप्रत्याम्नायेन स्वयमेवाचरति तदा तदन्ते सति संभवे तमेवाग्निं धारयित्वा तत्रैवोत्तरांगहोम इति युक्तं ॥ तथापि शिष्टास्तस्य धारणाशक्तेरभ्यंतरे उत्तरांगहोमं कुर्वन्ति ॥ अत्र च मध्ये मध्येंगसंकल्पमपि पृथक् शिष्टाः कुर्वन्ति ॥ वस्तु तस्तु पूर्वोत्तरांगसहितमित्यनेनैवतत्सिद्धेर्न तत्संकल्पोऽपि पृथक् कार्य इति युक्तम्

## ॥ अथ दानविधिः ॥

शक्तौ सत्यां दानानि कार्याणि ॥ तानि च ॥ गो भूतिल हिरण्याज्यं वासो धान्यं गुडानि च ॥ रौप्यं लवणमित्याहुर्दशदानानि पंडिताः तत्रादौ आचम्य प्राणानायम्य ॥ देशकालौ संकीर्त्य मया आचरितप्रायश्चितस्य सगुणकामः सुखेन पुण्यलोकप्राप्तिकामो महाविष्णुप्रीतिकामो वा गवादि दशदानादि करिष्ये । ततो गोदानं प्रथमवत् ॥ भूमिदानं ॥ अमुकगोत्रं प्रवरं शाखाध्यायिनं शर्माणं ब्राह्मणं भूमिदानप्रतिगृहीतारं त्वामहं वृणे इति विप्रवरणं ॥ एतत्ते पाद्यं पादप्रक्षालनं एषवोर्घः गंधः पुष्पं च ॥ स्वकीयपादौ प्रक्षाल्याचम्य ॥ गंधमाल्यादिभिरर्चनं ॥ जलमादाय ॥ देशकालौ संकीर्त्य ॥ सर्वभूताश्रया भूमिर्वराहेण समुध्धृता ॥ अनन्तस-

स्यफलदमतः शान्ति प्रयच्छ मे ॥ इत्युक्त्वा इमां निवर्त्तनमितां भूमिं विष्णुदैवत्यां तुभ्यं संप्रदद इति ब्राह्मणहस्ते कुशादियुक्तजलप्रक्षेपः ॥ देवस्य त्वेति द्यौस्त्वेति मंत्रं पठित्वा विष्णवे भूमिं ॥ ॐ प्रतिगृह्णामीत्युक्त्वा भूमेः प्रदक्षिणां कृत्वा प्रतिग्रहणं ॥ ॐ कोदादित्यादिकामैतत्ते ॥ ॐ स्वस्तीत्यन्तं मंत्रं पठेत् ॥ सहस्तेन दंडेन त्रिंशद्दंडनिवर्त्तनमिति ॥ तिलदानं ॥ महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥ द्रोणपरिमितान् तिलान् प्रजापतिदैवतान् तुभ्यमहं संप्रददे ॥ इति ॥ अथ हिरण्यदानं ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे ॥ निष्कपरिमितं सुवर्णं अग्निदैवत्यं तुभ्यमहं संप्रददे इत्युक्त्वा ब्राह्मणहस्ते जलादियुक्तं सुवर्णदानं ॥ अथाज्यदानं ॥ कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितं देवानामाज्यमाहारमतः शान्ति प्रयच्छ मे ॥ प्रस्थाधिकाढकपरिमितमिदमाज्यं सोमदैवत्यं तुभ्यमहं संप्रददे ॥ कुशजलाद्यन्वितआज्यपात्रस्य विप्रहस्ते दानं ॥ अथ वस्त्रदानं । शीतवातोष्णसंत्राणं लज्जाया रक्षणं परं ॥ देहालंकरणं वस्त्रमतः शान्ति प्रयच्छ मे ॥ इमे सूक्ष्मे वाससि बृहस्पतिदैवते तुभ्यमहं संप्रददे ॥ अथ धान्यदानं ॥ सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् ॥ प्राणीनां जीवनं यस्मादतः शान्ति प्रयच्छ मे ॥ सार्द्धखारीपरिमितं इदं धान्यं विश्वेदेवादैवतं तुभ्यमहं संप्रददे ॥ इत्युक्त्वा कुशजलाद्यन्वितमुष्टिमात्रधान्यस्य ब्राह्मणहस्ते दानं ॥ अथ गुडदानं ॥ यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः ॥ सामवेदस्तु वेदानां महादेवस्तु योगिनां ॥ प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा ॥ तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥ मम तस्मात् परां लक्ष्मीं ददस्व गुड सर्वदा ॥ षष्टिपरिमितमिमं गुडं तुभ्यमहं संप्रददे ॥ ब्राह्मणहस्ते सजलगुडपात्रदानं ॥ अथ रूप्यदानं ॥ प्रीतिर्यतः पितृणां च विष्णुशंकरयोः सदा ॥ शिवनेत्रोद्भवं रूप्यमतः शान्ति प्रयच्छ मे ॥ निष्कत्रयपरिमितमिदं रौप्यं रुद्रदैवत्यं तुभ्यमहं संप्रददे ॥ निष्कस्वरूपमुक्तं मनुना ॥ चतुः सौवर्णो निष्क इति ॥ अत्र सुवर्णग्रहणं सुवर्णपरिमाणप्राप्त्यर्थं ततश्च सुवर्णचतुष्टयपरिमितं रजतं राजतो निष्क इत्यर्थः ॥ अथ लवणदानं ॥ यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ॥ शंभो प्रीतिकरं नित्यमतः शान्ति प्रयच्छ मे ॥ सार्द्धखारी परिमितमिदं लवणं सोमदैवतं तुभ्यमहं संप्रददे ॥ ब्राह्मणहस्ते जलादिदानं ॐ स्वस्तीत्यंतमंत्रस्य लवणं स्पृष्ट्वा पठनं च ॥ यथोक्तदानाशक्तौ यथाशक्तिदशदानानि देयानि ॥ सर्वेषु दानेषु यथाशक्तिहिरण्यस्य दक्षिणात्वेन दानं ॥ हिरण्यदाने तु यथाशक्तिरजतस्य ॥ एतानि दशदानानि सभ्येभ्य एव देयानि ॥ तदसंभवे अन्येभ्यो इति प्रयोगरत्ने ॥

एवं दशदानानि विधाय ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं च यत्कृतं ॥ भवत्प्रसादात्तत्सर्वमच्छिद्रं पूर्णमस्तु मे ॥ इत्युक्त्वा यन्मया कृतममुकप्रायश्चित्तमच्छिद्रं ॥ अस्त्विति ब्राह्मणप्रार्थना ॥ अच्छिद्रमस्त्विति प्रतिवचनं ॥ यद्वा ॥ व्रतच्छिद्रं तपच्छिद्रं यच्छिद्रं यज्ञकर्मणि ॥ सर्वं भवतु तच्छिद्रं यस्य चेच्छन्ति वै द्विजाः ॥ इति प्रतिवचनं ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं ॥ इति विष्णुवंदनं ॥ निर्द्धनेन तु तीर्थयात्रादिना-प्रायश्चित्तं कार्यम् ॥ इति ॥

## ॥ अथ द्रोणादिमानम् ॥

द्रोणादिस्वरूपं तु मदनरत्ने ॥ भविष्यत्पुराणे च ॥ पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतः॥ चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः आढकैस्तु चतुर्भिश्च द्रोण-स्तु कथितो बुधैः ॥ कुंभो द्रोणद्वयं शूर्पं खारी द्रोणस्तु षोडश ॥ द्रोणद्वयस्यैव संज्ञान्तरं शूर्प इति॥ वराहपुराणे पलद्वयं प्रसृतं मुष्टिरेकपलं स्मृतं॥अष्टमुष्टि भवेत् किंचिद् किंचिदष्टौ तु पुष्कलं पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः॥ चतुराढको भवेत् द्रोण इत्येतन्मानलक्षणं ॥ विष्णुधर्मोत्तरे ॥ पलं च कुंडवं प्रस्थ आढको द्रोण एव च॥ धान्यमानेषु बोधव्याः क्रमशोमी चतुर्गुणाः ॥ द्रोणैः षोडशभि खारी विंशत्या कुंभ उच्यते ॥ कुंभैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्त्तिता ॥ विंशत्येत्यत्र द्रोणैरित्यनुषज्यते तेन कुंभो द्रोणद्वयमिति पूर्वोक्तपक्षात् विंशतिद्रोणमितः कुंभ इत्यपरः ॥ पलसहस्रपरिमितः कुंभ इति केचित् ॥ एतेषां च पक्षाणां देशकालशक्त्याद्यपेक्षया व्यवस्था ॥ द्रवद्रव्यमानं तु स्कंदपुराणे॥ पलद्वयेन प्रसृतं द्विगुणं कुडवं मतं॥ चतुर्भिः कुडवैः प्रस्थ आढकश्च चतुर्गुणैः ॥ चतुराढको भवेत् द्रोण इत्येतत् मानकं स्मृतं ॥ इदं मानं द्रवद्रव्यमानं घृततैलादिरित्यर्थः ॥ ग्रन्थान्तरे ॥ लाजापायसनालिकेरसलिले सूत्रे जले कांचिके द्वात्रिंशत्पलकोपलैर्घृतमितैः ॥ प्रस्थो गुडः सुश्रुतः ॥ तैलक्षीरघृतेषु विंशतिपलैर्दध्नस्तु पंचोत्तरैः प्रस्थक्षीरगतो बुधैर्निगदितस्त्रिशत्पलैरेव त्विति घृतिरष्टादशा ॥ गोपथब्राह्मणे ॥ पंचकृच्छ्रात्मको माषस्तैश्चतुः षष्टिभिः पलं ॥ पलैर्द्वात्रिंशता प्रस्थो मागधः परिकीर्त्तितः ॥ आढकस्तैश्चतुर्भिः स्यात् द्रोणः स्याच्चतुराढक इति ॥ इति श्रीमद् द्विवेद्युपाह्वपरशुरामात्मजेन जगन्नाथशर्मणा संशोधिते रुद्रकल्पद्रुमे सर्वप्रायश्चित्तप्रयोगः ॥

## ॥ अथ जपरुद्रप्रयोगः ॥

वंदे श्रीदक्षिणामूर्त्तिं सच्चिदानंदविग्रहं ॥ गौरीभूषितवामांगं भक्तकल्पमहीरुहं ॥१॥

अथ संभृतसंभारो यजमानः श्रीरुद्रमारभेत्तद्यथा ॥ ज्योतिर्विदुपदिष्टे उत्तरायणादौ गुरुभार्गवयोर्मौढ्यबाल्यवार्द्धकादिरहिते शुभकाले शुक्लपक्षादौ रिक्तभौमव्यतिपातविष्ट्यादिदोषरहितायां द्वितीयादिस्वाध्यायशुभतिथौ चन्द्रानुकूले निर्णेजनान्तपंचमहायज्ञान्तं कृतनित्यक्रियेण सपत्नीकेन यजमानेन विधिना स्नातेन शुचिना परिहिताहतशुक्लवाससा सोत्तरीयेण यज्ञोपवीतिना दक्षिणपार्श्वे बद्धशिखेन सुप्रक्षालितपाणिपादेन सव्यपाणौ कृतकुशोपग्रहेण दक्षिणे पाणौ धृतपवित्रेण स्वाचान्तेन गोमयाद्युपलिप्ते शुचौ देशे श्रीपर्ण्यादिप्रशस्तदारुनिर्मिते कुशोत्तरकंबलाद्यास्तृते स्वासने प्राङ्मुखेनोदङ्मुखेन वा उपवेशनं ॥ तद्दक्षिणतः पत्न्या च॥ ततः स्मार्त्तेन विधिनाचम्य त्रीन् प्राणानायम्य त्रिमात्रं प्रणवमुच्चार्य यथाचारमिष्टदेवताः प्रणमेत् ॥ श्री गुरुभ्यो० सिद्धिबुद्धिसहिताय श्रीगणेशाय० लक्ष्मीनारायणाभ्यां० उमामहेश्वराभ्यां० ॥ इत्येवं प्रणम्य सुमुखश्चैकदन्तश्चेत्यादि श्लोकान् पठित्वा प्रधानसंकल्पं कुर्यात् ॥ इति ॥

## ॥ अथ प्रधानसंकल्पः ॥

जलं गृहीत्वा देशकालौ संकीर्त्य इह पृथिव्यां जंबूद्वीपे भारतवर्षे कुमारिकाखंडे आर्यावर्त्तैकदेशे अविमुक्तक्षेत्रे आनंदवने गौरीमुखे त्रिकंटकविराजिते भागीरथ्याः पश्चिमे तीरे इत्यादेशं समनुकीर्त्य ॐ ब्रह्मणो द्वितीयपरार्द्धे श्वेतवराहकल्पे वैवस्तमन्वन्तरे अष्टाविंशतितमे कलियुगे प्रथमचरणे बौद्धावतारे विक्रमशके अमुकावान्तरयुगे अमुकयुगावयवे वर्त्तमाने अमुकनाम्नि संवत्सरे अयने ऋतौ मासे पक्षे तिथौ वासरे नक्षत्रे योगे करणे रौद्राद्यमुककाले अमुकराशिस्थिते चंद्रे सवितरि देवगुरौ शेषेषु ग्रहेषु यथा यथाराशिस्थानस्थितेषु सत्सु एवं गुणविशिष्टे देशे काले च अमुकगोत्रोमुकशर्माहं कायिकाद्यखिलपापक्षयकामः श्रीसांबसदाशिवप्रीतिकामो वा पंचविधरुद्राणामन्यतमममुकरुद्रजपं अमुकरुद्रहोमं वा ऋत्विग् द्वारा वा करिष्य इति संकल्पः ॥

नैमित्तरुद्रकरणे तु अमुकनिमित्तममुकरुद्रहोमं वा करिष्ये ॥ उपात्तदुरितक्षयार्थमिति नित्ये॥ पुत्रकामेन तु दीर्घायुः सपुत्रावाप्तिकामो महारुद्रहोमं वा करिष्य इति महारुद्रस्यैकसंकल्पः ॥ परप्रेरितरुद्रकरणे तु अमुकशर्मणो यजमानस्याज्ञया अमुकरुद्रजपं अमुकरुद्रहोमं वा करिष्य इति ॥ सग्रहमखरुद्रकरणे तु सनवग्रहमखममुकरुद्रजपममुकरुद्रहोमं वा करिष्य इति ॥ एवं प्रधानसंकल्प इति ॥

" अथांगसंकल्पः "—तदंगभूतं मातृकापूजा वसोर्द्धारायुष्यजपाभ्युदयिकश्रा-

द्वस्वस्तिवाचनानि करिष्ये तत्रादौ अमुककर्मणो निर्विघ्नफलसिद्धिकामो गणपतिपूजां करिष्ये ॥ प्रत्येकं वा सर्वेषां संकल्पः ॥ इति ॥

" अथ गणपतिपूजा "—गणानां त्वेति प्रणवपूर्वकेन मंत्रेण षोडशोपचारैः पंचोपचारैर्वा यथाविधिः गणपतेरभ्यर्चनं ॥ ततो विघ्नेश्वराय वरदायेत्यादिभिः श्लोकैर्वक्रतुंडमहाकाय० लंबोदर नमस्तुभ्यं० इत्यनेन वा प्रार्थयेत् ॥ समाचारात् कृतांजलिना अमुकरुद्रकर्मणो निर्विघ्नफलसिद्ध्यर्थं गणपतिपूजनविधौ यन्न्यूनातिरिक्तं तत्परिपूर्णमस्त्विति प्रार्थना ॥ अस्तु परिपूर्णमिति प्रतिवचनं ॥ अनेन गणपतिपूजनेनामुककर्मणो निर्विघ्नफलसिद्धिरस्तु इति प्रार्थना ॥ अस्तु निर्विघ्नफलसिद्धिरिति प्रतिवचनं ॥ इति ॥

" अथ मातृपूजावसोर्धारायुष्यजपाभ्युदयिकश्राद्धानि "—प्रत्येकं वा संकल्पपूर्वकं यथाविधिकार्याणि ॥ ततो अमुकरुद्रजपांगतया अमुकरुद्रहोमांगतया वा स्वस्तिवाचनं करिष्य इति संकल्पपूर्वकं स्वस्तिवाचनं कुर्यात् ॥

## केचित्तु ऋत्विजां मधुपर्कार्हणानन्तरं स्वस्तिवाचनमाचरन्ति

नेह हेमाद्रिणा दानखंडे वृद्धिश्राद्धे ऋत्विग्वरणं मधुपर्कार्हणं चोपन्यस्य स्वस्तिवाचनोपन्यासात् ॥ यत्र तु मधुपर्काभावस्तत्र ऋत्विग्वरणान्तरं एव स्वस्तिवाचनं अत एव परशुरामेणोक्तं ॥ कृत्वैवं वरणं पूर्वं वाच्यं पुण्याहवाचनमिति ॥ अथ करिष्यमाणामुकरुद्रजपांगतया अमुकरुद्रहोमांगतया वा विनायकशान्तिं करिष्य इति संकल्पपूर्विका यथोक्ता विनायकशान्तिः कार्या ॥ ततः करिष्यमाणामुकरुद्रजपांगतया अमुकरुद्रहोमांगतया वा नवग्रहयज्ञं करिष्य इति संकल्पपूर्वको ग्रहयज्ञो यथोक्तकर्तव्यः ॥ उभयासंभवे ग्रहयज्ञ एव वा ॥ इति ॥

## ॥ अथार्घवंदनम् ॥

अंगणादौ शुचौ देशे गोमयोपलिप्ते चतुष्कोणमंडले स्वस्तिकोपेते चंदनादिभिरर्चिते सदीपे श्रीपर्णाद्यासने उदङ्मुखेन सपत्नीकेन यजमानेनोपवेशनं ॥ यजमानदक्षिणतः पत्न्या च ॥ आसनं गंधाक्षतपुष्पमाल्यादिवर्णोपहाराणां दक्षिणतः उपकल्पनं ॥ करिष्यमाण ब्राह्मणानां प्राङ्मुखानां पीठोपर्युपवेशनं ॥ पवित्रपाणिना यजमानेनाचमनं ॥ प्राणायामाः ॥ स्वस्त्ययनानि पठित्वा ॥ ॐ सुमुखश्चैकदंतश्चेत्यादिश्लोकपाठः ॥ दक्षिणहस्तेन ताम्रपात्रेण वा कुशकुसुमतिलयवजलादानं ॥ ॐ इह पृथिव्यामित्यादि एवं गुणविशिष्टे देशे काले चेत्यन्तं प्रयोगवाक्यमुच्चार्य

कायिकाद्यशेषपापक्षयकामः श्रीसांबसदाशिवप्रीतिकामो वा अमुकरुद्रजपममुकरुद्रहोमं वा करिष्ये इति प्रधानसंकल्पं कृत्वा कुशकुसुमादीनि भूमौ प्रक्षिप्य पुनस्तदंगत्वेन आचार्यादीनां सर्वेषां ऋत्विजां वरणं करिष्ये ॥ पूर्वं प्रधानसंकल्पः कृतश्चेदत्र वरणस्यैव संकल्पः कार्यः ॥

दधि दुग्धं यवा दूर्वा गंधाः सिद्धार्थसंयुताः॥ जलपुष्पसमायुक्ताः पादार्घएभिरष्टभिः १
आपः क्षीरं कुशाग्राणि दधिचंदनमक्षताः॥ दूर्वाः सिद्धार्थकाश्चेति अष्टांगो अर्घ उच्यते २

इति वाक्योक्तं वा विप्रैर्दीयमानं प्रतिगृह्णीयात् ॥ तत्रोक्तमाचारः ॥ एकस्मिन् शरावे दध्याद्यष्टकं पाद्यष्टकं वा निधायाचारात् फलमपि तत्र निक्षिप्य शरावान्तरेण पिधाय रक्तसूत्रेणावेष्ट्य पत्नीयजमानयोः उदङ्मुखयोः प्राङ्मुखाः साचार्यविप्राः ॥ ॐ पुण्याहमिति त्रिर्वदन्ति ॥ सपत्नीकाय यजमानाय समर्पयन्ति ॥ एवं विप्रैर्दत्तं पादार्घं गृहीत्वा स्वासनादुत्थाय उदङ्मुखे स्थिते सपत्नीके यजमाने ॥ ॐ आनोभद्रा इत्यनुवाकं आशुःशिशान इत्यादिकं द्वादशार्चमप्रतिरथं वा द्यौः शान्तिरिति कंडिकां वा यथाचारं सर्वे जपन्ति ॥ ततस्तिष्ठन्नेव प्राङ्मुखोपविष्टान् ब्राह्मणान् प्रार्थयेत् ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ॥ अनुगृह्णन्तु मामद्य महारुद्राख्यकर्मणि ॥ स्वस्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ॥ श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा ॥ यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥ अंगीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्ता मंत्रार्थे स्थिरबुद्धयः ॥ यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ॥ स्वागतं वो द्विजश्रेष्ठा मदनुग्रहकारकाः ॥ अयमर्घमिदं पाद्यं भवद्भिः प्रतिगृह्यतां ॥ चरणक्षालनाद्देवास्तुष्यन्ति शुद्धमानसाः ॥ तज्जलेन च संसिक्ताः पूर्णकामा भवन्तु मे ॥ इमं वोऽर्घं प्रयच्छामि गृह्णन्तु प्रीतिमानसाः ॥ पावयन्तु च मां नित्यं पूरयन्तु मनोरथान् ॥ ततो ब्राह्मणाग्रे अर्घं स्थापयित्वोविशतः ॥ केचित्तु अर्घोऽर्घोऽर्घ इति त्रिरन्येनोक्ते यजमानः प्रतिगृह्यतामित्युक्त्वा ब्राह्मणहस्ते तदग्रे वा अर्घं स्थापयेत् ॥ ॐ प्रतिगृह्णीम इति सर्वेषां प्रतिवचनमित्येकैवमाचरन्ति ॥ इति ॥

## ॥ अथ ब्राह्मणवरणम् ॥

तत्रादौ उदङ्मुखो बद्धांजलिर्यजमानः प्राङ्मुखोपविष्टमाचार्यत्वं कर्तुं योग्यं विप्रं प्रार्थयेत् ॥ अमुकरुद्रजपममुकरुद्रहोमं वा करिष्ये ॥ तत्र मे त्वमाचार्यो भव ॥ भवामीति प्रत्युक्ते साक्षतेन पाणिना विप्रस्य दक्षिणजानुमालभ्य अमुकगोत्रोमुकप्रवरोऽमुकशर्माहं अमुकगोत्रममुकामुकप्रवरं यजुर्वेदान्तरगतकाण्वशाखाध्यायिनं माध्यंदिनशाखाध्यायिनं वा अमुकशर्माणं ब्राह्मणं रुद्रजपे होमे वा आचार्यत्वेन त्वां

वृणे इत्यवदाचार्यं वृणुयात् ॥ ॐ वृतोस्मीत्युक्त्वा ॐ व्रतेन दीक्षामिति मंत्रं जपेत्स-
माचारात् ॥ ततो यजमानेन आचार्य एतत्ते पाद्यं पादप्रक्षालनं एषतेऽर्घः गंधः पु-
ष्पमित्येवं पाद्यादिभिरर्चनं ॥ प्रार्थना ॥ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृह-
स्पतिः ॥ तथा त्वं मम यज्ञेस्मिन् आचार्यो भव सुव्रत ॥ त्वत्प्रसादाच्च समग्रं फ-
लमाप्नुयां ॥ संसारभयभीतेन त्वयं यज्ञः सुविस्तरः ॥ आरब्धस्त्वत्प्रसादेन निर्वि-
घ्नो मे भवेदिति ॥ यथा शक्रस्य वागीशः आचार्यः सर्वकर्मसु ॥ तथा मया त्वमा-
चार्यो वृतोस्मि यज्ञकर्मणि ॥ इति मंत्रयोरन्यतरमंत्रेण प्रार्थना ॥ एवममुकशर्माणं
ब्राह्मणममुकरुद्रजपे अमुकरुद्रहोमे कृताकृतावेक्ष्यकत्वेन ब्राह्मणं त्वामहं वृणे इत्येवं
स्वशाखीयमेव ब्रह्माणं वृत्वा पाद्यादिभिरभ्यर्च्य प्रार्थयेत् ॥ यथा चतुर्मुखो ब्रह्मा
सर्ववेदविशारदः ॥ तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम ॥ नारायणभट्टप-
द्धतौ तु पूर्वार्द्धं पठित्वा उत्तरार्द्धे तथा त्वं मम यज्ञेऽस्मिन् ब्रह्माणं त्वामहं वृणे॥ इ-
ति पाठः समाम्नातः ॥ ततस्तयोर्हस्ते रक्तसूत्रबंधनाद्येकादशरुद्रपूजनान्तं कर्म व-
क्ष्यमाणेन विधिना कृत्वा जपहोमादिकं यजमानेन स्वयं कार्यं ॥ ऋत्विजामनुपदे-
शात् ॥ स्वस्याशक्तौ तु ब्रह्मवरणानंतरं जपाद्यर्थमन्येषां ब्राह्मणानां स्वप्रतिनिधि-
त्वेन ऋत्विक्त्वेन वा वरणम् ॥ तद्यथा ॥ अमुकशर्माणं ब्राह्मणं अमुकरुद्रजपार्थ-
ममुकरुद्रहोमार्थं वा ऋत्विक्त्वेन त्वामहं वृणे इति यजमानेनोक्ते वृतोस्मीति प्रत्युक्तिः॥
ॐ व्रतेन दीक्षामिति मंत्रजपश्च ॥ रुद्रजापक एतत्ते पाद्यमित्येवं पाद्यादिभिरभ्य-
र्चनं ॥ होमरुद्रेति रुद्रहोमः एतत्ते इति प्रयोगः ॥ एवमेकादशानां यजुःशाखिनां
यजमानसमशाखिनां वरणं॥ अष्टानां वा चतुर्णां वा द्वयोर्वा एकस्य वा वरणमिति
परशुरामादयः ॥ नारायणभट्टास्तु ॥ रूपके एक एव रुद्री लघुरुद्रमहारुद्रेऽनेक ए-
कादश वा ॥ अतिरुद्रे एकादश ॥ एकविंशति उत्तरशतं वेति ऋत्विक् संख्या ॥
प्रतिनिधिपक्षे त्वनियम इति सांप्रदायिका इति विशेषमाहुः ॥ केचित्तु प्राङ्मुखो
यजमान उदङ्मुखानामाचार्यादीनां सर्वेषामृत्विजां वरणमिति मन्यन्ते ॥ पुत्रकाम-
श्चेत् ऋत्विजो वृत्वा प्रत्येकं प्रार्थयेत् ॥ भगवान् सर्वधर्मज्ञ सर्वधर्मभृतां वर ॥ वि-
तते मम यज्ञेऽस्मिन् ऋत्विक् त्वं भव सुव्रतेति मंत्रेणेत्युक्तं नारायणभट्टैः ॥ सग्र-
हमखरुद्रानुष्ठानपक्षे तु सग्रहरुद्रजपार्थं सग्रहरुद्रहोमार्थं वा त्वां वृणे इत्येवं ऋत्वि-
जां वरणं ॥ यद्वा रुद्रजपार्थं ब्राह्मणवरणात् पूर्वमनियमेनैकस्य द्वयोस्त्रयाणां वा
नवग्रहजापकानां अमुकग्रहजपार्थं अमुकग्रहहोमार्थं वा त्वामहं वृणे ॥ एवं सदसस्य
वरणं ॥ सर्वधर्माणामुपद्रष्टा भवेति प्रार्थना ॥ ततो मंडपश्चेत्तदा गोत्राद्युच्चारणपूर्वकं
पूर्वद्वारे ऋग्वेदपारायणार्थं त्वां वृणे इत्येवं द्वयोः प्रत्येकं वरणम् ॥ वृतोस्मीति प्रत्यु-

क्ते ऋग्वेदपारायणपाठका एतत्ते इति पाद्यादिभिरभ्यर्चनं ॥ ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः ॥ अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भवेति प्रत्येकं प्रार्थना ॥ एवं दक्षिणद्वारे यजुर्वेदपारायणार्थं ॥ पश्चिमद्वारे सामवेदपारायणार्थं त्वां वृणे इत्येवं प्रतिवेदं द्वयोर्द्वयोर्वरणमेकैकस्य वा ॥ पाद्यादिभिरभ्यर्चनं प्रार्थना च ॥ कातराक्षो यजुर्वेदः त्रैष्टुभो विष्णुदैवतः काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भवेति यजुर्वेदिनोः ॥ सामवेदस्तु पिंगाक्षो जाग्रतः शक्रदैवतः ॥ भारद्वाजस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भवेति सामवेदिनः ॥ बृहन्नेत्रोथर्ववेदोनुष्टुभो रुद्रदैवतः ॥ वैशंपायन विप्रेन्द्र ऋत्विक् त्वं मे मखे भवेत्यथर्ववेदिनः ॥ अपरे तु हेमाद्रौ महार्णवे निर्णयसिंधौ शान्तिरत्ने नारायणभट्टपद्धतौ च वेदपारायणस्य महारुद्रांगत्वेनादर्शनान्निर्मूलत्वाच्च नैतदाचरन्ति ॥ यत्तु गणेशगायत्रीजपार्थं रुद्रगायत्रीजपार्थं दुर्गागायत्रीजपार्थं जातवेदोमंत्रजपार्थं त्र्यंबकमंत्रजपार्थं अघोरमंत्रजपार्थं च त्वां वृणे ॥ इत्येवमेकैकविप्रवरणं ॥ ततो वास्तुमंत्रजपार्थं क्षेत्रपालादिमंत्रजपार्थं च त्वामित्येकैकविप्रवरणं ॥ इत्येवमाचरन्ति तन्निर्मूलं ॥ एवं वृद्धपुरःसरमृत्विजां पादप्रक्षालनं विधाय क्षालितचरणेषु ऋत्विक्षु द्विराचान्तेष्वात्मनश्चरणौ प्रक्षाल्य द्विराचमनं यदा बध्नन्निति मंत्रेणाचार्यादीनामृत्विजां हस्ते रक्तसूत्रात्मककंकणबंधनं यजमानेन समाचारात् कार्यम्॥ इति ॥

## ॥ अथ वरणश्राद्धम् ॥

यथाचारं वरणश्राद्धं च ॥ तद्यथा ॥ आचम्य त्रीः प्राणानायम्य ॥ देशकालौ संकीर्त्याचार्यादीन सर्वान वृतान् ब्राह्मणा आसनं गंधादिभिरर्चयिष्य इति संकल्पः॥ ॐ स्वस्तिन इन्द्रेति दिग्बंधः वरणश्राद्धोपहाराः शुचयो भवन्त्विति वरणश्राद्धोपकरणानां प्रोक्षणं ॥ आचार्याय इदमासनं इत्येवं सर्वेभ्यः प्रत्येकमासनदानं ॥ यथा दत्तानि गंधमाल्यादीनि वस्त्रयुग्मोपवीतकुंडलमुद्रिकाकेयूरांगदकंठाभरणादीनि यथा दैवतानि तन्निष्क्रयद्रव्यं वा आचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्यः स्वाहा संपद्यन्तां नममेति प्रतिविप्रपूर्वकृतस्यार्चनसंकल्पः ॥ अत्र देयमुक्तं परशुरामकारिकायां ॥

भाजनं भाजनाधारं छत्रोपानत् कमंडलुं ॥ आसनं वसनं मुद्रां कर्णभूषोपवीतकं ॥
एतद्दशविधं देयं पदं वरणसिद्धये ॥ पदाभावे त्रयं देयं पात्रवस्त्रांगुलीयकं ॥
तदभावेथ तांबूलं दत्वा किंचित्प्रकल्पयेत् ॥ किंचिन्मूल्यं प्रकल्पयेदित्यर्थः ॥

इदं वोज्योतिः सूर्यो ज्योतिरिति उक्त्वा अर्चनविधेः परिपूर्णतास्त्वित्युक्तेः अस्त्विति विप्राः प्रतिब्रूयुः ॥ आचमनं ॥ यथा दास्यमानानि तृप्तिपर्याप्तानि अन्ना-

नि सोपस्कराणि आचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्यः स्वाहा संपद्यन्तां नममेति भोजनसंकल्पः ॥ अस्य ऋत्विग्वरणकर्मणः सांगत्वसिद्धये गां वा हिरण्यं वा रूप्यं वा ताम्रं वा निष्क्रयद्रव्यं वा दक्षिणां आचार्यादिभ्यः सर्वेभ्यः ऋत्विग्भ्यः स्वाहा संपद्यन्तां नममेति वाक्येन गोभूहिरण्यादिदक्षिणादानं ॥ यस्य विप्रस्य यो भागः स तेन प्रतिगृह्यतामिति च वक्तव्यं ॥ अस्य ऋत्विग्वरणविधेर्यन्न्यूनातिरिक्तं तत्सर्वं गणेशांबिकयोः प्रसादात् ब्राह्मणवचनात् परिपूर्णमस्त्विति ब्राह्मणान् प्रार्थयेत् ॥ अस्तु परिपूर्णमिति ब्राह्मणाः प्रतिब्रूयुः ॥ ॐ स्वस्ति न इन्द्रेति यजमानस्य भाले तिलककरणं ॥ ॐ यदा बध्नेति मंत्रेण समाचाराद्यजमानस्य दक्षिणहस्ते कंकणबंधनं ॥ ॐ तं पत्नीभिरिति मंत्रेण पत्न्याश्च वामहस्ते ॥ ॐ कांडात्कांडादिति दूर्वया यजमानेन स्वात्मनि मार्जनं ॥ ॐ दधि क्राव्ण इत्यर्धवंदनं ॥ ॐ याः फलिनिरिति यजमानाय फलसमर्पणं ॥ आशिष आनंदः ॥ इति ॥

## ॥ अथ मधुपर्कप्रयोगः ॥

विष्टरादीनां गंधपुष्पमालावस्त्रयुग्मोपवीतोष्णीषालंकरणछत्रोपानत्कमंडलु आदीनां च द्रव्याणामन्येनाहरणम् ॥ दक्षिण तस्तेषामुपकल्पनं ॥ देशकालौ संकीर्त्य वृत्तानां आचार्यादीनां सर्वेषां ऋत्विजां मधुपर्केणार्हणं करिष्ये ॥ आसनमास्ती र्याह साधु भवानास्तामर्चयिष्यामो भवन्तमित्यादिकेन प्राणान् संमृशति वाङ् मे आस्ये नसोः प्राणोऽक्ष्णोः चक्षुः श्रोत्रं बाह्वोर्बलमूर्वोरोजोरिष्टामि मेंगानि तनूस्तन्वा मे संहेत्यंतेन गृह्योक्तेन विधिना आचार्यस्य मधुपर्केणार्हणं ॥ ततस्त्रीणि ताम्रमयानि पाद्यार्घआचमनीयभाजनानि द्वे कांस्यभाजने आचार्याय संप्रददे नममेति संकल्पपूर्वकं पात्राणां दानं ॥ पूर्वं तु पात्रस्थोदकमधुपर्कयोरेव दत्तत्वात्तदाधारपात्राणामदत्तत्वादिह दानं ॥ पाद्यार्घाचमनीयादिशब्दानामुदकमात्रवाचित्वात् ॥ पात्राणां तु दानमाचारात् ॥ अदाने दोषश्रवणाभावाच्चेति केचित् ॥ अन्ये तु पात्रविशिष्टस्यैव पाद्यादिदानस्य कृतत्वात् पत्राणां पृथक् दानं नैवाचरन्ति ॥ इदमेव युक्तं ॥ ततो गंधपुष्पमालावस्त्रयुग्मोपवीतोष्णीषालंकारछत्रोपानत्कमंडल्वादिभिरभ्यर्चनं ॥ एवं ब्रह्मादीनां सर्वेषां प्राङ्मुखानां पंक्त्याकारेणोपवेशनं । साधु भवन्त आसन् ॥ अर्चयिष्यामो भवत इत्यर्ध्यान् प्रति आह ॥ ॐ अर्चयेति सर्वे प्रतिब्रूयुः ॥ अन्येन त्रिरुच्चारणीयानि विष्टरादीनि मधुपर्कान्तानि सर्वाणि द्रव्याणि अस्मिन्पक्षे बहुवचनांतान्युच्चारणीयानि ॥ ॐ विष्टरा विष्टरा विष्टरा इति ॥ एवं पादार्घमुदकानि विष्टरा अर्घा आचमनीयानि मधुपर्का इति ॥ प्रतिगृह्यन्तां इत्याह यजमानः ॥ ॐ प्रतिगृह्णीम इति सर्वे प्रतिगृह्णीयुः ॥ यत्र तु प्रतिग्रहणे मंत्रोऽस्ति तत्र

तेनैव तस्य प्रतिग्रहणं ॥ अन्यत्सर्वं पूर्ववत् ॥ आचार्यस्यैव वा मधुपर्केणार्हणं ॥ अ-स्य मधुपर्कार्चनकर्मणो यन्न्यूनातिरिक्तं तत् परिपूर्णमस्त्विति प्रार्थना ॥ अस्तु प-रिपूर्णमिति ॥ केचितु यद्यपि सकृत्संवत्सरस्य सोमेन यजेत कृतार्ध्या एवैनं याज-येयुरिति सूत्रे ज्योतिष्टोमे तद्विकारे च ऋत्विजां मधुपर्केणार्हणीयत्वाभिधानान्नेह मधुपर्कमिच्छन्ति ॥ इति ॥

" अथ स्वस्तिवाचनप्रयोगः "–अद्येत्यादि० करिष्यमाणामुकरुद्रजपांगतया स्वस्तिवाचनं करिष्ये ॥ कलशस्थापनपूर्वकं यथोक्तं स्वस्तिवाचनं कुर्यात् ॥ अ-न्ये तु नेह स्वस्तिवाचनं कुर्वन्ति ॥ आभ्युदयिकानन्तमेव तस्य उक्तत्वात् ॥ दा-नखंडे मदनरत्नकृता सर्वैर्ग्रहयज्ञमहारुद्रादिपद्धतिकारैस्तथैवोक्तत्वाच ॥ इति ॥

## ॥ अथ ब्राह्मणप्रार्थना ॥

अथ गृहीतकुसुमांजलिना यजमानेन ब्राह्मणप्रार्थना ॥ ब्राह्मणाः सन्तु मे शान्ताः पापात्पान्तु समाहिताः ॥ देवानां चैव दातारः पातारः सर्वदेहीनां ॥ ज-पयज्ञैस्तथा होमैर्दानैश्च विविधैः शुभैः ॥ देवानां च पितृणां च तृप्त्यर्थं याचकाः स्मृताः ॥ येषां देहे स्थिता देवाः पावयन्ति जगत्त्रयं ॥ ते मां रक्षन्तु सततं जपयज्ञे व्यवस्थिताः ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ॥ रुद्रध्यानपरा नित्यं प्रसन्नमनसः सदा ॥ अदुष्टभाषणाः सन्तु मा सन्तु परनिंदकाः ॥ ममापि नियमा ह्येते भवन्तु भवतामपि ॥ इति ॥

## ॥ अथ जलयात्राप्रयोगः ॥

देशकालौ संकीर्त्य करिष्यमाणामुकरुद्रांगत्वेन जलयात्रां करिष्ये ॥ ॐ कुरु-ष्वेति विप्रानुज्ञातो यजमानः पूजासंभारान् अष्टौ नव वा कलशांश्चाचार्येण ऋत्वि-ग्भिश्च सहितः सुवासिनीपुरःसरः शान्तिपाठपठनमंगलगीतवाद्यसमन्वितो जलाशयं गच्छेत् ॥ जलाशयं प्राप्य हस्तौ पादौ प्रक्षाल्याचम्य जलाशयतीरे शुचि देशे प्रक्षा-लिते गोमयेन चतुरस्रमंडलं कृत्वा स्वस्तिकं विरच्य स्वासने सपत्नीकेन यजमा-नेनोपवेशनं ॥ आचम्य प्राणानायम्य ॥ ॐ इन्द्रघोषस्त्वेति प्रतिमंत्रं चतुर्दिक्षु र-क्षाबंधनं ॥ ततस्तस्मिन् पूर्वकृतचतुरस्रमंडले यवैस्तंदुलैर्वा चारुस्वस्तिकमष्टदलं पद्मं वा कृत्वा तन्मध्ये समाचारात् भूरसीति मंत्रेण भूमिं ध्यात्वा भूमिपूजनं कुर्यात् ॥ तद्यथा ॥ भूरसीति भूमिस्पर्शनं आवाहनं च ॥ महीद्यौरित्यासनं ॥ पृथिविचप इति पाद्यं ॥ स्योना पृथिवि इत्यर्घं ॥ शन्नो देवीरित्याचमनं ॥ पयः पृथिव्यामिति पयः स्नानं ॥ इरावतीति शुद्धोदकस्नानं ॥ य इमे इति वस्त्रं ॥ यदूवध्येति गंधं ॥

अक्षन्नमीमदंतेत्यक्षताः ॥ श्रीश्चतेति पुष्पाणि ॥ धूरसीति धूपः ॥ अग्निर्ज्योति-रिति दीपः ॥ अन्नपते इति नैवेद्यं ॥ शिवोनामेत्याचमनं ॥ याः फलिनीरिति फलं ॥ नमः पर्णायेति तांबूलं ॥ हिरण्य गर्भेति हिरण्यं ॥ धामच्छग्निरिति पुष्पांजलिं ॥ शिवोनामासीति नमस्कारः॥ अनया पूजया भगवति भूमिः प्रीयतामिति पूजा निवेदनं ॥ केचिद्विधिना स्थापिते कलशे निहितायां भूमिपूजनमाचरन्ति ॥ इति ॥

"अथ कलशस्थापनप्रकारः"—भूरसिति मंत्रेण मंडलात् पूर्वस्यां दिशि भूमिस्पर्शनं ॥ औषधयः समवदन्तेति धान्यपुंजकरणं ॥ चित्यतिर्मा पुनात्विति सप्तभिर्दर्भपवित्रैः कलशपवित्रीकरणं ॥ आजिघ्रेति धान्यपुंजोपरि कलशस्थापनं ॥ स्थिरो भवेति स्थिरीकरणं ॥ महीद्यौरिति जलेन कलशपूरणं ॥ या ओषधीरिति तत्र सर्वौषधीप्रक्षेपः ॥ व्रीहयश्चत इति धान्यप्रक्षेपः ॥ हिरण्यं ॥ अश्वत्थेवेति पंचपल्लवान् ॥ कांडात्कांडादिति दूर्वा स्योना पृथिवीति पंच सप्त वा मृदः ॥ धान्यमसीति पूर्णपात्रे धान्यपूरणं ॥ पूर्णादर्वीति तस्यैव पूर्णपात्रस्य कलशोपरि निधानं ॥ याः फलिनीति पूर्णपात्रे नालिकेरादिकस्य स्थापनं ॥ सुजात इति वस्त्रयुग्मेन वाससा वा कलशवेष्टनं ॥ ततः कलशे गंगाद्यावाहनं॥ इमंमे गंगे यमुने सरस्वस्तीसितासिते सरिते ॥ ॐ पावकानः सरस्वती ॥ अश्वावतीर्गोमतीः ॥ ॐ पंचनद्यः ॥ प्रपद्ये वरुणं देवं यादसां पतिमीश्वरं ॥ याचितं देहि मे तीर्थं सर्वपापापनुत्तये ॥ गंगे त्वं सर्वतीर्थानामाश्रयासि यतस्ततः ॥ यजमानाभिषेकार्थमेहि पापं विनाशय ॥ सरस्वती नमस्तुभ्यं महेश्वरि हरिप्रिये ॥ यजमानाभिषेकार्थमेहि पापं व्यपोहय ॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः॥ मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ इत्यादिमंत्रैश्चावाहनं ॥ मनोजूतिरिति प्रतिष्ठा ॥ ततो गंधादिभिः कलशपूजनं यद्वध्येति गंधं ॥ ओषधयः प्रतिमोदध्वमिति पुष्पाणि पुष्पमाला च ॥ अक्षन्नमी मदंतेत्यक्षताः ॥ धूरसीति धूपः ॥ अग्निर्ज्योतिरिति दीपं ॥ अन्नात्परिस्रुत इति नैवेद्यं ॥ नमः पर्णायेति तांबूलं ॥ याः फलिनीरिति फलं ॥ हिरण्य गर्भ इति दक्षिणाः ॥ धामच्छदग्निरिति पुष्पांजलिः ॥ कुंभोवनिष्टुरिति नमस्कारः ॥ ततो मंडलाद्दक्षिणस्यां प्रतीच्यामुदीच्यां च पूर्ववदेवकांडानुसमयेन त्रयाणां कलशानां स्थापनं पूजनं च ॥ एवमेवेशानादिषु वायव्यान्तेषु चतुर्षु कोणेषु चतुर्णां कलशानां स्थापनं तन्मध्ये वरुणपूजनं च॥ तद्यथा एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ॥ विद्याधरेन्द्रामरगीयमानः पाहि त्वमस्मान् भगवन्नमस्ते ॥ १ ॥ तीक्ष्णायुधं तीक्ष्णमतिं दिगीशं चराचरेशं वरुणं महान्तं ॥ प्रचंडपाशांकुशवज्रहस्तं भजामि देवं कुलवृद्धिहेतोः ॥ २ ॥ आवाहयाम्यहं देवं वरुणं यादसां पतिं ॥ प्रती-

चीशं जगत्प्राणसेवितं पाशहस्तकमिति मंत्रैः कलशे वरुणमावाह्य वारुणैर्मंत्रैः पूजनं ॥ इमं मे वरुणश्रुधीह इति मंत्रान्ते वरुणाय० अनुलेपनं सम० ॥ तत्त्वायामीति अ-क्षताः ॥ उदुत्तमं इति धूपं ॥ अग्निर्ज्योतिरिति दीपं ॥ ये देवास इति नैवेद्यं ॥ नमः पर्णायेति तांबूलं ॥ याः फलिनीरिति फलं ॥ हिरण्यगर्भ इति दक्षिणा ॥ प्रा-र्थना ॥ शंखस्फटिकवर्णाभं श्वेतहारांबरावृतं ॥ पाशहस्तमहाबाहो दयां कुरु दया-निधे ॥ तत्वायामीति नमस्कारः ॥ ॐ मंत्रहीनं क्रियाहीनमिति पठित्वा अनया पू-जया भगवान् वरुणः प्रीयतामिति पूजानिवेदनं ॥ इति ॥

## ॥ अथ जलजीवस्थलमातृकापूजनम् ॥

तत्रादौ जलमातृकापूजा ॥ पूर्वकलशादाग्नेयकोणे वस्त्रास्तृते कृतसप्ताक्षतपुंजेषु उदक्संस्थेषु जलमातृकास्थापनं ॥ तासां नामानि ॥ मत्सी कूर्मी वराही च दर्दुरी मकरी तथा ॥ जलूकी तंतूकी चैव सप्तैता जलमातृकाः ॥ १ ॥ ॐ भूर्भुवः स्वः म-त्स्यै० मत्सीमावा० (एवंसर्वत्र) कूर्म्यै० वाराह्यै० दर्दुर्यै० मकर्यै० जलूक्यै० तंतुक्यै० इत्यावाह्य पूजयेत् ॥ इति ॥

" अथ जीवमातृकापूजा "—तत्रैव तत्पुरतस्तथैवसप्ताक्षतपुंजान् कृत्वा तेषु जीवमातृकास्थापनं॥ कुमारी धनदा नंदा विमला मंगलाचला ॥ पद्मा चेति सुवि-ख्याताः सप्तैता जीवमातृकाः॥ ॐ भूर्भुवः स्वः कुमार्यै० कुमारीमावा० ( एवं सर्वत्र ) धनदायै० नंदायै० विमलायै० मंगलायै० अचलायै० पद्मायै० इत्यावाह्य पूजयेत् ॥

" अथ स्थलमातृकापूजा"—ततस्तदग्रतः सप्ताक्षतपुंजान् पुनस्तथैव कृत्वा तेषु स्थलमातृकापूजनं ॥ उर्मीर्लक्ष्मीर्महामाया पानदेवी तथैव च ॥ वारुणी निर्मला गोधाः सप्तैताः स्थलमातृकाः ॐ भूर्भुवः स्वः ऊर्म्यै० ऊर्मीमावा० (एवं सर्वत्र) ल-क्ष्म्यै० महामायायै० पानदेव्यै० वारुण्यै० निर्मलायै० गोधायै०॥ इत्यावाह्य पूजजेत्

"अत्रावसरे"—सप्तसागरपूजनमाचरन्तीति केचित् ॥ तद्यथा ॥ ॐ समुद्रा-दूर्मिरिति मंत्रान्ते सप्तसागरान् अक्षतपुंजेषु आवाह्य यथाशक्त्या पूजयेत् ॥ अनया पूजया भगवन्तः सप्तसागराः प्रीयन्तामिति पूजासमर्पणम् ॥ ततो ॐ त्रातारमिन्द्र इत्यादिभिर्मंत्रैर्मंडलाद्बहिः प्राच्यादि अष्टदिक्षु इन्द्रेशानयोर्मध्ये निर्ऋतिवरुणयोर्मध्ये च मिलित्वा इन्द्रादिदशदिक्पालान् आवाह्य पूजयेत् ॥ केचिद्दिक्पालेभ्यो बलिदान-माचरन्ति ॥ ततो दीपान् समन्ततः प्रज्वाल्य ॐ समुद्रं गच्छ स्वाहेति मंत्रेण स्था-पितदेवतानां विसर्जनं कुर्यात् ॥ इति ॥

## ॥ अथ जलाशयस्थितवरुणपूजनम् ॥

ॐ एह्येहि यादोगणवारिधीनामिति पूर्वोक्तैस्त्रिभिः श्लोकैर्जले वरुणमावाह्य ॥ ॐ उरुं हि राजेति मंत्रेण वरुणाय० इत्यनेन वा आवाहनासनपाद्यार्घ्याचमनीयानि समर्पयेत् ॥ ततो एकस्मिन् पात्रे पयः पृथिव्यामिति पयः दधिक्राव्णो इति दधि घृतवति भुवनानामिति घृतं मधुव्वाता इति मधु अपांरसमिति शर्करां गृहीत्वा ॥ ॐ सरस्वती योन्यामिति मंत्रेण पंचामृतेन जले वरुणस्य स्नपनं ॥ ॐ वरुणस्योत्तंभनमसीति शुद्धोदकेन जले वरुणस्य स्नपनं ॥ ॐ उरुं हि राजेति मंत्रेण वरुणाय नम इत्यन्तेन गंधाद्युपचारैः पूजनं घृतं वा दधि नैवेद्यं ॥ अनया पूजया भगवान् वरुणः प्रीयतामिति पूजासमर्पणम् ॥ इति ॥

"अथ जले स्रुवेण द्वादशाज्याहुतीर्जुहोति"—तद्यथा ॥ ॐ अद्भ्यः स्वाहा इदमद्भ्यो नमम (एवं सर्वत्र त्यागः) वार्भ्यः स्वाहा उदकाय० तिष्ठन्तीभ्य स्वाहा स्रवन्तीभ्यः स्वाहा ॥ स्यन्दमानाभ्यः स्वाहा कूप्याभ्यः स्वाहा ॥ सूद्याभ्यः स्वाहा ॥ धार्ष्याभ्यः स्वाहा ॥ अर्णवाय० ॥ समुद्राय० ॥ सरिराय० इति हुत्वा नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमंगलाय ॥ सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते इति वारुणं नमस्कृत्य प्रार्थयेत्॥ प्रतीचीशं नमस्तुभ्यं०॥ इति संप्रार्थ्य ॥ सुवासिनीभ्यो हरिद्रादिसौभाग्यद्रव्यं तांबूलानि चणकांश्च दद्यात् ॥ ब्राह्मणेभ्यो यथाशक्तिदक्षिणां दद्यात् ॥ ब्राह्मणैश्चाशिषो देयाः ॥ ॐ उत्तिष्ठ ब्रह्मणस्पते इति कलशानुत्थाप्य सुवासिनीनां हस्ते दद्युः ॥ ॐ यथेमां वाचमित्यादि शाकुनसूक्तं आनो भद्रा इति सूक्तं च पठन् गीतवाद्यादियुक्तः सुवासिनीपुरःसरो यज्ञमंडपं प्रत्यागच्छेत् ॥

"अर्द्धमार्गे"--किंचिद्भूमिमुपलिप्य तत्र क्षेत्रपालपूजनं ॥ नमोस्तु सर्पेभ्यः इति नहि स्पशमविदन्नीति मंत्रेण वा क्षेत्रपालं संपूज्य बलिं दद्यात् ॐ नमो भगवते क्षेत्रपालाय भासुराय त्रिनेत्र ज्वालामुख अवतर अवतर कपिल पिंगल ऊर्ध्वकेश जिह्वालालन छिंधि छिंधि भिंधि भिंधि कुरु कुरु चल चल ह्रां ह्रीं ह्रूं ह्रैं बलिं गृहाण स्वाहेति ॥ अथवा ॥ ॐ नमो भगवते क्षेत्रपालाय मम यज्ञं रक्ष रक्ष बलिं गृह्ण गृह्ण स्वाहेति तत अप उपस्पर्शनं ॥ ततो यजमानेन बंधुज्ञातिसमन्वितेन देवयजनं प्रतिगमनं ॥ मंडपद्वारसमीपे शिष्टाचाराद्यजमानेन सर्वदोषप्रशमनार्थं क्षेत्रपालाय पूर्ववद्बलिदानं ॥ ततः प्रत्यागतं मंडपस्य पश्चिमद्वारस्थितं यजमानं सुवासिन्यो नीराज्य पश्चिमेनैव द्वारेण मंडपमध्ये नयेयुः ॥ तेनैव द्वारेण सर्वकल-

शानामुत्तारणं च ततः आचार्येण तंदुलैः कृतचतस्त्रमध्ये स्थापितभद्रासने दूर्वा-वस्त्रोच्छदे प्राङ्मुखोपविष्टस्य सपत्नीकस्य सपुत्रस्य सपरिवारस्य कलशस्थि-तं किंचित् जलं पात्रे सामादाय सप्तधान्यदूर्वासहितकुशांश्च पल्लवैस्तिष्ठद्भिः ऋत्वि-ग्भिः आचार्येण अभिषेकः कार्यः ॥ उक्तं च ॥ अभिषेकं मूर्ध्नि होमं मांगल्यं स्व-स्तिवाचनं ॥ प्रैषं च मंत्रपाठं च तिष्ठन् कुर्यात्सदैव हि ॥ अभिषेकमंत्रास्तु महा-रुद्रान्ते वक्ष्यमाणा इहाप्यनुसंधेयाः ॥ इति परशुरामात्मजेन जगन्नाथशर्मणा संशो-धिते रुद्रकल्पद्रुमे शिष्टाचारानुसारी जलयात्राप्रयोगः

## ॥ अथ जपरुद्रारंभदिनकृत्यम् ॥

अथ शिवायतनादौ पुण्यनद्यादितीर्थतीरे गोष्ठादिपुण्यदेशे ब्राह्मणगृहे यजमा-नगृहे वा तदीशानदिग्भागे शुचौ देशे मृद्गोमयैरद्भिश्च रुद्रजपार्थं भूमिशोधनं ॥ तस्या-मर्षपरिमाणं वेदिकरणं ॥ उत्तिष्ठन्तु महद्भूता ये चैव स्थानपालकाः ॥ भूतानाम-विरोधेन जपकर्म समारभेत् ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशं सर्वेषामविरोधेन ब्रह्मकर्म समारभेत् ॥ इति मंत्रैर्भूतोत्सादनं ॥ केचित्तु कृणुष्व पाज इति पंच ॥ रक्षोहणं बलगहनं ॐ रक्षोहणो वः ॥ रक्षांसि भागोसि ॥ रक्षोहा विश्वचर्षणीरित्यादीन् मंत्रानपि पौराणोक्तमंत्रात्पूर्वं पठन्ति ॥ ॐ आपोहिष्ठेति तृ-चेन कुशैः पंचगव्येन च जपार्थं भूमिप्रोक्षणं ॥ ॐ स्योनापृथिवीति ॥ महीद्यौरिति मंत्राभ्यां भूमिप्रार्थना ॥ स्वस्तिन इन्द्र इति कृतांजलिना पठेत् ॥ केचिदत्रावसरे सपत्नीकेन यजमानेन समन्वित आचार्यः आचमन प्राणायामपूर्वकं मंडपपूजां वास्तुपूजां ग्रहपीठे ग्रहादिपूजां योगिनीपीठे चतुः षष्टियोगिनीपूजां क्षेत्रपालपीठे एक-पंचाशत्क्षेत्रपालपूजां च कुर्यादिति वदन्ति ॥ तद्युक्तं ॥ वास्तुपूजायाश्च मंडपांगत्वात् मंडपस्य च होमांगत्वात् होमदिने एव वास्तुमंडपपूजयोरनुष्ठानस्य युक्तत्वात् ॥ ग्र-हपूजायाश्चापि होमभूम्यग्निस्थापनोत्तरकाले विहितत्वेन तस्याः अपि होमदिने एव इत्युक्तत्वाच्च ॥ एवं योगिनीक्षेत्रपालयोरपि ज्ञेयं ॥ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि पृथिवी ब्रह्मदत्तासि काश्यपेनाभिवंदिता ॥ इति महीप्रार्थना ॥ उध्धृतासि वराहेण कृष्णेन शतबाहुना॥ दंष्ट्राग्रैर्लीलया देवी जपार्थं प्रणमाम्यहम् ॥ इति मंत्रेण पृथिव्या अर्घदानं ॥ ॐ ऊर्ध्वकेशि विरूपाक्षी मांसशोणितभोजने ॥ तिष्ठ देवि शिखाबंधे चामुंडे ह्यपराजिते ॥ इति मंत्रेण रक्षार्थं शिखाग्रंथिकरणं ॥ दे-वपद्धतौ तु ॥ व्युप्तकेशावेत्यस्य परमेष्ठिर्ऋषिः यजुर्गायत्रीछंदः व्युप्तकेशो रुद्रो देवता शिखाग्रंथिकरणे विनियोगः ॥ व्युप्तकेशाय चेति शिखाग्रंथिकरणमुक्तं ॥ स-

हस्राणीत्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः एकोरुद्रो देवता महीप्रार्थने विनियोगः ॥ ॐ सहस्राणि सहस्रश इति महीप्रार्थना॥ य एतावन्तश्चेत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छंदः बहवो रुद्रो देवता ककुभां प्रार्थने विनियोगः ॥ य एतावन्तश्चेति ककुभां प्रार्थना ॥ देवपद्धतौ तु घृतं घृत पावान इत्यस्य प्रजापतिर्ऋषिः ऋचां पंक्तिश्छंदः विश्वेदेवा देवता ककुभां प्रार्थने विनियोगः ॥ ॐ घृतं घृत पावान इति मंत्रेण ककुभां प्रार्थनेत्युक्तं ॥ ततो ऋष्यादिस्मरणपूर्वकं पृथिवि त्वयेति मंत्रेणासने उपवेशनं॥

## ॥ अथ वर्द्धन्यादेकादशरुद्रकलशस्थापनम् ॥

जलमादाय॥ अद्येत्यादि० देशकालौ संकीर्त्य कर्तव्यामुकरुद्रांगतया वर्धिनीकलशस्थापनपूजनं च एकादशकलशस्थापनं रुद्रमूर्त्तीनामभ्युच्चारणपूर्वकं एकादशरुद्रपूजनादीनि करिष्ये ॥ ततः समाचारादीशान्यामक्षतैर्विरचिताष्टदलपद्मे वर्द्धनी कलशं स्थापनविधिना स्थापयेत् ॥ ततो वस्त्रचंदनपुष्पाद्यैः संपूज्य प्रार्थयेत् वर्द्धनी त्वं महाभूता महातीर्थोदकान्विताः ॥ वर्द्धनी त्वं जगन्माता भवत्वं कुशवर्धनी ॥ तव तोयेन कलशान् जपार्थं पूरयाम्यहं ॥ इति ॥

"अथ स्थंडिलादिकेषु—" केषांचिन्मते महावेद्यामेव पूर्वदिशि स्थंडिलादौ विरचितेष्वेकादशस्वष्टदलेष्वेकादशकलशानां ताम्रमयानां मृन्मयानां वा नवानां (नूतन) सुप्रक्षालितानां कांडानुसमयेन स्थापनं ॥ तद्यथा भूरसीत्यस्य प्रजापतिर्ऋषिः पंक्तिश्छंदः स्वकीयमातृकादेवता क्षेत्रशुद्धौ विनियोगः ॥ भूरसीति भूमिस्पर्शनं ॥ आजिघ्रेत्यस्य कुसुरुविंदऋषिः महापंक्तिछंदः गौर्देवता कलशस्थापने विनियोगः ॥ आजिघ्रकलशमित्यष्टदले कलशस्थापनं ॥ महीद्यौरित्यस्य मेधातिथिर्ऋषिः गायत्रीछंदः द्यावापृथिव्यौ देवता कलशे तीर्थोदकपूरणे विनियोगः॥ महीद्यौरिति वर्द्धनिजलेन कलशपूरणं ॥ या ओषधीरित्यस्य अथर्वणो अभिषग् ऋषिः अनुष्टुप्छंदः औषधयो देवता औषधीप्रक्षेपे विनियोगः ॥ ॐ या ओषधीरिति सर्वौषधिप्रक्षेपः ॥ हिरण्य गर्भ इत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छंदः कोदेवता हिरण्यप्रक्षेपे विनियोगः ॥ ॐ हिरण्यगर्भ इति हिरण्यप्रक्षेपः ॥ अश्वत्थेव इत्यस्य आथर्वणोऽभिषग् ऋषिः ओषधयो देवता कलशे पंचपल्लवप्रक्षेपे विनियोगः ॥ ॐ अश्वत्थेव इति पंचवल्लवान् ॥ ॐ स्योना पृथिवीत्यस्य मेधातिथिऋषिः गायत्रीछंदः पृथिवीदेवता मृदःप्रक्षे० ॥ स्योना पृथिवीति पंचानां वा सप्तानां मृदां प्रक्षेपणं ॥ पूर्णादर्वीत्यस्य और्णवाभऋषिः अनुष्टुप्छंदः इंद्रोदेवता कलशाभिधाने विनियोगः ॥ ॐ पूर्णादर्वीति कलशोपरि तदुलैः पूर्णस्य पूर्णपात्रस्य स्थापनं ॥ याः फलिनीरित्यस्य अथर्वणोऽभिषगृऋषिः अनुष्टुप्छंदः ओषधीर्देवता फलप्रक्षेपे विनियोगः ॥ ॐ याः

फलिनीरिति पूर्णपात्रे नालिकेरादिफलस्थापनं ॥ सुजात इत्यस्य प्रजापतिर्ऋषिः अग्निर्देवता कलशे वस्त्रवेष्टने विनियोगः ॥ ॐ सुजात इति वस्त्रयुग्मेन वाससा वा कलशसंवेष्टनं ॥ मनोजूतिरित्यस्य अंगिरसो बृहस्पतिर्ऋषिः यजुश्छंदः विश्वेदेवा देवता कलशप्रतिष्ठायां विनियोगः ॥ ॐ मनोजूतिरिति मंत्रान्ते कलशः सुप्रतिष्ठितो भवेत्येवं कलशानां प्रत्येकं प्रतिष्ठा ॥ ततो गंधादिभिः प्रत्येकं प्रतिष्ठा ॥ ततो गंधादिभिः प्रत्येकं कलशं संपूज्य प्रार्थयेत् ॥ देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोसि तदा कुंभ विधृतो विष्णुना स्वयं॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति कलशे यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥ इति ॥

## ॥ अथैकादशरुद्रमूर्त्तीनामग्न्युत्तारणम् ॥

रुद्रमूर्त्तीनां ताम्रपात्रे स्थापनं ॥ समुद्रस्यत्वा हिमस्यत्वा इति द्वयोः प्रजापतिर्ऋषिः गायत्रीछंदः अग्निर्देवता ॥ अपामिदमित्यस्य प्रजापतिर्ऋषिः बृहतीछंदः अग्निर्देवता ॥ नमस्त इत्यस्य ऋषिसुता लोपामुद्रा ऋषिः बृहतीछंदः अग्निर्देवता ॥ प्राणदा इत्यस्य प्रजापतिर्ऋषिः बृहतीछंदः वा पंक्तिछंदः अग्निर्देवता सर्वेषामग्न्युत्तारणे विनियोगः ॥ समुद्रस्य त्वा ॥ हिमस्य त्वा ॥ अपामिदं ॥ नमस्ते ॥ प्राणदा अपानदा ॥ इति पंचभिर्मंत्रैर्दक्षिणहस्तगृहीतेन पात्रान्तरगृहीतेन वा जलेन तासां स्नपनं ॥ पयः पृथिव्यामित्यस्य प्रजापतिर्ऋषिः विराडनुष्टुप्छंदः रुद्रोदेवता ॥ दधिक्राव्ण इत्यस्य दधिक्रावावामदेवऋषिः अनुष्टुप्छंदः रुद्रोदेवता ॥ मधुवाता इत्यस्य गौतमऋषिः गायत्रीछंदः रुद्रोदेवता ॥ घृतंघृतपावान इत्यस्य प्रजापतिर्ऋषिः ऋचां पंक्तिश्छंदः रुद्रो देवता॥ अपांरसमित्यस्येन्द्राग्नी बृहस्पतिऋषिः अनुष्टुप्छंदः रुद्रोदेवता ॥ ॐ पयः पृथिव्या० दधिक्राव्णो० मधुवाता० घृतंघृतपावान० अपांरस० इति पंचभिर्मंत्रैः पंचामृतैः स्नपनं ॥ वयं सोमेत्यस्य बंधुऋषिः गायत्रीछंदः सोमो देवता ॥ एषत इत्यनयोः प्रजापतिर्ऋषिः सामपंक्तिर्यजुर्जगतीछंदः सीतरुद्रो देवता॥ अवरुद्रमित्यस्य प्रजापतिर्ऋषिः पंक्तिश्छंदः रुद्रो देवता॥ भेषजमसीति प्रजापतिर्ऋषिः ककुप्छंदः रुद्रो देवता॥ त्र्यंबकमित्यनयोः क्रमेण वसिष्ठप्रजापतिर्ऋषिः अनुष्टुप्छंदः त्र्यंबको रुद्रो देवता॥ एतत्त इत्यस्य प्रजापतिर्ऋषिः आस्तारपंक्तिश्छंदः रुद्रो देवता ॥ त्र्यायुषमित्यस्य नारायणऋषिः उष्णिक्छंदः आशीर्देवता ॥ शिवोनामेत्यस्य प्रजा-

पतिर्ऋषिः प्राजापत्यबृहतीछंदः क्षुरोदेवता॥ निवर्त्तयामीत्यस्य प्रजापतिर्ऋषिः प्राजापत्या त्रिष्टुप्छंदः लिंगोक्तादेवता ॥ सर्वेषां मूर्त्तिस्नपने विनियोगः ॥ ॐ वयं सोमेत्यष्टभिर्महच्छिरोनाम्नीभिस्तीर्थोदकेन च स्नपनं ॥ तदाह परशुरामः ॥ तासां वन्हि समुत्तार्य वन्हिसूक्तेन वारिणा॥ समुद्रस्य हिमस्य त्वा त्वपामिदं नमस्ते ऋक्॥ प्राणदाः पंचभिर्ऋग्भिः वन्हिसूक्तमुदाहृतं ॥ स्नानं पंचामृतैः पंचमंत्रैर्दुग्धादिचिन्हितैः ॥ संस्नाप्य तीर्थतोयेन पठता च महच्छिरः॥ असंख्यातेति संस्थाप्याः कलशोपरि मूर्त्तय इति ॥ असंख्यातेत्यस्य परमेष्टीऋषिः अनुष्टुप्छंदः बह्वो रुद्रादेवता कलशोपरि मूर्त्तिस्थापने विनियोगः ॥ ॐ असंख्यातेति मंत्रेणैकादशकलशेषु क्रमेण एकादशमूर्त्तीनां स्थापनं॥ मनोजूतिरित्यस्य ऋष्यादिपूर्ववत्स्मृत्वा प्रतिष्ठायां विनियोगः ॥ ॐ मनोजूतिरिति मंत्रान्ते अघोरः सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठा ॥ एवं पशुपतिशर्वादीनां ॥ अथवा मनोजूतिरिति मंत्रान्ते अघोराद्या महेशान्ता एकादशरुद्राः सुप्रतिष्ठिता भवन्त्विति प्रतिष्ठा ॥ इति ॥

अथैकादरुद्रनामानि "–अघोरः पशुपतिः शर्वः विरूपः विश्वरूपः ॥
त्र्यंबकः कपर्दी भैरवः शूलपाणिः ईशानः महेशानः ॥११॥ इति ॥

ततः पीठसमीपे पूर्वभागे तिर्यक्काष्टे दक्षिणोत्तरसंस्थानि काष्टमयादीनि दीपनिवेशनानि विधाय तेषु ताम्रपात्रे मृत्पात्रे वा एकादशतन्तुयुक्तवर्तियुता एकादश दीपाः कार्याः ॥ ततस्तेषां रुद्राणां पूजनं पदार्थानुसमयेन युगपद्वा ॥ अथवा एकस्मिन्नेव कुंभे अघोरादीनां सर्वेषां रुद्राणां स्थापनं पूजनं च ॥ अस्मिन् पक्षे एक एव दीपः ॥ मूर्त्तिरप्येका भिन्ना वा ॥ इति ॥

" अथ मूर्त्तिमानं तु "–तंत्रसारादौ ॥ स्वर्णैकादशभिर्वल्लैर्माषैर्निष्कैश्च कर्षकैः॥ पलैश्चैकादिरुद्रेषु पंचसु प्रतिमा स्मृता इति ॥ कृष्णलत्रयपरिमितो वल्लः निष्कस्तु चतुर्माषः ॥ तदुक्तं ॥ वल्लो माषश्च निष्कश्च कर्षश्च पलसंज्ञकः ॥ वल्लादिपलपर्यन्ताः पूर्वपूर्वाच्चतुर्गुणा इति ॥ अथवा ॥ स्वशक्तिकं महारुद्रं द्विगुणं राजतं वृषमिति ॥ अगस्तिसंहितायां तु ॥ महारुद्रस्य मानार्धाद्राजतं कारयेद् वृषं ॥ रुद्रस्यार्धेन दुर्गा चेत्युक्तं ॥ अत्र वर्धनीस्थापनाद्येकादशरुद्रपूजनान्तं सर्वं कर्माचारप्रमाणकं बोध्यं ॥ प्रधानभूतशिवपूजान्तर्भूतैकादशरुद्रपूजातः पृथगेकादशरुद्रपूजा विध्यदर्शनात् ॥ अत एव नारायणभट्टविश्वनाथदेवकाशीदीक्षितादिभिर्नाहृतं ॥ अथ ऋत्विजो यजमानाचार्यब्रह्मसन्निधौ वक्ष्यमाणान् पंचविधान्यंगन्यासान विधायाशक्तौ शिवसंकल्पं हृदयमित्यादीनि नेत्रान्तानि नेत्रवर्जितानि अस्त्रसहितानि वा-

षडंगानि विन्यस्य अष्टांगं प्रणम्य स्वात्मानं श्रीरुद्ररूपं विभाव्य यथोक्तनियमयुक्ताः स्थिरान्तःकरणाः ऋष्यादिस्मरणपूर्वकं मंत्रार्थमनुस्मरन्तः प्रलापान्तरमकुर्वतः श्रीरुद्रं ध्यायन्तो यजमानस्य कामः सिध्यतामिति चिन्तयन्तश्च स्वरवर्णविवेकपूर्वकं जपं कुर्युः ॥ होमरुद्रे तु एवमेव होमं कुर्युः ॥ एतच्च बौधायनसूत्रानुसारी महार्णवमते ज्ञेयं ॥ बृहत्पराशरस्मृत्यनुसारि देवयाज्ञिकादीनां मते तु स्वात्मनो रुद्ररूपेण विभावनान्ते वक्ष्यमाणां पूजां विधाय यथोक्तविधिना जपं कुर्युः ॥ होमरुद्रे होमोऽप्येवं कुर्युः ॥ सनवग्रहमखरुद्रपक्षे क्रमेण वक्ष्यमाणनवग्रहमंत्रजपपुरःसरं जपरुद्रे रुद्रजपं होमरुद्रे ग्रहहोमपुरःसरं रुद्रहोमं कुर्युः ॥ यद्वा ग्रहजापका नवग्रहमंत्राणां जपं होमं च कुर्युः ॥ तत्र ग्रहमंत्राणां प्रत्येकं अयुतं सहस्रं शतं वा संख्या कार्या ॥ इति रुद्रकल्पद्रुमे जपरुद्रपरिच्छेदे श्रीरुद्रारंभदिनकृत्यम् ॥

## ॥ अथ भस्मधारणविधिः ॥

अथ श्रीमहारुद्रजपे प्रत्यहं कर्म उच्यते ॥ यथाविधिकृतस्नानेन कृतसंध्योपासनेन सति संभवे हुतौपासनहोमाग्निहोत्रहोमेन परिहिताहतशुक्लवाससोत्तरीयेण यज्ञोपवीतिना दक्षिणपार्श्वे बद्धशिखेन शिखाभिन्नबद्धकेशेन कृतनर्यावस्थयाऽन्यतरभस्मत्रिपुंड्रुद्राक्षधारणेन सुप्रक्षालितपाणिपादेन सव्ये पाणौ कृतकुशोपग्रहेण दक्षिणे पाणौ धृतपवित्रेण यजमानेन यथोक्तगोमयोपलिप्ते शुचौ देशे स्वोपवेशनस्थाने प्रागग्राणामुदगग्राणां वा त्रयाणां कुशानामास्तरणं ॥ तदुपरि यथाक्रमं व्याघ्रादिचर्मण उत्तरलोम्नः प्राग्ग्रीवस्यास्तरणं तदभावे श्वेतकंबलस्य चित्रकंबलस्य वा आस्तरणं ॥ तदुपरि मृदुवस्त्रस्य च ॥ ॐ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ॥ तिष्ठ देवि शिखाबंधे चामुंडे ह्यपराजिते ॥ इति मंत्रेण रक्षार्थं शिखाबंधनं ॥ सहस्राणीत्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः एको रुद्रो देवता महीप्रार्थने विनि० ॐ सहस्राणि सहस्रश इति महीप्रार्थना ॥ य एतावन्तश्चेत्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः बहवो रुद्रो देवताः ककुभां प्रार्थने विनि० ॐ य एतावन्तश्चेति ककुभां प्रार्थयेत् ॥ पृथिवीति मंत्रस्य मेरुपृष्ठऋषिः सुतलं छंदः कूर्मो देवता आसने विनि० ॐ पृथ्वि त्वयेति मंत्रेण तस्मिन्नासने उदङ्मुखेनैवोपवेशनं ॥ पूर्वं न कृतं चेदत्र भस्मत्रिपुंड्रुद्राक्षधारणं ॥ तद्यथा ॥

"सद्योजातमिति"—मंत्रस्य सद्योजातऋषिः त्रिष्टुप् छंदः ब्रह्मादेवता ॥ वामदेवायेत्यस्य वामदेवऋषिः जगतीछंदः विष्णुर्देवता ॥ अघोरेभ्य इत्यस्याघोरऋषिः अनुष्टुप् छंदः रुद्रोदेवता ॥ तत्पुरुषायेत्यस्य तत्पुरुषऋषिः गायत्रीछंदः रुद्रो-

देवता ।। ईशान इत्यस्य ईशानऋषिः अनुष्टुप् छंदः रुद्रो देवता।। सर्वेषां भस्मपरिग्रहणे विनियोगः ।। ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।। भवेभवेनातिभवेभवस्वमां भवोद्भवाय नमः ।।१।। ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो-रुद्राय नमः कालाय कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ।।२।। ॐ अघोरेभ्योथघोरेभ्यो घोरघोरतरेभ्यः ।। सर्वेभ्यः सर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।।३।। ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ।। तन्नो रुद्रः प्रचोदयात् ।। ४ ।। ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ।।५।। इति पंचभिर्मंत्रैर्नैर्यसंभवस्यावसथ्यसंभवस्य वा भस्मनो दक्षिणहस्तेन गृहीत्वा सव्यहस्ते करणं।। दक्षिणहस्तेनाच्छादनं ।। अग्निरित्यादि भस्माभिमंत्राणां पिप्पलादऋषिः गायत्रीछंदः कालाग्निरुद्रोदेवता भस्माभिमंत्रणे विनियोगः।। ॐ अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह्वा इदं भस्म मन इत्यतानि चक्षूंषि भस्मानि तस्माद्व्रतमेतत्पाशुपतं यद्भस्मांगानि संस्पृशेत्तस्माद्व्रतमेव तत्पाशुपतं पशुपाशविमोक्षायेति मंत्रेण त्रिकृत्वो भस्मनोभिमंत्रणं ।। आपोज्योतिरित्यस्य प्रजापतिर्ऋषिः यजुः ब्रह्माग्निवायुसूर्याश्च देवता भस्मन्यप आसेचने विनियोगः ।। आपोज्योतिरसोमृतं ब्रह्म भूर्भुवःस्वरोम् ।। इति मंत्रेण जलाधिपं विष्णुं ध्यायन् भस्मन्यप आसेचनं।। ॐनमःशिवायेति मंत्रेण वा ततः संमर्दनं।। सर्वांगे भस्मोद्धूलनं च ।।तद्यथा।। ईशान इत्यस्य ईशान ऋषिः अनुष्टुप् छंदः रुद्रोदेवता शिरसि भस्मोद्धूलने विनियोगः ।। ईशानः सर्व वि० शिरसि ।। ॐ तत्पुरुषायेत्यस्य तत्पुरुषऋषिः गायत्रीछंदः रुद्रोदेवता मुखे भस्मोद्धूलने विनि० ।। ॐ तत्पुरुषायेति मुखे ।। अघोरेभ्य० हृदये भस्मोद्धूलने विनियोगः ।। अघोरेभ्योथघो० हृदये ।। वामदेवायेत्यस्य० गुह्ये भस्मोद्धूलने० ।। ॐ वामदेवायेति गुह्ये।। सद्योजातमित्यस्य० पादयोर्भस्मोद्धूलने० ।। ॐ सद्योजातं प्रपद्यामीति पादयोः ।। प्रणवेन मस्तकादिपादान्ते सर्वांगे ।। ततस्त्रिपुंड्रधारणं।। मानस्तोक इत्यस्य कुत्सऋषिः जगतीछंदः एकोरुद्रो देवता भस्मोद्धरणे विनि० ।। ॐ मानस्तोक० इति भस्मोद्धरणं ।। त्र्यंबकमित्यस्य वसिष्ठऋषिः अनुष्टुप्छंदः त्र्यंबको रुद्रोदेवता ।। त्र्यायुषमिति नारायणऋषिः उष्णिक्छंदः आशीर्देवता भस्मना त्रिपुंड्रधारणे विनियोगः ।। यास्य प्रथमारेखा सागार्हपत्यश्चाकारो रजोभूर्लोकश्चात्मा क्रियाशक्तिर्ऋग्वेदः प्रातः सवनं महादेवो देवता ।। यास्य द्वितीयारेखा साच दक्षिणाग्निरुकारः सत्वमन्तरिक्षमन्तरा-

स्माचेच्छाशक्तिर्यजुर्वेदोमाध्यंदिनं सवनं महेश्वरो देवता ॥ शास्य तृतीयारेखा स आहवनीयोमकारस्तमोद्यौःपरमात्मा ज्ञानशक्तिः सामवेदस्तृतीयं सवनं शिवो देवता॥ इति ध्यायन् ॥ ॐ त्र्यंबकं यजामहे० ॐ त्र्यायुषं जमदग्नेरिति द्वाभ्यां ऋग्भ्यां मध्यमांगुलिभिस्त्रिसृभिः त्रिपुंड्रं धारयेत् ॥ एवमेताभ्यां ऋग्भ्यां ललाटे वक्षसि स्कंधयोः इत्येवं पंचसु स्थानेषु त्रिपुंड्रधारणं॥ यद्वा ललाटे बाह्वोः हृदये नाभौ चेति पंचसु धारयेत ॥ यत्तु बृहज्जाबालोपनिषदि द्वात्रिंशत्स्थानेषु षोडशस्थानेषु द्वादश-स्थानेषु अष्टसु स्थानेषु विकल्पेन त्रिपुंड्रधारणप्रकारा उक्तास्ते तत एव ज्ञेयाः इदंच भस्मोद्धूलनं त्रिपुंड्रधारणं च॥ चतुराश्रमीणां साधारणं नित्यं च॥ एवं क्षत्रियवैश्ययोरपि भस्मनोद्धूलनं त्रिपुंड्रधारणं च ॥ क्षत्रियस्य तु मुखे उद्धूलनवर्जमुद्धूलनं ॥ सर्वांगो-द्धूलनं न कार्यं राजन्यस्य यथाविधि॥ मुखं विना तु तत्सर्वमुद्धूल्य क्रमयोगतः ॥ इति बृहज्जाबालोपनिषदिश्रवणात् ॥ एवं शूद्रस्यापि श्रोत्रियागारस्थपचनाग्निजेन भस्मनाविहितमंत्रवर्जं वक्ष्माण शैवमँत्रेणोद्धूलनं त्रिपुंड्रधारणं च ॥ नमोन्तेन शिवे-नैव शूद्रः शुश्रुषणे रतः ॥ उद्धूलनं त्रिपुंड्रं च भक्त्या नित्यं समाचरेत् ॥ इति वा-सिष्ठलिंगात् ॥ ब्राह्मणस्तु समुद्धूल्य त्रिपुंड्रं धारयेत्ततः ॥ क्षत्रियस्य तथा वैश्य-शूद्रस्योद्धूलनं त्यजेत् ॥ इति सिद्धान्तागमे ईश्वरेण शूद्रस्योद्धूलनवर्जमित्युक्तं ॥ तेनोद्धूलनं वैकल्पिकं॥ शुश्रुषणे रतः स्वधर्मनिरतः स शूद्र इत्यर्थः॥ विप्रोपि भस्मोद्धू-लने अशक्तश्चेच्छिरो ललाटवक्षस्कंधेषु त्रिपुंड्रधारणमेव कुर्यात् ॥ कालाग्निरुद्रोपनि-षदि भस्मोद्धूलनस्यानभिहितत्वात् ॥ उद्धूलनेप्यशक्तश्चेत् त्रिपुंड्रादीनि कारयेत् इति बृहज्जाबालोपनिषदि श्रवणाच्च ॥ भस्मोद्धूलनाभावे त्रिपुंड्रं तु विधीयते ॥ म-ध्यान्हात् प्राग् जलैर्युक्तं परतो जलवर्जितमिति सिद्धान्तागमाच्च प्रयोगपारिजाते तु विशेषः ॥ धार्यं भस्म त्रिपुंड्रं तु गृहीणा जलसंयुतं॥ सार्वकालं भवेत् स्त्रीणां यतीनां जलवर्जितं ॥ वानप्रस्थस्य कन्यानां दीक्षाहीननृणां तथा ॥ मध्यान्हात्प्राक् जलै-र्युक्तं परतो जलवर्जितं ॥ मध्यांगुलित्रयेणैव स्वदक्षिणकरस्य च ॥ त्रिपुंड्रं धारयेत् विद्वान् सर्वकल्मषनाशनं ॥ इति ॥ स्मृतिरत्नावल्यामपि ॥ मध्यमानामिकांगुष्टैरनु-लोमविलोमतः ॥ अतिस्वल्पमनायुष्यमतिदीर्घंतपः क्षयं ॥ नेत्रयुग्मप्रमाणेन त्रिपुंड्रं धारयेत् द्विजः ॥ षडंगुलप्रमाणेन ब्राह्मणानां त्रिपुंड्रकं॥ नृपाणां चतुरंगुल्यं वैश्यानां द्व्यंगुलं तथा ॥ शूद्राणामपि सर्वेषामेकांगुल्यं त्रिपुंड्रकम्॥ इति भस्मधारणविधिः ॥

## ॥ अथ रुद्राक्षधारणविधिः ॥

विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः शरीरः॥ अन्त्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥ १ ॥ हृत्पुंडरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकं ॥ तथादिमध्यान्तविहीनमेकं विभुं चिदानंदस्वरूपमद्भुतं ॥२॥ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशान्तं ॥ इति बृहज्जाबालोपनिषदुक्तप्रकारेणोमासहायं शिवं ध्यात्वा ॥ ॐ त्र्यंबकं यजामहे इत्यनेन शैवषडक्षरेण वा प्रतिष्ठितरुद्राक्षाणां प्रतिष्ठामंत्रयोरन्यतरेण धारणं॥ रुद्राक्षधारणं पुण्यं केन वा सदृशं भवतु ॥ महाव्रतमिदं प्राहुर्मुनयस्तत्त्वदर्शिन इत्युपक्रम्य सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतं व्रतं ॥ तं नमन्ति सुराः सर्वे यथा रुद्रस्तथैव सः ॥ अभावे तु सहस्रस्य बाह्वोः षोडश षोडश॥ एकं शिखायां करयोर्द्वादश द्वादशैव हि॥ द्वात्रिंशत्कंठदेशे तु चत्वारिंशच्च मस्तके ॥ एकैककर्णयोः षट् षट् वक्षस्यष्टोत्तरंशतं॥ यो धारयति रुद्राक्षान्रुद्रवश्योपि पूज्यते ॥ मुक्ताप्रवालस्फटिकरौप्यवैदूर्यकांचनैः॥ समेतान् धारयेद्यस्तु रुद्राक्षान् स शिवो भवेत् ॥ केवलानपि रुद्राक्षान् यथालाभं बिभर्ति यः ॥ तं न स्पृशन्ति पापानि तमांसीव विभावसुम् ॥ इति॥ ब्रह्मोत्तरखंडप्रकारेण वोपदेवोऽपि ॥ रुद्राक्षान्कंठदेशे दशनपरिमितान् मस्तके विंशति द्वे षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव ॥ बाह्वोरिंदोः कलाभिर्नयनयुगकृते एकमेकं शिखायां वक्षस्यष्टाधिकं यः कलयति शतकं सः स्वयं नीलकंठः ॥ केचित्तु इन्दोः कलाभिः पृथगथशिखा सूत्रयोरेकमेकमिति वदन्ति ॥ विना मंत्रेण यो धत्ते रुद्राक्षान् भुवि मानवाः ॥ स याति नरकं घोरं यावदिन्द्राश्चतुर्दश॥ इति स्कान्दोक्तत्वादो नम इति प्रत्येकमष्टोत्तरशतं जपित्वा शिवांभसा प्रक्षाल्य रुद्राक्षान् धारयेत् ॥ निर्णयसिंधौ ॥ पंचामृतं पंचगव्यं स्नानकाले प्रयोजयेत् ॥ रुद्राक्षस्य प्रतिष्ठायां मंत्रं पंचाक्षरं तथा ॥ त्र्यंबकादिमंत्रं च तथा तत्र प्रयोजयेत् इति ॥

## ॥ अथ भूतशुद्धिः ॥

तत्रादौ स्ववामभागे अग्रोदककलशस्थापनं ॥ स्वदक्षिणभागे घंटादिपूजोपकरणस्थापनं ॥ पुरतो गंधादिपात्राणां स्थापनं ॥ स्वपृष्ठभागे हस्तप्रक्षालनार्थं पात्रस्य च स्थापनं॥ ततो घृतदीपस्याभावे तिलतैलदीपस्थापनं समाचारात् ॥ त्रिराचम्य प्राणायामान् कृत्वा त्रिमात्रप्रणवोच्चारणं ॥ श्रीगुरुभ्यो० श्रीगणेशाय० लक्ष्मीनारायणाभ्यां० उमामहेश्वराभ्यां० इति प्रणम्य ॥ सुमुखश्चेत्यादि पठित्वा ॥ जलमादाय ॥ देशकालौ संकीर्त्य पूर्वकृतसंकल्पसिद्ध्ये अमुकरुद्रजप रुद्रहोमकर्मणो-

गीभूतं भूतशुद्धिप्राणप्रतिष्ठान्तर्मातृकान्यासबहिर्मातृकान्यासादिकं च करिष्ये ॥ इति संकल्पं यजमानः स्वकर्तृकत्वे कुर्यात् ॥ ऋत्विक् कर्तृत्वे तु अमुकशर्मणो वर्मणो यजमानस्यानुज्ञया अमुकरुद्रजपं अमुकरुद्रहोमं करिष्यामि तदंगत्वेन भूतशुद्ध्यादिन्यासांश्च करिष्यामि ॥ इति संकल्पं ऋत्विजः कुर्युः ॥ अथ भूतशुद्धिः ॥ तद्यथा ॥ पादादिजानुपर्यन्तं पृथ्वि स्थानं तच्चतुरस्रं पीतवर्णं वज्रलांछितं लं बीजयुक्तं ध्यायेत् ॥ जान्वादिनाभिपर्यन्तं अपां स्थानं तच्चार्द्धचंद्राकारं शुक्लवर्णं पद्मलांछितं वमिति बीजयुक्तं ध्यायेत् ॥ नाभ्यादिकंठपर्यन्तं अग्निस्थानं तच्च त्रिकोणाकारं रक्तवर्णं स्वस्तिकलांछितं रंबीजयुक्तं ध्यायेत् कंठादिभ्रूमध्यपर्यन्तं वायुस्थानं षट्कोणाकारं षट्बिंदुलांछितं कृष्णवर्णं यं बीजयुक्तं ध्यायेत् ॥ भ्रूमध्यादि ब्रह्मरंध्रपर्यन्तं आकाशस्थानं तच्च वृत्ताकारं ध्वजलांछितं धूम्रवर्णं हं बीजयुक्तं ध्यायेत् ॥

एवं स्वशरीरे पंचमहाभूतानि ध्यात्वा तत्प्रविलापनं कुर्यात् ॥ पृथिवीमप्सु प्रविलापयामि ॥ आपोऽग्नौप्रवि० अग्निं वायौ प्रवि० वायुमाकाशे प्रवि० आकाशं पंचतन्मात्राहंकारमहदात्मिकायां मातृकासंज्ञकशब्दब्रह्मस्वरूपायां हृल्लेखार्थभूतायां प्रकृतिस्वरूपमायायां प्रविलापयामि ॥ तथाविधां मायां च नित्यशुद्धबुद्धमुक्तस्वभावे स्वात्मप्रकाशरूपे सत्यज्ञानानन्तानंदलक्षणे परमकारणे परमार्थभूते परब्रह्मणि प्रविलापयामीति समस्तदेहादिप्रपंचब्रह्मणि प्रविलाप्य ॥ तच्च नित्यशुद्धबुद्धमुक्तस्वभावं सच्चिदानंदस्वरूपं परिपूर्णं परंब्रह्मैवाहमस्मीति चिरकालं भावयेत् ॥ एवं ध्यात्वा यथोक्तस्वरूपात् सर्वज्ञानैश्वर्यशक्तियुक्तात् प्रणवात्मकात् परब्रह्मणः सकाशात् हृल्लेखार्थभूतार्थभूता सर्वमंत्रमयमातृका संज्ञकशब्दब्रह्मात्मिकाः महदंकारादिपंचतन्मात्रादि समस्तप्रपंचकारणभूता प्रकृतिरूपा माया रज्जुसर्पवद्विवर्त्तरूपेण प्रादुर्भूतेति ध्यात्वा ॥ तस्या मायायाःसकाशात् यथोक्तमाकाशमुत्पन्नं ॥ आकाशाद्वायुः ॥ वायोरग्निः ॥ अग्नेरापः ॥ अद्भ्यः पृथिवी ॥ तेभ्यः पंचमहाभूतेभ्यः सकाशात् स्वशरीरं तेजोमयं पुण्यात्मकं सर्वपुरुषार्थसाधनं देवताराधनयोग्यमुत्पन्नमिति ध्यात्वा तस्मिन् स्वशरीरे सर्वात्मकं सर्वज्ञं सर्वशक्तिसमन्वितं समस्तं मंत्रदेवतामयं सच्चिदानंदस्वरूपं परंब्रह्मात्मरूपेणानुप्रविशयतीति भावयेत् ॥ एषा भावना मुख्या भूतशुद्धिः ॥इति॥

" अथापरा भूतशुद्धिः "—धर्मकंदज्ञाननालैश्वर्याष्टदलं वैराग्यकर्णिकं हृदयांभोजं मुकुलितत्वेन ध्यात्वा तच्च प्रणवेन विकसितं कृत्वा तत्कर्णिकांतस्थचैतन्यात्मकं जीवं प्लुतप्रणवोच्चारणेन सुषुम्णा नाडीमार्गेणो निर्गमय्य ॥ तं जीवं द्वादशांतस्थितसहस्रदलकमले निविष्टपरमात्मना सहैकीकृत्य स्वशरीरकल्मषजातं पुरुषाकाकारेण कुक्षौ विचिन्त्य शोषणदहनप्लावनानीत्थं कुर्यात्॥ ब्रह्महत्या शिरस्कंच स्वर्ण-

स्तेयभुजद्वयं ॥ सुरापानहृदायुक्तं गुरुतल्पकटिद्वयं ॥ तत्संयोगिपदद्वंद्वमंगप्रत्यंगपातकं ॥ उपपातकरोमाणं रक्तश्मश्रुविलोचनं ॥ खड्गचर्मधरं पापं कृष्णं कुक्षौ विचिन्तयेत् ॥ एवं पापपुरुषं कुक्षौ ध्यात्वा नाभिप्रदेशे स्थितं षट्कोणषट्बिंदुलांछितं कृष्णवर्णं वायुमंडलान्तर्गतं यं इति वीजोत्थितवायुना शोषयित्वा ॥ पुनस्तं पापपुरुषं हृदयप्रदेशे स्थितत्रिकोणस्वस्तिकलांछिताग्निमंडलान्तः स्थितं रं इत्यग्निबीजोत्थिताग्निना दाहयित्वा ॥ तं भस्म दक्षिणनासापुटेन निःसार्य ॥ भ्रूमध्यस्थिताद्धचंद्राकारपद्मलांछितं शुक्लवर्णामृतमंडलान्तः स्थितं वं इत्यमृतबीजोत्थामृतधारया निष्कल्मषं स्वशरीरे आप्लाव्य शुद्धं कृत्वा द्वादशावस्थितपरमात्मना सह स्थितमात्मानं तेन सह सुषुम्णा नाडीमार्गेण पूर्वोक्तहृदयकमले प्रणवेन स्थापयेत् ॥ इति ॥

"अथान्यप्रकारेण भूतशुद्धिः"—वामनासापुटसमीपे वायुमंडलस्थं वायुं ध्यात्वा तं वामनासया आकृष्य वायुबीजोच्चारणेन शरीरस्थदोषजातं संशोष्य ॥ दक्षिणनासया निर्गम्य दक्षिणनासापुटसमीपेऽग्निमंडलस्थिताग्निं दक्षिणनासया आकृष्य अग्निबीजोच्चारणेन शरीरदोषजातं दग्ध्वा ॥ वामनासया निर्गमय्य ब्रह्मस्थित पूर्णचंद्रमंडलस्थितामृतधाराकारेण सुषुम्णा मार्गात् शरीरान्तः प्रविश्य शरीरं प्लाव्य लमित्यमृतबीजोच्चारणं कृत्वा प्रणवेन यावन्निरोधं त्रीन् प्राणायामान् प्रणवार्थं चिन्तयन् कुर्यादिति भूतशुद्धिः ॥ एवं त्रिविधा भूतशुद्धिर्मंत्रदेवप्रकाशिकायामुक्ता ॥ ग्रंथान्तरे तु वायुबीजानि बीजानां ऋष्यादीन्युक्तानि ॥ बीजावर्त्तने संख्याप्युक्ता ॥ तद्यथा॥ यमिति वायुबीजस्य किष्किंधऋषिः जगतीछंदः महाप्रलयवायुर्देवता यंबीजं बिंदुः शक्तिः तेन पापपुरुषवायुना आत्मनो वाक्कायकर्मकृतपापपुरुषशोषणे विनियोगः॥ ततो नाभिमंडले दशदशकमले षट्कोणमंडलमध्यस्थं वायुं कृष्णवर्णं ध्यात्वा यं इति बीजं षड्वारं आवर्त्तयन् वामनासया वायुमापूर्य पुनस्तं बीजं द्वादशवारमावर्त्तयन् वायुन्निरुध्य पुनस्तं बीजं षड्वारं आवर्त्तयन् दक्षिणनासया वायुं रेचयेत् ॥ एवं त्रिवारं कृत्वा पंचभूतानां शोषणं पापपुरुषेण सह कुर्यात् ॥ ततो रं इत्यग्निबीजस्य कश्यपऋषिः त्रिष्टुप्छंदः जातवेदो अग्निर्देवता रं बीजं बिंदुः शक्तिः तेन समिद्धमहाप्रलयाग्निना पापपुरुषदहने विनियोगः ॥ पूर्ववत् रं बीजं ६–१२–६ त्रिवारमावृत्य पापपुरुषं दग्धं भावयेत् ॥ ततो वं इत्यमृतबीजस्य हिरण्यगर्भऋषिः गायत्रीछंदः वरुणपरमात्मादेवता वं बीजं बिंदुशक्तिः पापशरीरभस्मप्लावने विनियोगः ॥ पूर्ववत् वंबीजं ६–१२–६ त्रिरावर्त्तयन् तद्भस्म प्लावयेत् ॥ अथ ब्रह्मरंध्रस्थिताचन्द्रमंडलात्सहस्रदलकमलकर्णिकामध्यवर्त्ति तद्बीजस्रवदमृतधारासहस्रैः स्वकलेवरमापूरितं ध्यायेत् ॥ ततो लं इति पृथिवीबीजस्य वराहऋषिः जगतीछंदः

इन्द्रः परमात्मा देवता लं बीजं बिंदुशक्तिः तेन गोलकाकारकरणे विनियोगः ॥ पूर्ववत् लंबीजं ६-१२-६ त्रिरावृत्य गोलकाकारं कुर्यात् ॥ ततो हं इति आकाशबीजस्य परमेष्ठीऋषिः जगतीछंदः परमात्मादेवता हंबीजं बिंदुशक्तिः तेन गोलके शरीराकारकरणे विनियोगः ॥ पूर्ववत् हंबीजं ६-१२-६ त्रिरावर्तयन् गोलके शरीराकारं भावयेत् ॥ एवं स्वशरीरं निरस्तसमस्तकिल्बिषं देवताराधनयोग्यं सिद्धं विभावयेत् ॥ इति ॥

## ॥ अथ प्राणप्रातिष्ठा ॥

अस्य श्रीप्राणप्रतिष्ठा मंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुः सामानि छंदांसि पराप्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः क्रोंकीलकं मम प्राणप्रतिष्ठापने विनियोगः ॥ इति कृतांजलिरुक्त्वा न्यसेत्॥ ॐ ब्रह्मविष्णुमहेश्वरऋषिभ्यो० शिरसि॥ ऋग्यजुःसामछंदोभ्यो० मुखे ॥ प्राणशक्त्यै देवतायै० हृदये ॥ आंबीजाय० गुह्ये ॥ ह्रींशक्तये० पादयोः ॥ क्रों कीलकाय० नाभौ ॥ ॐ आंह्रीं क्रों अं कं खं गं घं ङं आकाशवाय्वग्निसलिलपृथिव्यात्मने आं अंगुष्ठाभ्यां नमः ॥ ॐ आंह्रीं क्रों इं चं छं जं झं ञं शब्दस्पर्शरूपरसगंधात्मने ईं तर्जनीभ्यां नमः ॥ ॐ आंह्रीं क्रों उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ॐ मध्यमाभ्यां वषट् ॥ ॐ आंह्रीं क्रों एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां हुं ॥ ॐ आं ह्रीं क्रों ओं पं फं बं भं मं वचनादानविसर्गागमनानंदात्मने औं कनिष्ठिकाभ्यां वौषट् ॥ ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं लं क्षं मनोबुद्धिअहंकारचित्तात्मने अः करतलकरपृष्ठाभ्यां फट् ॥ एवं हृदयादिन्यासः ॥ ततो नाभ्यादिपादद्वयाक्रान्तं आं नमः ॥ कंठादिनाभ्यन्तं ह्रीं नमः ॥ मूर्द्धादिकंठान्तं क्रों नमः ॥ ततो हृत्कमले वायव्यदले यं नमः ॥ आग्नेये रं नमः ॥ पूर्वे लं नमः ॥ ईशाने शं नमः ॥ नैर्ऋते षं नमः ॥ उत्तरे सं नमः ॥ दक्षिणे हं नमः ॥ कर्णिकायां क्षं नमः ॥ इत्येवं न्यस्य ध्यायेत् ॥ रक्ताब्धिपोतारुणपद्मसंस्थां पाशांकुशाविक्षुशरासबाणान् ॥ शूलं कपालं दधतीं कराब्जै रक्तां त्रिनेत्रां प्रणमामि देवीं ॥ इति ध्यात्वा हृदये हस्तं निधाय ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं मम प्राणा इह प्राणाः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं मम जीव इह स्थितः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं मम सर्वेन्द्रियाणि ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं मम वाङ्मनश्चक्षुःश्रोत्रजिह्वा घ्राणपाणिपाद इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा॥ इति प्राणप्रतिष्ठामंत्रं त्रिर्जप्त्वा॥निजशरीरं ज्योतिःस्वरूपं भावयेदिति॥

## ॥ अथान्तर्मातृकान्यासः ॥

तत्रादौ स्वरैः पूरकः कादिभिः कुंभकः यादिभिः रेचकः इति क्रमेण मातृकावर्णैः प्राणायामत्रयं कुर्यात् ॥ अस्य श्रीमातृकासरस्वतीमंत्रस्य ब्रह्माऋषिः गायत्रीछंदः मातृकासरस्वती देवता हलो बीजानि स्वराः शक्तयः अव्यक्तं कीलकं मातृकान्यासे विनियोगः ॥ इति कृतांजलिरुक्त्वा न्यसेत् ॥ ब्रह्माऋषये० शिरसि ॥ गायत्रीछंदसे० मुखे ॥ मातृकासरस्वत्यै देवतायै० हृदये॥ हल्भ्यो बीजेभ्यो० गुह्ये॥ स्वरेभ्यः शक्तिभ्यो० पादयोः॥ अव्यक्तकीलकाय० सर्वांगे॥ इति ऋष्यादिन्यासः॥ ॐ अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः ॥ ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा॥ ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट् ॥ ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां हुं ॥ ॐ ओं पं फं बं भं मं अं कनिष्ठिकाभ्यां वौषट् ॥ ॐ अं यं रं लं वं शं षं सं हं लं क्षं अः करतलकरपृष्ठाभ्यांफट् ॥ एवं हृदयादिन्यासः॥ ध्यानम् ॥ पंचाशद्वर्णभेदैर्विहितवदनदोः पादयुक्कुक्षिवक्षो देशां भास्वत्कपर्दाकलितशशिकलां बिंदुकुंदावदातां॥ अक्षस्रक्कुंभचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ १ ॥ दक्षिणोर्ध्वकरमारभ्य दक्षिणाधः करपर्यन्तमायुधध्यानं ॥ इति ध्यात्वा ॥ मानसोपचारैः संपूज्य न्यसेत्॥ तत्र प्रथमोऽन्तर्मातृकान्यासः ॥ मूलाधारध्वनिं श्रुत्वा प्रबुद्धा शक्तिकुंडली ॥ ज्वलपावकसंकाशा सूक्ष्मतेजः स्वरूपिणी ॥१॥ मूलाधाराच्छिरः पद्मं स्पृशन्ति विद्युदाकृतिः ॥ तया स्पृष्टशिरःपद्माद्मृतौघस्वरूपिणः ॥२॥ निर्गतान्मातृकावर्णान्सुषुम्णा वर्त्मनातनुं ॥ व्यापयित्वा स्थितान् सर्वानेवं ध्यात्वा प्रविन्यसेत् ॥ इति सूक्ष्मरूपां वर्णतनुं ध्यात्वा ॥ कंठे विशुद्धिचक्रं षोडशदलकमलं ऊर्ध्वमुखं ध्यात्वा पूर्वादिप्रादक्षिण्येन ॐ अंनमः आंनमः इंनमः ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः ॥ इति षोडशस्वरान् क्रमेण विन्यसेत् ॥ ततो हृदये अनाहतचक्रं द्वादशदलकमलं ध्यात्वा तद्दलेषु पूर्वादिप्रादक्षिण्येन ॐ कं नमः खं गं घं ङं चं छं जं झं ञं टं ठं ॥ इति ठान्तान् द्वादशवर्णान् विन्यसेत् ॥ ततो नाभिमंडले मणिपूरकचक्रं दशदलकमलं प्रागवत् ध्यात्वा ॥ तद्दलेषु पूर्वादिप्रादक्षिण्येन ॐ डं नमः ॐ ढं नमः णं तं थं दं धं नं पं फं ॥ इति फान्तान् दशवर्णान् विन्यसेत् ॥ लिंगमूले स्वाधिष्ठानचक्रं षट्दलं कमलं ध्यात्वा तद्दलेषु प्रादक्षिण्येन ॐ बं नमः भं मं यं रं लं इति षट्वर्णान् विन्यसेत् ॥ गुदमेढ्रान्तरे मूलाधारचक्रं चतुर्दलकमलं ध्यात्वा तद्दलेषु क्रमेण ॐ वं नमः शं षं सं इति चतुर्वर्णान् विन्यसेत् ॥ भ्रूमध्ये आज्ञाचक्रं द्विदलं ध्यात्वा तद्-

लयोः प्रादक्षिण्येन ॐ हं नमः ॐ क्षं नमः इति वर्णद्वयं विन्यसेत् ॥ इति अन्तर्मातृकान्यासः ॥ सच मनसैव कार्यः ॥ पुष्पैरनामया वापि मनसा वान्यसेदणूनिति दक्षिणामूर्त्तिसंहितोक्तेः ॥ तत्रैवं व्यवस्था ॥ पुष्पैर्देवतामूर्त्तौ सांगुष्ठयानामिकया स्वदेहे मनसा मूलाधारादिचक्रेषु तत्र करस्पर्शासंभवात् ॥ इति ॥

## ॥ अथ बहिर्मातृकान्यासः ॥

तत्रादौ प्राणायामत्रयं पूर्ववत् ॥ ऋष्यादिकरषडंगन्यासादिकं पूर्ववत् विन्यस्य ध्यायेत् ॥ आधारे लिंगनाभौ प्रकटितहृदये तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के ॥ वासान्ते बालमध्ये डफ कठसहिते कंठदेशे स्वराणां हं क्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥१॥ इति ध्यात्वा मानसोपचारैः संपूज्य न्यसेत् ॥ अंनमः ललाटे ॥ आं० मुखवृत्ते ॥ इं० दक्षिणनेत्रे॥ ईं० वामनेत्रे ॥ उं दक्षकर्णे ॥ ऊंवामकर्णे ॥ ऋं दक्षनासापुटे ॥ ॠं वामनासापुटे॥ लृं दक्षकपोले ॥ ॡं वामकपोले ॥ एं उर्ध्वोष्ठे ॥ ऐं अधरोष्ठे ओं ऊर्ध्वदन्तपंक्तौ॥ औं अधोदन्तपंक्तौ ॥ अं नमः शिरसि ॥ अः नमः मुखमध्ये रसनायां ॥ कं दक्षिणबाहुमूले ॥ खं दक्षकूर्परे ॥ गं दक्षिणमणिबंधे ॥ घं दक्षिणकरांगुलिमूले ॥ ॐ ङं नमः दक्षिणकरांगुल्यग्रे ॥ चं वामबाहुमूले॥ छं वामबाहुकूर्परे॥ जं वाममणिबंधे ॥ झं वामकरांगुलिमूले ॥ ञं वामकरांगुल्यग्रे ॥ टं दक्षपादमूले ॥ ठं दक्षिण जानुनि ॥ डं दक्षिणगुल्फे ॥ ढं दक्षपादांगुलिमूले ॥ णं दक्षपादांगुल्यग्रे ॥ तं वामपादमूले ॥ थं वामजानुनि ॥ दं वामगुल्फे ॥ धं वामपादांगुलिमूले ॥ नं वामपादांगुल्यग्रे ॥ पं दक्षिणकुक्षौ ॥ फं वामकुक्षौ॥ बं पृष्ठे ॥ भं नाभौ ॥ मं उदरे॥ यं हृदये ॥ रं दक्षांसे ॥ लं ककुदि ॥ वं वामांसे ॥ शं नमः हृदयादिदक्षकराग्रान्तं षं नमः हृदयादिवामकराग्रान्तं ॥ सं हृदादिदक्षपादाग्रपर्यन्तं ॥ हंनमः हृदादिवामपादाग्रान्तं ॥ ळंनमः हृदादिदक्षपादाग्रनाभ्यंतं ॥ क्षंनमः हृदयादि भ्रूमध्यान्तं इति केवलमातृकान्यासः ॥ अत्र विंदुयुक्तत्वमक्षराणां वीर्ययोजनार्थमिति संप्रदायः॥ एवं भूतशुद्ध्यादीनि रुद्रांगत्वेनानुष्ठेयानि इति परशुरामादयः हेमाद्रि महार्णव दैवयाज्ञिकनारायणभट्टादिभिर्भूतशुद्ध्यादीनि रुद्रांगत्वेन नोक्तानि ॥ युक्ततरं चैतदित्यन्ये ॥ भूतशुद्ध्यादीनां तांत्रिकमंत्रपूजाजपाद्यंगत्वे तंत्रस्थप्रमाणत्वात् वैदिकमंत्र पूजाजपाद्यंगत्वे वैदिकमंत्रप्रमाणाभावात् ॥ अन्यथा संध्योपासनादिषु सर्वेष्वपि वैदिककर्मसु भूतशुद्ध्याद्यापत्तेः ॥ न चेष्टापत्तिः ॥ शिष्टाचारदर्शनादिति ॥ अपरे तु भूतशुद्ध्याद्यकरणे न रुद्रवैगुण्यम् ॥ करणे तु फलभूयस्त्वमित्याहुः ॥ इति ॥

## ॥ अथ छंदपुरुषन्यासः ॥

रुद्रांगभूतान् न्यासान् अनादेशे अंगुष्ठानामिकाभ्यां कुर्यात् ॥ आदेशे तु यथादेशं ॥ तत्र तावच्छंदपुरुषस्य शरीरे न्यासः ॥ ॐ तिर्यग्बिलाय चमसायोर्ध्वबुध्नाय छंदः पुरुषाय० शिरसि ॥ गौतमभारद्वाजाभ्यां० नेत्रयोः ॥ विश्वामित्रजमदग्निभ्यां० श्रोत्रयोः ॥ वसिष्ठकश्यपाभ्यां० नासापुटयोः ॥ अत्रये० वाचि ॥ ॐ गायत्र्यै छंदसे नमः अग्नये० शिरसि॥ उष्णिहे छंदसे० सवित्रे० ग्रीवायां ॥ बृहत्यै० छंदसे० बृहस्पतये० अनूके ॥ अनूकं पृष्ठवंशः ॥ बृहद्रथंतराभ्यां द्यावापृथिवीभ्यां० बाह्वोः ॥ त्रिष्टुभेछंदसे० इन्द्राय० मध्ये ॥ मध्यमुदरं ॥ जगत्यै छंदसे० आदित्याय० श्रोण्योः ॥ अतिछंदसे० प्रजापतये० लिंगे ॥ यज्ञाय रूपाय छंदसे० वैश्वानराय० पायौ ॥ अनुष्टुभे छंदसे० विश्वेभ्यो देवेभ्यो० ऊर्वोः ॥ पंक्त्यै छंदसे० मरुद्भ्यो० अष्ठीवंतोः ॥ ॥ अष्ठीवान् जानुः ॥ द्विपदायै छंदसे० विष्णवे० पादयोः ॥ विछंदसे वायवे० प्राणेषु ॥ प्राणवायोः संचारस्थाननासिका प्राणशब्देनोच्यते ॥ ॐ न्यूनाक्षराय छंदसे० अद्भ्यो० हस्तद्वयविपर्यासेन मस्तकादिपादान्तसर्वांगेषु ॥ इति सर्वानुक्रमसूत्रविहितः छंदः पुरुषन्यासो रुद्रांगतया कर्तव्य इति देवयाज्ञिकादयः ॥

## ॥ अथ महान्यासप्रयोगः ॥

तत्रादौ बौधायनसूत्रानुक्तो हेमाद्रिमहार्णवादिष्वनुपात्तोपि देवयाज्ञिकपद्धतौ उक्तो विशेषः प्रदर्श्यते ॥ तत्र पुरश्चरणं ॥ ॐ कारस्य ब्रह्माऋषिः देवी गायत्रीछंदः परमात्माग्निर्देवता ॥ महाव्याहृतीनां प्रजापतीऋषिर्यथाक्रमं दैवीगायत्री देव्युष्णीक् दैवीगायत्रीछंदांसि यथाक्रममग्निवायुसूर्यो देवताः चत्वारि शृंगेत्यस्य प्रजापतिऋषिः साध्या वा ऋषयः त्रिष्टुप्छंदः मंत्रोक्तऋषभरूपो यज्ञः पुरुषो देवता ॥ जातवेदस इत्यस्य कश्यपऋषिः त्रिष्टुप् छंदः अग्निर्जातवेदो देवता ॥ सर्वेषां पुरश्चरणे विनियोगः ॐ भूर्भुवः स्वः चत्वारि शृंगा०आविवेश॥१॥ ॐ जातवेदसे सुनवाम० अक्षरं ब्रह्मसदनं वेदानां शिर उत्तमं ॥ जातवेदश्छंदसां मातर्ब्रह्मभूर्भुवः स्वरोम् ॥३॥ इति मंत्राणां सकृज्जप एवात्र पुरश्चरणं ॥ प्रणवमहाव्याहृतीनां ऋष्यादिकंप्रागवत् स्मृत्वा ॥ चतुः स्रक्तिरित्यस्य दध्यङ्ङथर्वणऋषिः महाव्याहृतिछंद धर्मो देवता आसने विनियोगः ॥ ॐ भूर्भुवः स्वः चतुः स्रक्तिरित्यादिकेन व्रत रासश्रिमेत्यन्तेन प्रणवं महाव्याहृतिपूर्वकेन मंत्रेण आसनस्पर्शनं इति ॥ अपरे तु नैतदनुतिष्ठन्ती ॥ बौधायनसूत्रेऽनूक्तत्वात् ॥ इति ॥

"अथ षडंगन्यासः"—मनोजूतिरित्यस्यांगिरसो बृहस्पतिर्ऋषिः यजुर्विश्वेदेवा देवता हृदये न्यासे विनियोगः ॥ ॐ मनोजूति० ॐ प्रतिष्ठेति मंत्रान्ते हृदयाय नम इति हृदये ॥ अत्रोध्यग्निरिति मंत्रान्ते शिरसे स्वाहेति शिरसि ॥ मूर्द्धानंदिव० इत्यस्य भरद्वाजऋषिः त्रिष्टुप्छंदः वैश्वानरोऽग्निर्देवता शिखायां न्यासे विनियोगः ॥ ॐ मूर्द्धानं इति मंत्रान्ते शिखायै वषडिति शिखायां ॥ मर्माणीत्यस्य विवस्वान् ऋषिः त्रिष्टुप्छंदः लिंगोक्ता देवता कवचे न्यासे विनियोगः॥ ॐ मर्माणीति मंत्रान्ते कवचाय हुं इति कवचं ॥ विश्वतश्चक्षुरिति भौवनो विश्वकर्मा ऋषिः त्रिष्टुप्छंदः विश्वकर्मा देवता नेत्रे न्यासे विनियोगः ॥ विश्वतश्चक्षु० नेत्रत्रयाय वौषट् इति नेत्रं ॥ नेत्राभ्यां वौषडिति केचित् ॥ मानस्तोक इत्यस्य कुत्सऋषिः जगतीछंदः एकोरुद्रोदेवता अस्त्रे न्यासे वि० ॥ ॐ मानस्तोके० अस्त्राय फडिति अस्त्रं ॥ अन्ये तु नेत्रवर्ज्यं पंचांगमेव न्यासं कुर्वन्ति ॥ तथैव बृहत्पराशरोक्तेः ॥ देवयाज्ञिकादयस्तु बौधायनसूत्रेऽनुक्तत्वात् अमुं न्यासं नैवाचरन्ति ॥ अथ देवयाज्ञिकादिभिः पद्धतिकारैरुक्तत्वात्तथैव कैश्चिदाचरितत्वात् च बौधायनसूत्रविहितः पंचांगरुद्राणां न्यासः ॥ इति ॥

## ॥ अथ दिग्बंधसहितश्चतुस्त्रिंशदंगन्यासः प्रथमः ॥

यात इत्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः एकोरुद्रो देवना शिखायां न्यासे विनियोगः ॐ याते रुद्र शिवातनूरघोरेति शिखायां ॥१॥ अस्मिन् महतीत्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः रुद्रो देवता शिरसि न्यासे० ॐ अस्मिन्महत्यर्णव इति शिरसि ॥२॥ सहस्राणीत्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः एकोरुद्रोदेवता ललाटे न्यासे० ॥ ॐ सहस्राणि सहस्रश इति ललाटे ॥३॥ हंसः शुचिषदित्यस्य वामदेवऋषिः अतीजगतीछंदः सूर्यो देवता भ्रुवोर्मध्ये न्यासे० ॥ ॐ हंसः शुचिषदिति भ्रुवोर्मध्ये ॥४॥ त्र्यंबकमित्यस्य वशिष्ठऋषिः अनुष्टुप्छंदः त्र्यंबको रुद्रो देवता नेत्रयोर्न्यासे० ॥ ॐ त्र्यंबकं यजामहे इति तर्जनी मध्यमाभ्यां नेत्रयोः ॥५॥ नमः स्रुत्यायेत्यस्य परमेष्ठीऋषिः यथाक्रममत्र षडक्षराणां यजुर्गायत्री चतुरक्षरस्य-देवीबृहती सप्ताक्षरस्य यजुरुष्णिक् पंचाक्षरस्य दैवीपंक्तिरिति छंदांसि बहवो रुद्रो देवता कर्णयोर्न्यासे विनियोगः ॥ ॐ नमः स्रुत्याय च ॥ वैशंताय चेति मंत्रावृत्य कर्णयोः ॥६॥ मानस्तोक इत्यस्य कुत्सऋषिः जगतीछंदः एकोरुद्रोदेवता नासिकायां० ॥ ॐ मानस्तोक इत्यस्य कुत्सऋषिः जगतीछंदः एकोरुद्रोदेवता नासिकायां० ॥ ॐ मानस्तोक इति नासिकायां ॥७॥ अवतत्य धनुरित्यस्य परमेष्ठी ऋषिः अनुष्टुप्छंदः एकोरुद्रो देवता मुखे० ॥ ॐ अवतत्य० मुखे ॥८॥ ॐ नीलग्री-

वाः श्रीतिकंठा० नीलग्रीवा० शितकंठा० इति द्वौ मंत्रौ कंठे ॥९॥ नमस्त आयुधायै-
त्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः एकोरुद्रो देवता बाह्वोर्न्यासे० ॥ नमस्त आयु-
धायेति मंत्रावृत्या बाह्वोः ॥१०॥ यातेहेतिरित्यस्य परमेष्टीऋषिः अनुष्टुप्छंदः ए-
कोरुद्रोदेवता उपबाह्वोर्न्यासे ॐ यातेहेतिरिति मंत्रावृत्या उपबाह्वोः ॥ उपबाहुप्रको-
ष्टो मणिबंधो विभागः ॥११॥ ये तीर्थानीत्यस्य परमेष्ठी ऋषिः अनुष्टुप्छंदः व-
हवो रुद्रो देवता हस्तयो० ॥ ॐ ये तीर्थानीति मंत्रावृत्या हस्तयोः ॥१२ सद्योजात-
मित्यस्य सद्योजातः ऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता अंगुष्ठयोर्न्यासे० सद्योजातं प्र-
पद्यामीत्यंगुष्ठयोः ॥१३॥ वामदेवायेत्यस्य वामदेवऋषिः जगतीछंदः विष्णुर्देवता
तर्जन्योर्न्यासे० ॥ ॐ वामदेवाय नमो ज्येष्ठाय नम इति तर्जन्योः ॥१४॥ अघोरेभ्य
इत्यस्य अघोरऋषिः अनुष्टुप्छंदः रुद्रो देवता मध्यमयोर्न्यासे० ॥ ॐ अघोरेभ्य
इति मध्यमयोः ॥१५॥ तत्पुरुषायेत्यस्य तत्पुरुषऋषिः गायत्रीछंदः रुद्रो देवता अ-
नामिकयोर्न्यासे० ॥ ॐ तत्पुरुषाय विद्महे० अनामिकयोः ॥१६॥ ईशानः सर्व०
ईशान ऋषिः अनुष्टुप्छंदः रुद्रो देवता कनिष्ठिकयोर्न्यासे० ॥ ईशानः कनिष्ठिकयोः
॥१७॥ नमो वः किरिकेभ्यो० परमेष्ठीऋषिः सोमोऽग्निकुयजुरुष्णिक्दैवीजग
तीवा छंदांसि बहवो रुद्रा देवता हृदये० ॥ नमो वः किरिकेभ्यो० आनिर्हतेभ्य
इति हृदये ॥१८॥ नमो गणेभ्य इत्यस्य परमेष्टीऋषि एषां पंचाक्षराणां यजुर्बृहतीषड-
क्षरस्य यजुर्गायत्री छंदांसि बहवो गणादयो रुद्रा देवता पृष्ठे न्यासे० नमो गणेभ्यो०
विश्वरूपेभ्यश्चवो नम इति पृष्ठे ॥१९॥ नमो हिरण्य बाहव इत्यस्य परमष्ठीऋषिः॥अत्रै-
राणां यजुस्त्रिष्टुप् यजुः पंक्तिरिति छंदांसि हिरण्यबाह्वादयो मंत्रवर्णावगता उभयतो
नमस्कारा बहवो रुद्रादेवता पार्श्वयोर्न्यासे०॥ ॐ नमोहिरण्यबाहवे० पुष्टानां पतये-
नम इति मंत्रावृत्त्या पार्श्वयोः ॥२०॥ विज्यं धनुरित्यस्य परमेष्ठीऋषिः अनुष्टुप्छंदः
एकोरुद्रो देवता जठरे० ॥ विज्यं धनुरिति जठरे इत्येके ॥ महार्णवकारदेवयाज्ञिका-
दीनां मते तु नायं जठरन्यासः ॥२१॥ हिरण्यगर्भ इत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्-
छंदः कोदेवता नाभौ न्यासे०॥ ॐ हिरण्यगर्भ० नाभौ॥ २२ ॥ मीढुष्टमेत्यस्य पर-
मेष्ठीऋषिः त्रिष्टुप् छंदः एकोरुद्रोदेवता कट्यां० ॥ ॐ मीढुष्टमेति कट्यां ॥ २३ ॥
येभूतानामित्यस्य परमेष्ठीऋषिः अनुष्टुप् छंदः बहवो रुद्रा देवना गुह्ये० ॥ २४ ॥
वक्ष्यमाणेन सह जातवेदस इत्यस्य कश्यपऋषिः त्रिष्टुप् छंदः अग्निर्जातवेदो देवता
अपाने० ॥ जातवेदसे० अग्नेवक्ष्यमाण पूर्वमंत्रस्य शिरः उच्यते ॥ अक्षरं ब्रह्मसदनं
वेदानां शिर उत्तमं॥ जातवेदश्छंदसां मातर्ब्रह्मभूर्भुवः स्वरोम् ॥
इति शिरः इति देवयाज्ञिकपरशुरामादयः ॥ मातृदत्तस्तु श्रीबीजपूर्वकं जातवेदसा-
मित्यृचं उच्चार्य भुवनेशीबीजोच्चारणपुरःसरमक्षरं ब्रह्मसदनमित्यादिरूमुक्तमेव शि-

रोमंत्रमुच्चरेत् ॥ इति शिरः इत्याह॥ महार्णवकारादयस्तु तामग्निवर्णां तपसा ज्वलन्तीं वैरोचने कर्मफलेषु जुष्टां ॥ दुर्गां देवीं शरणमहं प्रपद्ये सरजसे नमः ॥ १ ॥ अग्ने त्वं परयानव्यो अस्मान् स्वस्तिभिरतिदुर्गाणि विश्वा ॥ पूश्च पृथ्वीबहुला न कुर्वी भवानो कायतनयाय शंयोः ॥ २ ॥ विश्वानिनो दुर्गहा जातवेदः सिंधुंननावा दूरितानि पर्षि ॥ अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविताततनूनां ॥ ३ ॥ पृतनाजितं सहमानमुग्रमग्निं हुवेम परमात्मा स्पधस्थात् ॥ सनः पर्षदतिदुर्गाणि विश्वाणि विश्वाक्षामदेवो अतिदुरितात्यग्निः ॥४॥ इति शिर इत्याहुः ॥ स शिरोजातवेदा० अपाने पायौ ॥२५॥ मानोमहान्तमित्यस्य कुत्सऋषिः जगती छंदः एकोरुद्रोदेवता ऊर्वोर्न्यासे० ॥ ॐ मानोमहान्त० इत्यावृत्या ऊर्वोः ॥ २६ ॥ एषत इत्यस्य प्रजापतिऋषिः सामपंक्तियजुश्छंदांसि रुद्रो देवता ज्जान्वोर्न्यासे० ॥ ॐ एषतेरुद्रभाग० इति मंत्रावृत्त्या जान्वोः ॥२७॥ सइषुहस्तैरित्यस्य अप्रतिरथऋषिः त्रिष्टुप्छंदः रुद्रोदेवता जंघयोर्न्यासे० ॥ ॐ सइषुहस्तै० मंत्रावृत्या जंघयोः ॥ जानुगुल्फयोरन्तराळजंघा ॥२८॥ ॐ विश्वं भूतं भुवनं चित्रं बहुधा जायमानं च यत् ॥ सर्वोह्येष रुद्रस्तस्मै रुद्राय नमोस्तु ॥ इति मंत्रावृत्या गुल्फयोः॥ एतच्च जंघायां गुल्फेच न्यासद्वयं देवयाज्ञिकनारायणभट्टादिभिरुक्तं ॥ महार्णवकारादिभिस्तु नोक्तं ॥ २९ ॥ येपथामित्यस्य परमेष्ठीऋषिः अनुष्टुप् छंदः बहवो रुद्रादेवता पादयोर्न्यासे० ॥ ॐ येपथां० मंत्रावृत्त्या पादयोः ॥ ३० ॥ अध्यवोचदित्यस्य परमेष्ठीऋषिः पंक्तिश्छंदः एकोरुद्रो देवता कवचन्यासे० ॥ ॐ अध्यवोचमिति मंत्रान्ते कवचायहुं इति कवचमुद्रया कवचं ॥३१॥ ॐ नमो बिल्मिने चेत्यस्य परमेष्ठीऋषिः अत्र षडक्षराणां यजुर्गायत्री पंचाक्षरयोर्दैवीपंक्तिः सप्ताक्षरस्य यजुरुष्णिक् ॥ यजुर्गायत्रीदैवीपंक्तीयंजुर्गायत्री यजुरुष्णिक् यजुर्गायत्री इति छंदांसि बिल्वादयो मंत्रवर्णावगता अन्यतरो नमस्कारा बहवो रुद्रा देवता उपकवचे न्यासे० ॥ ॐ नमो बिल्मिने० दुंदुभ्याय चाहनन्याय चेत्युपकवचे ॥ कवचाद्विपरीतमुपकवचमिति महार्णवकारानुसारिणो विधानपारिजातादयः सर्वे निबंधाः ॥ देवयाज्ञिकादयः सर्वे पद्धतिकाराश्च ॥ कवचोपरि कवचमित्यपरे ॥३२॥ नमोस्तु नीलग्रीवायेत्यस्य परमेष्ठीऋषिः अनुष्टुप् छंदः एकोरुद्रो देवता तृतीयनेत्रे न्यासे० ॥ ॐ नमो नीलग्रीवाय० मुष्टितो विमुक्तया मध्यमया तृतीयनेत्रे ॥३३॥ प्रमुंच धन्वन इत्यस्य परमेष्ठीऋषिः अनुष्टुप् छंदः एकोरुद्रोदेवता अस्त्रे न्यासे० ॥ ॐ प्रमुंच धन्वन० इत्यस्त्रे ॥ ३४ ॥ विज्यंधनुरित्यस्य परमेष्ठीऋषिः अनुष्टुप् छंदः एकोरुद्रोदेवता धनुः समर्पणे० ॥ ॐ विज्यं धनुःक० धनुः समर्पणं ॥ यत्र बाणा इत्यस्य विवस्वान् ऋषिः पंक्तिश्छंदः लिंगोक्तादेवता

बाणसमर्पणे० ॥ यत्र वाणा० वाणसमर्पणं ॥ एतच्च धनुःबाणसमर्पणं देवयाज्ञिकादिभिरेवोक्तं ॥ नतु महार्णवकारादिभिः ॥ य एतावन्तश्चेत्यस्य परमेष्ठीऋषिः अनुष्टुप् छंदः बहवोरुद्रा देवता दिग्बंधने विनियोगः ॥ य एतावन्तश्चेति मंत्रेण दिक्षु विदिक्षु च परस्परं तर्जन्यंगुष्ठाग्रस्योद्धंधनेन दिग्बंधः ॥ सोयं शिखाद्यस्त्रान्तो दिग्बंधसहित एकत्रिंशदंगन्यासः प्रथमो न्यासो महार्णवकारमते ॥ देवयाज्ञिकनारायणभट्टादीनां मते तु शिखाद्यस्त्रान्तो दिग्बंधसहितश्चतुस्त्रिंशदंगन्यासः प्रथमो न्यासः॥

## ॥ अथ द्वितीयो न्यासः ॥

ॐ नमो भगवते रुद्रायेति दशाक्षरस्य प्रजापतिऋषिः विराट् छंदः श्रीरुद्रोदेवता प्रणामे न्यासे च विनियोगः ॐ नमो भगवते रुद्रायेति मंत्रेण श्रीरुद्रं प्रणम्य मंत्रवर्णान् न्यसेत् ॥ ॐ नमः मूर्ध्नि । नं० नासिकायां ॥ मों० ललाटे ॥ भं० मुखमध्ये ॥ गं० कंठे॥ वं० हृदये॥ तें० दक्षिणकरे॥ रुं० वामकरे॥ द्रां० नाभौ० ॥ यं० पादयोः॥ द्वादशाक्षरेण प्रणामवर्जं पूर्ववद् दशार्णवर्णान् न्यसेत्॥ इति द्वितीयोन्यासः

"अथ तृतीयन्यासः"–सद्योजातमित्यस्य सद्योजातऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता पादयोर्न्यासे० ॥ सद्योजातं प्रपद्यामीति मंत्रावृत्त्या पादयोः ॥ वामदेवायेत्यस्य वामदेवऋषिः जगती छंदः विष्णुर्देवता गुह्ये० ॥ वामदेवाय नम इत्यूर्वोर्मध्ये गुह्ये ॥ अघोरेभ्य इत्यस्य अघोरऋषिः अनुष्टुप् छंदः रुद्रोदेवता हृदये० ॥ ॐ अघोरेभ्य० इति हृदये ॥ तत्पुरुषायेत्यस्य तत्पुरुषऋषिः गायत्रीछंदः रुद्रोदेवता मुखे० ॥ ॐ तत्पुरुषाय० मुखे ॥ ईशान इत्यस्य ईशानऋषिः अनुष्टुप् छंदः रुद्रोदेवता मूर्ध्नि न्यासे० ॥ ॐ ईशानः सर्वविद्यानां० हंसहंसेति मूर्ध्नि विन्यस्य आत्मानं शिवरूपं भावयेदिति तृतीयो न्यासः ॥

" अथ संपुटिकरणम् "–मुद्रितांजलिप्रदर्शनं ॥ सपुटिकरणं प्राच्यादिदिक्षु वक्ष्यमाणमंत्रैः कार्यं ॥ तद्यथा ॥ त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप् छंदः इन्द्रोदेवता प्राच्यां संपुटिकरणे० ॥ ॐ त्रातारमिन्द्रं० प्राच्यां ॥ त्वन्नो अग्ने इत्यस्य हिरण्यरूप आंगिरस ऋषिः जगतीछंदः अग्निर्देवता आग्नेयां० ॥ ॐ त्वन्नो अग्ने० आग्नेय्यां॥ सुगन्नु पन्थामित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छंदः वैवस्वतो देवता दक्षिणस्यां०॥ ॐ सुगन्नु पन्थां० दक्षिणस्यां०॥ असुन्वन्तमित्यस्य प्रजापतिऋषिः त्रिष्टु छंदः निर्ऋतिर्देवता नैर्ऋत्यां० ॥ ॐ असुन्वन्तं० नैर्ऋत्यां ॥ तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छंदः वरुणोदेवता प्रतीच्यां० ॥ ॐ तत्त्वायामि० प्रतीच्यां ॥ आनो नियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप् छंदः वायुर्देवता वायव्यां० ॥ ॐ आनोनियुद्भिरिति वायव्यां ॥ वयं सोमेत्यस्य बंधुऋषिः गायत्रीछंदः सोमो देवता उदीच्यां०॥

ॐ वयं सोम० उत्तरस्यां ॥ तमीशानमित्यस्य गौतमऋषिः जगतीछंदः ईशानोदेवता ईशान्यां० ॥ ॐ तमीशानं० ईशान्यां ॥ अस्मे रुद्राइत्यस्य प्रगाथ ऋषिः त्रिष्टुप् छंदः ब्रह्मादेवता ऊर्ध्वायां दिशि० ॥ ॐ अस्मे रुद्रा० ऊर्ध्वदिशि ॥ स्योनापृथिवीत्यस्य मेधातिथिऋषिः गायत्रीछंदः अनन्तो देवता अधोदिशि० ॥ ॐ स्योनापृथिवीति अधोदिशि संपुटिकरणं कुर्यादिति॥ "अथ नमस्कारकरणं० ॐ त्रातारमिन्द्रमित्यस्य ऋष्यादिकं पूर्ववत् स्मृत्वा पूर्वस्यां दिशि नमस्कारे विनियोगः ॥ ॐ त्रातारमिन्द्रमिति मंत्रान्ते इन्द्राय नम इति इन्द्रं प्रणमेत् ॥ एवमेव ऋष्यादिस्मरणपूर्वकं ॐ त्वंन्नोअग्नेतवदेवेत्यादिभिः संपुटिकरणोक्तैर्मंत्रैरग्न्यादीन् प्रणमेत् ॥ एवमात्मनि रौद्रीकरणं कृत्वा त्वगस्थिगतैः पापैः प्रमुच्यते ॥ सर्वभूतेष्वपराजितो भवति ॥ यक्षरक्षगंधर्वभूतप्रेतपिशाचब्रह्मराक्षसयमदूतशाकिनी डाकिनी सर्प श्वापद तस्कराद्युपद्रवाः सर्वे ते ज्वलन्तं पश्यन्तु मां रक्षन्तु ॥ इति ॥

## ॥ अथ चतुर्थो न्यासः ॥

मनोज्योतिरित्यस्यांगिरसो बृहस्पतिर्ऋषिः जगतीछंदः उषोदेवता गुह्ये न्यासे विनियोगः ॥ ॐ मनोज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञं समिमं दधातु ॥ या इष्टा उषसो निम्रुचश्च ताःसंदधामि हविषा घृतेन स्वाहेति गुह्ये ॥ अबोध्यग्निरित्यस्य बुधगविष्ठिरावृषिः त्रिष्टुप् छंदः अग्निर्देवता उदरे० ॥ ॐ अबोध्यग्निः समिधाजनानां० उदरे ॥ मूर्द्धानमित्यस्य भरद्वाजऋषिः त्रिष्टुप् छंदः वैश्वानरोऽग्निर्देवता हृदये० ॥ ॐ मूर्द्धानं दिवो० हृदये ॥ मर्माणिते० विवस्वान् ऋषिः त्रिष्टुप् छंदः लिंगोक्ता देवता मुखे० ॥ ॐ मर्माणिते० मुखे ॥ जातवेदा० कश्यपऋषिः जगतीछंदः लिंगोक्ता देवता शिरसि०॥ ॐ जातवेदा यदिवा पावकोसि वैश्वानरो यदिवा वैद्युतोऽसि शं प्रजाभ्यो यजमानाय लोकं॥ ऊर्जं पुष्टं दददभ्यावव्रत्स्व इति शिरसि॥

"अयमेव"--गुह्याद्यभिमंत्रण आत्मरक्षा चेति व्यपदिश्यते॥ अधुना बौधायनसूत्रानुक्तो महार्णवकारादिभिरनुपात्तोऽपि देवयाज्ञिकपद्धतावुक्तो न्यासविशेषः प्रदर्श्यते ॥ ॐ रुद्राय० शिरसि ॥ चंद्रशेखराय० ललाटे ॥ त्रिलोचनाय० नेत्रयोः ॥ भैरवाय० श्रोत्रयोः ॥ शंकराय० घ्राणे ॥ पशुपतये० मुखे ॥ नीलग्रीवाय० कंठे ॥ व्यापकाय० हृदये ॥ गंगाधराय० करयोः ॥ शिवाय० नाभौ॥ वामदेवाय० गुह्ये ॥ त्र्यंबकाय० जघयोः ॥ सर्वज्ञाय० पादयोः ॥ शिवाय० चतुर्दिक्षु॥ कालाग्निरुद्राय० चरणयोः ॥ कुमाराय० उरुयुग्मे ॥ नीलग्रीवाय० कंठे ॥ शशिभूषणाय० ललाटे॥ शिवाय० शिरसि ॥ सदाशिवाय० शिखायां ॥ भवाय० पादयोः॥ शिवाय० ऊर्वोर्मध्ये ॥ ईशानाय० गुह्ये ॥ पशुपतये० नाभौ रुद्राय० हृदये ॥ उग्राय० मुखे ॥

भीमाय० ललाटे ।। महते० शिरसि ।। भवाय० कवचायहुं ।। शर्वाय० कवचायहुं।। ईशानाय० कवचायहुं ।। पशुपतये० कवचायहुं ।। रुद्राय० कवचायहुं ।। उग्राय० कवचायहुं ।। भीमाय० कवचायहुं ।। महते० कवचायहुं ।। भवाय० अस्त्रायफट् ।। शर्वाय० अस्त्रायफट् ।। एवमीशानादीषु सर्वेषु ।। असंख्यातेत्यस्य परमेष्ठी-ऋषिः अनुष्टुप् छंदः बहवो रुद्रोदेवता पादयोर्न्यासे० ।। ॐ असंख्यातासहस्राणि० पादयोः ।। अस्मिन्महत्यर्णव० परमेष्टीऋषिः अनुष्टुप् छंदः बहवो रुद्रोदेवता जान्वो-र्न्यासे० ।। ॐ अस्मिन्महत्यर्णवे० जान्वोः।। नीलग्रीवा० इति द्वयोः परमेष्टी ऋषिः अनुष्टुप् छंदः बहवो रुद्रादेवता आद्येन ऊर्वोः द्वितीयेन गुह्ये०।। ॐ नीलग्रीवाः शि-तिकंठा दिवं ऊर्वोः ।। ॐ नीलग्रीवाः शितिकंठाः सर्वा० इति गुह्ये ।। ये वृक्षेषु० परमेष्टीऋषिः अनुष्टुप् छंदः बहवो रुद्रादेवता नाभौ० ।। ॐ ये वृक्षेषु० नाभौ ।। येभूतानां० परमेष्टीऋषिः अनुष्टुप् छंदः बहवोरुद्रादेवता हृदये० ।। येभूतानामधि-पत० हृदये ।। येपथां पथि० परमेष्टीऋषिः अनुष्टुप् छंदः बहवो रुद्रा देवता कंठे०।। ॐ येपथां० कंठे ।। ये तीर्थानि० परमेष्टीऋषिः अनुष्टुप् छंदः बहवो रुद्रादेवता मुखे० ।। येतीर्थानि० मुखे ।। ये अन्नेषु० परमेष्टीऋषिः अनुष्टुप् छंदः बहवोरुद्रा-देवता नासिकायां० ।। ॐ ये अन्नेषु० नासिकायां ।। य एतावन्त० परमेष्टीऋषिः अनुष्टुप् छंदः बहवो रुद्रादेवता नेत्रयोर्न्यासे० ।। य एतावन्तश्च० नेत्रयोः।। नमोस्तु रुद्रेभ्योयेदिवि० परमेष्टीऋषिः धृतिछंदः बहवो रुद्रादेवता ललाटे० ।। ॐ नमोस्तु रुद्रेभ्यो येदिवि० ललाटे।। नमोस्तु रुद्रेभ्यो येन्तरिक्ष० परमेष्टीऋषिः धृतिछंदः ब-हवो रुद्रादेवता शीर्ष्णि०।। ॐ नमोस्तुरुद्रेभ्यो येन्तरिक्ष० शीर्ष्णि।। नमोस्तु रुद्रेभ्यो ये पृथिव्यामित्यस्य परमेष्टीऋषिः धृतिछंदः बहवो रुद्रा देवता कवचे अस्त्रेन्यासेच०।। ॐ नमोस्तु रुद्रेभ्यो ये पृथिव्यां० कवचायहुं इतिकवचं।। तथाच अस्त्रायफट् इत्यस्त्रं।। देवयाज्ञिकास्तु वाजसनेयिशाखीयस्यांत्यानुवाकस्य चतुर्दशमंत्राणां न्यासमत्राहुः ।। तदयुक्तं ।। तथैवान्त्यानुवाकस्य मंत्रैर्द्वादशभिः शुभैरित्यादिकस्यैकादशं ललाटे तद्-द्वादशं शीर्ष्णि विन्यसेत् ।। त्रयोदशं तु कवचे हुं कृत्वा अस्त्रे तुफट्।। तत्र इत्यन्तस्य वाक्यजातस्य बौधायनकल्पोक्तत्वात् बौधायनशाखीयान्त्यानुवाकग्रहणस्यैवात्र युक्त-त्वात् ।। एवं च असंख्याता सहस्राणीत्यस्यांत्यानुवाकस्य त्रयोदशमंत्रात्मकत्वात् न्याससंख्या साम्यमनुवाकस्य स्यात्।। नमोस्तु रुद्रेभ्यो ये पृथिव्यामित्ययंत्रयोदशो-मंत्रः कवचे अस्त्रे चोभयत्र विनियोज्यः ।। नच तथैवान्त्यानुवाकस्य त्रयोदशमंत्रा-त्मकत्वेन चतुर्दशमंत्रात्मकत्वेन चतुर्दशमंत्रात्मकत्वासंभवात् ।। एवं न्यासं कृत्वा मुद्रां प्रदर्शयेत् ।। एषत इत्यस्य प्रजापतिऋषिः सामपंक्तिर्धृतिर्जगतीछंदांसि रुद्रो देवता

मुद्राप्रदर्शने विनियोगः ॥ ॐ एषते रुद्र० मुद्राप्रदर्शनं ॥ अपरेतु बौधायनसूत्रेऽनुक्तत्वात् नैतान् न्यासान् कुर्वन्ति ॥ तेनैतेषामकरणे न वैगुण्यं ॥ करणेत्वभ्युदयः अविरोधात् ॥ इति चतुर्थन्यासः ॥

## ॥ अथ पंचमो न्यासः ॥

यज्जाग्रत० षडर्चस्य शिवसंकल्पसूक्तस्य शिवसंकल्पऋषि त्रिष्टुप्छंदः मनोदेवता हृदये न्यासे विनियोगः ॥ इत्युच्चार्य मुष्टिविनिर्गतांगुष्ठौ संयुक्तौ हृदये कृत्वा ॥ ॐ यज्जाग्रतो० इति षड्ऋचो जप्त्वा हृदयाय नम इत्युच्चार्य हृदये ॥ काण्वशाखायामेकस्या एव ऋचः शिवसंकल्पदृष्टायाः समाम्नातत्वात् यज्जाग्रत इत्येकया ऋचा हृदये न्यासः इति काण्वानां विशेषः ॥ सहस्रशीर्षेति षोडशर्चस्य पुरुषसूक्तस्य नारायणपुरुषऋषिः आद्यानां पंचदशानां अनुष्टुप्छंदः यज्ञेनयज्ञ० त्रिष्टुप्छंदः जगद्बीजं पुरुषो देवता शिरसि न्यासे० ॥ इति स्मृत्वा मुष्टीविनिर्गतांगुष्ठौ संयुक्तौ निस्तर्जनीकौ शिरसि कृत्वा ॥ ॐ सहस्रशीर्षेति षोडशऋचं जप्त्वा शिरसि ॥ स्वाहेत्युच्चार्य शिरसि॥ अद्भ्यः संभृत इति षडर्चस्योत्तरनारायणपुरुषऋषिः आद्यानां तिसृणां त्रिष्टुप्छंदः चतुर्थपंचमयोरनुष्टुप्छंदः अन्त्यस्य त्रिष्टुप्छंदः आदित्यो देवता शिखायां न्यासे० ॥ इति स्मृत्वा मुष्टिपुटौ करौ कृत्वांगुष्ठावधः प्रसक्ताग्रौ कनिष्ठिके चोर्ध्वतः शिखायां कृत्वा ॥ ॐ अद्भ्यः संभृत इति षड्ऋचो जप्त्वा शिखायै वषडित्युच्चार्य शिखायां ॥ आशुः शिशान इति द्वादशानामृचा अप्रतिरथऋषिः त्रिष्टुप्छंदः इन्द्रो देवता कवचन्यासे० ॥ इति स्मृत्वांगुष्ठौ प्रसक्तांग्रौ तर्जन्यौ च त्रिकोणवत्कृत्वा मूर्ध्नि पश्चात्मुखौ कृत्वा उभयपार्श्वतः करौ हृदयं नयन् ॥ ॐ आशुः शिशान इत्यादिकं तमसासचंतामित्यन्तं द्वादशमप्रतिरथं जप्त्वा कवचायहुं इत्युच्चार्य कवचं न्यसेत् ॥ केचित्तु आशुः शिशान इत्यादिभिः सप्तदशभिः ऋग्भिः कवचन्यासमाचरन्ति ॥ तस्माद्ब्रह्माऽप्रतिरथं जपत्याशुः शिशानो वृषभो न भीम इत्यैंद्रोभिरूपा द्वादश भवन्तीति शतपथश्रुतिविरुद्धं ॥ आशुरैन्द्री द्वादश त्रिष्टुंभोऽप्रतिरथ इति सर्वानुक्रमसूत्रविरुद्धं ॥ आशुः शिशान इत्यादिरप्रतिरथ उच्यते ॥ एतन्नाम्ना मुनिस्तत्र देवता च महेश्वरः ॥ त्रिष्टुप् छंदो जपादौ तु विनियोगो यथोचितमिति ॥ अत्राप्रतिरथमंत्रगणस्य त्रिष्टुप्छंदस्कत्वोक्तेराशुरित्यादीनां द्वादशर्चामेव त्रिष्टुप्छंदस्कत्वस्य क्रमेण समधीतत्वादवसृष्टेत्यादीनां कासांचिद् ऋचां त्रिष्टुप् अपेक्षया छंदोंऽन्तरत्वाच्च ॥ त्रिष्टुप्छंदस्को द्वादशार्च एवाप्रतिरथ इति स्मृत्यभिप्रायः ॥ तेन बृहत्पाराशरस्मृतिविरुद्धं चेति अनादरणीयं ॥इति॥

"विभ्राडित्यस्य"—विभ्राट् सौर्यऋषिः जगतीछंदः सूर्यो देवता ॥ उदुत्यमिति तिसृणां प्रस्कण्वऋषिः गायत्रीछंदः सूर्यो देवता ॥ तं प्रत्नथेत्यस्य स्वयंभू-ब्रह्मऋषिः जगतीछंदः विश्वेदेवा देवता ॥ अयं वेन इत्यस्य स्वयंभू ब्रह्मऋषिः त्रिष्टुप्छंदः सोमो देवता ॥ चित्रमित्यस्य स्वयंभू ब्रह्मऋषिः त्रिष्टुप्छंदः सूर्यो देवता॥ आन इत्यस्य अगस्त्य ऋषिः त्रिष्टुप् छंदः सूर्यो देवता ॥ यदद्येत्यस्य श्रुतकक्षसुतं-कक्षावृषी गायत्रीछंदः सूर्यो देवता॥ तरणिरित्यस्य प्रस्कण्वऋषिः गायत्रीछंदः सूर्यो-देवता ॥ तत्सूर्यस्येति द्वयोः कुत्सऋषिः त्रिष्टुप् छंदः सूर्यो देवता ॥ बण्महानिति द्वयोर्जमदग्निऋषिः आद्यस्य बृहतीछंदः द्वितीयस्य सतो बृहतीछंदः सूर्यो देवता ॥ श्रायन्त इवेत्यस्य नृमेधऋषिः बृहतीछंदः सूर्यो देवता॥ अद्यादेवा० कुत्सऋषिः त्रिष्टुप्छंदः सूर्यो देवता ॥ आकृष्णेन० हिरण्यस्तूप आंगिरसऋषिः त्रिष्टुप् छंदः सूर्यो-देवता नेत्रत्रये न्यासे० ॥ इति स्मृत्वा नेत्रोन्मुखं हस्तं कृत्वा सक्तांगुष्ठकनिष्ठिकां च कृत्वा मध्यमां किंचित् प्रसार्य इतरांगुलिं नमयन् ॥ विभ्राडित्यादिकं भुवनानि पश्यन्नित्यन्तं सप्तदशर्चमनुवाकं जप्त्वा नेत्रत्रयाय वौषडित्याद्युच्चार्य नेत्रेषु विन्यसेत् ॥ निष्कामजपेत्वेवं नेत्रन्यासः ॥ सकामजपे तु नेत्रयोर्न्यासे० इत्युक्त्वा नेत्राभ्यां वौषडिति नेत्रन्यासं केचित् ॥ इति ॥

"शतरुद्रियाख्यस्य" नमस्ते रुद्रेति रौद्राध्यायस्य परमेष्ठीऋषिः देवा वा ऋषयः प्रजापतिर्वा ऋषिः नमस्ते रुद्र० गायत्रीछंदः ॥ यातेरुद्रेत्यादीनां तिसृणां अनुष्टुप् छंदः ॥ अध्यवोचदिति तिसृणां पंक्तिश्छंदः नमोस्तु नीलग्रीवायेत्यादिसप्तानां अनुष्टुप् छंदः मानोमहान्तमिति द्वयोः कुत्सऋषिः जगतीछंदः सर्वेषामेको रुद्रो-देवता ॥ नमोहिरण्यबाहव इत्यादीनि द्रापे इत्यन्तं प्राक्तनानि सर्वाणि यजूंषि तत्र चतुरक्षराणां यजुषां दैवी बृहतीछंदः ॥ पंचाक्षराणां दैवीपंक्तिः ॥ षडक्षराणां दैवी-त्रिष्टुप् यजुर्गायत्रीवा ॥ सप्ताक्षराणां जगतीयजुरुष्णिग् वा ॥ अष्टाक्षराणां यजुर-नुष्टुप् प्राजापत्या गायत्री वा ॥ नवाक्षराणां यजुर्बृहती आसुरीवा ॥ दशाक्षराणां यजुर्जगती आसुरी बृहती वा प्राजापत्योष्णिग् वा सामगायत्री वा ॥ चतुर्दशाक्षरं सामोष्णिके एकमेव किरिकेभ्य इति ॥ एतान्येवात्र छंदांसि ॥ नमो हिरण्यबाहवे इत्यादीनां श्वपतिभ्यश्च वो नम इत्यन्तानां पंचचत्वारिंशत् संख्याकानां यजुषां हिरण्य-बाहुः सेनानीर्दिशांपतिरित्यादिमंत्रवर्णान्तर्गतानामका उभयतो नमस्कारा बहवो रुद्रा देवता ॥ नमो भवाय च रुद्राय चेत्यादीनां प्रखिदते चेत्यन्तानां पंचसप्तति संख्याकानां यजुषां भवादयो मंत्रलिंगावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता ॥ नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नम इत्यस्य यजुष उभयतो नमस्कारा बहवो रुद्रा

देवता ॥ नमो हिरण्य बाहव इत्यादयो द्वंद्विनो रुद्राः ॥ नमः सभाभ्य इत्यादयो जातानामेको रुद्राः ॥ नमोवः किरिकेभ्य इत्यादीनां चतुर्णां यजुषामन्यतरतो नमस्कारा बहवो रुद्रा देवता ॥ द्रापे० उपरिष्टाद् बृहतीछंदः॥ इमारुद्राय० कुत्सऋषिः जगतीछंदः ॥ यात० अनुष्टुप् छंदः ॥ परित इति द्वयोस्त्रिष्टुप् छंदः॥ विकिरि० सहस्राणीति द्वयोरनुष्टुप् छंदः सप्तानामेको रुद्रो देवता॥ असंख्यातेत्यादीनां त्रयाणां यजुषां धृतिछंदः बहवो रुद्रादेवता ॥ तद्यदेतं शीर्षाणं रुद्रमेते नाशमयंतस्माच्छतशीर्षा रुद्र शमनीयं शतशीर्षरुद्रशमनीयं हवैतच्छतरुद्रियमित्याचक्षत इति श्रुतेः सकलाध्यायस्य शतशीर्षाणं रुद्रो देवतेति केचित् सकलाध्यायस्य अस्त्रन्यासे विनियोगः ॐ नमस्ते रुद्र मन्यव इत्यादिकं तमेषां जंभे दध्म इत्यन्तं षट् षष्ठिकंडिकात्मकं शतरुद्रियाख्यं रौद्राध्यायं जप्त्वा अस्त्राय फडिति उच्चार्य परस्परतालं कुर्वन् अस्त्रं न्यसेत् ॥ चतुः षष्ठिकंडिकात्मको रौद्राध्याय इति काण्वानां विशेषः ॥ यत्तु महार्णवानुसारिभिर्दैवयाज्ञिकैरुक्तं॥ त्वमग्ने रुद्रो असुरो महोदिवः इत्यस्य शतरुद्रियानुवाकस्य जमदग्निऋषिः हव्यवाट्ऋषिः इति केचित् जगतीछंदः अग्न्यात्मको रुद्रो देवता अस्त्रे न्यासे विनियोगः ॥ ॐ त्वमग्ने रुद्रो असुरो महोदिवः ॥ तं शुर्द्धो मारुतं पृक्षईशिषे ॥ त्वं वातैररुणैर्याशिसंगयः ॥ तं पूषा विधत्तः पासिनुत्मना ॥ देवा देवेषु श्रयध्वम् ॥ प्रथमा द्वितीयेषु श्रयध्वं द्वितीया तृतीयेषु श्रयध्वं तृतीया चतुर्थेषु० चतुर्थाः पंचमेषु० पंचमाः षष्ठेषु० षष्ठा सप्तमेषु० सप्तमा अष्टमेषु० अष्टमा नवमेषु० नवमा दशमेषु० दशमा एकादशेषु एकादशा द्वादशेषु० द्वादशा त्रयोदशेषु० त्रयोदशाश्चतुर्दशेषु० चतुर्दशाः पंचदशेषु० पंचदशा षोडशेषु० षोडशाः सप्तदशेषु० सप्तदशा अष्टादशेषु अष्टादशा एकोविंशेषु० एकोनविंशाः एकविंशेषु० एकविंशा द्वाविंशेषु० द्वाविंशास्त्रयोविंशेषु० त्रयोविंशाश्चतुर्विंशेषु० चतुर्विंशाः पंचविंशेषु० पंचविंशाः षड्विंशेषु० षट्विंशाः सप्तविंशेषु० सप्तविंशा अष्टाविंशेषु० अष्टाविंशा एकोनत्रिंशेषु० एकोनत्रिंशास्त्रिंशेषु ॥ त्रिंशा एकत्रिंशेषु एकत्रिंशा द्वात्रिंशेषु० द्वात्रिंशास्त्रयस्त्रिंशेषु श्रयध्वम् ॥ देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिंशाः ॥ उत्तरे भवत उत्तर वर्त्मानः उत्तर सत्वानः यत्काम इदं जुहोति तन्मे समृद्ध्यतां ॥ वयं स्याम पतयो रयीणां ॥ भूर्भुवः स्वः स्वाहा अस्त्राय फडित्येवं पूर्वोक्तया अस्त्रमुद्रया अस्त्रंन्य सेदिति ॥ तदेतदनुपपन्नं ॥ " अथातः शतरुद्रियं जुहोति " इत्यादिकया षष्ठिश्च हवै त्रीणि च शतान्येच्छतरुद्रियमथ त्रिंशदथ पंचत्रिंशदित्यन्तया शतपथश्रुत्या शतरुद्रियहोमसाधनत्वादुपचारवृत्त्या शतरुद्रियशब्देन रौद्राध्यायस्यैवोक्तेः ॥ यत्तु नाचिकेताग्निप्रकरणे त्वमग्ने रुद्र इति शतरुद्रियस्य रूपमिति तैत्तिरीयश्रुत्या त्वमग्ने

रुद्र इत्यनुवाकस्य शतरुद्रियमंत्रत्वमुक्तं तस्मादस्यत्वाचिरूरशब्दश्रवणाद्गौणं ॥ नचात्र गौणग्रहणे प्रमाणमस्ति ॥ तस्माद्रौद्राध्याये नैवास्त्रन्यास इति युक्तं ॥ महार्णवकारस्तु भ्रांत एवेति ॥ तैत्तिरियैरपि रौद्राध्याये नैवास्त्रन्यासः कार्य इत्युक्तं शान्तिरत्ने कमलाकरभट्टपादैः ॥ इति पंचमो न्यासः ॥

## ॥ अथाष्टांगप्रणामः ॥

वक्ष्यमाणमंत्रैरष्टांगप्रणामः ॥ सच मंत्रपाठमात्रेणैव निर्वर्त्यं तेन ॥ पद्भ्यां कराभ्यां जानुभ्यां शिरसा चोरसा तथा ॥ मनसा वचसा दृष्ट्या प्रणामोऽष्टांग उच्यते ॥ इति वाक्योक्तेनाष्टांगप्रणामः ॥ तत्र मंत्राः ॥ हिरण्यगर्भ० हिरण्यगर्भऋषिः त्रिष्टुप् छंदः कोदेवता॥ ब्रह्मयज्ञानं० प्रजापतिर्ऋषिः त्रिष्टुप् छंदः आदित्यो देवता॥ महीद्यौ० मेधातिथिऋषिः गायत्रीछंदः द्यावापृथिवीदेवता ॥ उपश्वासय० वायुर्भारद्वाजऋषिः त्रिष्टुप् छंदः दुंदुभिर्देवता ॥ अग्नेनय० अगस्त्यऋषिः त्रिष्टुप् छंदः अग्निर्देवता सर्वेषामष्टांगनमस्कारे विनियोगः ॥ ॐ हिरण्यगर्भः संम० ॥१॥ ॐयः प्राणतः ॥२॥ ॐ ब्रह्मयज्ञानं० ॥३॥ ॐ महीद्यौ० ॥४॥ ॐ उपश्वासय० ॥५॥ ॐ अग्नेनय० ॥६॥ ॐ याते अग्ने यज्ञियातनूस्तनूस्तये ह्यारोहात्मात्मानम् ॥ अच्छावसूनि कृण्वन्नस्येनर्या पुरूणि ॥ यज्ञो भूत्वा यज्ञमासीद् स्वां योनिं जातवेदो भुवआजायमानः स क्षय एहि ॥ ७ ॥ ॐ यथावः स्वाहाग्नयेदाशेमपरीभिर्घृतवद्भिश्च हव्यै ॥ तेभिर्नो अमितैर्महोभिः शतंपूर्भिरायसीभिर्निपाहि ॥८॥ इत्यष्टभिर्मंत्रैरष्टांगप्रणामो महार्णवकृता उक्तः ॥ नारायणभट्टपद्धतौ तु अष्टांगप्रणामे उक्तानेव सप्तमंत्रान् उपविन्यस्य अष्टमस्य यथावः स्वाहाग्नय इत्यस्य मंत्रस्य स्थाने ॥ ॐ इमं यम प्रतस्तरं माहिसीदां गिरोभिः पितृभिः संविदानः ॥ आत्वामंत्राः कविशस्ता वहंत्वेनाराजन् हविषामादयस्व ॥ इत्ययं मंत्र उक्तः ॥ इति ॥

## ॥ अथ श्रीरुद्रपूजनप्रयोगः ॥

तत्रादौ आत्मानं रुद्ररूपेण ध्यायेत् ॥ शुद्धस्फटिकसंकाशं त्रिनेत्रं पंचवक्त्रकं॥ गंगाधरं दशभुजं सर्वाभरणभूषितं ॥ नीलग्रीवं शशांकांकं नागयज्ञोपवीतिनं ॥ व्याघ्रचर्मपरिधानं व्याघ्रचर्मोत्तरीयकं ॥ कमंडल्वक्षसूत्राभ्यामन्वितं शूलपाणिनं ॥ ज्वलन्तं पिंगलजटाजूटमुद्योतकारिणं ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्द्धधारिणं ॥ दिव्यसिंहासनासिनं दिव्यभोगसमन्वितं ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतं ॥ नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययं ॥ सर्वव्यापीनमीशानंरुद्रं वै विश्वरूपिणं ॥ एवं ध्यात्वा द्विजः सम्यक् ततो यजनमारभेत् ॥ इत्थमात्मानं श्रीरुद्ररूपं ध्यात्वा जपरुद्रे

जपारंभो होमरुद्रे होमारंभः कर्तव्यः॥ अत्र यजनपदार्थस्य जपपूजाहोमश्चेति त्रिवि-धस्य महार्णवकारादिभिर्निरुक्तस्य जपहोमार्चनविधिमिति सूत्रमूलकत्वात् बौधायन-मते जपहोमयोः पूजा नास्त्येव ॥ बृहत्पराशरेण तु संप्रध्वस्तान्तरायः सन् ततो यज-नमारभेदिति यजनमुपक्रम्य अनुगुप्ते च लिप्ते सुदेशे गोचर्मपात्रके त स्थंडिलेऽम्बुज-मालिख्य शुभ्रैः क्षालिततंदुलैः ॥ तत्र पूजादिकं कुर्याच्छंभवायेति मंत्रतः ॥ इत्या-दिना पूजायाः विधानात् श्रीरुद्रपूजनमेव यजनमित्युक्तं ॥ अतश्च स्वात्मानं श्रीरुद्र-रूपेण ध्यात्वा श्रीरुद्रपूजनं कर्तव्यं तच्च समाचारानुसारदेवयाज्ञिकादिभिरुक्तमेवो-च्यते ॥ मानो महान्तमित्यस्य कुत्सऋषिः जगतीछंदः एको रुद्रो देवता सिद्धमंत्रस्मरणे विनियोगः ॥ ॐ मानो महान्त इति सिद्धमंत्रस्मरणं ॥ नमः शंभवाय० परमेष्टीऋषिः ॥ अत्र सप्ताक्षराणां यजुरुष्णिक् छंदः षडक्षराणां यजु-र्गायत्रीछंदः शंभवादयो मंत्रावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता स्थंडिलपूजने विनियोगः ॥ ॐ नमः शंभवाय० स्थंडिलपूजनं ॥ भूरसीत्यस्य प्रजापतिऋषिः प्रस्तारपंक्तिश्छंदः स्वकीयमातृकादेवता क्षेत्रशुद्धौ विनियोगः ॥ ॐ भूरसि० भूमिस्पर्शनं ॥ इदमेव क्षेत्रशुद्धिकरणं आपो अस्मान् यात प्रजापति ऋषि अत्यष्टीछंदः आपो देवता अपां स्मरणे० ॥ ॐ आपो अस्मान्० कमंडलौ देव-पूजार्थमपां स्मरणं ॥ तत्पुरुषायेत्यस्य तत्पुरुष ऋषिः गायत्री छंदः रुद्रो देवता अ-र्घपूरणे० ॥ ॐ तत्पुरुषाय० संभृताद्भिरर्घपूरणं ॥ नमः शंभवाय० अर्घोदकेन पू-जासंभारान् प्रोक्षयेत् ॥ अथ विशाले ताम्रपात्रे वक्ष्यमाणं यंत्रं गंधादिना विलिख्य प्राक्स्थापितैकादशकलशेभ्यः पश्चिमदिशि गोमयोपलिप्तायां भूमौ पंचवर्णैस्तंदुलैर्वा विरचिताष्टदले कमलकर्णिकायां विधिना स्थापितकलशोपरि निहिते पिधानपात्रे ताम्रपात्रं निदध्यात् ॥ यंत्रं तु चतुर्विधमुक्तं ग्रंथेषु ॥ सवस्त्रे पीठे पट्टे वा मंडले वा गंधादिना सकर्णिकमष्टपत्रं पद्मं विलिख्य तद्बाह्ये चतुर्द्वारोपशोभितं चतुरस्रं लिखे-दिति परशुरामोक्त एक प्रकारः ॥ तंदुलैः सकर्णिकमष्टपत्रं पद्ममात्रमेव लिखेदिति देवयाज्ञिक धृतबृहत्पराशरस्मृतिपाठानुसारी द्वितीयः ॥ सकर्णिकमष्टपत्रं पद्ममात्र-मेव तंडुलैर्विलिख्य तन्मध्ये दशाक्षरं मंत्रमधिकं लिखेदिति निर्णयसिंधुधृतबृहत्प-राशरस्मृतिपाठानुसारी तृतीयः ॥ स्कान्दोक्तयंत्रलेखनं चतुर्थः ॥ वास्तवं तु स्का-न्दोक्तयंत्रं होमांगमेव वेति नेह तत्कार्यं ॥ एवं च स्कान्दोक्तावरणपूजापि होमांग-यंत्रपूजायामेव भवति ॥ परशुरामोक्तं यंत्रं तु बृहत्पराशरस्मृतिविरुद्धमिति बृहत्प-राशरोक्तमेव यंत्रं पूजायंत्रमित्येतदेव कार्यं ॥ नमः सुत्याय० परमेष्ठी ऋषिः ॥ अत्र षडक्षराणां यजुर्गायत्री छंदः चतुरक्षराणां देवी बृहतीछंदः ॥ सप्ताक्षरस्य यजुरुष्णि-

उष्णिक्छंद ।। पंचाक्षरस्य दैवी पंक्तिश्छंदः।। स्तुत्यादयो मंत्रवर्णोक्तगता बह्वो रुद्रा देवता पीठकल्पने विनियोगः ॐ नमः स्तुत्याय० रत्नखचितसुवर्णमयपीठकल्पनं ।।

## ।। अथ पीठपूजा ।।

अक्षतैः पुष्पैर्वा पीठपूजनं कुर्यात् ।। पीठस्याधोभागे ।। ॐ आधारशक्तये० कूर्माय० अनन्ताय० वराहाय० पृथिव्यै० विचित्रदिव्यरत्नमंडपाय० ।। मंडपपरितः ।। ॐ कल्पवृक्षेभ्यो० सुवर्णवेदिकायै० रत्नसिंहासनाय० ।। एभिर्मंत्रैरुपर्युपरि- पूजा ।। अथ सिंहासनपादेषु ।। ॐ धर्माय० इत्याग्नेय्यां ।। ॐ ज्ञानाय० इति नैर्ऋत्यां ।। ॐ वैराग्याय० इति वायव्यां ।। ॐ ऐश्वर्याय० ईशान्यां ।। अधर्माय० पूर्वस्यां ।। अज्ञानाय० दक्षिणस्यां ।। अवैराग्याय० पश्चिमायां ।। अनैश्वर्याय० उत्तरस्यां ।। सिंहासनोपरि ।। तत्पाकारायानन्ताय० पद्माय० आनंदकन्दाय० संविन्नालाय० प्रकृतिमयपत्रेभ्यो विकारमयकेसरेभ्यो० पंचाशद्वर्णाढ्यकर्णिकायै० ।। अथ पद्मदलकेसरकर्णिकास्वर्चनं ।। अं सत्वाय० पद्मदलेषु ।। रंरजसे० केसरेषु ।। तं तमसे० कर्णिकासु ।। एवं प्रतित्रिकं सर्वत्र ।। अं द्वादशकलात्मने सूर्यमंडलाय ॐ उं षोडशकलात्मने सोममंडलाय मं दशकलात्मने वन्हिमंडलाय० ।।३।। अं ब्रह्मणे० उं विष्णवे० मं महेश्वराय० ।।३।। अं आत्मने० उं अन्तरात्मने० पं परमात्मने० ।।३।। ज्ञानात्मने इति सर्वपद्मार्चनं ।। स्वाग्रतः पद्मपत्रेषु ।। वामायै० ज्येष्ठायै० रौ ० काल्यै० कलविकरण्यै० बलविकरण्यै बलप्रमथिन्यै० सर्वभूतदमन्यै० ।।८।। इत्यष्टौ शक्तीः संपूज्य ।। ॐ मनोन्मन्यै० इति कर्णिकायां पूजनं ।। ॐ नमो भगवते सकलगुणात्मशक्तियुतायानन्ताय योगपीठात्मने नम इति कर्णिकायां पुष्पांजलिं दद्यात् ।। एवं पीठं समभ्यर्च्य यंत्रमध्ये स्नानाद्युपचारैः पूजनार्थं नार्मदं (नर्मदेश्वर) मन्यद्वा शिवलिंगं धातुमयीं शैवीं प्रतिमां वा प्रतिष्ठाप्यावाहनं कुर्यात् ।। तद्यथा ।। ॐ आत्वा वहंतु हृदयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः।। वाताजवैर्बलमद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम् ।। हूयन्तां देवानामृषीणां मनुष्याणां च सर्वशः ।। सहस्राक्षं विरूपाक्षं महादेवं शिवमावाहयामीति मंत्रेण श्वेतपर्वतमस्तकात्सूर्यमंडलाच्च हृत्कमलाद्वा दीपाद्दीपान्तरमिव निर्गतं दक्षिणनासापुटेनांजलिस्थपुष्पे स्वागतं देवं विभाव्य शिवलिंगादावंजलिस्थपुष्पप्रक्षेपेण शिवं तेजोरूपं लिंगादौ संक्रान्तमिति भावनया आवाहनं ।। बाणलिंगे गल्लकी समुद्भुतशिवनाभिलिंगे च नावाहनं।। किंत्वावाहनमंत्रेणावाहनस्थापनापन्नं पुष्पांजलिदानमात्रमिति विशेषः

## ।। अथ देवन्यासः ।।

तत्रादौ देवमूर्ध्नि दशाक्षरन्यासः ।। ॐ नमः ॐ नंनमः मोंनमः भंनमः गंनमः वंनमः तेंनमः रुंनमः द्रांनमः यंनमः ।।१०।। इति दशाक्षरन्यासः।। सद्योजातमित्या-

दिना देवस्य पश्चिमादिवक्त्रेषु न्यासः॥ ॐ सद्योजातं० पश्चिमवक्त्रे ॥ वामदेवाय० उत्तरवक्त्रे ॥ अघोरेभ्य० दक्षिणवक्त्रे ॥ तत्पुरुषाय० पूर्ववक्त्रे ॥ ईशानः सर्ववि· द्यानां० ऊर्ध्ववक्त्रे ॥ इति ॥

" अथावाहनादिपूजनं " नमस्ते रुद्रमन्यव इत्यस्य परमेष्टीऋषिः गायत्री· छंदः एको रुद्रो देवता आवाहने विनि० ॥ ॐ नमस्ते० आवाहनं दद्यात् ॥ याते रुद्र० परमेष्टी ऋषिः अनुष्टुप् छंदः एको रुद्रो देवता उपवेशने० ॥ ॐ याते रुद्र शिवातनूरघोरा० मंत्रान्ते भगवन्तं रुद्रमुपवेशयामि ॥ यामिषु० परमेष्टीऋषिः अनु- ष्टुप्छंदः एको रुद्रो देवता मेखलानियोजने० ॥ ॐ यामिषुं० मंत्रान्ते मेखलां नि- योजयामीति कट्यां कटिसूत्रनियोजनं ॥ शिवेन वचसा० परमेष्टीऋषिः अनुष्टुप् छंदः एकोरुद्रोदेवता वासः समर्पणे० ॥ ॐ शिवेन वचसा० परिधानीयवासः सम- र्पणं॥ अध्यवोचदधि० परमेष्टी ऋषिः अनुष्टुप् छंदः एको रुद्रो देवता अधिवासने०॥ ॐ अध्यवोचदधि० अधिवासः उत्तरीयं वासोधिवासः॥ असौ यस्ताम्रो० परमेष्टी- ऋषिः पंक्तिश्छंदः एकोरुद्रोदेवता देवतान्यासे०॥ ॐ असौ यस्ताम्र० देवतान्यासः॥ ॐ असौ योवसर्पतीत्यस्य परमेष्टीऋषिः पंक्तिश्छंदः एकोरुद्रो देवता उपसर्पणे वि- नियोगः ॥ असौयोवसर्पति० देवसमीपोपसर्पणं ॥ नमोस्तु नीलग्रीवाय० परमेष्टी ऋषिः अनुष्टुप् छंदः एको रुद्रो देवता पाद्यदाने विनियोगः ॥ ॐ नमोस्तु नील- ग्रीवाय० मंत्रान्ते भगवते रुद्राय० पाद्यं सम० ॥ तत्पुरुषायेत्यस्य तत्पुरुषऋषिः गायत्रीछंदः रुद्रोदेवता अर्घदाने० ॥ ॐ तत्पुरुषाय विद्महे० भगवते रुद्राय० अर्घं सम० ॥ भूरसी० प्रजापतिऋषिः प्रस्तारपंक्तिश्छंदः स्वयमातृणादेवता आचमने० ॥ ॐ भूरसि० आचमनं सम० ॥ अथ स्नानपीठे देवमुपवेश्य पंचामृतैः पृथक् पृथक् स्थापनं ॥ तद्यथा ॥ पयः पृथिव्यां० कुशोधानाकऋषिः विराडनुष्टुप् छंदः रुद्रो- देवता पयसा स्नपने विनियोगः ॥ ॐ पयः पृथिव्यां० भगवन्तं रुद्रं पयसा स्नप- यामि ॥ दधि क्राव्ण० वामदेवऋषिः अनुष्टुप्छंदः रुद्रोदेवता दध्ना स्नपने० ॥ ॐ दधिक्राव्ण० भगवन्तं रुद्रं दध्ना स्नपयामि ॥ मधुव्वाता इति तृचस्य गौतम- ऋषिः गायत्रीछंदः रुद्रोदेवता मधुना स्नपने० ॥ ॐ मधुव्वाता० भगवन्तं रुद्रं म- धुना स्नपयामि ॥ घृतं घृतपावान० प्रजापतिऋषिः ऋचां पंक्तिः रुद्रोदेवता घृतेन स्नपने० ॥ ॐ घृतंघृतपावान० भगवन्तं रुद्रं घृतेन स्नपयामि ॥ अपांरसं० इन्द्रा बृहस्पतिऋषिः अनुष्टुप्छंदः रसोदेवता शर्करया स्नपने० ॥ अपांरसमित्यादिना गृह्णाम्युत्तममित्यन्तेन भगवन्तं रुद्रं शर्करया स्नपयामि ॥ पयः पृथिव्यां पयसा ॥ दधिक्राव्ण ऋचा दधि ॥ मधुव्वाता मधुस्नानं ॥ घृतंघृतऋचाघृतं ॥ अपांरसं शर्क- रया स्नानं देवस्यत्वेति वारिणा इति परशुरामोक्तः॥ क्षीरादिस्नपनेऽयं क्रमउक्तः ॥

अन्यैस्तु दध्ना स्नानानन्तरं घृतेन स्नपनं ततो मधुनेति क्रम उक्तः ॥ ॐ देवस्यत्वे- त्यादिकैरभिषिंचामीत्यन्तैस्त्रिभिर्मंत्रैर्वारिणा स्नपनं ॥ नमस्ते रुद्रेत्याद्यष्टानां परमेष्ठी- ऋषिः आद्याया गायत्रीछंदः तिसृणामनुष्टुप् छंदः तिसृणां पंक्तिश्छंदः अष्टम्या अनुष्टुप् छंदः सर्वासामेको रुद्रो देवता कलशैः स्नपने० ॥ ॐ नमस्ते रुद्रेत्यादिभि- र्ऋग्भिः प्रत्यृचमेकैकेन कलशेन स्नपनं ॥ मानस्तोक० कुत्सऋषिः जगतीछंदः एकोरुद्रो देवता स्नपने० ॥ मानस्तोक इति स्नपनं ॥ ॐ भूरसीत्याचमनं ॥ प्रमुंच धन्वन० परमेष्टीऋषिः अनुष्टुप् छंदः एकोरुद्रोदेवता कौपीनदाने० ॥ ॐ प्रमुंच धन्व० कौपीनदानं अंगप्रोंछनार्थं वासः कौपीनं ॥ इति ॥

## ॥ अथावाहनादिसप्तमुद्राप्रदर्शनम् ॥

तत्रेत्थं प्रयोगः ॥ पुष्पपूर्णांजलिं देवाग्रे दर्शयन् देव त्वं स्वाहितो भवेति ब्रुवन् पुष्पांजलिं देवमूर्ध्नि प्रक्षिपेदित्यावाहनं ॥१॥ देव त्वं सुप्रतिष्ठितो भवेति स्थापनं॥२॥ देवत्वं सन्निहितो भवेति सन्निधानं ॥३॥ देवत्वं संनिरुद्धो भवेति सन्निरोधः ॥४॥ दर्भांकुरेण देवं स्पृशन् ॥ ॐ ॐ हृदयाय नमः नं शिरसे स्वाहा ॥ मों शिखायै व- षट् ॥ रुं कवचाय हुं ॥ द्रां नेत्रत्रयाय वौषट ॥ यं अस्त्राय फट ॥ इत्येवं देवे षडं- गन्यासं कृत्वा देवत्वं सकलीकृतो भवेति सकलीकरणं ॥५॥ देव त्वमवगुंठितो भवे- त्यवगुंठनं ॥६॥ देवत्वं प्रसन्नो भवेत्यमृतीकरणं ॥७॥ इति ॥

"विज्यं धनुरित्यस्य"—परमेष्टी ऋषिः अनुष्टुप्छंदः एकोरुद्रोदेवता कपर्दी- बंधने विनियोगः ॥ ॐ विज्यं धनुरिति मंत्रान्ते कपर्दं बंधयामीति भावनया कप- र्दबंधनं ॥ मानो महान्त० द्वयो कुत्सऋषिः जगतीछंदः एकोरुद्रोदेवता देवस्य सिं- हासनोपरि स्थापने० ॥ ॐ मानो महान्तमिति द्वाभ्यां स्नानपीठात्पूर्वपूजितपीठे दे- वस्थापनम्॥ नमो हिरण्य बाहवे० परमेष्टी ऋषिः अत्रैकादशाक्षराणां यजुरनुष्टुप् ॥ दशाक्षरस्य यजुः पंक्तिरिति छंदांसि वस्त्रदाने० ॥ ॐ नमो हिरण्य बाहवे० व- स्त्रदानं भूरसीत्याचमनं ॥ नमः शंभवाय० आभूषणं समर्पयामीति परशुरामः ॥ नमो घृष्णव परमेष्ठी ऋषिः षडक्षरयोर्यजुर्गायत्री पंचाक्षरयोर्देवीपंक्तिः सप्ताक्षराणां यजुरुष्णिक् इति छंदांसि बहवो रुद्रा देवता उपवीतदाने० ॥ नमो घृष्णवे० उप- वीतदानं ॥ भूरसीत्याचमनं ॥ यातेहेति० चतुष्कस्य परमेष्ठी ऋषिः अनुष्टुप्छंदः ॥ एको रुद्रो देवता अस्त्रसमर्पणे ॥ तथा च नमोघृष्णवे० इत्यस्य पूर्ववत् ऋष्यादिकं स्मृत्वा अस्त्रसमर्पणे० ॥ ॐ यातेहेति० चतुष्केन ॐ नमो घृष्णवे० चेत्यतेन अस्त्र- समर्पणं ॥ नमःश्वभ्य परमेष्टी ऋषिः अत्र चतुरक्षरयोर्देवी बृहती अष्टाक्षरयोर्यजु- र्गायत्री बहवः श्वादयो रुद्रा देवता गंधदाने० ॥ ॐ नमः श्वभ्यः इति कनिष्ठिकया गंधदानं नमः पार्याय० परमेष्टीऋषिः अत्रापि षडक्षराणां यजुर्गायत्री पंचाक्षर-

स्य दैवीपंक्तिः अष्टाक्षरस्य यजुरनुष्टुप् चतुरक्षयोर्दैवी बृहती बहवः पार्यादयो रुद्रा देवता पुष्पदाने० ।। नमः पार्याय० पुष्पदानं ।। नम आशव० परमेष्ठी ऋषिः अत्र षडक्षराणां यजुर्गायत्री पंचाक्षरस्य दैवीपंक्तिः नवाक्षरस्य यजुर्बृहती सप्ताक्षरस्य यजुरुष्णिक् चतुरक्षस्य दैवीबृहती बहव आश्वादयो देवता दीपदाने० ।। ॐ नम आशव० दीपदानं ।। नमो ज्येष्ठाय० परमेष्ठी ऋषिः षडक्षरस्य यजुर्गायत्री पंचाक्षरस्य दैवीपंक्तिः सप्ताक्षराणां यजुरुष्णिक् चतुरक्षरस्य दैवी बृहती ज्येष्ठादयो बहवो रुद्रा देवता नैवेद्यदाने विनि० ।। ॐ नमो ज्येष्ठायेति नैवेद्यदानं ।। ॐ भूरसीत्याचमनं।। नमः शंभवायेत्यस्य ऋष्यादिकं प्रागुक्त् स्मृत्वा तांबूलं समर्पयेत् ।। नमो धृष्णवेत्यस्य प्रागवत् ऋष्यादिकं स्मृत्वा आरार्त्रिकं कुर्यात् ॥ एषते इत्यनयोः प्रजापतिर्ऋषिः सामपंक्तिर्यजुर्जगती छंदांसि रुद्रो देवता प्रदक्षिणीकरणे० ।। ॐ एषते० प्रदक्षिणा ।। नमोस्तु रुद्रेभ्य० तिसृणां परमेष्ठीऋषिः धृतिंछंदः बहवो रुद्रा देवता नमस्कारे० ।। ॐ नमोस्तु रुद्रेभ्य० इति तिसृभिर्नमस्कारः ।। नमः शंभवायेति ललाटे शुक्लतंदुलैः पूजनमिति विशेषः ।।

## ।। अथ सामान्यपंचवक्त्रपूजा ।।

सद्योजातो व्यमिमीत० जमदग्निऋषिः त्रिष्टुप्छंदः स्वाहाकृतिर्देवता पश्चिमवक्त्रपूजने विनियोगः । ॐ सद्योजातो व्यमिमीतेति मंत्रान्ते सद्योजाताय पश्चिमवक्त्रायनम इति गंधादिभिः सिताक्षतैः श्वेतपुष्पैश्च प्रतीच्यां पश्चिमवक्त्रपूजनं ।।१।। वाममद्य० भरद्वाजऋषिः त्रिष्टुप्छंदः सवितादेवता उत्तरवक्त्रपूजने विनि० ।। ॐ वाममद्यसवितुरिति मंत्रान्ते वामदेवायोत्तरवक्त्राय० गंधादिभिस्तुलसीशतपत्रैश्चोदीच्यामुत्तरवक्त्रपूजनं ।।२।। याते रुद्र शिवातनु० परमेष्ठीऋषि अनुष्टुप् छंदः एको रुद्रो देवता दक्षिणवक्त्रपूजने० ।। ॐ याते रुद्र शिवातनूरघोरेति मंत्रान्ते अघोराय दक्षिणवक्त्राय नम इति गंधादिभिर्नीलाब्जै० करवीरैश्च दक्षिणस्यां दक्षिणवक्त्रपूजनं ।।३।। तत्पुरुषमित्यस्य नारायणपुरुषऋषिः अनुष्टुप्छंदः जगद्बीजपुरुषोदेवता पूर्ववक्त्रपूजने० ।। ॐ तत्पुरुषमिति मंत्रान्ते तत्पुरुषाय पूर्ववक्त्राय० गंधादिभिर्दूर्वांकुरैर्वार्कपुष्पैश्च प्राच्यां पूर्ववक्त्रपूजनं ।।४।। तमीशानमित्यस्य गौतमऋषिः जगतीछंदः ईशानो देवता ऊर्ध्ववक्त्रपूजने० ॐ तमीशानं० इत्यस्यान्ते ईशानायोर्ध्ववक्त्राय० गंधादिभिर्बिल्वैः कनकपुष्पैश्चोर्ध्वमूर्ध्ववक्त्रपूजनं ।।५।। इति।।

## ।। अथ पश्चिमवक्त्रपूजा ।।

सद्योजातमित्यस्य सद्योजातऋषिः त्रिष्टुप् छंदः सद्योजातो देवता श्वेतवर्णे हंसवाहनं पृथिवीतत्त्वं पश्चिमवक्त्रं नमस्कारे विनियोगः ।। ॐ सद्योजातं प्रपद्यामि

सद्योजाताय वैनमः ॥ भवे भवेनातिभवे भवस्वमां भवोद्भवाय नमः ॥ मंत्रस्यान्ते सद्योजाताय श्वेतवर्णाय हंसवाहनाय पश्चिमवक्त्राय पृथिवीतत्त्वाय सृष्टिरूपात्मने ब्रह्मणे नमो हां इति प्रणम्य ॥ धनुर्बाणमुद्राप्रदर्शनं सद्योजातमित्यस्य ऋष्यादिकं प्रागवत् स्मृत्वा पश्चिमवक्त्रपूजने विनियोगः ॥ ॐ सद्योजातमित्यस्यान्ते सद्योजाताय श्वेतवर्णाय हंसवाहनाय पश्चिमवक्त्राय नम इति गंधादिभिः पूजनं ॥ ततः कलापूजनं ॥ ॐ ऋद्ध्यै० सिध्यै० धृत्यै० लक्ष्म्यै० मेधायै० कान्त्यै० स्वधायै० प्रभायै० ॥८॥ सद्योजात कला ह्येता अष्टौ च परिकीर्त्तिता ॥ श्वेताक्षतैः श्वेतपुष्पैः पूजयेद्धंसवाहनं ॥ सिद्ध्यन्ति सर्वकार्याणि पूजनेन न संशयः ॥ ध्यानं ॥ प्रालेयामलबिंदुकुंदधवलं गोक्षीरफेनप्रभं भस्माभ्यंगमनंगदेहदहनं ज्वालावलीलोचनं ॥ ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यर्चितं योगिभिर्वंदेहं सकलं कलंकरहितं स्थाणोर्मुखं पश्चिमं ॥ १ ॥ इति ॥

## ॥ अथोत्तरवक्त्रपूजा ॥

वामदेवायेत्यस्य वामदेवऋषिः जगतीछंदः विष्णुर्देवता कृष्णवर्णं गरुडवाहनं आपस्तत्त्वं उत्तरवक्त्रनमस्कारे विनियोगः ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय कालाय नमः कलविकरणाय नमो बलविकरणायनमो बलायनमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः इति ॥ मंत्रस्यान्ते वामदेवाय कृष्णवर्णाय गरुडवाहनाय उत्तरवक्त्राय आपस्तत्त्वाय अमृतरूपात्मने विष्णवे नमो ह्रीं इति प्रणम्य पद्ममुद्रां प्रदर्शनं ॥ वामदेवायेत्यस्य प्राग्वत् ऋष्यादिकं स्मृत्वा उत्तरवक्त्रपूजने० ॥ वामदेवाय० कृष्णवर्णाय गरुडवाहनायोत्तरवक्त्राय नम इति गंधादिभिः पूजनं ॥ कलापूजनं ॥ ॐ रजसे० रक्षायै० रत्यै० पाल्यायै० कामायै० संजीवन्यै० प्रियायै० बुद्ध्यै० क्रियायै० धात्र्यै० भ्रामिण्यै० मोहिन्यै० ज्वरायै० ॥ १३ ॥ वामदेवकला ह्येतास्त्रयोदश वरानने ॥ तुलसीशतपत्रैश्च पूजयेद्गरुडासनं ॥ सर्वदोषविनाशेन प्राप्नोति श्रेयसंपदं ॥ ध्यानं ॥ गौरं कुंकुमपिंगलं सुतिलकं व्यापांडुगंडस्थलं भ्रूविक्षेपकटाक्षविक्षणलसत्संसक्तकर्णोत्पलं ॥ स्निग्धं बिंबफलाधरं प्रहसितं नीलालकालं कृतं वंदे पूर्णशशांकमंडलनिभं वक्त्रं हरस्योत्तरं ॥ इति ॥

## ॥ अथ दक्षिणवक्त्रपूजा ॥

अघोरेभ्य इत्यस्य अघोरऋषिः अनुष्टुप्छंदः रुद्रोदेवता नीलवर्णं कूर्मवाहनं तेजस्तत्वं दक्षिणवक्त्रनमस्कारे विनियोगः ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ इति मंत्रस्यान्ते अघोराय नीलवर्णाय कूर्मवाहनाय दक्षिणवक्त्राय तेजस्तत्वाय विश्वरूपात्मने कालाग्निरुद्राय नमो हुं

इति प्रणम्य ज्ञानमुद्रां प्रदर्शनं ॥ अघोरेभ्य इत्यस्य प्राग्वत् ऋष्यादिकं स्मृत्वा दक्षिणवक्त्रपूजने० ॥ ॐ अघोरेभ्य इत्यस्यान्ते अघोराय नीलवर्णाय कूर्मवाहनाय दक्षिणवक्त्राय नम इति गंधादिभिः पूजनं ॥ कलापूजनं ॐ तमसे० मोहायै० क्षमायै० निद्रायै० व्याधये० मृत्युरूपायै० क्षुधायै० तृषायै॥८॥ नीलोत्पलैः करवीरैश्च पूजयेत् कूर्मवाहनं ॥ सर्वाबाधाविनाशाय ज्ञानमोक्षप्रसाधकं ॥ ध्यानं ॥ कालाभ्रभ्रमरांजनाचलनिभं व्यावृत्तपिंगेक्षणं खन्डेन्दुद्वयमिश्रितांशुदशनं प्रोद्भिन्नदंष्ट्रांकुरं ॥ सर्पप्रोतकपालशक्तिसकलं व्याकीर्णसच्छेखरं वंदे दक्षिणमीश्वरस्य कुटिलं भ्रूभंगरौद्रं मुखं ॥ ३ ॥ इति ॥

## ॥ अथ पूर्ववक्त्रपूजा ॥

तत्पुरुषायेत्यस्य तत्पुरुष ऋषिः गायत्रीछंदः रुद्रो देवता पीतवर्णमश्ववाहनं वायुस्तत्वं पूर्ववक्त्रनमस्कारे० ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥ इति मंत्रस्यान्ते तत्पुरुषाय पीतवर्णाय अश्ववाहनाय पूर्ववक्त्राय वायुस्तत्त्वाय चैतन्यात्मने आदित्याय नमो हैं इति प्रणम्य कवचमुद्रां प्रदर्शयेत् ॥ तत्पुरुषायेत्यस्य ऋष्यादिकं स्मृत्वा पूर्ववक्त्रपूजने० ॥ ॐ तत्पुरुषाय० इति मंत्रस्यान्ते तत्पुरुषाय पीतवर्णायाश्ववाहनाय पूर्ववक्त्राय नम इति गंधादिभिः पूजनं॥ कलापूजनं ॥ ॐ निवृत्त्यै० प्रतिष्ठायै विद्यायै० शान्त्यै० ॥४॥ दूर्वांकुरैरर्कपुष्पैः पूजयेदश्ववाहनं ॥ आयुष्यं वर्द्धते तत्र विशिष्टफलदायकम् ॥ ध्यानं ॥ संवर्त्ताग्नितडित्प्रतप्तकनकप्रस्पर्द्धितेजोरुणं गंभीरस्मृतिनिःसृतोग्रदशनप्रोद्भासिताम्राधरं ॥ बालेन्दुद्युतिलोलपिंगलजटाभारप्रबद्धोरगं वन्दे सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ॥ ४ ॥ इति ॥

## ॥ अथोर्ध्ववक्त्रपूजा ॥

ईशान इत्यस्य ईशानऋषिः अनुष्टुप्छंदः रुद्रोदेवता गोक्षीरवर्णं वृषभवाहनं आकाशतत्वं ऊर्ध्ववक्त्रनमस्कारे विनियोगः ॥ ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम्॥ ॐ ईशानः सर्वविद्यानामित्यस्यान्ते इशानाय गोक्षीरवर्णाय वृषभवाहनाय ऊर्ध्ववक्त्राय आकाशतत्वाय सर्वव्यापकात्मने हों इति प्रणम्य ज्ञानमुद्राप्रदर्शनं ॥ ईशान इत्यस्य ऋष्यादिकं स्मृत्वा ऊर्ध्ववक्त्रपूजने० ॥ ॐ ईशान इत्यस्यान्ते गोक्षीरवर्णाय वृषभवाहनायोर्ध्ववक्त्राय नम इति गंधादिभिः पूजनं ॥ कलापूजनं ॥ शशिन्यै० अंगदायै० ज्येष्ठायै० मरीच्यै० ज्ञानिन्यै०॥५॥ ईशानस्य कलाह्येताः निरंजनपदानुगा॥ हंसहंसेति यो ब्रूयान्न हंसो नाम सदाशिवः ॥ बिल्वैः कनकपुष्पैश्च अन्यैर्ऋतुभवैस्तथा ॥ पू-

जनीयं प्रयत्नेन सौख्यमोक्षप्रसाधकं ॥ ध्यानं व्यक्ताव्यक्तगुणोत्तरं सुवदनं षट्त्रिंशत्तत्त्वाधिकं तस्मादुत्तरतत्त्वमक्षयमिति ध्येयं सदा योगिभिः ॥ वंदे तापसवर्जितेन मनसा सूक्ष्मातिसूक्ष्मं परं शान्तं पंचममीश्वरस्य वदनं खं व्यापि तेजोमयम् इति॥

"अथ देववामभागे पार्वतीपूजनं"—ॐ नमोभगवत्यै उमादेव्यै० पार्वत्यै० गौर्यै० कालिंद्यै० कोटयै विश्वधारिण्यै० ॐ ह्रींनमः गंगादेव्यै० गंगादेव्यै विमत्यै० ॥इति॥

"अथैकादशरुद्रपूजनं"—ॐ अघोराय० पशुपतये० शर्वाय० विरूपाक्षाय० विश्वरूपिणे० त्र्यंबकाय० कपर्दिने० भैरवाय० शूलपाणये० ईशानाय० महेशाय०॥११॥

"अथ शक्तिपूजनं"—तत्र कामस्याष्टदलेषु प्रागादिक्रमेण पूजनं ॥ ॐ उमायै० शंकरप्रियायै० गौर्यै० पार्वत्यै० कालिन्द्यै० कोटयै० विश्वधारिण्यै० गंगायै० ॥ ८ ॥ इत्यष्टौ शक्तयः ॥ ततो गणपतिपूजनं ॥ तत्रोत्तरतः प्रथमं पूजनं ॥ ॐ गणपतये० स्वामिकुमाराभ्यां० पुष्पदन्ताय० कपर्दिने० भैरवाय० शूलपाणिने० ईश्वराय० इतीशान्यां ॥ नन्दिने० पूर्वस्यां ॥ महाकालाय० इत्याग्नेयां ॥ भृंगिरिटये० नैर्ऋत्यां ॥ ॐ वृषभाय० प्रतीच्यां ॥ स्कन्दाय० वायव्यां ॥ कपर्दिने० चंडिने धनाध्यक्षाय० इत्युदीच्यां ॥ ततो दिक्पालपूजनं ॥ यथोक्तं आदित्यादिग्रहाणां च ॥ ॐ नमो भगवते रुद्रायेत्यनेन मंत्रेण पुष्पांजलित्रयदानं ॥ ॐ नमोमहद्भ्यो० ॥ ॐ त्र्यंबकं यजामहे० ॥ ॐ नमस्ते अस्तु भगवन् विश्वेश्वराय महादेवाय त्र्यंबकाय त्रिपुरान्तकाय त्रिकालाग्निरुद्राय नीलकंठाय सर्वेश्वराय सदाशिवाय श्री महादेवाय नम इति ॥ साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ट्यं राज्यं महाराज्यमाधिपत्यमयं समुद्रपर्यंताया एकराडिति ॥ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे ॥ समे कामान्कामकामाय मह्यं ॥ कामेश्वरो वैश्रवणो ददातु ॥ कुबेराय महाराजाय नम इति ॥ एभिर्मंत्रैः सद्योजातं प्रपद्यामीत्येवमादिभिः पंचभिर्मंत्रैश्च समाचारात्प्रत्येकं पुष्पांजलिदानं ॥ ॐ एषते रुद्रभाग इति मुद्राप्रदर्शनं ॥ इषुमुद्रा लिंगमुद्रा त्रिशूलमुद्रा कालकर्णीमुद्रा योनिमुद्रा धेनुमुद्रा ॥ एवं देवं समभ्यर्च्य जपं वक्ष्यमाणेन कुर्यादिति ॥ इति श्रीरुद्रकल्पद्रुमे रुद्रपरिच्छेदे देवयाज्ञिकपद्धत्यनुसारी पंचांगरुद्रन्यासपूर्वकः श्रीरुद्रपूजनप्रकारः ॥

## ॥ अथ बृहत्पराशरोक्तरुद्रपूजाप्रकारः ॥

अथ काण्वमाध्यंदिनादीनां वाजसनेयीनां पंचांगरुद्रन्यासाश्च० रुद्रपूजनं च ॥ बृहत्पराशरस्मृत्यनुसारेणानुष्ठेयत्वस्य निर्णीतत्वात् बृहत्पराशरस्मृतिविहितः पंचांगरुद्राणां न्यासपूर्वकं श्रीरुद्रपूजनप्रकार उच्यते ॥ तत्रादौ यथाविधिस्नानेन कृतसं-

ध्योपासनेन कृतनद्यविसथ्यान्यतरभस्मत्रिपुंड्रधारणं रुद्राक्षधारणेन बद्धशिखिना यज्ञोपवीतिना सोत्तरीयेण सव्ये पाणौ कृतकुशोपग्रहेण दक्षिणे पाणौ घृतपवित्रेण यथोक्ते गोमयलिप्ते गोचर्ममात्रे शुचौ देशे प्रागग्राणामुदगग्राणां वा त्रयाणां कुशानामास्तरणं तदुपरि यथाक्रामं व्याघ्रादिचर्मण उत्तरलोम्नः प्राग्ग्रीवस्यास्तरणं ॥ तदभावे श्वेतकंबलस्य त्रिकुकंबलस्य वा आस्तरणं ॥ तदुपरि मृदुवस्त्रस्य च ॥ पृथ्वि त्वया० इति मंत्रेण तत्रासने उदङ्मुखेनैवोपवेशनं॥ अथ स्ववामभागे अग्रोदककलशस्थापनं ॥ स्वदक्षिणभागे घंटापूजोपकरणानां स्थापनं ॥ पुरतो गंधादिपात्राणां ॥ स्वपृष्ठभागे करप्रक्षालनार्थपात्रस्य च ॥ घृतदीपस्याभावे तिलतैलदीपस्य प्रज्वालनं ततः स्मार्त्तविधिनाचमनं ॥ त्रीन् प्राणायामान् कृत्वा त्रिमात्रप्रणवोच्चारणं ॥ ॐ गुरुभ्यो० श्रीगणेशाय० लक्ष्मीनारायणाभ्यां० उमामहेश्वराभ्यां० इति प्रणम्य सुमुखश्चेत्यादिश्लोकपाठः ॥ दक्षिणहस्तेन ताम्रपात्रेण वा सकुशकुसुमयवजलादानं ॥ देशकालौ संकीर्त्य पूर्वसंकल्पितामुकरुद्रमध्ये एतावद्रुद्रैकादशिनीजपं होमं वा करिष्येति संकल्पं यजमानः स्वकर्तृकत्वे कुर्यात् ॥ ऋत्विक्कर्तृकत्वे तु अमुकशर्मणो यजमानस्यानुज्ञया यजमानसंकल्पितामुकरुद्रमध्ये एतावद्रुद्रैकादशिनी जपं होमं वा करिष्यामि ॥ इति संकल्पमृत्विजः कुर्युः ॥ तत्रादौ न्यासः ॥ तत्र तावत् छंदः पुरुषस्य पूर्वोक्तरीत्या शरीरे न्यासान् कुर्यात् ॥ ततः पंचांगरुद्राणां न्यासः ॥ मनोजूतिर्जुषतामित्यारभ्य प्रतिष्ठेत्यन्ते हृदयाय नम इति हृदये ॥ अबोध्यग्निरिति शिरसे स्वाहा ॥ मूर्द्धानं दिव इति मंत्रान्ते शिखायै वषडिति शिखायां ॥ मर्माणिते० कवचाय हुं ॥ मानस्तोक० अस्त्राय फडित्यस्त्रं ॥ सोयं पंचांगन्यासः प्रथमः ॥ अथ द्वितीयो न्यासः ॥ याते रुद्रशिवा० शिखायां ॥ १ ॥ अस्मिन्महृ० शिरसि ॥२॥ असंख्याता सहस्राणि० ललाटे ॥३॥ त्र्यंबकमिति द्वौ मंत्रौ नेत्रयोः ॥४॥ मानस्तोक० नासिकायां ॥५॥ अवतत्येति मुखे ॥६॥ नीलग्रीवाः शितिकंठा दिवं ॥ ॐ नीलग्रीवाः शितिकंठा शर्वा इति द्वौ मंत्रौ कंठे ॥७॥ नमस्त आयुधाय० प्रकोष्ठयोर्मणिवंधादूर्ध्वंकूर्परादधोभागे प्रकोष्ठः ॥८॥ येतीर्थानि० हस्तयोः ॥९॥ नमो वः किरिकेभ्य० हृदये ॥१०॥ नमो हिरण्यबाहवे० पुष्टानां पतये नम इति नाभौ ॥११॥ इमा रुद्राय० गुह्ये ॥१२॥ मानो महान्त० ऊर्वोः॥१३॥ एषते रुद्र० जान्वोः ॥१४॥ अवरुद्र० जंघयोः जानुगुल्फयोरंतरालं जंघयोः॥१५॥ अध्यवोच० कवचाय हुं ॥१६॥ नमो विल्मिने० दुन्दुभ्याय च । हनन्याय चेत्युपकवचे ॥ कवचाद्विपरीतमुपकवचमिति महार्णवकारानुसारिणो विधानपारिजातादयः सर्वे निबंधाः ॥ देवयाज्ञिकादयः सर्वे पद्धतिकाराश्च॥ कवचोपरि कवच-

मुपकवचमित्यपरे ॥१७॥ नमोस्तु नीलग्रीवाय० मुष्टितो विमुक्तया मध्यमया तृतीयनेत्रे ॥१८॥ प्रमुंचधन्वन० अस्त्रे ॥१९॥ यएतावन्त० दिक्षु विदिक्षु च परस्परं तर्जन्यंगुष्ठाग्रस्फोटनेन दिग्बंधः ॥२०॥ सोयं शिखाद्यस्त्रान्तो दिग्बंधसहित एकोनविंशत्यंगन्यासो द्वितीयः ॥ अथ तृतीयो न्यासः ॐ नमो भगवते रुद्रायेति दशाक्षरस्य प्रजापतिर्ऋषिः रुद्रो देवता न्यासे विनियोगः ॥ ॐ नमः मूर्ध्नि ॥ नंनासिकायां ॥ मों ललाटे ॥ भं मुखमध्ये ॥ गं कंठे वं हृदये तें दक्षिणहस्ते रुं वामहस्ते ॥ द्रां नाभौ यं पादयोः ॥ इति तृतीयन्यासः॥ अथ संपुटाख्यश्चतुर्थन्यासः०॥ स च मुद्रितांजलिना प्राच्यादिदिक्षु वक्ष्यमाणमंत्रैः कार्यः ॥ तद्यथा ॥ ऋष्यादिकं पूर्ववत् सर्वत्र ज्ञेयं ॥ त्रातारमिंद्रं० प्राच्यां संपुटीकरणं ॥ त्वंन्नो अग्ने० इत्याग्नेयां संपुटीकरणं ॥ सुगन्नुपन्था० दक्षिणस्यां० ॥ असुन्वन्त० नैर्ऋत्यां० ॥ तत्त्वायामि० प्रतीच्यां० ॥ आनोनियुद्भि० वायव्यां० ॥ वयंगुसोम० उत्तरस्यां० ॥ तमीशानं० ईशान्यां० अस्मे रुद्रा० ऊर्ध्वायां दिशि० स्योनापृथिवि० अवाच्यां दिशि संपुटिकरणं ॥ त्रातारमिन्द्रं० प्राच्यां इन्द्रं प्रणमेत् ॥ त्वन्नो अग्ने वयं देवेत्यादिभिः संपुटिकरणोक्तमंत्रैराग्नेयादिदिक्षु अग्न्यादीन् ऋष्यादिस्मरणपूर्वकं प्रणमेत् ॥ इति चतुर्थो न्यासः ॥ अथ पंचमो न्यासः॥ यज्जाग्रत० इति षड्ऋचो जप्त्वा हृदयाय नम इति मुष्टिविनिर्गतांगुष्ठौ संयुक्तौ कृत्वा हृदये ॥ काण्वशाखायां शिवसंकल्प इष्टाया एकस्या एव ऋचः ॥ समाम्नातत्वात् यज्जाग्रत इत्येकया ऋचा हृदयन्यासः ॥ सहस्रशीर्षेति षोडशर्चस्य ऋष्यादिकं पूर्ववत्स्मृत्वा जप्त्वा शिरसे स्वाहेति मुष्टिविनिर्गतांगुष्ठौ संयुक्तौ निस्तर्जनीकौ कृत्वा शिरसि न्यसेत् ॥ अद्भ्यः संभृत० षड्ऋचो जप्त्वा शिखायै वषडिति मुष्टिपुटौ करौ कृत्वांगुष्ठावधः प्रसक्ताग्रौ कनिष्ठे चोर्ध्वतः कृत्वा शिखायां न्यसेत् ॥ आशुः शिशान० द्वादशर्चमप्रतिरथं जप्त्वा कवचाय हुं इत्यंगुष्ठौ प्रसक्ताग्रौ तर्जन्यौ च त्रिकोणवत् कृत्वा मूर्ध्नि पश्चान्मुखं कृत्वोभयपार्श्वतः ॥ करौ हृदयं तं नयत् कवचे न्यसेत् ॥ विभ्राड् इत्यादिकं भुवनानि पश्यन्नित्यन्तं सप्तदशर्चमनुवाकं पूर्ववत् ऋष्यादिस्मरणपूर्वकं जप्त्वा नेत्रत्रयाय वौषडिति नेत्रोन्मुखं हस्तं कृत्वा त्यक्तांगुष्ठकनिष्ठिकां च कृत्वा मध्यमां किंचित्प्रसार्य इतरांगुलिं नमयन् न्यसेत् ॥ ॐ नमस्ते रुद्र० इत्यादिकं तमेषां जंभेदध्म इत्यन्तस्य सकलाध्यायस्य शतशीर्षा रुद्रो देवता सकलाध्यायस्यास्त्रे न्यासे० विनियोगः ॥ इत्युक्त्वा जप्त्वा अस्त्रं न्यसेत् ॥ ॐ नमस्ते रुद्र मन्यव इत्यादिकं तमेषां जंभेदध्म इत्यन्तं षट्षष्टिकंडिकात्मकं शतरुद्रियाख्यं रौद्राध्यायं इति काण्वानां विशेषः ॥ इति पंचमो न्यासः ॥ एषते रुद्रभाग इति योनिमुद्रां प्रदर्शनं ॥इति॥

"अथात्मनः रुद्ररूपेण ध्यानं पंचास्यं सौम्यमात्मानं सर्वाभरणभूषितं ॥ मु-

गलांछनमूर्द्धानं शुद्धस्फटिकसन्निभं॥ फणासहस्रविस्फुर्जद्दुरगेन्द्रोपवीतिनं सप्तार्चिर्वि-ज्वलज्वलत् जटाजूटकीरीटिनं॥ सहस्रकरविभ्राजत् खट्वांगादिविभूषितं ॥ ब्रह्माड-खंडवत्काशकपालवरधारिणं ॥ देदीप्यमानं चन्द्रार्कज्वलदग्नि त्रिनेत्रिणं ॥ त्रैलोक्य-द्योतिकृद्भासस्कंधे कपालमालिनं॥ दीप्तनक्षत्रमालावदक्षमालाधरद्विज॥ निःशेषवारि-संपूर्णकमंडलुकरत्वजं॥ जगद्व्याधीर्यकृन्नादमुंचन् डमरुधारिणं केयूरबद्धनागेन्द्रमूर्द्धमणि-विराजितं ॥ मेखलाकिंकिणीमालामुक्तापंक्तिविराजितं॥ घर्घशब्दव्यक्तनिर्गच्छद्गंभीरा एव नूपुरं व्याघ्रचर्मपरिधानं व्याघ्रचर्मोत्तरीयकं॥ विद्युल्लताप्रभागंगाभातमूर्धं सुरार्चितं॥ समस्तभुवनाधारधरणीक्षासनस्थितं॥ त्रैलोक्यवनितामूर्द्धनतदेहार्द्धपार्वती॥ लक्षसूर्यप्र-भाभास्वत्रैलोक्यकृतपांडुरं। अमृतप्लुतहृष्टांगं दिव्यभोगसमाकुलं ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतं ॥ नित्यं शाश्वतमव्यक्तं व्यापिनं ध्रुवमक्षरम् ॥ द्विजो ध्यात्वैवमा-त्मानं सम्यग् रुद्रस्वरूपिणं ॥ संप्रध्वस्तोंतरायः सन् ततो यजनमारभेत् ॥ यजन-मर्चनं ॥ तद्यथा ॥ स्थंडिले वस्त्रावृते तंडुलैः सकर्णिकमष्टपत्रमंबुजं विलिख्य तन्मध्ये दशाक्षरं मंत्रं विलिखेदित्येवं पीठप्रकल्पनं ॥ नमः शंभवाय० स्थंडिलपूजनं ॥ मा-नोमहान्त० इति सिद्धमंत्रस्मरणं॥ स्वदक्षिणभागे साधारस्य ताम्रपात्रस्य स्थापनं॥ ॐ नमः शंभवाय० तीर्थोदकेनार्घपात्रपूरणं॥ गंधपुष्पाक्षतानां तत्र प्रक्षेपः॥ ॐ नमः शं-भवाय० अष्टकृत्वोभिमंत्रणं॥ नमः शंभवाय० पात्रान्तरगृहीतेन तदुदकेन पूजासंभा-रान् प्रोक्षयेत् ॥ आसनाद्युपचारसमर्पणादिवक्ष्यमाणं सर्वं देवकार्यमनेनैवार्घोदकेन कर्त्तव्यं ॥ ततो अक्षतैः पूर्वोक्तप्रकारेण पीठपूजां कुर्यात् ॥ ॐ नमो भगवते सक-लगुणात्मशक्तियुतायानन्ताय योगपीठात्मने नम इति कर्णिकायां पुष्पांजलिना संपूज्य ॥ सत्यज्ञानानन्तानंदरूपं परंधामैव सकलपीठमिति चिन्तयेदिति पीठपूजा ॥ अथ पीठोपरि स्थापिते पात्रे शिवलिंगं धातुमयीं वा शैवीं प्रतिमां प्रतिष्ठाप्यावा-हनं ॥ तद्यथा॥ स्वललाटे ज्योतिरूपं शिवं चिरं ध्यात्वा॥ ॐ नमः शंभवाय० मंत्रा-न्ते भगवन्तं शिवमावाहयामीत्युक्त्वा श्वेतपर्वतमस्तकात्सूर्यमंडलात् स्वहृत्कमलाद्वा द्वी-पात् द्वीपान्तरमिव निर्गतं दक्षिणनासापुटेनांजलिस्थपुष्पेष्वागतं देवं विभाव्य शिव-लिंगादावंजलिस्थपुष्पप्रक्षेपेण शिवस्यावाहनं ॥ शिवनाभिबाणलिंगादौतु नावाहनं ॥ किन्तु आवाहनस्थानापन्नमावाहनं पुष्पांजलिदानमात्रमिति विशेषः ॥ ततो देव-मूर्ध्नि दशाक्षरन्यासः ॥ ॐ नमः नंनमः मोंनमः भंनमः गंनमः वंनमः तेंनमः रुं-नमः द्रांनमः यंनमः ॥ ततः सद्योजातमिति पश्चिमवक्त्रे ॥ वामदेवाय० उत्तर-वक्त्रे ॥ अघोरेभ्य० दक्षिणवक्त्रे ॥ तत्पुरुषाय० पूर्ववक्त्रे ॥ ईशानः सर्व० ऊर्ध्व-वक्त्रे ॥ तत आवाहनादिपूजा ॥ नमः शंभवायेत्यावाहनमासनं च ॥ नमो भग-

वते रुद्रायेति दशाक्षरेण पाद्यमर्घ्यं च ॥ नमः शंभवाय० आचमनं ॥ स्नानपीठे देवमुपवेश्य पंचामृतैः पृथक् पृथक् स्नपनं ॥ घृतंघृतपावान० घृतेन स्नपनं ॥ अपां रस० शर्करया स्नपनं ॥ ॐ देवस्यत्वेति त्रिभिर्वारिणा स्नपनं॥ ततो गंधोदकेन प्रणवान्वितैर्न्यासमंत्रैर्मानस्तोकेऽइत्यनेन नमः शंभवायेत्यनेन च स्नपनं ॥ ते च न्यासमंत्रा इमे ॥ याते रुद्र शिवातनूरघोरा० असिमन्महत्यर्णवे० असंख्यातासहस्राणि० त्र्यंबकं यजामहे० त्र्यंबकं यजामहे सुगंधिं पतिवेदनं० मानस्तोके० अवततधनु० नीलग्रीवाः शीतिकंठाः दिवं० नीलग्रीवाः शीतिकंठा० नमस्त आयुधाय० येतीर्थानि० नमो वः किरिकेभ्यः ॥ नमोहिरण्यबाहवे० इमारुद्राय० मानोमहान्त० एषतेरुद्रभाग० अवरुद्रमद० अध्यवोचत्० नमोबिल्मिने० नमोस्तु नीलग्रीवाय० प्रमुंच धन्वन० य एतावन्त० नमोभगवते रुद्रायेति न्यासमंत्राः ॥ २१ ॥ मानस्तोके० नमः शंभवायेति स्नपनमंत्राः ॥ नमः शंभवायेति मंत्रेण स्नानाचमनकौपीनदानकपर्दबंधनसिंहासनोपवेशनानि ॥ ततो देवस्यावाहनादिमुद्राप्रदर्शनं ॥ भगवन् श्रीरुद्र त्वावाहितो भवेत्यावाहनं ॥ भगवन् श्रीरुद्र त्वं सुप्रतिष्ठितो भवेति स्थापनं ॥ भगवन्श्रीरुद्र त्वं सन्निहितो भवेति सन्निधानं ॥ भगवन्श्रीरुद्र त्वं सन्निरुद्धो भवेति सन्निरोधः ॥ ॐ हृदयाय० नं शिरसे० मों शिखायै० रुं कवचाय० द्रां नेत्रत्रयाय० यं अस्त्राय फट् इत्येवं पुष्पेण दर्भाकुरेण वा स्पृशन् देवे षडंगन्यासं कृत्वा। भगवन् रुद्र त्वं सकलीकृतो भवेति सकलीकरणं ॥ भगवन् श्रीरुद्र त्वं अवगुंठितो भवेत्यवगुंठनं ॥ भगवन् श्रीरुद्र त्वं अमृतीकृतो भवेत्यमृतिकरणं ॥ भगवन् श्रीरुद्र त्वं परमीकृतो भवेति परमीकरणं ॥८॥ अथैतासां लक्षणानि ॥ सम्यक् संपुटितैः पुष्पैः कराभ्यां रचितांजलिः ॥ आवाहनी समाख्याता मुद्रा देशिकसत्तमैः ॥ १ ॥ अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि ॥इति स्थापनमुद्रा ॥२॥ आश्लिष्टमुष्टियुगला प्रोन्नतांगुष्ठयुग्मिका ॥ सन्निधाने समुद्दिष्टा मुद्रेयं तंत्रवेदिभिः ॥ अंगुष्ठगर्भिणी सैव सन्निरोधा समीरिता देवतांगे षडंगानां न्यासः स्यात्सकलीकृता ॥ सव्यहस्ते कृता मुष्टी दीर्घाधोमुखतर्जनी ॥ अवगुंठनमुद्रेयमभितो भ्रमितामते ॥ अन्योन्याभिमुखाश्लिष्टाः कनिष्ठानामिकाः पुनः ॥ अथातस्तर्जनी मध्या धेनुमुद्रा समीरिता॥ इत्यमृतीकरणमुद्रा ॥ अन्योन्यग्रथितांगुष्ठः प्रसारितकरांगुलिः ॥ महामुद्रेयमाख्याता परमी करणे बुधैः॥ प्रयोजयेदिमां मुद्रां देवतायागकर्मणीति महामुद्रा॥ ॐ नमः शंभवाय वस्त्रान्ते आचमनं यज्ञोपवीतं तदन्ते आचमनं भूषणानि समर्पयेत्॥ ॐ नमः शंभवाय० कनिष्ठिकया गंधपुष्पधूपदीपनैवेद्याचमनानि च समर्पयेत् ॥ दशाक्षरेण नमस्कारः ॥ नमः शंभवाय० फलतांबूलदक्षिणाप्रदक्षिणानीराजनपुष्पांजलिदानानि कर्तव्यानि ॥ नमः शंभवाय ललाटे शक्लतंदुलैः पूजनं ॥इति॥

"अथ पंचवक्त्रपूजा"—सद्योजातो व्यमीमितेति मंत्रान्ते सद्योजाताय पश्चिमवक्त्रायनम इति गंधादिभिः सिताक्षतैः श्वेतपुष्पैः पश्चिमवक्त्रपूजनं ॥ वामम-द्येति मंत्रान्ते वामदेवायोत्तरवक्त्राय नम इति गंधादिभिस्तुलसीशतपत्रैश्चोत्तरवक्त्र-पूजनं ॥ याते रुद्र शिवा तनूरिति मंत्रान्ते अघोराय दक्षिणवक्त्राय नम इति गंधा-दिभिर्नीलाब्जैः करवीरैश्च दक्षिणवक्त्रपूजनं तत्पुरुषमिति मंत्रान्ते तत्पुरुषाय नम इति गंधादिभि दूर्वांकुरैरर्कपुष्पैश्च पूर्ववक्त्रपूजनं ॥ तमीशानमित्यस्यान्ते ईशानायोर्ध्व-वक्त्राय नम इति गंधादिभिर्बिल्वैः कनकपुष्पैश्चोर्ध्ववक्त्रपूजनं ॥ अथ प्रकारान्त-रेण पंचवक्त्रपूजा पूर्वोक्तत्वात् नात्र पुनर्लिखिता ॥ ॐ नमो भगवते रुद्रायेत्यनेन मंत्रेण देवस्य मूर्ध्नि पुष्पांजलित्रयसमर्पणं ॥ नमो महद्भ्यः ॥ त्र्यंबकं यजामहे० ॥ नमस्ते अस्तु भगवन्० ॥ राजाधिराजायेत्यादिभिर्मंत्रैः सद्यो जातं प्रपद्यामीत्येव-मादिभिः पंचभिर्मंत्रैश्च प्रत्येकमाचारात् पुष्पांजलिदानं ॥ एषतेरुद्र भाग इति मुद्रा-प्रदर्शनं॥ इषुमुद्रा लिंगमुद्रा त्रिशूलमुद्रा पद्ममुद्रा कालकर्णिमुद्रा योनिमुद्रा धेनुमुद्रा॥ एवं देवं संपूज्य ध्यात्वा आवाहनं० मंत्रहीनं क्रियाहीनं० इति संप्रार्थ्य ॥ अनया पूजया भगवन् सपरिवारः श्रीमहारुद्रः प्रीयताम् ॥ भगवते पूजासमर्पणं ॥ नमः शंभवायेति मंत्रेण स्वात्मनि श्रीरुद्रं विसृज्य स्वात्मानं श्रीरुद्ररूपं ध्यायन् रुद्रजपो वक्ष्यमाणेन विधिना कार्यं इति दिक् ॥ इति श्रीपरशुरामात्मजेन जगन्नाथशर्मणा संशोधिते श्रीरुद्रकल्पद्रुमे जपपरिच्छेदे बृहत्पराशरोक्तः श्रीरुद्रपूजाप्रकारः ॥

## ॥ अथ श्रीरुद्रजपप्रकारः ॥

तत्रादौ ऋष्यादिस्मरणं ॥ तत्र यज्जाग्रत इत्यादीना विभ्राडित्यन्तानां पंचांग-मंत्राणां ऋष्यादिकं पूर्ववत् अनुसंधाय ॥ ॐ कारस्य ब्रह्माऋषिः दैवीगायत्रीछंदः अग्निपरमात्मादेवता महाव्याहृतीनां प्रजापतिर्देवा अग्निगंधर्वाश्चत्वारो वैकल्पिका ऋषयः दैवीगायत्री दैव्युष्णिक् दैवीगायत्री छंदांसि अग्निवायुसूर्योदेवता इति स्मृत्वा रौद्राध्यायस्य च ऋष्यादिकं स्मृत्वा जपे विनियोगः ॥ वयं सोमेत्यस्य बंधु-ऋषिः गायत्री छंदः सोमो देवता एषते इत्यनयोः प्रजापतिर्ऋषिः ॥ सामपंक्तियजु-र्जगती छंदांसि रुद्रो देवता अवरुद्रमित्यस्य प्रजापतिर्ऋषिः पंक्तिश्छंदः रुद्रो देवता भेजपमसीत्यस्य प्रजापतिर्ऋषिः ककुप्छंदः रुद्रो देवता त्र्यंबकमित्यनयोः क्रमेण वसि-ष्ठप्रजापतिऋषि अनुष्टुप्छंदः त्र्यंबको रुद्रो देवता एषते इत्यस्य प्रजापतिऋषिः आस्ता-रपंक्तिश्छंदः रुद्रो देवता आयुषमित्यस्य नारायणऋषिः उष्णिक्छंदः आशीर्देवता शि-वोनामें त्यस्य प्रजापतिऋषिः प्राजापत्याबृहतीछंदः क्षुरोदेवता निवर्त्तयामीत्यस्य प्रजा-पति ऋषिः प्राजापत्या त्रिष्टुप्छंदः लिंगोक्तादेवता जपे विनियोगः॥ नतं विदाथ वि-

श्वकर्मेत्यनयोः विश्वकर्माभौवनऋषिः त्रिष्टुप्छंदः विश्वकर्मदेवता जपे विनियोगः ॥ उग्रश्चेत्यस्य प्रजापतिऋषिः परमेष्ठीप्राजापत्यो वागूगायत्रीछंदः मरुतोदेवता अग्निं हृदयेत्यादीनां यजुषां प्रजापतिऋषिः लिंगोक्तादेवता ॥ आयासाय स्वाहेत्यादीनां यजुषां प्रजापतिऋषिः लिंगोक्तादेवता जपे विनियोगः ॥ वाजश्चमे प्रसवश्च इत्यादीनां वेदूस्वाहेत्यन्तानां चमकमंत्राणां देवाऋषयः ॥ यजुष्त्वान्नछंदो विशेषनियमः ॥ अग्निर्देवता जपे विनियोगः ऋचं वाचमित्यस्याध्यायस्य दध्यङाथर्वणऋषिः सकलाध्यायस्य विश्वेदेवादेवता ॥ ऋचं वाचमिति चतुर्णां यजुषां दैवीजगतीछंदः ऋगादयो लिंगोक्तादेवता ॥ वागोज इत्यस्य यजुर्जगतीछंद वागादिर्लिंगोक्तादेवता ॥ यन्मे इत्यस्य पंक्तिछंदः बृहस्पतिर्देवता महाव्याहृतीनां दध्यङाथर्वणऋषिः दैवी गायत्री दैव्युष्णिक् दैवीगायत्रीछंदांसि अग्निवायुसूर्याः क्रमेण देवताः ॥ तत्सवितुरिति दध्यङाथर्वणऋषिः गायत्रीछंदः सवितादेवता ॥ कयान इति त्र्यृचस्य दध्यङाथर्वणऋषिः द्वयोर्गायत्रीछंदः तृतीयापाद निवृद्गायत्रीछंदः रुद्रोदेवता ॥ कयात्वमित्यस्यानिरुक्तागायत्रीछंदः इन्द्रोदेवता ॥ इन्द्रो विश्वस्यति द्विपदाविराट्छंदः इन्द्रोदेवता शन्नोमित्रः शन्नोवा इति द्वयोरनुष्टुप्छंदः मित्रावरुणयोर्लिंगोक्तादेवता ॥ शन्न इन्द्राग्नीत्यस्य त्रिष्टुप्छंदः इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ ईंद्रासोमौच देवता ॥ शन्नोवीरित्यस्य गायत्रीछंदः आपोदेवता ॥ स्योना पृथिवी० दध्यङाथर्वणऋषिः गायत्रीछंदः पृथिवीदेवता ॥ आपोहिष्ठेति तृचस्य दध्यङाथर्वणऋषिः गायत्रीछंदः आपोदेवता ॥ द्यौः शांति० शक्करीछंदः द्यौरादयोर्लिंगोक्तादेवता ॥ द्रते द्रंहे० ब्राह्मी अनुष्टुप्छंदः आशीर्देवता ॥ द्रतेद्रंहेत्यस्य उष्णिक्छंदः आशीर्देवता ॥ नमस्ते हरसे० दध्यङाथर्वणऋषिः बृहतीछंदः अग्निर्देवता ॥ नमस्ते अस्तु यतोयतः इत्यनयोरनुष्टुप्छंदः आद्याया विद्युत्स्तनयित्नुर्भगवान् देवता ॥ द्वितीयाया महावीरो देवता ॥ सुमित्रियान० दध्यङाथर्वणऋषिः प्राजापत्याजगती आपोदेवता ॥ तच्चक्षु० उष्णिक्छंदः इति कात्यायनः ॥ ब्राह्मीत्रिष्टुप्न्यूहंनादत्यष्टिर्वाछंद इति देवयाज्ञिकादयः ॥ अक्षरातीतं पुर उष्णिक्छंद इत्यावारा दर्शकार श्रीदत्तोपाध्यायः ॥ श्रीसूर्यो देवता ॥ सर्वाध्यायस्य शान्तिकरणे विनियोगः ॥ एवमृष्यादीनि स्मृत्वा जपश्च कर्तव्यः ॥ स यथा ॥ ॐ यज्जाग्रत इत्यादीनां विभ्रादित्यनुवाकान्तानामंगपंचकमंत्राणां पूर्वं जपः ॥ ॐ भूः ॐ भुवः ॐ स्वः इत्यन्तस्याष्टप्रणवयुक्तस्य रौद्राध्यायस्य च जपः ॥ ॐ वयं सोमेत्यष्टानां कंडिकानां च जपः ॥ काण्वानां वयं सोमेति सप्तानामिति विशेषः ॥ ॐ नतं विदाथेति द्वयोस्ततो जप इत्युक्तं देवपद्धतौ ॥ उग्रश्चेति तिसृणां सप्तानां वा कंडिकानां रुद्रजटासंज्ञकानां जप इति परशुरामादयः ॥ निर्मूलत्वान्नेति देवयाज्ञि-

कादयः ॥ ॐ वाजश्चमइत्यष्टानुवाकानां वेट्स्वाहेत्यन्तानां जप इति देवयाज्ञिकादयः ॥ महच्छिरो जपपक्षे न चमकानुवाकजपः ॥ चमकानुवाकजपपक्षेतु न महच्छिरो जपपक्षे न चमकानुवाकजपः ॥ चमकानुवाकजपपक्षेतु न महच्छिरो जप इत्यपरे ॥ ॐ ऋचं वाचमिति शान्तिकरणं ॥ ॐ शान्तिरिति त्रिरुच्चारणं वा ॥ इत्येको रुद्रजपप्रकारः ॥ अयमेव प्रकारश्चमकवर्जं सर्वैर्वाजसनेयिभिरादृतः ॥ इति ॥

" अथापरप्रकारः "—ॐ यज्जाग्रत इत्यादीनां नमस्ते रुद्रेति रौद्राध्यायान्तानां षडंगमंत्राणां जपः ॥ ॐ भूः ॐ भूवः ॐ स्वः ॐ इत्यंतस्याष्टप्रणवयुक्तस्य रौद्राध्यायस्य च जपः ॥ ॐ वयं सोमेत्यष्टर्चस्य च ॥ ॐ उग्रश्चेति तिसृणां सप्तानां वा कंडिकानां च ॥ महच्छिरो रुद्रजटाजपाभावपक्षेतु ॥ ॐ वाजश्चमे इत्यादीनां षेट् स्वाहेत्यन्तानामष्टानुवाकानां जपः ॥ ॐ ऋचं वाचमिति शान्त्यध्यायस्य पक्षद्वयेऽपि जपः ॥ ॐ शान्तिरिति त्रिरुच्चारणं वा ॥ इति द्वितीयप्रकारः ॥

" एवमन्यतमप्रकारेण "—जपं कृत्वा इमारुद्रायेत्यस्य कुत्सऋषिः जगतीछंदः एकोरुद्रोदेवता जपनिवेदने विनियोगः ॥ ॐ इमारुद्राय० मंत्रान्ते अनेन रुद्रजपेन भगवान् श्रीरुद्रः परमात्मा प्रीयतामिति जपनिवेदनं ॥ द्रापे० परमेष्टीऋषिः उपरिष्टाद्बृहतीछंदः एकोरुद्रोदेवता अष्टांगप्रणामे विनियोगः ॥ ॐ द्रापे० अष्टांगप्रणामः ॥ विकिरिद्र० परमेष्टीऋषिः एकोरुद्रो देवता विसर्जने विनियोगः ॥ ॐ विकिरिद्र० विसर्जनं ॥ ध्यानं ॥ त्रिलोचनं चतुर्बाहुं सर्वाभरणभूषितं ॥ नागयज्ञोपवीतं च व्याघ्रचर्मोत्तरीयकं ॥ वृषस्कंधसमारूढमुमादेहार्द्धधारिणं ॥ अमृतेनाप्लुतं शान्तं चन्द्रार्द्धकृतशेखरं ॥ शुद्धस्फटिकसंकाशं जटामुकुटमंडितं ॥ वरदाभयहस्तं च सर्वकामफलप्रदं ॥ एवं ध्यात्वा द्विजः सम्यक् अनंगांगहरं हरं ॥ स्तुतिपाठः ॥ अनादिनिधनो रुद्रो गीयते श्रुतिभिः सदा ॥ राजसेन स्वयं रुद्रस्त्वितयं त्वयि संस्थितं ॥ नमामि त्वां विरूपाक्ष नीलग्रीव नमोस्तुते ॥ त्रिनेत्राय नमस्तुभ्यमुमादेहार्द्धधारिणे ॥ त्रिशूलधारिणे तुभ्यं भूतानां पतये नमः॥ पिनाकिने नमस्तुभ्यं नमो मीढुष्टमाय च॥ नमामि त्वां महाभूतपतये त्वां नमाम्यहं॥ स्वयंभिक्षान्नभोक्तानांभक्तानां राज्यदः स्वयं ॥ सूर्यरूपं समासाद्य देहिनां देहदायक ॥ यतीनां मुक्तिदस्त्वं च मुक्त्यर्थानां च मुक्तिदः ॥ यदृच्छया सर्वमिदं ततं मध्ये च पालितं ॥ अन्ते विलयं नीतं शक्तिः कस्य भवादृते॥ मंत्रहीनः क्रियाहीनो भक्तिहीनो महेश्वर॥ जपः संपूर्णतां यातु त्वत्प्रसादात् त्रिलोचन ॥ अनुस्वारेण हीनस्य जपस्याम्रेडितस्य च ॥ दोषाः प्रयान्तु नाशं च त्वत्प्रसादान्महेश्वर ॥ महारुद्रजपोऽयं मे न्यूनो वाप्यधिकोऽपि वा ॥ संपूर्णस्त्वत्प्रसादाच्च भूयाद् भूतिविभूषण ॥ इति श्रीरुद्रकल्पद्रुमे जपपरिच्छेदे रूपकाख्याद्यरुद्रजपपद्धतिः ॥

## ॥ अथ द्वितीयरुद्रजपपद्धतिः ॥

तत्राऽऽवासनोपवेशनाचमनप्राणायामसंकल्पान् कृत्वा ॥ छंदः पुरुषन्यास-पुरः सरान् पंचविधान अंगन्यासांश्च पूर्ववत् कृत्वा श्रीरुद्रपूजनं॥ ॐ यज्जाग्रत इत्यादीनां विभ्राडित्यनुवाकान्तानामंगपंचकं मंत्राणां प्रणवस्य महाव्याहृतीनां रौद्राध्यायस्य वयंसोमेति महच्छिरो नतंविदाथेति द्वयोरुग्रश्चेति जटायाश्च शान्त्यध्यायस्य च ऋष्यादिकं स्मृत्वा जपे विनियोगः ॥ इति ब्रूयात् ॥ ॐ यज्जाग्रत इत्यादीनां नेत्रमंत्रवर्जितानां रौद्राध्यायान्तानां अंगपंचकमंत्राणां पूर्वजपः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ नमस्ते रुद्रेत्यादिकस्य तमेषां जंभे दध्मः॥ ॐ भूः भुवः ॐ स्वः ॥ ॐ इत्यन्तस्य रौद्राध्यायस्य दशकृत्वो जपः ॥ ॐ यज्जाग्रत इत्यादिभिर्विभ्राडित्यनुवाकान्तैः पूर्वोक्तैरंगपंचकमंत्रैः समन्वितस्य केवलस्य वा रौद्राध्यायस्यैकावृत्त्या जपः ॥ ॐ वयं सोमेत्यष्टौ कंडिकानां च जपः ॥ काण्वानां तु वयं सोमेति सप्तकंडिकानां जप इति विशेषः ॥ ॐ नतं विदाथेति द्वयोर्जपोऽत्रेति देवपद्धतौ ॥ ॐ उग्रश्चेति तिसृणां सप्तानां वा रुद्रजटानाम्नीनां जप इति परशुरामादयः ॥ नेति देवयाज्ञिकादयः ॥ ॐ ऋचं वाचमिति शान्त्यध्यायस्य शान्त्यर्थं जपः ॥ ॐ शान्तिरिति त्रिरुच्चारणं वा ॥ इत्येको रुद्रजपप्रकारः ॥

" अथान्यप्रकारः "—सांगमाद्यं जपेद्रुद्रं केवलानि नवान्तरं ॥ सांगं सशीर्षकं चान्त्यं निरंगमिति केचन ॥ इति परशुरामकारिकाकारा एवं माध्यंदिनाचारानुसारी अन्यप्रकारः ॥ तत्रासनोपवेशनादिश्रीरुद्रपूजनान्तं पूर्ववत् ॥ जाप्यमंत्राणां ऋष्यादिस्मरणं च पूर्ववत् ॥ ॐ यज्जाग्रत इत्यादीनां नमस्ते रुद्रेति रौद्राध्यायान्तानां षडंगं मंत्राणां जपः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॥ ॐ नमस्ते रुद्रेत्यादिकस्य तमेषां जंभे दध्मः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ इत्यन्तस्याष्टप्रणवयुक्तस्य रौद्राध्यायस्यैकादशकृत्वो जपः ॥ तदन्ते वयं सोमेत्यष्टर्चं जप्त्वा शान्त्यध्यायजपः कार्यः इति द्वितीयः ॥

" अथ तृतीयः प्रकारः "—ॐ यज्जाग्रत इत्यादीनां विभ्राडित्यनुवाकान्तानां पंचांगमंत्राणां जपपूर्वकमष्टप्रणवयुक्तस्य रौद्राध्यायस्यैकादशकृत्वो जपः ॥ तदन्तरा प्रत्यावृत्त्यष्टौ चमकानुवाकानेकादशधा विभज्यैकैकस्य चमकविभागस्य जपः॥ तत्रेत्थं प्रकारः ॥ रौद्राध्यायस्यैकावृत्तौ कृतायां ॥ ॐ वाजश्चम इति चतसृणां कंडिकानां जपः ॥ ॐ सत्यंचम इति चतसृणां द्वितीयावृत्तौ ॥ ॐ ऊर्कंचमे० चतसृणां तृतीयावृत्तौ ॥ ॐ अश्माचम० तिसृणां तुरीयावृत्तौ ॥ ॐ अग्निश्चम इन्द्रश्चम० तिसृणां पंचमावृत्तौ ॥ ॐ अंशुश्चम इति तिसृणां षष्ठावृत्तौ ॥ ॐ अग्निश्चमे घर्मश्चम०

द्वयोः सप्तमावृत्तौ ॥ ॐ एका च म इत्येकस्याष्टमावृत्तौ ॥ ॐ चतस्रश्च म इत्येकस्या नवमावृत्तौ ॥ ॐ त्र्यविश्च म इति द्वयोर्दशमावृत्तौ ॥ ॐ वाजाय स्वाहा० द्वयोरेकादशवृत्तौ ॥ अयमेकादशधाविभक्तचमकानुवाकजपः कौशिकबौधायनोर्मत एव ॥ पराशरादीनां मते तु न चमकानुवाकजपः ॥ अनुक्तत्वात् ॥ अस्मिन्पक्षे चमकानुवाकानामृष्यादिस्मरणाभावः ॐ ऋचं वाचमिति शान्त्यध्यायस्य पक्षद्वयेपि जप इति तृतीयप्रकारः ॥ अथवा पंचांगमंत्रान् जप्त्वा एकादशकृत्वो रौद्राध्यायं च जपेदिति ॥ एवमन्यतमप्रकारेण रुद्रजपं कृत्वा इमारुद्रायेति जपनिवेदनादि स्तुत्यन्तं पूर्ववत् कुर्यादिति ॥ इति द्वितीयरुद्रजपपद्धतिः ॥

" अयमेव द्वितीयो रुद्रो रुद्रैकादशिनीरुद्री रुद्र इति संज्ञात्रयं लभते ॥ एतस्यैकादशावृत्त्या एका रुद्री भवति ॥ इयमेव रुद्री रुद्रैकादशीनि लघुरुद्र इति व्यपदेशद्वयभाग् भवति ॥ अयं च तृतीयो रुद्रः ॥ लघुरुद्ररुद्रैकादशिनीति पर्यायद्वयनाम्नीभिरेको महारुद्रो भवति ॥ अयं च तुरीयः एकादशभिर्महारुद्रैरेकोतिरुद्रो भवति ॥ अयं पंचमः ॥ एवमुक्तरुद्राणामन्यतमरुद्रजपः कर्त्तव्यः ॥ अथ रुद्रस्य संकल्पादिब्राह्मणभोजनपर्यन्तं यजमानाचार्यब्रह्मार्त्विजां नियमाः ॥ हविष्यभोजनं ॥ ब्रह्मचर्यं ॥ भूशय्या ॥ पतिताद्यभाषणं ॥ अक्रोधः ॥ शुचिताद्यो द्रष्टव्याः॥ एवं चिकीर्षितरुद्रसमाप्तौ जातायां जपरुद्रे जपनिवेदनादिस्तुत्यन्तं पूर्ववत् कृत्वा ब्राह्मणभोजनं कृत्वा कर्म ईश्वरार्पणं कार्यं ॥ ऋत्विक्द्वारा जपकरणे तु ऋत्विग्भिर्यजमानहस्ते श्रेयोदानं॥ ततो यजमानेन जपनिवेदनादीश्वरार्पणान्तं कर्म कार्यमिति विशेषः ॥ होमांगजपरुद्रे तु अंगभूतो होमः कार्यः॥ शिष्टास्त्वेकादशर्त्विक् पक्षमवलंब्य आद्येहनि एकैकरुद्रीजपः ॥ द्वितीयेऽहनि रुद्रीद्वयं द्वयं ॥ तृतीयेहनि त्रयं त्रयं ॥ चतुर्थेहनि चतुष्टयं चतुष्टयं कार्यं ॥ ततः पंचमेहनि होमदीने त्वेकैका ॥ ततो होम इत्येवं पंचदिनसाध्यं महारुद्रं कुर्वन्ति ॥ एवमनेनैव क्रमेणैकत्रिंशत्यधिकैकशतऋत्विक्पक्षावलंबनेन अतिरुद्रमपि पंचदिनसाध्यमाचरन्ति ॥ इति श्रीरुद्रकल्पद्रुमे रुद्रपरिच्छेदे रुद्रजपान्तकर्मपद्धतिः समाप्तिमगात् ॥

रुद्रकल्पद्रुमे चास्मिन् जपरुद्रः प्रपंचितः ॥ विदुषानन्तदेवेन तेन तुष्यतु शंकरः ॥

इति श्रीसूर्यपुरनिवासिना भीतडाखेडावालविप्रजातीयेन
द्विवेद्युपनामकपरशुरामात्मजेन जगन्नाथशर्मणा
संशोधिते श्रीरुद्रकल्पद्रुमे जपपरिच्छेदः

॥ समाप्तः ॥

# ॥ अथ होमपरिच्छेदः ॥ ६ ॥

सिद्धिवृद्धिप्रदातारं विघ्नव्यूहविदारणं वंदे महागणपतिं शिवविष्ण्वादिवन्दितम् ॥१॥ अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकं ॥ श्रीमद्गुरुपदांभोजं वंदे होमस्य सिद्धये ॥ २ ॥ मुनीन् कात्यायनादीन्नत्वा श्रीमदुद्धवसूनुना ॥ रुद्रकल्पद्रुमाख्योऽयं निबन्धस्तन्यते मया ३ हेमाद्र्यादिनिबंधास्तु बहवः सन्ति यद्यपि ॥ तेभ्यस्त्वस्य विशेषो यः पंडितैरवधार्यताम् ४

## ॥ अथ खातपूजनम् ॥

तत्रादौ होमरुद्रजपरुद्रांगहोमयोस्तंत्रेणेति कर्त्तव्यतोच्यते ॥ तत्रादौ जपरुद्रे त्वाचार्यादिऋत्विक् वरणान्ते परीक्षापूर्वकं मंडपार्थं यागोचितभूमिपरिग्रहं कृत्वा मार्जनखननदहनाद्यपसारणादिशोधितां शल्यनिरसनपूर्विकां शुद्धमृद्भिरापूरितां दृढां भूमिं समां कृत्वा तस्यां मंडपकुंडादिकं विदध्यात् ॥ तत्र पूर्वं स्वसमीपे गंधादिपूजासंभारोपकल्पनं ॥ देशकालौ संकीर्त्य चिकीर्षितमंडपकुंडादीनां निर्विघ्नफलसिद्धिकामो गणेशपूजां करिष्ये ॥ षोडशोपचारैर्गणेशपूजां कुर्यात् ॥ पुनर्देशकालौ संकीर्त्य करिष्यमाणमंडपकुंडाद्यंगत्वेन भूमिकूर्मानन्तपूजां करिष्ये ॥ चतुर्भुजां शुक्लवर्णां कूर्मपृष्ठोपरि स्थितां ॥ पद्मशंखचक्रशूलधरां च प्रसन्नाननां ॥ इति भूमिं ध्यात्वा ॥ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि ॥ पृथिवि ब्रह्मदत्तासि कश्यपेनाभिवन्दिता ॥ इति भूमिमावाह्य ॥ भूरसीति मंत्रेण भूम्यै नम इत्यन्तेन भूम्यै सकलपुष्पांजलिदानं ॥ ॐ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ दंष्ट्राग्रे र्लीलया देवी यज्ञार्थं प्रणमाम्यहं ॥ इति दंडवत्प्रणम्य ॥ अष्टांगार्घ्यं गृहीत्वा जानुभ्यां धरणीं गत्वा ॥ ब्रह्मणा निर्मितां देवि विष्णुना शंकरेण च॥ पार्वत्या चैव गायत्र्या स्कंदवैश्रवणेन च ॥ यमेन पूजिते देवि धर्मस्य विजिगीषया ॥ सौभाग्यं च प्रयच्छं मे इत्यनेन भूम्यै अर्घ्यदानं ॥ भूरसीत्यस्य प्रजापतिऋषिः प्रस्तारपंक्तिछंदः भूमिर्देवता भूमिपूजने विनियोगः ॥ इति स्मृत्वा ॥ ॐ भूरसीति मंत्रेण भूम्यै नम इत्यनेन गंधादिभिः पंचोपचारैरभ्यर्चनं ॥ नाममंत्रेण वा भूमिपूजनं ॥ ॐ सपरिवारायै भूम्यै० बलिं समर्पयामि ॥ इति गंधपुष्पपायसलाजासक्तुभिः सघृतैः सदीपैर्महाबलिदानं ॥ बद्धांजलिना वक्ष्यमाणश्लोकैः प्रार्थना ॥ ॐ नंदे नंदय वसिष्ठे वसुभिः प्रजया सह॥ नम भार्गवदायादे कुरु भद्रां मतिं मम॥ सर्वबीजसमायुक्ते सर्वरत्नौषधीवृते॥ रुचिरे नंदने नंदे वासिष्ठे रम्यतामिह ॥ प्रजापतिसुते देवि चतुरस्रे महीयसी ॥ सुभगे सुव्रते देवि गृहे काश्यपि रम्यतां ॥ पूजिते परमाचार्यैर्गंधमाल्यैरलंकृता ॥ भवभूतिकरे देवि गृहे भार्गवि रम्यतां ॥ अव्यक्ते चाहते पूर्णे शुभे चां-

गिरसस्तुते ॥ इष्टदे त्वं प्रयच्छेष्टं त्वां प्रतिष्ठापयाम्यहं ॥ देशस्वामी पुरस्वामी गृहस्वामी परिगृहे ॥ मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ॥ ७ ॥ यस्य कूर्म इत्यस्य प्रजापतिऋषिः लिंगोक्ता देवता कूर्मपूजने विनियोगः ॥ ॐ यस्य कूर्म० इति मंत्रेण कूर्मपूजनं ॥ स्योना पृथिवि० मेधातिथिऋषिः गायत्रीछंदः अनन्तो देवता अनन्तपूजने० ॥ ॐ स्योना पृथिवि० अनन्ताय नम इत्यन्तेन अनन्तपूजा ॥ नाममंत्रेण वानन्तपूजा ॥ पृथिवीकूर्मानन्तपूजाविधौ यन्न्यूनातिरिक्तं तत्सर्वं परिपूर्णमस्त्विति॥ संपूर्णतामस्तु ॥ प्रार्थना ॥ आवाहनं न जानामि न जानामि विसर्जनं ॥ पूजां चैव न जनामि क्षमस्व परमेश्वरि ॥ १ ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां यान्ति सद्यो वन्दे तमच्युतम् ॥ २ ॥ इति खातपूजनप्रयोगः ॥

## ॥ अथ चतुरस्रसाधनप्रकारः ॥

तत्रादौ पूर्वोक्तप्रकारेण शोधितायां समभूमौ मंडपादिकं विदध्यात् ॥ तत्र भूसमत्वप्रकारः ॥ समयोः कीलादिना प्रोतमूलयोः पृथक् सूक्ष्माग्रयोः अग्रसमीपे समेन्तरे तिर्यक् दंडोऽन्यो मध्यांकितः कीलादिना प्रोतः कार्यः ॥ मूलात् लंबसूत्रं तिर्यक् दंडस्योपरि लंबितभूमिमप्राप्तं अधोभारवत् कार्यः ॥ दंडाग्रयोर्भून्यस्तयोः सूतोर्यत्र भागे सूत्रं तिर्यग् दंडमध्यांकीतस्खलति तत्र निम्ना भूरतः संपूरणीयाऽन्यत्र खननीया वा ॥ यावता मध्यचिन्हे सूत्रं पतति ॥ एवं भूमिः समा भवति इति॥

"तस्यां भूमौ मंडपाद्युपयोगीतया प्राची साधयेत्"—तद्रित्थं ॥ मेघाघनावृत्ते सूर्ये निर्मले नभोमंडले अहनि वृक्षप्रासादाद्यनावृत्ते भूप्रदेशे सुसमे अतिपक्वखदिरादि यज्ञियकाष्ठेन शिल्पिवरनिर्मितं अव्रणं स्फुटितं सरलं ( एकतोद्व्यंगुलवृत्तविपुलं क्रमादतिसूक्ष्माग्रं श्लक्ष्णं द्वादशांगुलोच्छ्रितमधोभागे भूमिप्रवेशार्हं शंकुं प्रमाणार्द्धं षडंगुलं निखनेत् ॥ भूमौ गमयेद्यथारूढतया शंकुः स्थितो भवति ॥ अथ शंकुप्रमाणया सार्द्धरूपया द्वादशांगुलरज्ज्वा यथोक्तलक्षणया मंडलं वृत्तं परिलिख्य मंडलरेखयोः पूर्वापरदिग्गतयोर्यस्मिन् प्रदेशे शंकोरग्रच्छाया निपतति ॥ अतिसूक्ष्मतया स्पृशति ॥ पूर्वान्हेऽपरदिग्गतलेखायां ॥ अपरान्हे च पूर्वदिग्गतलेखायां ॥ तत्र मंडललेखयोः छायाप्रवेशनिर्गमप्रदेशयोः शंकू निखनेत् ॥ चिन्हद्वयं वा कुर्यात् ॥ तयोरुपरि सूत्रं दद्यात् ॥ तत्र छायाप्रवेशनिर्गममार्गौ हि क्रमेण स्थूलमानेन प्राचीप्रतीच्यौ विज्ञातव्ये ॥ सूक्ष्मप्राची साधनं तु रामवाजपेयिभिः शूल्यवार्त्तिके उक्तं ॥ छाया प्रवेशे निर्गमार्थे वृत्ते पूर्वदिने यच्चिन्हद्वयप्रवेशनिर्गमयोःकृतं ॥ अग्रिमदिनेपि तथैव पुनः कार्यम् ॥ पूर्वदिने च छाया यदा प्रविष्टा यदा च निर्गता तदंतनालनाड्यश्छाया यंत्रादिना ज्ञातव्या ॥ दिनान्तरमंडलछायानिर्गमचिन्हपूर्वे-

दिनच्छायानिर्गमचिन्हयोरन्तरमिष्टैस्त्रिचतुरादिभिर्भागैर्विभज्य तत्र तत्रांकयेत् ॥ ताभिर्घटीभिस्ते अंतरालभागाः कल्पिताः गणनीयाः ॥ षष्ठ्या भाज्याः ॥ लब्धांशैः पूर्वदीनकृतप्राचीसूत्रपूर्वभाग एव सूर्यस्योत्तरायणे उत्तरतो दक्षिणायने दक्षिणतश्चांकयेत् ॥ ततस्तत्र पूर्वदिनकृतछाया प्रवेशचिन्होपरि सूत्रं दद्यात् ॥ सा स्फुटतरा प्राची भवति ॥ कुंडमंडपसिद्धिकारस्तु ॥ कर्कवृश्चिकवृषमकरसंक्रांतिषु तां प्राचीमेकया यूकया चालयेत् ॥ सिंहकन्यातुलासंक्रांतिषु कुंभमीनमेषसंक्रांतिषु च द्वाभ्यां यूकाभ्यां चालयेत् ॥ एतच्च सूर्यस्यायनवशादुत्तरायने उत्तरतो दक्षिणायने दक्षिणतो बोध्यं ॥ मिथुनधनुः संक्रान्तौ च चालनं नास्तीत्येवं सूक्ष्मप्राच्यानयनमाह ॥ कृत्तिकादिनक्षत्रवेधेन प्राची साधनीया तदुक्तं शुल्के कृत्तिकाश्रवणः पुष्यश्चित्रास्वात्योर्यदन्तरं ॥ एतत्प्राच्यादिशो रूपं युगमात्रोदिते पुर इति ॥ पुरः प्राच्यां दिशि युगमात्रे नक्षत्रे उदिते सति षडशीत्यंगुलमितं युगमात्रं तदुक्तं शुल्के ॥ षडशीतिर्युगमिति ॥ नक्षत्रवेधश्च नलिकायंत्रेणेत्थं कार्यः ॥ ऊर्ध्वां सूक्ष्मरन्ध्रां नलिकां काष्ठादौ बध्वा तद् रंध्रेण युगमात्रमुपरिगतं कृत्तिकादिनक्षत्रं दृष्ट्वा नलिकान्ताभ्यां प्राक् प्रत्यग् देशयोः सूक्ष्मं पाषाणद्वयमवलंबद्वयं वा प्रक्षिप्य तच्चिन्हयोः प्राची सूत्रं दद्यादिति गुरोरुपदेशः ॥ चित्रास्वात्योरंतरालज्ञानार्थोयमुपायः ॥ नलीकाद्वयेनैकेन च दंडान्तरेण त्र्यस्त्राकारं यंत्रं कृत्वा दंडं च मध्येंकयेत् ॥ नलिकाद्वयान्तौ तु तथा क्षणादिना परस्परं योजनीयौ ॥ यथैकेनैव प्रयत्नेन युगपन्नक्षत्रद्वयमपि दृश्यते ॥ एवं दृष्ट्वा मिलितान्नलिकाद्वयान्तात् दंडमध्यांकाच्च पाषाणावलंबौ वा प्रक्षिप्तव्यौ ॥ पूर्वोक्तं सूक्ष्मं प्राच्यानयनप्रकारं यो न वेद तं प्रत्ये तदिति शुल्वसूत्रवृत्तौ रामवाजपेयिनः ॥ अभ्रादिना ज्योतिषामदर्शने तु विशेषः श्लोकशुल्वे ॥ नीहारेण घनैर्वापि ज्योतिषामप्यदर्शने ॥ अप्सु दीपं प्रगृह्णीयात् छायामंभसि लक्षयेदिति ॥ एतच्च गुरुमुखादेवावगन्तव्यं ॥ गृहादौ तु गृहवाच्ये च प्राची ज्ञेयेति श्रीरामकल्पद्रुमे दानकांडे ॥ एवं प्राचीप्रतीच्यौ विज्ञाय दक्षिणोदीच्यौ विज्ञातव्ये ॥ तत्प्रकारस्तु शुल्वकृतैवमुक्तः ॥ तयोर्निखातशंकोः अन्तरालं रज्वा कृत्वा द्विगुणीकृत्य रज्वन्तयोः पाशौ प्रमांणान्तर्गतौ प्रमाणबहिर्भूतौ वाऽनियमेन कृत्वा रज्जुमध्ये आकर्षकलक्षण स्थाने शंकुं निहन्ति॰॥ तौ निखातौ शंकुदक्षिणोदीच्यौ विज्ञातव्ये ॥ रामवाजपेयिभिस्तु प्रकारान्तरमेव युक्तं ॥ प्राचीसूत्रं प्रागुक्तं तदन्तद्वयमारभ्य तन्मध्यं किंचिदुल्लंघ्य स्थितेन व्यासार्द्धेन मध्यमाभिमुखं मिथो मिलद्वृत्तान्तार्द्धद्वयं कुर्यात् ॥ तत्र यौ दक्षिणोदग्गतौ मत्स्यौ तन्मध्यांके दक्षिणोत्तरं सूत्रं पातयेत् ॥ तौ मत्स्यांकौ दक्षिणोदीच्यौ ज्ञातव्ये इति ॥

"अथ चतुरस्रसाधनोपायः"—कुंडमंडपादेर्व्यासो यावानिष्टस्तावद्द्विगुणां रज्जुमानस्य ह्रासवृद्धी न भवतः ॥ तथोभयतः ॥ सपाशां कृत्वा तामेकतः पाशाद्व्यासार्द्धमाने चिन्हयेत्तच्छंकर्थः ॥ ततः शंकंकाग्रतो व्यासार्द्धमाने चिन्हयेदाकर्षणाय ॥ तदुक्तं श्लोकशुल्वे ॥ यावत्प्रमाणा रज्जुः स्यात्तावानेवागमो भवेत् ॥ आगमार्द्धे भवेच्छंकुरन्तरार्द्धे निरंछनमिति ॥ अत्र प्रमाणरज्जुश्चतुर्भागाः ॥ तावत्येवाभ्यासरज्जुः॥ एवं च साभ्यासरज्जुरष्टभागा भवन्ति ॥ अभ्यासरज्ज्वोस्त्रिभागान्ते चतुर्थभागादौ निरंछनलक्षणं ॥ उक्तं च ॥ प्रमाणमभ्यस्याभ्यासचतुर्थे लक्षणं करोति तन्निरंछनमिति ॥ ततः कुंडमंडपादौ प्राचीसूत्रं प्रमाणेन दत्त्वा तदन्त्योः शंकुं निखाय तयोस्तद्रज्जुपाशौ तथा कुर्याद्यथा व्यासार्द्धाच्छंकोः कृतः सपाशः प्राच्यां स्यात् ॥ तत आकर्षणार्थचिन्हं निरंछनापरपर्यायं गृहीत्वा रज्जुं दक्षिणपूर्वामाग्नेयीं दिशं प्रत्याकृष्य व्यासार्द्धचिन्हे दक्षिणां सपरिच्छेदाय शंकुं दद्यात् ॥ व्यत्यस्यैवमुत्तरत उत्तरां सपरिच्छेदाय निरंछनेन रज्जुं गृहीत्वोत्तरपूर्वां दिशं प्रत्याकृष्य व्यासार्द्धचिन्हे शंकुं दद्यात् ॥ श्रोण्यंसनिरंछनलक्षणसंयुक्ताभ्यासरज्ज्वन्तपाशः पूर्वमंशपरिच्छेदार्थं प्राक् शंकौ प्रतिमुक्त आसीत् ॥ प्रमाणरज्ज्वन्तपाशस्तु प्रतीचीशंकौ तच्छ्रोणीपरिच्छेदे कर्तव्यपाशौ व्यत्यस्य श्रोण्यंसनिरंछनलक्षणयुक्ताभ्यासरज्ज्वंतः पाशस्तु प्राचीशंकौ ॥ ततः प्रतीच्यां निरंछनेनोत्तरापरा दिशं प्रतिरज्जुमाकृष्योत्तरश्रोणिपरिच्छेदाय व्यासार्द्धचिन्हे शंकुं निखनेत् ॥ अत्र केचित् प्राक्संस्थत्वं संपादनाय सौत्रक्रमं परित्यज्य पर्वश्रोणिसाधनं पश्चादंशसाधनमित्याहुः ॥ तत्पुनरयुक्तं ॥ स्तंभोच्छ्राये शिलान्यासे सूत्रयोजनकीलके ॥ खननावटसंस्कारे प्रारंभो वन्हिगोचरादिति वास्तुशास्त्रोदितश्रौतक्रमविरोधात् इति चतुरस्रसाधनप्रकारः॥

## ॥ अथ शास्त्रोक्तमंडपरचनाप्रकारः ॥

दशद्वादशहस्तो वा कनिष्ठः ॥ द्वादशहस्तश्चतुर्दशहस्तो वा मध्यमः ॥ षोडशहस्त अष्टादशहस्तो चेत्युत्तम इत्येवं त्रिविधः ॥ यद्वा ॥ लघुरुद्रे दशहस्तो मंडपः ॥ महारुद्रे द्वादशहस्तः ॥ अतिरुद्रे षोडशहस्त इति व्यवस्था ॥ विप्राणां विंशतिहस्तः॥ क्षत्रियाणां षोडशहस्तः ॥ वैश्यानां द्वादशहस्त इति व्यवस्था वा ॥ अन्ये तु विप्राणां अष्टादशहस्तः षोडशहस्तो वा ॥ राज्ञां तु षोडशभिश्चतुर्दशभिर्वा ॥ वैश्यानां द्वादशहस्तैरिति व्यवस्थामाहु ॥ तत्र स्वाभिमतमंडपप्रमाणं पूर्वोक्तप्रकारेण चतुरस्रं साधयित्वा हस्तप्रमाणोच्छ्रितामर्द्धहस्तप्रमाणोच्छ्रितां वा पूर्वभूम्यपेक्षया मंडपभूमिं समां दृढां कुर्यात् ॥ ततस्तिर्यङ्मान्यां पार्श्वमान्यां च सूत्रद्वंद्वं समान्तरालं दद्यात् ॥ एवं भूमिः समनवकोष्ठा भवति ॥ ततः आग्नेयकोणमारभ्य सकलकोणकोष्ठकेषु स्तंभ-

पंचमांशप्रमाणानवटान् खात्वा ॥ आग्नेयावटक्रमेण सर्वेष्ववटेषु सूत्रसंपातस्था-
नाद्बहिः स्तंभा निखेया इति नारायणभट्टकमलाकरभट्टादयो बहवः ॥ स्तंभ-
परिमाणाह मध्यं यथा कोणाग्रे पतति तथा निखेया इत्यपरे ॥ तत्र प्रथमाग्नेया
वटे दूर्वायवसिद्धार्थकानां प्रक्षेपः॥ उच्छ्रयस्व० प्रजापतिऋषिः ॥ यजुः।।दंडो देवता
स्तंभोत्थापने विनियोगः ॥ ॐ उच्छ्रयस्व वनस्पत० सचूडं सकर्णं वा पंचमितो ह-
स्तोच्छ्रायं दशांगुलवेष्टनयोग्यं स्तंभमुत्थाप्य ॥ ऊर्ध्व ऊषुण० काण्वऋषिः उपरि-
ष्टाद्बृहतीछंदः अग्निर्देवता स्तंभारोपणे विनियोगः ॥ ॐ ऊर्ध्व ऊषुण इति मंत्रेणा-
वटे रोपयेत् ॥ अथावटं दृढं पांसुभिः पूरयेत् ॥ समाचारात्स्तंभे पोटलीबंधनं ॥
गंधपुष्पमालादिभिः स्तंभालंकरणं ॥ ॐ यतो यतः समीहसे० प्रार्थना च ॥ एवं
प्रादक्षिण्यक्रमेण मंडपकोणेषु चतुर्द्वाराणां उभयपार्श्वेषु च मध्यकोष्ठकोणे गतस्तंभ-
चतुष्टयपंक्तिसमतयाऽष्टौ सारकाष्ठघटिता दृढा ऋजवः पंचहस्तमितोच्छ्राया दशांगु-
लसूत्रनवेष्ट्ययोग्याः सचूडाः सकर्णा वा स्तंभाः पंचमांशमवटे निक्षिप्य निखेयाः ॥
क्वचित्तु बाह्यस्तंभाः सप्तहस्ता इत्युक्तं ॥ अस्मिन् पक्षे निखननमनियतं च स्तंभ-
पंचमांशमित्यपि तत्रैव ॥ मंडपमध्यकोष्ठचतुःकोणेष्वपि आग्नेयावटक्रमेणोत्तममंड-
पविस्तारार्द्धप्रमाणाः कृतचूडाश्चतुरः स्तंभा निखेया ॥ ते चाष्टहस्ता नवहस्ता वा
भवन्ति ॥ कनिष्ठमध्यमंडपेषु त्वष्टहस्ता एवेति विशेष इति रामवाजपेयिप्रभृतयः ॥
शारदातिलकव्याख्यातारो राघवभट्टास्तु मध्यस्तंभाः षोडशहस्तमंडपे एव ॥ एवं
बाह्यस्तंभा अपि पंचहस्ताः षोडशहस्तमंडपादौ अष्टादशहस्तमंडपादौ च बाह्यस्तं-
भमानं च त्रैराशिकेन कर्तव्यं ॥ सप्तहस्तमितबाह्यस्तंभपक्षेप्येवमित्याहुः ॥ त्रैराशि
कंतु उपरिष्टाद्वक्ष्यामः ॥ अन्ये तु सर्वे स्तंभाश्चतुरस्राः कर्तव्याः चतुरस्रमादेशादन्य
दिति शुल्वसूत्रादित्याहुः ॥ यदि षोडशहस्तमितमंडपे मध्यस्तंभमानमष्टहस्तमितं त-
र्हि अष्टादशहस्तमितमंडपे मध्यस्तंभमानं कियत् ॥ एवं षोडशहस्तमितमंडपे बाह्य-
स्तंभमानं यदि पंचहस्तमितं तदाऽष्टादशहस्तमितमंडपे बाह्यस्तंभमानं कियदित्येवं त्रै-
राश्यं कल्पनीयं ॥ अस्मिन्पक्षे तिर्यङ्मानं पार्श्वमानं च दशांगुलं ॥ चूडास्तु स्तंभ-
प्रमाणान्तर्गता स्तंभप्रमाणा बहिर्भूता वा चतुरंगुलाः कर्तव्याः॥ एषु चतुर्षु स्तंभेषु
बलिकाख्यानि चत्वारि तिर्यक् काष्ठान्युभयतो रंध्रद्वयवन्ति चूडाप्रोतरंध्रद्वयानि नि-
डासु प्रोतानि कार्याणि ॥ कर्णादिषु वा निधेयानि ॥ मध्यकोणस्तंभबाह्यस्तंभको-
णयोरेकैकमिति चतुर्षु कोणेषु चत्वारि काष्ठानि निधेयानि॥ एषु च कटादिभिरु-
पर्याच्छादयितुं योग्यवंशान् काष्ठानि वा यथासंभवं निधेयानि ॥ बलिकोर्ध्वान्यपि
कोणस्थितानि काष्टकलशप्रोतानि चत्वारि काष्ठानि निधेयानि ॥ मध्यस्तंभचतु-

ष्टयोपरि शिखराकारता संपादनीया ॥ मंडपभूमिमधोपरि अधस्तनस्थकलशाग्रस्य उच्चता तु त्रैराशिकात् ज्ञेया॥ त्रैराशिकं त्वित्थं ॥ यदि षोडशहस्तमिते मंडपे तृतीयांशे अष्टहस्तमितस्तंभोच्छ्राये सति मंडपार्द्धे मंडपमध्यकलशे कियानुच्छ्रायः॥ शृणु तत्र न्यासः ॥१॥८॥१॥ सवर्णिते ३।८।२। उक्तरीत्या गुणिते २४ भक्ते लब्धमुच्चत्वं १२॥ एवं च मंडपभूमिमध्योपरि अधस्तनस्थकलशाग्रस्य द्वादशहस्तमितायां उच्चतायां प्राप्तायां स्वस्वपंचमांशेन न्यूनता कर्त्तव्या॥ काष्टकलशप्रोतानां काष्टानां मानं स्वार्थिकं ॥ एवमेव मंडपान्तरेषु कलशाग्रस्य उच्चत्वमूहनीयं ॥ ततः प्रागादिचतुर्दिक्षु द्विहस्तविस्तृताणि चत्वारि द्वाराणि दिक् शंकूनामभितो हस्तमात्रे पंचहस्तोच्छ्रायपंचमांशानि खनेत् ॥ एतद्द्वारशाखानि द्विविधेऽपि कनिष्टमंडपे चतुरंगुलाधिकद्विहस्तविस्तृतानि ॥ उत्तममंडपे तु द्विकरा यामानि अत्र सर्वत्र हस्तस्तु प्रपदोच्छ्रितस्य समस्थितस्य वा यजमानस्योर्ध्ववाहोः पंचमांशः ॥ तस्य चतुर्विंशोऽगुलं ॥ अथ मंडपो द्वारवर्जं समंतत उपरि च नारिकेलादिदलैर्वा शोभनैरन्यैः पल्लवैर्वा वेणुभिर्वा कटैर्वा प्रच्छादनीयः ॥ ततो मंडपद्वारेभ्यो वहिर्हस्तमात्रे तोरणशाखाः पंचमांशैर्निखेयाः ॥ अश्वत्थे वावटे वाशाखे पूर्वस्यां ॥ औदुंबरे वा प्लक्षे वा दक्षिणस्यां ॥ प्लाक्षे औदुंबरे वा प्रतीच्यां ॥ वटे वाश्वत्थे वा उदीच्यां ॥ शाखाश्चैतद्वृक्षचतुष्टयालाभे एतेषां मध्ये एकवृक्षोद्भवा वा ॥ शमीवृक्षोद्भवा वा तदभावे जंबूखदिरतालवृक्षान्यतमजा वा अच्छिद्राः सरलाः समप्रमाणाः सत्वचः कनिष्ठमध्यमोत्तममंडपेषु क्रमात्पंचषट्सप्तहस्तोच्चाः ॥ उपरि कृतचूडासु च तासु उभयतः सविलानि तिर्यक् काष्ठानि प्रोतानि कार्याणि ॥ तानि द्विहस्तान्तरालानी कनिष्ठे ॥ षडंगुलाधिकान्यंतरालानि मध्यमे ॥ द्वादशांगुलाधिकान्यन्तरान्युत्तमे ॥ तेषामुपरि मध्यप्रदेशे त्रिशूलाकाराः कीला निवेश्याः ॥ तेषु च मध्यकीलः सरलः ॥ तमुभयतोऽन्यौ किंचिन् वक्रौ ॥ नवांगुलोच्चत्वं सपादद्व्यंगुलो विस्तारः ॥ अर्धांगुलद्वयं ॥ एतच्च कनिष्ठमंडपे ॥ मध्यमे त्वेकादशांगुलोच्चता पादोनत्र्यंगुलो विस्तारः ॥ त्र्यंगुलो बिलप्रवेशः ॥ उत्तमे तु त्रयोदशांगुलोच्चता ॥ सपादत्र्यंगुलो विस्तारः चतुरंगुलो बिलप्रवेशः ॥ एवं फलकप्रान्तयोरपि त्रिशूलं कार्यं ॥ एतत्तोरणस्वरूपं ॥ ततः सदलसफलैर्नारिकेलक्रमुककदलीनामन्यतमस्तंभैर्दर्पणैर्विचित्रवस्त्रबंधैश्चामरैर्घंटिकाभिर्भांडोच्छ्रायैश्च सकलस्तंभालंकरणं ॥ वितानचामरपट्टकूलपुष्पमालादर्पणघंटिकाभक्ष्यखाद्यनानाविधपल्लवैश्चालंकरणं ॥ उक्तालंकरणासंभवे पुष्पमालापल्लवैर्वा मंडपालंकारोऽवश्यं संपादनीयः ॥ अनुक्तमाधनैर्युक्त इत्यादीना दोषश्रवणात् ॥ विंशद्धस्तप्रमाणेन मंडपं कूटमेव चेति लिंगपुराणे

मंडपकूटयोर्विकल्पाभिधानात्तयोर्भेदो हेमाद्रिणैवमुक्तः ॥ मध्यस्तंभवलिकोपरिगतै-श्चतुर्भिरष्टभिर्वा मृदंगाकारकलशमोतः काष्ठैर्मध्ये शिखराकारयुतः कूटः ॥ कूटोस्त्रि-शिखरं शृंगं इत्यभिधानानुसारात् ॥ मध्यस्तंभोपरि समतयाच्छादितो मंडप इति ॥ संप्रति तु कूट एवादरो लोकानां ॥ तत्रैव च मंडपभ्रम इति ॥ एवं विरचिते कूटे मंडपे वा मंडपतृतीयांशेन इष्टकाभिरपक्वाभिर्मंडपमध्यभागे समचतुरस्रा वेदी का-र्या ॥ तस्याश्चोच्छ्रायो वेद्या यामस्य तृतीयांशेन चतुर्थांशेन पंचमांशेन सप्तमांशेन नवमांशेन एकादशांशेन चेति षट्पक्षाः ॥इति॥

## ॥ अथ कुंडरचनाप्रकारः ॥

तत्रादौ तस्मिन् मंडपे वेदितः पूर्वपश्चिमोत्तरेशानीनामन्यतमदिशि कुंडं कुर्यात्॥ तच्च कुंडपंचाशन्मात्रहोमे मुष्टिमात्रे होमे मुष्टिमात्रं ॥ शतहोमं त्वरत्निमात्रं ॥ सहस्र-होमे हस्तमितं ॥ अयुते द्विहस्तं ॥ लक्षे चतुर्हस्तं ॥ शीघ्रदाहिद्रव्यलक्षहोमे हस्तमात्रं वा द्विलक्षं द्विहस्तमित्यादिलक्षवृद्ध्या वृद्धिमाहुर्यावद्दशलक्षं ॥ दशलक्षेषु षड्हस्तं वा ॥ कोटावष्टहस्तं दशहस्तं वा ॥ स्थूलद्रव्यहोमे षोडशहस्तं वा ॥ अत्रानुक्तकुंड-विशेषहोमोऽधिकसंख्यो न्यूनसंख्याविहिते कुंडे कार्यो नाधिकसंख्याविहिते ॥ न्यू-नसंख्याया अधिकसंख्यायामन्तर्भावात् ॥ उक्तं चाभियुक्तैः ॥ न्यूनसंख्योदिते कुंडेऽधिको होमो विधीयते ॥ अधिककुंडो न्यूनस्तु नाधिके शस्यते क्वचिदिति ॥ नृसिंहपरिचर्यायां नारायणभट्टकृतरुद्रपद्धतौ चाप्येवं ॥ तत्रैकोनपंचाशदाहुतिपर्य-न्तं स्थंडिलमेव ॥ तच्चाष्टादशांगुलपरिमाणं हस्तांतं चतुरस्रमंगुलोत्सेधं वा ॥ पं-चाशदादि नवनवत्याहुतिपर्यन्तं मुष्टिमात्रं कुंडं ॥ शताद्येकोनसहस्रपर्यन्तमरत्निमात्रं कुंडं ॥ सहस्राद्येकोनदशलक्षपर्यन्तं हस्तमात्रं ॥ अयुताद्येकोनलक्षपर्यन्तं द्विहस्तं ॥ लक्षादेकोनदशलक्षपर्यन्तं चतुर्हस्तं ॥ अयुताद्येकोनकोटिपर्यन्तं षड्हस्तं ॥ कोटिमार-भ्याधिकहोमे अष्टहस्तं ॥ तत्रैवाधिकतरहोमे दशहस्तमिति केचिद्विशेषमाहुः ॥ अ-परे तु विश्वकर्मणो मतमाश्रित्य त्रैराश्यमत्र कृत्वा कुंडमानं कल्पयन्ति ॥ तद्यथा ॥ पंचशदाहुतौ रत्निमितं कुंडं तत्रैकविंशत्यंगुलानि ॥ शताहुतिहोमे अरत्निमिते कुंडे सार्द्धद्वाविंशत्यंगुलानि ॥ तत्रैकपंचाशदाहुतिमापर्यन्तं सार्द्धांगुलमितमन्तरालं चेत्त-र्हि अशीति संख्याके इष्टहोमे कियन्मितमन्तरालमुच्यते ॥ भास्करोक्तरीत्या गुणने भक्ते च कृते लब्धं फलं पूर्वफले एकविंशत्युंगुलमिते योजिते यत्फलमायाति तदेव अशीति संख्याके इष्टहोमे कुंडमानं ॥ एवं शतसहस्रादि कोटिहोमान्तेषु अन्त-रालाहुतीनां त्रैराश्यं बोध्यं ॥ यद्यपि कात्यायनमतानुवर्त्तिनामरत्निहस्तयोर्भेदो नास्त्येव ॥ तथापि भेदनिर्देशादिह कुंडमाने भेद एव ॥ स चेत्थं ॥ पुरुषपंच-

मांशो हस्तः ॥ तस्य चतुर्विंशांशोंऽगुलः ॥ तत्र रत्निपरपर्याये मुष्टिकुंडे एकविंशत्यंगुलो विस्तारः ॥ अरत्निकुंडे सार्द्धद्वाविंशत्यंगुलः ॥ एकहस्ते चतुर्विंशत्यंगुलयामविस्तारौ ॥ द्विहस्ते चतुस्त्रिंशदंगुलानि ॥ इमानि पादोनयूका चतुष्टयन्यूनानि ॥ अल्पान्तरत्वात्पूर्णान्येव धृतानि ॥ त्रिहस्ते पंचयवाधिकैकचत्वारिंशदंगुलानि ॥ चतुर्हस्तोऽष्टाचत्वारिंशदंगुलानि ॥ पंचहस्ते पंचयवाधिकानि त्रिपंचाशदंगुलानि ॥ षट्हस्ते पादोनैकोनषष्ठिः ॥ सप्तहस्ते सार्द्धत्रिषष्ठिः ॥ नवहस्ते द्वासप्तति ॥ दशहस्ते यवोनाषट्सप्ततिः ॥ षोडशहस्ते षण्नवत्यंगुलानि ॥ यत्र यवोंगुलस्याष्टमांशः ॥ इत्थमाहुतिसंख्याभेदेन कुंडभेदोक्ते वक्ष्यमाणाहुतिसंख्यानुसारिकुंडं कर्तव्यं ॥ तच्च चतुरस्रं ब्राह्मणस्य ॥ वृत्तं क्षत्रियस्य॥ अर्धचंद्राकारं वैश्यस्य॥ चतुरस्रयोन्यर्द्धचन्द्रत्र्यस्रवृत्तषडस्रपद्माष्टास्रसप्तास्रपंचास्राणि कुंडानि सर्वसिद्धिपुत्रसुखावाप्तिवैरिनाशशान्तिमारणछेदनवृष्टिरोगनाशाऽभिचारशान्तिभूतोत्सादनादि दशविधिकामनायां सर्वेषां कार्याणि ॥ चतुरस्रकुंडसाधनप्रकारस्तु पूर्वोक्त एव बोध्यः ॥ अन्येषां रचनाप्रकारस्तु ग्रंथान्तरतो ज्ञेयः ॥ ग्रंथगौरवान्नेहोक्तः ॥इति॥

## ॥ अथ कुंडमानसिद्ध्यर्थमाहुतिसंख्याप्रकारः ॥

तत्र बौधायनः ॥ ततो होमं प्रकुर्वीत नमः शंभवमंत्रतः ॥ रुद्रैकादशिजप्ये त्रयस्त्रिंशदथाहुतिः ॥ रुद्रे शतत्रयं प्रोक्तं षष्ठ्या अधिकयायुतं ॥ रुद्रे लघुरुद्रे ॥ चत्वारश्च महारुद्रे सहस्राः सप्तवर्जिताः ॥ चत्वारिंशत्सहस्राश्च कर्तव्याश्चतुरुत्तराः ॥ ऊनाश्च सप्त सप्तत्या ह्यतिरुद्रे विनिश्चय इति ॥ अनेन च प्रतिरूपं तिस्रस्तिस्र आहुतय इत्युक्तं भवति ॥ बृहत्पराशरस्तु ॥ अक्षतान्वा तिलान्वापि यवान्वा समिधोपि वा ॥ शंभवायेति जुहुयात्सर्वांस्तानाज्यसिक्तकान्॥ इत्यनेन होमे द्रव्यं मंत्रं विधाय ॥ पंचपंचाथ षट् षड्वा अष्टावष्टावथापि वा ॥ दशदशैकादशवा जुहुयात्साधको हि वा ॥ इत्यनेन संख्यान्तरमाह ॥ तेनैकवारं रौद्राध्यायवृत्तिनिमित्तो यो होमः क्रियते तत्र तिस्रः पंचषडष्टौदशैकादश वाहुतयो होतव्या ॥ इत्येते शक्त्यपेक्षया षट् विकल्पाः ॥ रुद्रे तु एकादशरूपका भवन्ति ॥ तत्रैकरूपसंबंधिन्यस्तिस्रः आहुतय इति पक्षमाश्रित्य होमे कर्त्तव्ये प्रतिरूपं पंचपंचेति पंचपंचाशदाहुतयः ॥ षडाहुतिपक्षाश्रयणेन होमे तु प्रतिरूपं षट् षडिति षट् षष्टिराहुतयः ॥ अष्टाहुतिपक्षमाश्रित्य होमे तु प्रतिरूपं अष्टावष्टावित्यष्टाशितिराहुतयः ॥ दशाहुतीपक्षमाश्रित्य होमे तु प्रतिरूपं दशदशेति दशाधिकमाहुतयः ॥ एकादशपक्षाश्रयणेन होमे तु प्रतिरूपायेकादशैकादशेत्येकविंशत्युत्तरं शतमाहुतयः ॥ इति रुद्रे आहुतिसंख्या ॥

"अथ रुद्रैकादशिन्यामाहुतिसंख्या"—तत्रैकादशरुद्रा भवन्ति ॥ तेषु चैकविंशत्यधिकं शतरूपका भवन्ति ॥ तत्रैकरूपसंबंधिन्यस्तिस्र आहुतय इति पक्षमाश्रित्य होमे प्रतिरूपं तिस्रस्तिस्र इति त्रीणि शतानि त्रिषष्टिश्चाहुतयः ॥ पंचाहुतिपक्षाश्रयेण होमे प्रतिरूपं पंचपंचेति षट्शतानि षड्विंशतिश्चाहुतयः ॥ अष्टाहुतिपक्षाश्रयेण होमे तु प्रतिरूपं अष्टअष्टाविति नवशतान्यष्टषष्टिश्चाहुतयः ॥ दशाहुतिपक्षाश्रयेण होमे प्रतिरूपं दशदशेति द्वादशशतानि दशोत्तराण्याहुतयः॥ एकादशाहुतिपक्षमाश्रित्य होमे प्रतिरूपमेकादशैकादशेति त्रयोदशशतान्येकत्रिंशच्चाहुतयः ॥ इति रुद्रैकादशिन्यामाहुतिसंख्या ॥

"अथ महारुद्रे आहुतिसंख्या"—अत्रैकविंशत्युत्तरं शतं रुद्रा भवन्ति ॥ तत्रैकरूपसंबंधिन्यस्तिस्र आहुतय इति पक्षे प्रतिरूपं तिस्रस्तिस्र इति सप्तोनानि चत्वारिसहस्राण्याहुतयः ॥ पंचाहुतिपक्षे प्रतिरूपं पंचपंचेति षट्सहस्राणि षट्शतानि पंचपंचाशच्चाहुतयः॥ षडाहुतिपक्षे प्रतिरूपं षड्षडिति सप्तसहस्राणि नवशतानि षडशीतिश्च। "अष्टाहुतिपक्षे प्रतिरूपमष्टाविति दशसहस्राणि षट्शतानि अष्टाचत्वारिंशच्च ॥ दशाहुतिपक्षे प्रतिरूपं दशदशेति त्रयोदशसहस्राणि त्रीणि शतानि दशोत्तराणि च॥ एकादशाहुतिपक्षे प्रतिरूपमेकादशैकादशेति चतुर्दशसहस्राणि षट्शतान्येकचत्वारिंशच्च ॥ इति महारुद्रे आहुति संख्या ॥

"अथातिरुद्रे आहुतिसंख्या"—तत्र त्रयोदशशतान्येकत्रिंशच्च रुद्रा भवन्ति ॥ तेषां चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशच्च रूपका भवन्ति ॥ तत्रैकरूपसंबंधिन्यस्तिस्र आहुतय इति पक्षे प्रतिरूपं तिस्रस्तिस्र इति ॥ त्रिचत्वारिंशत्सहस्राणि नवशतानि त्रयोविंशतिश्चाहुतयः ॥ पंचाहुतिपक्षे प्रतिरूपं पंचपंचेति त्रिसप्तसहस्राणि पंचाधिके द्वेशते चाहुतयः॥ षडाहुतिपक्षे प्रतिरूपं षट्षडिति सप्ताशीति सहस्राण्यष्टौ शतानि षट्चत्वारिंशच्च ॥ अष्टाहुतिपक्षे प्रतिरूपमष्टाष्टावित्येकलक्षं सप्तदशसहस्राण्यष्टौ विंशत्यधिकमेकशतं च ॥ दशाहुतिपक्षे प्रतिरूपं दशदशेत्येकं लक्षं षट्चत्वारिंशच्च सहस्राणि चत्वारिंशतानि दशोत्तराणि च॥ एकादशाहुतिपक्षे प्रतिरूपमेकादशैकादशेत्येकं लक्षमेकषष्टिसहस्राण्येकपंचाशच्च ॥ इत्यतिरुद्रे आहुतिसंख्या ॥

"उक्तं च होमप्रकाशे"—जपरुद्रांगहोम एव ॥ जप्ये इति सप्तम्यामंद्रं प्रापणीयायामितिवत्तस्यांगित्वावगमात् ॥ तेनान्यमंत्रजपसामान्येन जपाच्छतांशसंख्यया दशांशसंख्यया वा महार्णवकाराद्यैरुक्तो जपरुद्रांगहोमोऽयुक्त एव ॥ ततो होमं प्रकुर्वीत नमः शंभवमंत्रतः ॥ इति नमः शंभवायेति जुहुयात् ॥ पंचपंचाथ षट् षट्वेत्यादिभिर्बौधायनपराशरादिवाक्यैर्जपरुद्रांगहोमप्रकारस्य संख्यस्य विहितत्वेन

जपरुद्रांगहोमे अन्यमंत्रजपसामान्येन मासस्य शतांशहोमादेर्बाधितत्वात् ॥ रूपसंख्या-
याहुतिसंख्यया निर्देशादपि जपरुद्रांगहोमे यज्जाग्रत इत्यादिभिः पंचभिः षड्भिर्वा
अंगमंत्रैः वयं सोमेति महच्छिरोमंत्रेण शान्तिमंत्रैश्च होमो नैव भवति॥ अन्यथा रौद्रा-
ध्यायावृत्तिनिमित्ताहुतय इव अंगमंत्राहुतयोऽप्यभिधीयेरन् ॥ नचैवमंगमंत्राणां जप-
रुद्रांगहोमे विनियोगाभावाच्च जपादिषु रुद्रेष्वपि न तेषां विनियोग इति वाच्यम् ॥
सांगस्त्वाद्यो रूपकाख्यः सशीर्षो रुद्र उच्यत इति ॥ पंचांगं सकृज्जपेदिति ॥ शत-
रुद्रियसंज्ञस्य रुद्रस्यांगानि पंच हि ॥ पंचांगान् न्यस्य तं ध्यात्वा जपेत् रुद्राँस्ततः
क्रमात् ॥ यज्जाग्रतादिषट्केच शिवसंकल्पमार्षकं ॥ रुद्रस्तु देवताषट्सु विनियोग-
जपादिषु ॥ इत्यादिभिर्वाक्यैस्तेषां रुद्रस्वरूपान्तर्निवेशस्य स्पष्टतया अभिहितत्वेन
जपादिषु त्रिविधेषु रुद्रेष्वपि विनियोगसिद्धिः ॥ तेन पंचभिः षड्भिर्वा अंगमंत्रैर्मह-
च्छिरोमंत्रेण शान्तिमंत्रैश्च विशिष्टं यादृशं रुद्रस्वरूपं जपे अभिहितं तादृशमेव रुद्र-
स्वरूपं प्रधानभूते होमरुद्रेऽपि बोध्यं ॥ प्रधानभूतहोमरुद्रेत्वाहुतीनां संख्याया उप-
पत्तिपूर्वकं रुद्रकल्पद्रुमे प्रागभिहितत्वादिदानीमाहुतिसंख्यामात्रं कुंडमानज्ञानसौकर्य-
सिद्ध्यर्थमभिधीयते॥ रुद्रे तावत्संपूर्णरौद्राध्यायस्यैकमंत्रत्वपक्षे षट्चत्वारिंशदाहुतयः॥
त्रेधाविभागपक्षे अष्टषष्ठिराहुतयः ॥ षोढाविभागपक्षे एकाधिकमेकशतं ॥ षोडशधा-
विभागपक्षे एकादशाधिकशतद्वयं ॥ चतुः चत्वारिंशन्मंत्रविभागपक्षे एकोनत्रिंशत्य-
धिकपंचशतं ॥ अष्टाचत्वारिंशन्मंत्रविभागे त्रिषष्ठ्युत्तरं पंचशतं ॥ एकषष्ठ्युत्तरशत-
धामंत्रविभागे एकसहस्रं षडुत्तराण्यष्टौ शतानिच ॥ पंचविंशत्यधिकचतुःशतधामंत्र-
विभागे चत्वारिसहस्राणि दशाधिकानि सप्तशतानि च ॥ सर्वेष्वपि पक्षेषु चमकाहु-
तयो वैकल्पिका भवन्ति ॥ चमकाहुतिपक्षे च एकस्या महच्छिरोमंत्राहुतिपूर्वोक्ताया
अभावः॥ अन्ते वसोर्धारा च सर्वेषु पक्षेषु ॥ इति रुद्रे आहुतिसंख्या ॥

" अथ रुद्रैकादशिन्यामाहुतिसंख्या ॥ तत्र रौद्राध्यायस्य मंत्रैकत्वपक्षे षड-
धिकं पंचशतमाहुतयः ॥ त्रेधामंत्रविभागे सप्त च तानि अष्टाचत्वारिंशच्चाहुतयः ॥
षोढामंत्रविभागे एकसहस्रमेकादशाधिकमेकशतं च ॥ षोडशधामंत्रविभागे द्वेसहस्रे
त्रीणिशतान्येकविंशतिश्च ॥ चतुः चत्वारिंशन्मंत्रविभागे षट्सहस्राणि त्रिनवत्यधिक-
मेकशतं च ॥ एकषष्ट्युत्तरशतधामंत्रविभागे एकोनविंशति सहस्राण्यष्टौ शतानि
षट्षष्ठिश्च ॥ पंचविंशत्युत्तरचतुः शतधामंत्रविभागे एकपंचाशत्सहस्राण्यष्टौ शतानि
दशोत्तराणि च ॥ सर्वेष्वप्युक्तपक्षेषु एकविंशत्यधिकमेकशतं ॥ चमकाहुतीनां वैक-
ल्पिकं ॥ चमकाहुतिपक्षे त्वेकादशमहच्छिरो मंत्राहुतीनां पूर्वोक्तानामभावः अन्ते
वसोर्द्धारा च सर्वेषु पक्षेषु ॥ " अथ महारुद्रे आहुतिसंख्या तत्रैकरूपस्यैकमंत्रत्व-

पक्षे पंचसहस्राणि पंचशतानि षट्षष्टिश्चाहुतयः ॥ त्रेधामंत्रविभागे सप्तसहस्राणि द्वेशते अष्टाविंशतिश्चाहुतयः ॥ षोढामंत्रविभागे द्वादशसहस्राणि द्वेशते एकविंशतिश्च॥ चतुश्चत्वारिंशन्मंत्रविभागे द्वाषष्टिसहस्राणि सप्तशतानि नवनवतिश्च ॥ अष्टाचत्वारिंशन्मंत्रविभागे अष्टषष्टिसहस्राण्येकशतं त्रयोविंशतिश्च ॥ एकषष्ठ्युत्तरशतधामंत्रविभागे लक्षद्वयमष्टादशसहस्राणि पंचशतानि षड्विंशतिश्च ॥ पंचविंशत्यधिकचतुःशतधामंत्रविभागे चत्वारिलक्षाणि पंचाशत्सहस्राणि सप्तशतानि पंचाशच्च ॥ अत्र सर्वेष्वपि पक्षेषु एकशतं त्रीणि शतानि एकत्रिंशच्चमकाहुतयो वैकल्पिका भवन्ति ॥ अस्मिन्पक्षे च एकविंशत्यधिकैकशतमहच्छिरो मंत्राहुतीनामभावः पूर्वोक्तानां॥ अन्ते वसोर्द्धारा च सर्वेषु पक्षेषु ॥ इति महारुद्रे आहुतिसंख्या ॥ "अथातिरुद्रे आहुतिसंख्या"—तत्र रौद्राध्यायस्य मंत्रैकत्वपक्षे एकषष्टिसहस्राणि द्वेशते षड्विंशतिश्चाहुतयः ॥ त्रेधा विभागे नवतिसहस्राणि पंचशतान्यष्टौ च ॥ षोढामंत्रविभागे एकलक्षं चतुस्त्रिंशत्सहस्राणि चत्वारिंशतान्येकत्रिंशच्च ॥ षोडशधामंत्रविभागे द्वेलक्षे अशीतिसहस्राणि अष्टौ शतान्येकचत्वारिंशच्च ॥ चतुश्चत्वारिंशन्मंत्रविभागे षट्लक्षाणि नवतिसहस्राणि सप्तशतान्येकोननवतिश्च ॥ अष्टाचत्वारिंशन्मंत्रविभागे सप्तलक्षाण्येकोनपंचाशत्सहस्राणि त्रीणि शतानि त्रिपंचाशच्च ॥ एकषष्ठ्युत्तरशतधामंत्रविभागे चतुर्विंशतिलक्षाणि त्रीणि सहस्राणि सप्तशतानि षडशीतिश्च ॥ पंचविंशत्यधिकचतुःशतधामंत्रविभागे द्वाषष्टिलक्षाण्येकोनसहस्राणि दश च ॥ सर्वेष्वपि पक्षेषु च चतुर्दशसहस्राणि षट्शतान्येकचत्वारिंशच्च चमकाहुतयो वैकल्पिकाः ॥ चमकाहुतिपक्षे च त्रयोदशशतान्येकत्रिंशच्च महच्छिरो मंत्राहुतयो न भवन्ति ॥ एतेषु सर्वेष्वपि पक्षेषु अन्ते वसोर्द्धारा च ॥ इत्यतिरुद्रे आहुतिसंख्या ॥

"अथ सर्वकुंडे व्यासस्य चतुर्विंशतिरंशाः कल्पनीयाः" व्यासनवांशोन्नतमेखलोन्नत्या सह व्यासतुल्यं खननं कार्यं ॥ मेखलोन्नतिं विना वा ॥ ततः कुंडस्य समन्तत एकांशं द्व्यंशं वा कुंडकंठं विहाय मेखलाः कुर्यात्॥ तत्र त्रिमेखलपक्षस्त्वेवं॥ प्रथमा मेखला नवांशोन्नता चतुरंशविस्तृता॥ द्वितीया तत्संलग्ना षडंशोन्नता त्र्यंशविस्तृता ॥ तृतीयापि तत्संलग्ना त्र्यंशोन्नता द्व्यंशविस्तृता ॥ पंचमेखलपक्षेत्वेवं ॥ प्रथमा षडंशविस्तृता नवांशोच्चा ॥ द्वितीया तत्संलग्ना पंचांशविस्तृता किंचिन्न्यूनसपादसप्तांशोच्चा॥ तृतीया तत्संलग्ना चतुरंशविस्तृता किंचिन्न्यूनसार्द्धसप्तमांशोच्चा॥ चतुर्थी तत्संलग्ना त्र्यंशविस्तृता किंचिदधिकसार्द्धत्रयंशोच्चा ॥ पंचमी तत्संलग्ना द्व्यंशविस्तृता किंचिदधिकपादोनांशद्वयोच्चा ॥ एवं च त्रिंशत्यंशो विस्तारो भवति॥ कंठाद्बहिरेकैव वा मेखला कार्या॥ सा चैवं ॥ कंठाद्बहिः षडंशविस्तृता षडंशोन्नता

चतुरंशविस्तृता चतुरंशोन्नता वा ॥ षडंशोन्नतामेखलापक्षेतु अष्टादशांशपरिमित-चतुरंशोन्नतमेखलापक्षे विंशत्यंशपरिमितः खातः कर्त्तव्यः॥ मेखलोन्नतिं विना वा॥ कुंडपश्चिमे मेखलासंलग्नैव मेखला कार्या ॥ इष्टचतुरस्रकुंडस्य यावान् विस्तारस्त-दर्द्धमानदैर्घ्या ॥ कुंडव्यासतृतीयांशविस्तृता मूलभागे अग्रेतु संकोचगता ॥ एके-नांशेनोच्चा ॥ मेखलोपरि एकेनांशेन योनिर्मानान्तरगतेन घटितमेखलाया सम-न्ताद्वेष्टिता ॥ सा च मेखला योन्युपरि एकांशेन विस्तृता एकांशेनोच्चा एवं मेख-लोपरि द्व्यंशोच्चा भवति ॥ एकेनांशेन नैवेषन्नम्रेणाग्रेण मेखलाग्रतो निराधारा ॥ मध्ये कूर्मपृष्ठोन्नता ॥ मध्ये वर्तुलबिलवती अग्रभागे सच्छिद्रा मूलभागे कुंभाकार-वृत्तार्द्धद्वययुता एवं च द्व्यंशविस्तृतायाः तृतीयमेखलाया परौ द्वौ भागौ योन्याःकुंभो भवतः ॥ तथा सति कुंभयोरन्तरालं बाह्यमेखलासमं भवति ॥ अश्वत्थपर्णाकारा वा कार्या ॥ पंचैकमेखलापक्षे योनिगतो विशेषो ग्रन्थान्तरादवगन्तव्यः ॥ भूतलमारभ्य यावद्योनिमूलमायतं मध्ये सरंध्रनालाकारत्वान्नालं योनिमूललग्नाग्रं कुर्यात्॥ योन्यु-परि नाभिः कुंडसमीपे मृद्गोलद्वयं स्थापयेत् ॥ चतुरंशैर्विस्तृता आयता च द्व्यंशे-नोन्नता पद्माकारा चतुरस्रा वा नानारत्नैरलंकृता नाभिः कुंडमध्ये निवेश्या ॥ तत्र योनिकुंडे न योनिः ॥ पद्मकुंडे च न नाभिः॥ एवंच कुंडकंठमेखलायोनिनालनाभि-युक्तं सांगं सपत्नं ॥ ग्रहवेदी तु कुंडादीशान्यां हस्तोन्नता हस्तविस्तृता च चतुरस्रा वप्रत्रययुता कार्या ॥ एवं वेदीकुंडकरणं मुख्यपक्षः ॥ स्थलसंकोचेतु मध्येपि कुंडं ॥ तस्मादीशान्यां वेदिद्वयकरणमिति केचित् ॥ नारायणभट्टास्तु मंडपे च मध्यभागे कुंडं कार्यं ॥ मध्यभाग एव कुंडमिति साधितमन्यत्रेत्याहुः इदमेव युक्ततरं ॥ ग्रह-स्येशानभागे च मंडपं कारयेद्बुधः ॥ दशद्वादशभिर्हस्तैः षोडशैर्वा समन्ततः ॥ चतु-र्द्वारसमायुक्तं तोरणाद्यैरलंकृतं ॥ कुंडं तन्मध्यभागे तु कारयेच्चतुरस्रकं ॥ वितस्ति-द्वयखातं तत् कुंडं सचतुरंगुलमिति ज्योतिर्वासिष्ठसंहितायां ॥ मध्ये तु मंडपस्यापि कुंडं कुर्याद्विचक्षण इति निर्णयसिंधौ ॥ शान्तिरत्ने वृद्धवसिष्ठेन च ॥ ग्रहयज्ञाधि-कारे मंडपमध्यभागे कुंडविधानात् ॥ रुद्रस्य ग्रहयज्ञस्य विकृतित्वाच्च ॥ यत्तु प्रागु-त्तरं समासाद्य प्रदेशं मंडपस्यतु ॥ शोभनं कारयेत्कुंडं यथावल्लक्षणान्वितं ॥ इति महार्णवोदाहृतं ॥ स्कान्दे तस्य स्वयमर्थः॥ प्राक्पूर्वं मंडपस्योत्तरमुत्कृष्टं मध्यमं प्रदेशं प्राप्य कुंडं कुर्यादिति ॥ तेन लक्षहोमवन्मध्ये कुंडं ॥ तद्विकृतित्वात् ॥ अन्यथा गर्त्त-स्योत्तरपूर्वेण स्थंडिलं हस्तमात्रकं ॥ द्विवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितमिति ॥ पूर्वोत्तरे हस्तमिताथ वेदी ग्रहादिदेवेश्वरपूजनायेत्यादिवाक्यबाधापत्तेः ॥ तेन मंडप-मध्ये कुंडे सति कुंडस्य न्यूनाधिकत्वे मध्यनवांशकोष्ठकोणेष्वेव स्तंभनिखननं॥ सम-

हस्तमितंवर्त्तुलावेदिं विधाय वेदीतः पूर्वपश्चिमोत्तरेशानीनामन्यतमदिशि कुंडंकर्त्तव्यमित्युक्तं तद्यत्र मंडपमध्यभागे कुंडविधिः श्रुतो नास्ति तद्विषयं बोध्यं ॥ अथ कुंडकरणाशक्तौ एकहस्तादिप्रमाणं चतुरस्रं तत्तद्धोमे स्थंडिलं वा कार्यं ॥ स्थंडिले च मेखलादिवर्त्तुलाकारता च न भवति ॥ अंगुलोत्सेधचतुरस्त्रत्वादिना नैराकांक्ष्याद्विरोधाच्चेति रुद्रपद्धतौ नारायणभट्टाः ॥ योनि कंठवर्जस्थंडिले कुंडोक्तमाना मेखलाः कार्या इति सूतसंहितायां ॥ योनिरपि यथोक्तमाना स्थंडिलेऽपि कार्येत्युक्तं बौधायनमते कुंडभास्करे ॥ ततो मंडपान्तः ईशानदिग्भागे रुद्रवेदी कार्या ॥ सनवग्रहमखरुद्रपक्षे ग्रहवेदी च तत्रैव कार्या॥ तत्र दक्षिणतो ग्रहवेदी तस्या उत्तरतो रुद्रवेदी च ॥ ग्रहाणां पूर्वांगत्वात् प्राक् पूजनीयत्वेन पाश्चात्यरुद्रपूजाया उदक्संस्थत्वापेक्षणात् ॥ वेदिश्च द्व्यंगुलत्र्यंगुलोच्छ्रायद्व्यंगुलविस्तारवप्रद्वययुता वप्रोपरि सप्तांगुलोच्चा हस्तविस्तृता च सुलक्षणा कार्या ॥ सर्वशांतिकपौष्टिकानां ग्रहमखविकृतित्वात् ॥ आग्नेयां योगिनीपीठं ॥ नैर्ऋत्यां वास्तुपीठं ॥ वायव्यां क्षेत्रपालपीठं ॥ वेदिशब्दवाच्यानि सर्वाणि पीठानि तु हस्तमात्राणीति मात्स्ये ॥ वसिष्ठस्तु ग्रहपीठं द्विहस्तमाहुः अस्मिन् पक्षे रुद्रपीठमपि द्विहस्तं॥ एतच्च कुंडमंडपकरणं होमरुद्रे प्रधानहोमार्थं ॥ जपरुद्रे त्वंगहोमार्थं॥ इदं च कुंडमंडपकरणं होमांगमेव ॥ अनावश्यकं च॥ करणे फलाधिक्यं॥ अकरणे न वैगुण्यम्॥अत्र मूलवचनानि ग्रन्थान्तरतो ज्ञेयानि॥इति॥

## ॥ अथ मंडपप्रवेशः ॥

अथ रुद्रजपे जपान्ते शुभेऽहनि होमे रुद्रे त्वाचार्यादिपूजान्ते शुभकाले मंडपपूजाद्युपयुक्तसंभारान् संभृत्य शुक्लांबरधरः शुक्लमाल्यानुलेपनः सपत्नीको यजमानः आचार्यब्रह्मर्त्विक् समन्वितो गंधमाल्यफलादिभिरर्चितकलशहस्तो मंगलवाद्यघोषेण भद्रंकर्णेभिरिति वेदमंत्रघोषेण च समन्वितो मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारेण मंडपान्तः प्रविशेत् ॥ अथाग्न्यायतनात्पश्चिमतः स्वासने उपविश्याचम्य प्राणानायम्य ॥ देशकालौ संकीर्त्य॥ स्वयं ब्राह्मणद्वारा वा कृतस्यामुकरुद्रस्य जपांगत्वेन वक्ष्यमाणद्रव्येष्वमुकद्रव्येणाहं ब्राह्मणद्वारा वा यथाशक्तिहोमं करिष्ये ॥ इति जपरुद्रे संकल्पः कार्यः ॥ होमरुद्रे तु पूर्वं कृतत्वान्नेह संकल्पः कार्यः॥ ततस्तदंगतया जपरुद्रे गणेशपूजनं मंडपदेवतास्थापनपूजनं च करिष्ये ॥ होमरुद्रेतु होमरुद्रांगतया वास्तुपूजनं मंडपदेवतास्थापनपूजनं च करिष्ये ॥ ततः षोडशोपचारैः गणेशपूजा पूर्ववत् विदध्यात् ॥ ॐ भूमिर्भूमिमवागान्मातरमप्यगात् ॥ भूयाय पुत्रैः पशुभिर्योनो द्वेष्टि समिद्यतामिति मंत्रेणाचार्यो भूमिं संस्पृश्य गौरसर्षपान् मंडपान्तः सर्वतोऽवकिरेत्॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु॥

अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशं ॥ सर्वेषामविरोधेन ब्रह्मकर्म समारभेत् ॥ इति मंत्राभ्यां स्वशाखोक्तराक्षोघ्नमंत्रैश्च ॥ ते च मंत्राः कृणुष्व पाज इति पंच ॥ रक्षोहणं बलगहनं ॥ ॐ रक्षोहणो वः ॥ ॐ रक्षोहाविश्वचर्षणिरिति ॥ अथैकस्मिन् पात्रे गायत्र्या गोमूत्रं ॐ मानस्तोक इति गोमयं ॐ पयः पृथिव्यामिति पयः ॐ दधिक्राव्ण इति दधि ॐ तेजोसीत्याज्यं ॐ देवस्येति कुशोदकं समादाय गायत्र्या सर्वाण्येकीकृत्य ॥ ॐ आपोहिष्ठेति तृचेन कुशैस्तेन पंचगव्येन मंडपान्तः प्रोक्षयेत् ॥ ॐ स्योना पृथ्वीति महीद्यौरिति मंत्राभ्यां भूमिं संप्रार्थ्य ॥ ॐ स्वस्तिन इन्द्र इत्येतामृचं कृतांजलिः त्रिर्जपेत् ॥ इति ॥

## ॥ अथ वास्तुपूजनम् ॥

मंडपनैर्ऋतिभागे हस्तमात्रां चतुरस्रां चतुरंगुलोच्चां वेदिं कृत्वा तस्यां वस्त्रं प्रसार्य सुवर्णादिशलाकया कुंकुमेन च नवरेखाः कार्याः ॥ प्राक् पश्चिमायताः नव च दक्षिणोदगायताश्च नव कृत्वा मध्यकोष्टचतुष्टयमेकीकृत्य प्रतिकोणं त्रिषु पदेषु सूत्रं दद्यात् ॥ तथा च चतुर्विंशतिरर्द्धपदानि संपद्यन्ते ॥ देशकालौ संकीर्त्य प्रारीप्सितस्यामुकरुद्रकर्मणः सांगतासिद्धये वास्तुपूजां करिष्ये ॥ विशन्तु भूतले नागा लोकपालाश्च सर्वतः ॥ मंडपेत्रावतिष्ठन्तु आयुर्बलकराः सदा ॥ इति मंत्रावृत्त्या वास्तुमंडलस्याग्नेयादिषु चतुर्षु कोणेषु शंकुचतुष्टयं निखनेत् ॥ ॐ अग्निभ्योप्यथ सर्पेभ्यो ये चान्ये तान्समाश्रिताः॥ बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमं ॥१॥ नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः॥ बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमं ॥२॥ नमो वायुरक्षेभ्यो ये चान्ये तत्समाश्रिताः॥ बलिं तेभ्यः प्रयच्छामि० ॥३॥ रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तत्समाश्रिताः॥ बलिं तेभ्यः प्रयच्छामि गृह्णन्तु सततोत्सुकाः ॥ इति चतुर्भिर्मंत्रैः निखातितशंकुपार्श्वे यथाक्रमं माषभक्तबलिं दद्यात् ॥ नवरेखापूजनं ॥ ॐ शांत्यै० यशोवत्यै० कान्त्यै० विशालायै० प्राणवाहिन्यै० सत्यायै० सुमत्यै० नंदायै० सुभद्रायै० ॥९॥ इति नवप्रागायतरेखादेवतास्तासु पूजनं ॥ अथ नवदक्षिणोत्तरायतदेवतास्तासु रेखासु पूजयेत्॥ तद्यथा॥ ॐ हिरण्यायै० सुप्रभायै० लक्ष्म्यै० विभूत्यै० विमलायै० प्रियायै० जयायै० बालायै० विशोकायै० ॥ ९ ॥ केचिदत्रावसरे अग्निं प्रतिष्ठापयति ॥ ततो मंडलमध्ये व्यस्तसमस्तव्याहृतिभिर्वास्तुपुरुषमावाहयेत् ॥ तद्यथा ॥ ॐ भूः वास्तुपुरुषमावाहयामि ॥ ॐ भुवः वास्तुपुरुषमावाहयामि ॐ स्वः वास्तुपुरुषमावा० ॐ भूर्भुवः स्वः वास्तुपुरुषमावा० ॥ इत्यक्षतपुंजे हेमप्रतिमायां वा वास्तुपुरुषमावाह्य ॥ ॐ मनोजूतिरिति मंत्रान्ते वास्तुपुरुषः सुप्रतिष्ठितो वरदो भवेति प्रतिष्ठां कुर्यात् ॥ वास्तोष्पते प्रतिजानीहीति मंत्रेण

वास्तुपुरुषं षोडशोपचारैः संपूज्य ॥ वास्तोष्पते प्रतिजानीहीति मंत्रेण वास्तुपुरुषाय बलिं समर्पयेत् ॥ अथ मध्यपदचतुष्टये वास्तोर्हृदये॥ ॐ भूर्भुवः स्वः ब्रह्माणमावा० अक्षतपुंजे ब्रह्माणमावाह्य ब्रह्मयज्ञानमिति मंत्रेण संस्थाप्य मनोजूति० प्रतिष्ठां कृत्वा ब्रह्मयज्ञानमंत्रेण संपूज्य तेनैव मंत्रेण ब्रह्मणेनमः पायसादिबलिं दद्यात् ॥ ततःपूर्व-पदद्वये दक्षिणस्तने ॥ अर्यम्णे० ॥ दक्षिणपदद्वये जठरदक्षिणे विवस्वते० ॥ पश्चिम-पदद्वये जठरवामभागे मित्राय० ॥ उदक्पदद्वये वामस्तने पृथ्वीधराय० ॥ आग्नेय-कोणस्त्रद्वियाकृतब्रह्मपदसंलग्नपदोत्तरार्द्धे दक्षिणहस्ते सावित्राय० ॥ दक्षिणार्द्धे स-वित्रे०॥ एवं नैर्ऋत्यपदपूर्वार्द्धे वृषणयोः विबुधाधिपाय०॥ तत्पश्चिमार्द्धे जयन्ताय०॥ वायव्यपददक्षिणार्द्धे वामहस्ते राजयक्ष्मणे०॥ उत्तरार्द्धे रुद्राय० ईशानपदार्धे उरसि अद्भ्यो० ॥ दक्षिणार्धे मुखे आपवत्साय० ॥ ततो अन्त्यपंक्तिगते ईशानपददक्षि-णार्द्धे शिरसि शिखिने० ॥१॥ तद्दक्षिणे सार्धपदे दक्षिणनेत्रे पर्जन्याय० ॥ २ ॥ तद्दक्षिणपदयोर्दक्षिणश्रोत्रे जयन्ताय० ॥३॥ तद्दक्षिणपदयोर्दक्षिणांसे कुलिशायुधाय० ॥४॥ तद्दक्षिणयोर्दक्षिणबाहवे च सत्याय० ॥५॥ सूर्याय० ॥६॥ तद्दक्षिणे सार्धे दक्षिणकूर्परे भृशाय० ॥७॥ तद्दक्षिणाग्नेयपदार्धे दक्षिणप्रबाहौ आकाशाय० ॥ ८ ॥ तत्पश्चिमार्द्धे दक्षिणप्रबाहौ वायवे० ॥९॥ तत्पश्चिमे सार्धे मणिबंधे पूष्णे० ॥१०॥ तत्पश्चिमयोर्दक्षिणपार्श्वे वितथाय०॥११॥ तत्पश्चिमयोर्दक्षिणपार्श्वे गृहक्षताय०॥१२॥ तत्पश्चिमयोर्दक्षिणोरौ यमाय० ॥१२॥ तत्पश्चिमयोर्दक्षिणजानौ गंधर्वाय० ॥१४॥ तत्पश्चिमे सार्द्धपदे दक्षिणजंघायां भृंगराजाय० ॥१५॥ तत्पश्चिमे नैर्ऋत्यपदार्धे दक्षि-णस्फिचि मृगाय० ॥१६॥ तदुत्तरार्द्धे पादयोः पितृभ्यो० ॥ १७ ॥ तदुत्तरार्धे सा-र्द्धपदे वामस्फिचि दौवारिकाय० ॥ १८ ॥ तदुत्तरयोर्वामजंघायां सुग्रीवाय०॥१९॥ तदुत्तरयोर्वामजानौ पुष्पदन्ताय० ॥ २० ॥ तदुत्तरयोर्वामोरौ वरुणाय० ॥ २१ ॥ तदुत्तरयोर्वामपार्श्वे असुराय० ॥२२॥ तदुत्तरे सार्धपदे वामपार्श्वे शेषाय० ॥ २३ ॥ तदुत्तरे वायव्यार्धे वाममणिबंधे पापाय० ॥ २४ ॥ तत्प्रागर्धे वामप्रबाहौ रोगाय० ॥२५॥ तत्प्राक्सार्धे वामप्रबाहवे अहये० ॥ २६ ॥ तत्प्रागुद्वये वामकूर्परे मुख्याय० ॥२७॥ तत्प्राक् वामबाहौ भल्लाटाय० ॥ २८ ॥ तत् प्रागुद्वये वामबाहौ सोमाय० ॥२९॥ तत्प्रागुद्वये वामांसे सर्पाय० ॥३०॥ तत्प्राक्सार्धे वामश्रोत्रे अदित्यै०॥३१॥ तत्प्रागर्धे वामनेत्रेदित्यै० ॥३२॥ तत उत्तरे वास्तोष्पते प्रति० इति वास्तोष्पतिं ॥ ततो मंडलाद्बहिरीशानादिकोणेषु ॥ चरक्यै० विदार्यै० पूतनायै० पापराक्षस्यै० इति पूजयेत् ॥ ततःपूर्वादिदिक्षु स्कंदाय० अर्यम्णे० जृंभकाय० पिलिपिच्छाय० इति पूजयेत ॥ पुनः पूर्वादिषु इन्द्रादीन लोकपालान् पूजयेत् ॥ तत्रैवं प्रकारः॥ इंद्राय०

अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० ब्रह्मणे० अनन्ताय० ॥ इत्यावाह्य मनोजूतिरिति प्रतिष्ठाप्य प्रणवादिचतुर्थ्यंन्तनमोन्तनाममंत्रेणाभ्यर्च्य बलिं दत्वैवमपरं देवमित्येवं सर्वान् सुरान् षोडशोपचारैरर्चयेत् ॥ ततो मंडलादीशान्ये विधिना कलशं संस्थाप्य तत्र तत्त्वायामीति वरुणमावाह्य वरुणायनम इति संपूज्य ॥ यथा मेरुगिरेः शृंगे देवानामालयः सदा ॥ तथा ब्रह्मादिदेवानां मम यज्ञे स्थिरो भव ॥ एतावद्वास्तुपूजनं ॥ ततो वास्तुमंडलात्पश्चिमदिशि स्वतंत्रकुंडे स्थंडिले वा पंचभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य ब्रह्मोपवेशनाद्याज्यभागान्तं कर्म कृत्वा॥ प्रणवमहाव्याहृतिपूर्वकैः स्वाहान्तैस्तत्तन्नाममंत्रैः औदुंबरादिसमित्तिलाज्यैर्मंडलदेवताभ्यः प्रत्येकमष्टाविंशतिमष्टौ वाहुतीर्हुत्वा ॥ वास्तोष्पत इति चतुर्भिर्मंत्रैश्च वा हुत्वा॥ ॐ वास्तोष्पते ध्रुवास्थूणां सत्रं सौम्यानां ॥ द्रप्सोभेत्तापुराशश्वतीनामिन्द्रो मुनीनां सखा स्वाहा ॥ इति मंत्रेण पंचबिल्वफलानि तद्बीजानि वा हुत्वा इदं वास्तोष्पतय इति त्यजेत् ॥ ततो महाव्याहृतिहोमादिस्विष्टकृद्धोमान्तं विधाय पूर्णाहुतिं जुहुयात् ॥ सा यथा ॥ अन्यदाज्यमाज्यस्थाल्यां निरुप्याग्नावधिश्रित्य स्रुक्स्रुवौ कुशैः संमार्ज्य आज्यमुद्वास्य उत्पूय अवेक्ष्य पालाश्यां स्रुचि स्रुवेणाज्यं द्वादशगृहीतं गृहीत्वा समिधमादाय दक्षिणे बाहौ यजमानेनान्वारब्धः ॥ सप्त ते अग्ने समिध इति पूर्णाहुतिं हुत्वा इदमग्नये नमम इति त्यागं विधाय संस्रवप्राशनादितंत्रं विधाय समापयेत्॥ ततो मंडलदेवताभ्यः पायसेन तदभावे दुग्धमिश्रिततंदुलैर्बलिदानं कुर्यात् ॥ पायसान्नाभावे दध्यक्षतैः कुशपुष्पघृताक्षतैर्वा बलिं दद्यात् ॥ इति शिवविष्णुप्रतिष्ठापद्धतौ॥ इदं च बलिदानं तत्तत्पदमध्ये एव देयं नत्वन्यत्र ॥ तदुक्तं ईशकोणे घृतान्नं तु शिखिने निवेदयेदिति ॥ तथा होमान्ते भक्ष्यभोज्यैश्च वास्तुदेहे बलिं हरेदिति ॥ अत्र ईशकोणे वास्तुदेहे इत्युक्त्वा च तत्तत्पदमध्ये बलिदानमुक्तं भवति ॥ ततः कृणुष्वपाज इति राक्षोघ्नमंत्रैस्त्रिसूत्र्यां मंडपं वेष्टयित्वा ॥ वास्तुकलशोदकेन वक्ष्यमाणमंत्रैर्यजमानमभिषिच्य पुनर्मंडलदेवताः समभ्यर्च्य तदुद्देशेन यथाशक्ति हिरण्यं दक्षिणां दत्त्वा ब्राह्मणान् भोजयेदिति ॥ शारदातिलकेतु होमो नोक्तः ॥ तिलाज्यादिद्रव्याणां विकल्प इति ग्रंथान्तरे ॥ इति लक्षहोमपद्धतौ नारायणभट्टोक्ता वास्तुपूजा ॥ मंडपान्तर्निर्ऋतिभागे वास्तुपीठे वास्तुपूजनमात्रमेवाचरन्ति ॥ होमादिकं तु स्वतंत्रतया वास्तुपूजनपक्षे ॥ इति ॥

## ॥ अथ शास्त्रोक्तमंडपपूजाप्रयोगः ॥

तत्रादौ मंडपस्तंभपूजनं ॥ मध्ये ईशानस्तंभे ॥ एह्येहि विप्रेन्द्र पितामहेश हंसाधिरूढ त्रिदशैकवंद्य ॥ श्वेतोत्पलाभास कुशाब्जहस्त गृहाण पूजां भगवन्नमस्ते ॥१॥

हंसपृष्ठसमारूढ देवतागणपूजित ॥ ईशकोणे स्थितं स्तंभमलंकुरु जगत्पते ॥२॥ आवाहयाम्यहं देवं देवेशं च प्रजापतिं ॥ अनेकव्रतकर्त्तारं सर्वेषां च पितामहं ॥ ३ ॥ विश्वरूपं निराधारं निरालंबं निरामयं ॥ आगच्छ देवदेवेश यज्ञेऽस्मिन् संनिधिं कुरु ॥४॥ ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छ ॥ ॐ ब्रह्मजज्ञानमिति मंत्रान्ते इह तिष्ठ ॥ ॐ ब्रह्मणे० इत्यनेन वा ब्रह्मजज्ञानमित्यनेन गंधादिभिः पूजनं ॥ इदमनुलेपनं ॥ इमानि पुष्पाणि ॥ अयं धूपः ॥ अयं दीपः ॥ इदं नैवेद्यं ॥ इदं तांबूलं ॥ इयं दक्षिणा ॥ प्रार्थयेत् ॥ वेदाधाराय यज्ञाय ज्ञानगम्याय सूरये ॥ कमंडल्वक्षमालास्रक्स्रुवहस्ताय ते नमः ॥ १ ॥ कृष्णांजिनांबरधर पद्मासन चतुर्मुख ॥ जटाधार जगद्धातः प्रसीद कमलोद्भव ॥ इति प्रार्थना ॥ ॐ सावित्र्यै० वास्तुदेवतायै० ब्राह्म्यै० गंगायै० ॥ स्तंभमालभ्य ॥ ॐ ऊर्ध्वं उषण इति जपः॥ स्तंभशिरसि नागमात्रे०॥ आयंगौरिति शाखाबंधनाद्यनुमंत्रेण ॥ ॐ यतो यतः समीहस० इति मंत्रजपः ॥ एवं सर्वत्र स्तंभमालभ्य ऊर्ध्वउषण इति जपादिकं कुर्यात् ॥ " अथाग्नेयमध्यस्तंभे॥ आवाहयेचं गरुडोपरिस्थितं रमार्धदेहं सुरराजवन्दितं ॥ कंसान्तकं चक्रगदाब्जहस्तं भजामि देवं वसुदेवपुत्रं ॥ १ ॥ पद्मनाभ ऋषीकेश कंसचाणूरमर्द्दन ॥ आगच्छ भगवन् विष्णो स्तंभेऽस्मिन् सन्निधो भव ॥ २ ॥ विष्णो इहागच्छ ॥ ॐ इदं विष्णु० इह तिष्ठ ॥ विष्णवे० गंधादिभिः संपूज्य प्रार्थयेत्॥ नमस्ते पुंडरीकाक्ष नमस्ते पुरुषोत्तम ॥ नमस्ते सर्वलोकात्मन् विष्णवे ते नमोनमः ॥ इति नत्वा ॥ देवदेव जगन्नाथ विष्णो यज्ञपते विभो ॥ पाहि दुःखांबुधेरस्मान् भक्तानुग्रहकारक ॥ इति संप्रार्थ्य ॥ लक्ष्म्यै० आदित्यायै० वैष्णव्यै० ॥ ॐ ऊर्ध्वऊषणइति स्तंभालंभादिपूर्ववत् ॥ " अथ नैर्ऋतिमध्यस्तंभे "—एह्येहि गौरीशपिनाकपाणे शशांकमौले वृषभाधिरूढ ॥ देवाधिदेवेश महेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ १ ॥ गंगाधर महादेव पार्वतीप्राणवल्लभ ॥ आगच्छ भगवन्नीश स्तंभेऽस्मिन् सन्निधो भव ॥२॥ शंकर इहागच्छ॥ ॐ नमः शंभवाय० इह तिष्ठ० ॥ शंभवे० इति गंधादिभिः संपूज्य प्रार्थयेत् ॥ वृषवाहनदेवाय पार्वतीपतये नमः॥ वरदायार्धकायाय नमश्चन्द्रार्धमौलिने॥ इति नत्वा ॥ पंचवक्त्र वृषारूढ त्रिलोचन सदाशिव ॥ चन्द्रमौले महादेव मम स्वस्तिकरो भव ॥ इति संप्रार्थ्य ॥ गौर्यै० माहेश्वर्यै० शोभनायै० ऊर्ध्वऊषण इति स्तंभालंभादिकं पूर्ववत् ॥ " अथ वायव्यमध्यस्तंभे ॥ एह्येहि वृत्रघ्न गजाधिरूढ सहस्रनेत्र त्रिदशैकराज ॥ शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ १ ॥ शचीपते महाबाहो सर्वाभरणभूषित ॥ आगच्छ भगवन्निन्द्र स्तंभेऽस्मिन् सन्निधो भव ॥२॥ इन्द्र इहागच्छ ॥ ॐ त्रातारमिन्द्र० इहतिष्ठ ॥ ॐ इंद्राय०

गंधादिभिः संपूज्य प्रार्थयेत् ॥ पुरंदर नमस्तेस्तु वज्रहस्त नमोऽस्तुते ॥ शचीपते नमस्तुभ्यं नमस्ते मेघवाहन ॥ इति नत्वा ॥ देवराज गजारूढ पुरंदर शतक्रतो ॥ वज्रहस्त महाबाहो वांछितार्थप्रदो भव ॥ इति संप्रार्थ्य ॥ इंद्राण्यै० आदन्तायै० विभूत्यै० ॥ शेषं पूर्ववत् ॥ ४ ॥ एवं मध्यस्थान् ईशानादिकोणस्थान् चतुरः स्तंभानभ्यर्च्य ॥ पुनर्बाह्ये ईशानकोणादारभ्य द्वादशस्तंभान् पूजयेत् ॥ तद्यथा ॥ "अथ बाह्येशानकोणे ॥ आवाहयेत्तं द्विभुजं दिनेशं सप्ताश्ववाहं द्युमणिं ग्रहेशं ॥ सिंदूरवर्णप्रतिमावभासं भजामि सूर्यं कुलवृद्धिहेतोः ॥१॥ पद्महस्त महाबाहो सप्तश्वेताश्ववाहन॥ आगच्छ भगवन् भानो स्तंभेऽस्मिन् सन्निधो भव ॥२॥ सूर्य इहागच्छ॥ ॐ आकृष्णेन० इह तिष्ठ ॥ ॐ सूर्याय० गंधादिभिः संपूज्य प्रार्थयेत् ॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयाय त्रिगुणात्मधारिणे विरंचिनारायणशंकरात्मने ॥ इति नत्वा॥ पद्महस्त रथारूढ पद्मासन सुमंगल॥ क्षमां कुरु दयालो त्वं ग्रहराज नमोस्तु ते ॥ इति संप्रार्थ्य॥ सूर्यै० भूत्यै० सावित्र्यै० मंगलायै० ॥ शेषं पूर्ववत् ॥५॥ ईशानपूर्वयोरन्तरालस्तंभे ॥ आवाहयेत्तं गणराजदेवं रक्तोत्पलाभासमशेषवन्द्यं ॥ विघ्नान्तकं विघ्नहरं गणेशं भजामि रौद्रं सहितं च सिद्धया ॥१॥ लंबोदर महाकाय गजवक्त्र चतुर्भुज ॥ आगच्छ गणनाथस्त्वं स्तंभेऽस्मिन् सन्निधो भव ॥२॥ गणपते इहागच्छ ॥ ॐ गणानां त्वा० इह तिष्ठ॥ गणपतये० गंधादिभिः संपूज्य प्रार्थयेत ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ॥ नमस्ते रुद्ररूपाय करीरूपाय ते नमः॥ इति नत्वा ॥ लंबोदर महाकाय सततं मोदकप्रिय ॥ गौरीपुत्र गणेशस्त्वं विघ्नराज प्रसीद मे ॥ इति संप्रार्थ्य ॥ सरस्वत्यै० विघ्नहरायै० ॥ शेषं पूर्ववत् ॥६॥ पूर्वाग्नेयोरंतरालस्तंभे ॥ एह्येहि दंडायुधधर्मराज कालांजनाभासविशालनेत्र ॥ विशालवक्षःस्थलरौद्ररूप गृहाण पूजां भगवन्नमस्ते ॥१॥ चित्रगुप्तादिसंयुक्त दंडमुद्गरधारक ॥ आगच्छ भगवन् धर्म स्तंभेऽस्मिन सन्निधो भव ॥ २ ॥ यम इहागच्छ ॥ ॐ यमाय त्वांगिरस्वते० पित्रे इह तिष्ठ॥ यमाय० इति गंधादिभिः संपूज्य प्रार्थयेत् ॥ इषत्पीत नमस्तेऽस्तु दंडहस्त नमोऽस्तु ते ॥ महिषस्थ नमस्तेऽस्तु धर्मराज नमोस्तुते ॥ इति नत्वा ॥ धर्मराज महाकाय दक्षिणाधिपतये नमः ॥ रक्तेक्षण महाबाहो मम पीडां निवारय ॥ इति संप्रार्थ्य ॥ पूर्वसंध्यायै० अंजन्यै० क्रूरायै० नियंत्र्यै० ॥ शेषं पूर्ववत् ॥ ७ ॥ बाह्याग्नेयकोणस्तंभे ॥ एह्येहि नागेन्द्र धराधरेश सर्वामरैर्वंदितपादपद्म ॥ नानाफणामंडलराजमान गृहाण पूजां भगवन्नमस्ते ॥१॥ आशीविषसमोपेत नागकन्याविराजित ॥ आगच्छ नागराजेन्द्र स्तंभेऽस्मिन् सन्निधो भव ॥२॥ नागराज इहागच्छ ॥ ॐ आयंगौ इतिमंत्रेण इह तिष्ठ ॥

नागराजाय० गंधादिभिः संपूज्य प्रार्थयेत् ॥ नमः खेटकहस्तेभ्यस्त्रिभोगेभ्यो नमो नमः ॥ नमो भीषणदेवेभ्यः खड्गधृग्भ्यो नमोनमः ॥ इति नत्वा ॥ खड्गखेटधराः सर्वे फणामंडलमंडिताः॥ एकभोगासाक्षसूत्राः वरदाः सन्तु मे सदा॥ इति संप्रार्थ्य॥ मध्यमसंध्यायै० धरायै० पद्मायै० महापद्मायै० ॥ ॐ ऊर्ध्वऊषणइति स्तंभालंभादिकं पूर्ववत् ॥ ८ ॥ " अथ आग्नेयदक्षिणयोरन्तरालस्तंभे ॥ आवाहयामि देवेशं षण्मुखं कृत्तिकासुतं ॥ रुद्रतेजसमुत्पन्नं देवसेनासमन्वितं ॥१॥ मयूरवाहनं शक्तिपाणिं वै ब्रह्मचारिणं ॥ आगच्छ भगवन् स्कन्द स्तंभेऽस्मिन् सन्निधो भव ॥२॥ स्कन्द इहागच्छ॥ ॐ यदक्रन्दः इति मंत्रेण इह तिष्ठ॥ स्कन्दाय० गंधादिभिः संपूज्य प्रार्थयेत् ॥ नमः स्कन्दाय शैवाय घंटामुकुटधारिणे ॥ पताकाशक्तिहस्ताय षण्मुखाय च ते नमः ॥ इति नत्वा ॥ मयूरवाहन स्कन्द गौरीसुत षडानन॥ कार्त्तिकेय महाबाहो दयां कुरु दयानिधे ॥ इति संप्रार्थ्य ॥ पश्चिमसंध्यायै० ॥ शेषं पूर्ववत् ॥९॥ " अथ दक्षिणनैर्ऋत्यान्तरालस्तंभे "--आवाहयामि देवेशं भूतानां देहधारिणं ॥ सर्वाधारं महावेगं मृगवाहनमीश्वरं ॥ १ ॥ खड्गहस्तमहावेगं त्रैलोक्यान्तरचारिणं ॥ आगच्छ भगवन् वायो स्तंभेऽस्मिन् सन्निधो भव ॥ २ ॥ वायो इहागच्छ ॥ ॐ वय्वायवृतस्पत० इति मंत्रेण इह तिष्ठ ॥ वायवे० गंधादिभिः संपूज्य प्रार्थयेत् ॥ नमो धरणीपृष्ठस्थ समीरण नमोस्तुते ॥ धूम्रवर्ण नमस्तेऽस्तु शीघ्रगामी नमोऽस्तुते॥ इति नत्वा ॥ धावन् धरणीपृष्ठस्थ ध्वजहस्त समीरण॥ दंडहस्त मृगारूढ वरं देहि वरंप्रद ॥ इति संप्रार्थ्य ॥ वायव्यै० गंगायै० गायत्र्यै० मध्यमसंध्यायै० ॥ शेषं पूर्ववत् ॥ १० ॥ " अथ नैर्ऋत्यस्तंभे "—आवाहयामि देवेशं शशांकं रजनिपतिं ॥ क्षीरोदधिसमुद्भूतं हरमौलिविभूषणं ॥ १ ॥ सुधाकरं द्विजाधीशं त्रैलोक्यप्रीतिकारकं ॥ औषध्याप्यायनकरं सोमं कंदर्पवर्द्धनं ॥ आगच्छ भगवन् सोम स्तंभेऽस्मिन् सन्निधो भव ॥ २ ॥ सोम इहागच्छ ॥ ॐ आप्यायस्व० इहतिष्ठ ॥ सोमाय० गंधादिभिः संपूज्य प्रार्थयेत् ॥ अत्रिपुत्र नमस्तेऽस्तु नमस्ते शशिलांछन ॥ श्वेतांबर नमस्तेऽस्तु ताराधिप नमोऽस्तुते ॥ इति नत्वा ॥ अत्रिपुत्र निशानाथ द्विजराज सुधाकर ॥ सोम त्वं सौम्यभावेन ग्रहपीडां निराकुरु ॥ इति संप्रार्थ्य ॥ सावित्र्यै० अमृतकलायै० विजयायै० पश्चिमसंध्यायै०॥ ऊर्ध्वऊषण इति स्तंभालंभादिकं पूर्ववत् ॥ ११ ॥ " अथ नैर्ऋतपश्चिमयोर्मध्यस्तंभे ॥ आवाहयामि देवेशं सलिलस्याधिपं प्रभुं ॥ शंखपाशधरं सौम्यं वरुणं यादसां पतिं ॥१॥ गंभीरथसमारूढं मणिरत्नसमन्वितं ॥ आगच्छ देव वरुण स्तंभेऽस्मिन् सन्निधो भव ॥ २ ॥ वरुणाय० इहागच्छ ॥ ॐ इमंमे वरुण० इहतिष्ठ ॥ वरुणाय० गंधादिभिः संपूज्य प्रार्थयेत् ॥

वरुणाय नमस्तेऽस्तु नमः स्फटिकदीप्तये ॥ नमस्ते श्वेतहाराय जलेशाय नमो नमः॥ इति नत्वा ॥ नमःस्फुटीकवर्णाभ श्वेतहारांबरावृत ॥ पाशहस्त महाबाहो दयां कुरु दयानिधे ॥ इति संप्रार्थ्य ॥ वारुण्यै० पाशधारिण्यै० बृहत्यै०॥ शेषं पूर्ववत् ॥१२॥ " अथ पश्चिमवायव्यान्तरालस्तंभे ॥ आवाहयामि देवेशान् वसूनष्टौ महाबलान् ॥ सौम्यमूर्त्तिधरान् देवान दिव्यायुधकरान्वितान् ॥१॥ शुद्धस्फटिकसंकाशान् नानावस्तुविराजितान् ॥ अश्वारूढान दिव्यवस्त्रान् सर्वालंकारभूषितान् ॥ आवाहयामि स्तंभेऽस्मिन् वसूनष्टौ सुखावहान ॥२॥ वसवः इहागच्छ ॥ ॐ वसवः इह तिष्ठ ॥ अष्टवसुभ्यो० गंधादिभिः संपूज्य प्रार्थयेत् ॥ नमस्करोमि देवेशान् नानावसुविराजितान् ॥ शुद्धस्फटिकसंकाशान् दिव्यायुधकरान् वसून् ॥ इति नत्वा॥ दिव्यवस्त्रा-दिव्यदेहा पुष्पमालाविभूषिताः ॥ वसवोऽष्टौ महाभागाः वरदाः सन्तु मे सदा ॥ इति संप्रार्थ्य ॥ विनतायै० अणिमायै० भूत्यै० गिरिमायै० ॥ शेषं पूर्ववत् ॥१३॥ " अथ वायव्यस्तंभे " आवाहयामि देवेशं धनदं यक्षपूजितं ॥ महाबलं दिव्यदेहं नरयानगतिं विभुं ॥ १ ॥ दिव्यमालांबरधरं गदाहस्तं महाभुजं ॥ आगच्छ यक्षराजस्त्वं स्तंभेऽस्मिन सन्निधो भव ॥ २ ॥ धनद इहागच्छ ॥ ॐ सोमोधेनुं० इह तिष्ठ ॥ धनदाय० गंधादिभिः संपूज्य प्रार्थयेत्॥ यक्षराज नमस्तेऽस्तु नमस्ते नरयानग ॥ पीतांबर नमस्तेऽस्तु गदापाणे नमोस्तुते ॥ इति नत्वा ॥ दिव्यदेहधराध्यक्ष पीतांबर गदाधर ॥ उत्तरेश महाबाहो वांछितार्थफलप्रद ॥ इति संप्रार्थ्य ॥ लघिमायै० सिनीवाल्यै० ॥ शेषं पूर्ववत् ॥ १४ ॥ " अथोत्तरवायव्यान्तरालस्तंभे ॥ आवाहयामि देवेशं गुरुं त्रिदशपूजितं ॥ हेमगोरोचनावर्णं पीनस्कंधसुवक्षसं ॥ १ ॥ शंखं च कलशं चैव पाणिभ्यामिह बिभ्रतः ॥ बृहस्पते समागच्छ स्तंभेऽस्मिन् सन्निधो भव ॥ गुरो इहागच्छ ॥ ॐ बृहस्पते० इह तिष्ठ ॥ गुरवे० गंधादिभिः संपूज्य प्रार्थयेत् ॥ ब्रह्मपुत्र नमस्तेस्तु पीतध्वज नमोऽस्तुते॥ त्रिदशार्चित देवेश सिंधूद्भव नमोस्तुते ॥ इति नत्वा ॥ पूजितोऽसि यथा शक्त्या दंडहस्त बृहस्पते ॥ क्रूरग्रहाभिभूतस्य शांतिदेव गुरो कुरु ॥ इति संप्रार्थ्य॥ पूर्णिमायै० सावित्र्यै० ॥ ॐ ऊर्ध्वऊषुण इति स्तंभालंभादिकं पूर्ववत् ॥१५॥ " अथ उत्तरेशान्यान्तरालस्तंभे ॥ आवाहयामि देवेशं विश्वकर्माणमीश्वरं ॥ मूर्त्तामूर्त्तकरं देवं सर्वकर्त्तारमीश्वरं ॥ १ ॥ त्रैलोक्यसूत्रकर्त्तारं द्विभुजं सर्वदर्शनं ॥ आगच्छ विश्वकर्मस्त्वं स्तंभेऽस्मिन्- सन्निधो भव ॥२॥ ॐ भूर्भुवः स्वः विश्वकर्मन् इहागच्छ॥ ॐ विश्वकर्मन् हविषा० इहतिष्ठ॥ विश्वकर्मणे० गंधादिभिः संपूज्य प्रार्थयेत् ॥ नमामि विश्वकर्माणं द्विभुजं विश्वदर्शिनं ॥ त्रैलोक्यसूत्रकर्त्तारं महाबलपराक्रमं इति नत्वा ॥ प्रसीद विश्वकर्मस्त्वं शि-

ल्पिशास्त्रविशारद ॥ सदंडपाणे द्विभुज तेजोमूर्तिश्चरप्रभो सिनीवाल्यै० वास्तुदेवतायै० सावित्र्यै० ॥ ॐ ऊर्ध्व ऊषण० इति स्तंभालंभनादिकं पूर्ववत ॥ १६ ॥ अथ पुष्पांजलिं समादाय अघोरमंत्रेण विकीरेत् ॥ इति स्तंभपूजा ॥

" अथ द्वारतोरणपूजा "—तत्र पूर्वस्यां दिशि गत्वा मंडपाद्बहिर्हस्तमात्रे वटतोरणमश्वत्थं वा सुदृढनामकं सुशोभननामकं वा त्रिशूलचिन्हितमग्निमीळेति पूर्वे निधाय ॥ ॐ सुशोभन सुदृढाय तोरणाय नम इति वा नाममंत्रेण गंधादिभिः संपूज्य ॥ चंदनपुष्पमालादिभिः सुशोभनं कृत्वा राहुबृहस्पतिस्तत्रावाह्यार्चयेत् ॥ ततस्तोरणस्तंभयोर्मध्ये एकं कलशं स्थापयेत् ॥ तद्यथा ॥ ॐ भूरसीति भूमिप्रार्थना ॥ ॐ ओषधयः समवदंतेति भूमौ यवान्निधाय ॥ ॐ आजिघ्रकलशमिति तेषु यवेषु कलशं संस्थाप्य ॥ ॐ महीद्यौरिति तीर्थोदकेन कलशमापूर्य ॥ तस्मिन्कलशे या औषधीरिति औषधिप्रक्षेपः ॥ ॐ हिरण्यं गर्भ० हिरण्यं निक्षिप्य ॥ ॐ अश्वत्थेव० पंचपल्लवान् ॥ ॐ स्योना पृथिवीति पंचसप्त वा मृदश्च निक्षिप्य ॥ ॐ पूर्णादर्वीति मंत्रेण कलशे तंदुलैः पूर्णं पूर्णपात्रं ॥ ॐ याः फलिनीति पूर्णपात्रे नालिकेरादिफलं च संस्थाप्य ॥ ॐ सुजात इति वासोयुग्मेन वाससा वा कलशं वेष्टयित्वा ॥ ॐ मनोजूतिरिति मंत्रान्ते कलशः सुप्रतिष्ठितो भवेति कलशं प्रतिष्ठाप्य तस्मिन् कलशे ध्रुव इहागच्छेहतिष्ठेति ध्रुवमावाह्य संस्थापयेत् ॥ ॐ ध्रुवाय नम इति पूजयेत् ॥इति॥ " अथ दक्षिणस्यां दिशि "—औदुंबरप्लाक्षं वा सुभद्रसंज्ञकं वा त्रिशूलचिन्हितं तोरणं इषेत्वोर्जेत्वा० इति मंत्रेण निधाय ॥ ॐ सुभद्राय विकटाय वा तोरणाय नम इति गंधादिभिः पूजयेत् ॥ चंदनादिभिः सुशोभनं कृत्वा ॥ सूर्यमंगारकं च तत्रावाह्य पूजयेत् ॥ ततस्तोरणस्तंभयोर्मध्ये पूर्ववत्कलशं स्थापयेत् ॥ तस्मिन् कलशे धरामावाह्य पूजयेत् ॥ " अथ पश्चिमे "—प्लाक्षमौदुंबरं वा सुकर्माख्यं त्रिशूलचिन्हितं तोरणं ॐ अग्न आयाहि० इति मंत्रेण निधाय ॥ सुकर्मणे सुभीमाय वा तोरणाय नम इति संपूज्य चंदनादिभिः सुशोभनं कृत्वा ॥ शुक्रं बुधं च तत्रावाह्य॥ अथ तोरणशाखयोर्मध्ये पूर्ववत्कलशं संस्थाप्य तस्मिन्कलशे वाक्पतिमावाह्य पूजयेत् ॥ "अथ उत्तरस्यां दिशि"—न्यग्रोधमाश्वत्थं वा सुहोत्राख्यं सुप्रभाख्यं वा त्रिशूलांकितं तोरणं ॐ शन्नो देवीरिति मंत्रेण निधाय ॐ सुहोत्राय सुप्रभाय वा तोरणाय नम इति गंधादिभिः संपूज्य चंदनादिभिः सुशोभितं कृत्वा ॥ सोमं केतुं शनिं च तत्रावाह्य संपूज्य॥ ततस्तोरणशाखयोर्मध्ये पूर्ववत् कलशं संस्थाप्य तस्मिन्कलशे विघ्नेशमावाह्य पूजयेत् ॥ इति द्वारतोरणपूजा ॥

"अथ दिक्पालपूजनम्"—पूर्वद्वारे द्वारशाखाद्वये कलशद्वयं दध्यक्षतादियुक्तं मंत्रावृत्त्या पूर्ववत्संस्थाप्य ॥ कलशद्वये ऐरावतमावाह्य पूजयेत् ॥ कलशद्वयोपरि घृतदीपं तैलदीपं वा समाचारात् स्थापयेत् ॥ ॐ द्वारश्रियै० इति द्वारादूर्ध्वं ॥ ॐ देहल्यै० इत्यधः ॥ वामदक्षिणस्तंभयोः गणेशाय० स्कन्दाय० ॥ ततो ऋग्वेदिनौ द्वौ वा एकं पूर्वद्वारे शान्तिसूक्तजपार्थं वृणुयात्॥ ध्यायेत् ॥ ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः ॥ अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ इति प्रत्येकं संप्रार्थ्य ॥ अग्निमीले इति गंधादिभिरुपचारैरर्चयेत् ॥ तत्रेन्द्रमावाहयेत् ॥ एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेशः ॥ संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ भो इन्द्र इहागच्छ इह तिष्ठ इति सांगं सपरिवारं सशक्तिकं इन्द्रं द्वारकलशयोरावाह्य ॥ ॐ त्रातारमिति मंत्रेण संपूज्य ॥ आशुः शिशान इति मंत्रेण पीतां पताकां पीतं ध्वजं च पंचहस्तदंडमुच्छ्रयेत् ॥ पताकास्त्रिकोणाः ॥ ध्वजाश्चतुष्कोणाः ॥ इति संप्रदायः ॥ तत ऐरावतस्थितं पीतवर्णं सहस्राक्षं किरीटकुंडलधरं दक्षिणवामकरस्थवज्रोत्पलमिन्द्रं ध्यात्वा ॥ इन्द्रः सुरपतिश्रेष्ठो वज्रहस्तो महाबलः ॥ शतयज्ञाधिपो देव तस्मै नित्यं नमो नमः॥ इति प्रणम्य इन्द्राय सांगाय सपरिवाराय सशक्तिकाय बलिं समर्पयामीति कलशयोरग्रयोर्बलिं दत्त्वा आचामेत् ॥

"अथाग्नेय्यां गत्वा"—पूर्ववत्कलशं स्थापयित्वा ॥ तत्र पुंडरीकममृतं संपूज्य तत्र दीपं स्थापयेत् ॥ एह्येहि सर्वामरहव्यवाहमुनिप्रवर्यैरभितोभिजुष्टः ॥ तेजोवता लोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते॥ अग्ने इहा० इत्यग्निं कलशे आवाह्य ॥ त्वन्नो अग्ने तव देवेत्यग्निं संपूज्य॥ अग्निदूतमिति रक्तां पताकां रक्तं ध्वजं च पंचहस्तदंडमुच्छ्रयेत् ॥ ततो छागस्थं रक्तं वामकरधृतशक्तिकमंडलुं यज्ञोपवितीनं अग्निं ध्यात्वा आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्यय ॥ धूम्रकेतुरजोध्यक्ष तस्मै नित्यं नमोनमः ॥ इति प्रणम्य ॥ अग्नये सांगाय० एषते माषभक्तबलिं समर्पयामीति कलशाग्रे बलिं दत्त्वा आचामेत् ॥ अथ दक्षिणद्वारे गत्वा ॥ प्रतिद्वारशाखं कलशद्वयं पूर्ववत्स्थापयित्वा कलशद्वये वामनं दिग्गजमावाह्यार्चयेत् ॥ दीपं च स्थापयेत् ॥ ॐ द्वारश्रियै० इत्यूर्ध्वे॥ ॐ देहल्यै० इत्यधः॥ स्तंभयोः पुष्पदन्ताय० कपर्दिने० ॥ द्वारस्थितकलशद्वये गोदावर्यै० कृष्णायै० ॥ यजुर्वेदिनावृत्विजौ द्वावेकं वा वृत्वा प्रार्थयेत् ॥ कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः ॥ काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भवेति प्रत्येकं संप्रार्थ्य ॥ इषेत्वोर्जेत्वेति गंधादिभिरर्चयेत् ॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते ॥ शुभाशुभानंद शुचामधीश। शिवाय नः पाहि मखं नमस्ते ॥ भो यम इहा० ॥ यमं सांगं० कलशयोरावाह्य ।

ॐ यमाय त्वांगिरस० संपूज्य ॥ कृष्णां ध्वजं पंचहस्तं आयंगौरिति मंत्रेणोच्छ्रयेत् । ततो महिषारूढं धृतदंडपाशं दक्षिणवामकरं अंजनपर्वततुल्यरूपमग्निसमलोचनं यमं ध्यात्वा प्रार्थयेत् ॥ महामहिषमारूढं दंडहस्तमहाबलं ॥ आवाहयामि यज्ञेस्मिन् पूजेयं प्रतिगृह्यतां ॥ इति संप्रार्थ्य ॥ सांगाय सपरिवाराय यमाय एष माषभक्तबलिं सम० ॥ द्वारकलशयोरग्रतो दत्त्वा आचामेत् ॥ "अथ नैर्ऋतिकोणे गत्वा"—पूर्ववत्कलशं संस्थाप्य ॥ तस्मिन् कुमुदं दिग्गजं दुर्जयं चावाह्याभ्यर्च्य दीपं स्थापयेत् ॥ एह्येहि यक्षो गणनायकस्त्वं विशालवैतालपिशाचसंघैः ॥ ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥ भोनिर्ऋते इहागच्छ० ॥ सांगं निर्ऋतिमावाह्य ॥ असुन्वन्तमिति मंत्रेणाभ्यर्च्य ॥ नीलां पताकां नीलं ध्वजं च पंचहस्तदंडं मोषूण इति मंत्रेणोच्छ्रयेत् ॥ नरारूढं खड्गहस्तं सर्वलोकैकपावनं ॥ आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यतां ॥ इति नत्वा ॥ निर्ऋतये० एतं माषभक्तबलिं सम० कलशाग्रतो दत्त्वा आचामेत् ॥ "अथ पश्चिमद्वारे गत्वा"—प्रतिद्वारशाखां कलशद्वयं पूर्ववत्संस्थाप्य अंजनाख्यं दिग्गजं तयोः कलशयोरावाह्याभ्यर्च्य दीपं स्थापयेत्॥ ऊर्ध्वं द्वारश्रियै० अधःदेहल्यै० ॥ स्तंभयोः नंदिने० चंडायै० ॥ द्वारस्थितकलशद्वये रेवायै० ताप्यै०॥ सामवेदिनौ ऋत्विजौ द्वौ वा एकं शान्तिसूक्तजपार्थं वृत्वा॥ सामवेदस्तु पिंगाक्षो जाग्रतः शक्रदैवतः ॥ भारद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वंमेमखे भव ॥ इति संप्रार्थ्य ॥ अग्न आयाहि० मंत्रेण गंधादिभिरर्चयेत्॥ एह्येहि यादोगणवारिधीनां गणेन पर्जन्य सहाप्सरोभिः॥ विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते॥ भोवरुण इहा० सांगं सपरिवारं वरुणमावाह्य॥ तत्त्वायामीति संपूज्य॥ श्वेतां पताकां श्वेतं ध्वजं च पंचहस्तं इमंमे वरुणेति मंत्रेणोच्छ्रयेत् ॥ पाशहस्तं च वरुणमर्णसां पतिमीश्वरं ॥ आवाहयामि यज्ञेऽस्मिन् वरुणाय नमोनमः ॥ इति नत्वा ॥ वरुणाय सांगाय० माषभक्तबलिं सम०॥ कलशयोरग्रतो बलिं दत्त्वा आचामेत् "अथ वायव्यां गत्वा"—पूर्ववत्कलशं स्थापयित्वा ॥ पुष्पदन्तं सिद्धार्थं च तत्रावाह्य संपूज्य दीपं स्थापयेत् ॥ एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सहसिद्धसंघैः ॥ प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते॥ भो वायो इहा० वरुणमावाह्य ॥ तववायवृतस्पत० मंत्रेणाभ्यर्च्य ॥ धूम्रां पताकां धूम्रं ध्वजं च पंचहस्तदंडं वायोयेते सहस्राणि इत्युच्छ्रयेत् ॥ वायुमाकाशगं चैव पवनं वेदवद्गतिं ॥ आवाहयामि यज्ञेस्मिन् पूजेयं प्रतिगृह्यतां ॥ अनाकारो महौजाश्च यश्च दृष्टगतिर्दिवि ॥ तस्मै पूज्याय जगतो वायवेऽहं नमामि च ॥ इति नत्वा ॥ वायवे० माषभक्तबलिं सम० कलशाग्रतो बलिं

दत्त्वा आचामेत् ॥ " अथ उत्तरे गत्वा "—प्रतिद्वारशाखं प्राग्वत् कलशद्वयं स्थापयित्वा ॥ सार्द्धभौमदिग्गजन्तयोः कलशयोरावाह्य संपूज्य दीपं स्थापयेत् ॥ ऊर्ध्वे द्वारश्रियै० अधः देहल्यै० स्तंभयोः महाकालाय० भृंगिणे० ॥ द्वारस्थितकलशद्वये वाण्यै० विण्यै० ॥ अथर्ववेदिनौ ऋत्विजौ वृत्वा ॥ बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः॥ वैशंपायन विप्रेन्द्र ऋत्विक् त्वं मे मखे भव॥ इति संप्रार्थ्य॥ शन्नोदेवीरिति मंत्रेण संपूज्य ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धं॥ सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ सोम इहा० सांगं सोमं द्वारकलशयोरावाह्य ॥ सोमोधेनुमिति वयंसोमेति वा संपूज्य॥ हरितां पताकां हरितं ध्वजं च पंचहस्तदंडमाप्यायस्वेत्युच्छ्रयेत् ॥ ततो नरयुतं पुष्पकविमानस्थं कुंडलकेयूरहारसंशोभितं वरदगदाधरवामदक्षिणहस्तं मुकुटिनं महोदरं स्थूलकायं पिंगलनेत्रं पीतविग्रहं शिवसखायं कुबेरं ध्यात्वा ॥ सर्वनक्षत्रमध्ये तु सोमो राजा व्यवस्थितः ॥ तस्मै सोमाय देवाय नक्षत्रपतये नमः ॥ इति नत्वा ॥ सोमाय० माषभक्तबलिं समर्प० कलशयोरग्रतो बलिं दत्त्वा आचामेत् ॥ " अथ ईशान्यां गत्वा "—पूर्ववत्कलशं संस्थाप्य ॥ सुप्रतीकं दिग्गजं मंगलं च तत्र कलशे आवाह्य संपूज्य दीपं स्थापयेत् ॥ एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वांगधरेण सार्द्धं ॥ लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते॥ भो ईशान इहा० तस्मिन् कलशे सांगं सपरिवारमावाह्य तमीशानमिति मंत्रेणाभ्यर्च्य ॥ श्वेतां चित्रवर्णां वा पताकां श्वेतं ध्वजं च पंचहस्तदंडं तमीशानमिति मंत्रेणोच्छ्रयेत् ॥ वृषस्कंधसमारूढं वरदत्रिशूलयुतं दक्षिणवामहस्तद्वयं त्रिनेत्रं शुद्धस्फटिकवर्णं ईशानं ध्यात्वा ॥ वृषस्कंधसमारूढं शूलहस्तं त्रिलोचनं ॥ आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यताम् ॥ सर्वाधिपो महादेवः ईशानः शुक्लईश्वरः ॥ शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमोनमः ॥ इति नत्वा॥ ईशानाय० माषभक्तबलिं सम० कलशाग्रतो बलिं दत्त्वा आचामेत् ॥ अथ ईशानपूर्वयोर्मध्ये अध उद्दिश्य कलशस्थापनं विनैव ॥ एह्येहि पातालधरामरेन्द्र नागांगनाकिन्नरगीयमान॥ यक्षोरगेन्द्रामरलोकसंघैरनन्तरक्षाध्वरमस्मदीयं ॥ भो अनन्त इहा० अनन्तमावाह्य आयंगौरिति मंत्रेणाभ्यर्च्य ॥ मेघवर्णां वा श्वेतां पताकां ध्वजं च पंचहस्तदंडं आयंगौरिति मंत्रेणोच्छ्रयेत् ॥ ततो अनन्तशयनासीनं फणासप्तकमंडितं पद्मशंखधरोर्ध्वाधो दक्षिणकरद्वयं चक्रगदाधर्ध्वाधो वामकरद्वयं नीलवर्णमनन्तं ध्यात्वा ॥ योसावनन्तरूपेण ब्रह्मांडं सचराचरं॥ पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमोनमः॥इति नत्वा॥ सांगाय सपरिवाराय अनन्तायैतं माषभक्तबलिं सम० बलिं दत्त्वा आचामेत् ॥ रूपनारायणमते तु नैर्ऋत्यपश्चिमयोर्मध्येऽप्यनन्तपूजा ॥ " अथ नैर्ऋतिपश्चिमयोर्मध्ये

गत्वा "–कलशस्थापनं विनैवोर्ध्वमुद्दिश्य ॥ एह्येहि सर्वाधिपते सुरेश लोकेश सार्द्धं पितृदेवताभिः ॥ सर्वस्य धाता स्यमितप्रभावो विशाध्वरं नः सततं शिवाय ॥ भो ब्रह्मन् इहा० सांगं ब्रह्माणं तत्रावाह्य ब्रह्मजज्ञानमिति संपूज्य ॥ रक्तां पताकां ध्वजं च पंचहस्तदंडं ब्रह्मजज्ञानमित्युच्छ्रयेत् ॥ ततश्चतुर्मुखं हंसारूढं अक्षमालांकुशमुष्टि-धरोर्ध्वाधो दक्षिणकरद्वयं स्रुवकमंडलुधरोर्ध्वाधो वामकरद्वयं श्मश्रुलं जटिलं लंबोदरं रक्तवर्णं ब्रह्माणं ध्यात्वा ॥ पद्मयोनिश्चतुर्मूर्त्तिर्वेदावासः पितामहः ॥ यज्ञाध्यक्ष-श्चतुर्वक्त्रस्तस्मै नित्यं नमो नमः ॥ इति नत्वा॥ सांगाय सपरि० ब्रह्मणे० माषभक्त-बलिं सम ॥ इति बलिं दत्वा आचामेत् ॥ रूपनारायणमते तु ईशानपूर्वयोर्मध्ये ब्रह्मपूजा ॥ " अथ मंडपमध्ये "–अत्युच्चदंडं दशहस्तदीर्घं त्रिहस्तविस्तृतं पंच-हस्तदीर्घं हस्तविस्तारं वा महाध्वजं विचित्रवर्णं चामरकिंकिण्यादि युक्तमिन्द्रस्य वृष्णेति मंत्रेण स्थापयेत् ॥ तत्रैव ब्रह्मजज्ञानमिति मंत्रेण संपूज्य ॥ ततो मंडपषो-डशस्तंभेषु सर्वेभ्यो देवेभ्यो० वंशेषु किन्नरेभ्यो० पृष्ठे पन्नगेभ्यो० इत्य-र्चयेत् ॥ ततो मंडपात् पूर्वस्यां दिशि किंचिदुपलिप्तभूभागे उपविश्य ॥ ॐ त्रै-लोक्ये यानि भूतानि स्थावराणि चराणि च ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे ॥१॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो गावो देवमातर एव च ॥ सर्वे ममाध्वरे रक्षां प्रकुर्वन्तु मुदान्विताः ॥ २ ॥ ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालो गणैः सह ॥ रक्षन्तु मंडपं सर्वे घ्नन्तु रक्षांसि सर्वतः ॥ ३ ॥ इति पठित्वा ॥ त्रैलोक्यस्थेभ्यः स्थावरेभ्यो भूतेभ्यो० त्रैलोक्यस्थेभ्य-श्चरेभ्यो भूतेभ्यो० ब्रह्मणे० विष्णवे० शिवाय० देवेभ्यो० दानवेभ्यो० गंधर्वेभ्यो० यक्षेभ्यो० राक्षसेभ्यो० पन्नगेभ्यो० ऋषिभ्यो० मनुष्येभ्यो० गोभ्यो० देवमातृ-भ्यो० इति प्रत्येकं संपूज्य ॥ पूर्वमंत्रैरेतस्यां भूमावेतेभ्यः गंधपुष्पादियुतं माषभ-क्तबलिं दद्यात् ततो यजमानः प्रक्षालितपाणिपादराचान्तः सर्वैराचार्यादिभिः ऋत्विग्भिः सहितः प्राग् द्वारेण मंडपान्तःप्रविशेत् ॥ आचार्यादयोपि प्राग् द्वारेण मंडपं प्रविशेयुः ॥ अग्न्यायतनाद्दक्षिणतो ब्रह्मासनस्थानात् पश्चात् यजमानः स्वासने उदङ्मुख उपविशेत् द्वारपालान् पठध्वमिति शान्तिसूक्तजपे नियोजयेत् ॥ ते च कर्मसमाप्तिपर्यन्तं स्वशाखीयसूक्तादि कुर्युः ॥ इति मंडपपूजा ॥

## ॥ अथ कुंडपूजाप्रयोगः ॥

आचार्यस्तु कुंडपश्चिमत उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य अ-मुकरुद्राख्ये कर्मणि अग्निप्रतिष्ठां करिष्ये ॥ तदंगतया संमार्जन मेखला योनि दे-

वता स्थापन पूजनादि करिष्येति संकल्पं कुर्यात् ।। अथाऽयायतनं समाप्य कुशोदकेनाभ्युक्षयेत् ।। इदं विष्णुरिति मंत्रेण उपरितनमेखलाया श्वेतवर्णालंकृतायां विष्णुमावाह्यार्चयेत् ।। ब्रह्मजज्ञानमिति मध्यमेखलायां रक्तवर्णालंकृतायां ब्रह्माणमावाह्यार्चयेत्।। इमा रुद्रायेत्यधो मेखलायां कृष्णवर्णयुतायां रुद्रमावाह्यार्चयेत् ।। अंबे अंबिके इति मंत्रेण योन्यां रक्तवर्णालंकृतायां गौरिमावाह्यार्चयेत् ।।इति।।

" अथ गृह्योक्तविधिना कुंडे पंचभूसंस्कारान् विधायाग्निं स्थापयेत् "—तत्रैवमाचारः ।। लौकिकाग्निं कांस्यादि पात्रेण मृन्मयेन वानीय कुंडाद्बहिराग्नेयां संस्थाप्य आचार्यस्तमग्निं गृहीत्वा आग्नेयकोणमार्गेण कुंडमध्ये नीत्वा ।। ॐ अग्निं मूर्धेति मंत्रेण अग्निदूतमिति मंत्रेण अग्निदूतमिति मंत्रान्ते वा शतमंगलनामानमग्निमुपसमादधे ।। इत्यग्निं कुंडे स्वात्माभिमुखमुपसमादध्यात् चत्वारि शृंगेत्यग्निमावाह्य मनोजूतिरिति प्रतिष्ठाप्य ध्यायेत् ।। रुद्रतेजः समुद्भूतं द्विमूर्धानं द्विनासिकं ।। षण्नेत्रं च चतुः श्रोत्रं त्रिपादं सप्तहस्तकं ।। वामभागे चतुर्हस्तं सव्यभागे त्रिहस्तकं ।। स्रुवं च शक्तिं च अक्षमालां च दक्षिणे ।। तोमरं व्यजनं चैव घृतपात्रं तु वामके ।। बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकं ।। दक्षिणं च चतुर्जिह्वं त्रिजिह्वमुत्तरं मुखं ।। द्वादशकोटिमूर्त्याख्यं द्विपंचाशत्कलायुतं ।। स्वाहास्वधावषट्कारैरंकितं मेषवाहनं ।। रक्तमाल्यांबरधरं रक्तपद्मासनस्थितं ।। रौद्रं तं वन्हिनामानं वन्हिमावाहयाम्यहं ।। त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते ।। आगच्छ भगवन् देव कुंडेऽस्मिन्सन्निधो भव ।। अत्रावसरे वास्तुपूजां कृत्वा ग्रहादीनां स्थापनमित्येवं केचिदाचरन्ति ।। तच्चिन्त्यं ।। इति ।।

## ।। अथ सर्वतोभद्रमंडलदेवतास्थापनम् ।।

सग्रहमखरुद्रपक्षे ग्रहवेद्यां सर्वतोभद्रमंडलं लिखेत् ।। तल्लेखनप्रकारस्तु हेमाद्रौ स्कान्दे ।। प्रागुदीच्यां गता रेखाः कुर्यादेकोनविंशतिः ।। खंडेन्दुस्त्रिपदैः कोणे शृंखला पंचभिः पदैः ।। एकादशपदा वल्ली भद्रं तु नवभिः पदैः ।। चतुर्विंशत्पदा वापि परिधिः विंशतिपदैः ।। मध्ये तु षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतं ।। श्वेतेन्दुः शृंखला कृष्णा वल्ली नीलेन पूरयेत् ।। भद्रारुणा सिता वापी परिधि पीतवर्णिका ।। बाह्यान्तरदलैः श्वेता कर्णिका पीतवर्णिका ।। परिध्या वेष्टितं पद्मं बाह्ये सत्वरजस्तमः ।। तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरासुरान् ।। एवं मंडलं विलिख्य ।। यजमानान्वित आचार्यो ग्रहवेद्यां सर्वतोभद्रे मंडलदेवताः स्थापयेत् ।। तद्यथा ।। ब्रह्मजज्ञान० प्रजापतिऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता मंडले ब्रह्मस्थापने पूजने च वि-

नियोगः ॥ ॐ ब्रह्मजज्ञानमिति मंत्रान्ते ब्रह्माणमावाह्य स्थापयेत् ( एवं सर्वत्र ) उदीचीमारभ्य वायव्यकोणपर्यन्तं कुबेरादि वायुपर्यन्तान् अष्टौ लोकपालान स्थापयेत् ॥ वयं सोमेत्यस्य बंधुकऋषिः गायत्रीछंदः सोमो देवता सोमस्थापने पूजने विनियोगः ॥ वयंसोमेति उदीच्यां सोमं० ॥ तमीशान० गौतमऋषिः जगतीछंदः ईशानो देवता ईशानस्थाप० ॐ तमीशानं० ईशान्यां० ईशानं० ॥ त्रातारं० गर्गऋषिः त्रिष्टुप्छंदः इन्द्रो देवता इन्द्र० ॥ ॐ त्रातारमिन्द्रं० प्राच्यां इन्द्रं० ॥ त्वन्नो अग्ने तव देवेत्यस्य हिरण्यस्तुप आंगिरस ऋषिः जगतीछंदः अग्निर्देवता अग्नि स्थापने ॥ ॐ त्वन्नो अग्ने तव देवेत्याग्नेयामग्निं० ॥ सुगन्नु पन्थामित्यस्य प्रजापतिऋषिः त्रियमो देवता यमस्थापने०॥ ॐ सुगन्नुपन्था० दक्षिणस्यां यमं०॥ असुन्वेति० प्रजापतिऋषिः त्रिष्टुप्छंदः निर्ऋतिर्देवता निर्ऋति०॥ असुन्वे० नैर्ऋत्यां निर्ऋति तत्त्वायामीत्यस्य शुनःशेपऋषिः त्रिष्टुप्छंदः वरुणो देवता वरुणस्थापने०॥ ॐ तत्त्वायामिति प्रतीच्यां वरुणं० आनोनियुद्भि० वायव्यां वायुं० सुगावो देवा इति मंत्रेण वायुसोममध्ये अष्टवसून्०॥ रुद्राः संसृज्येति प्रजापतिऋषिः अनुष्टुप् छंदः रुद्रोदेवता रुद्रस्थापने०॥ ॐ रुद्राः संसृज्येति सोमेशानयोर्मध्ये एकादशरुद्रान्०॥ यज्ञोदेवानां० कुत्सऋषिः यजुरन्ता त्रिष्टुप्छंदः आदित्या देवता द्वादशादित्य०॥ ॐ यज्ञोदेवानां० ईशानेन्द्रयोर्मध्ये द्वादशादित्यान्०॥ यावांकशा० मेधातिथिऋषिः यजुरन्ता गायत्रीछंदः अश्विनौदेवता अश्विनौ०॥ ॐ यावांकशा० इन्द्राग्निमध्ये अश्विनौ०॥ मासश्चऋषणीधृत मधुछंदाऋषिः गायत्रीछंदः विश्वेदेवादेवता विश्वेदेवाः स्थापने० ॥ ॐ मासश्च ऋषणीधृत० अग्नियममध्ये सपैतृकान् विश्वेदेवान्०॥ अभित्यदेव० प्रजापतिऋषिः अष्टिछंदः सप्तयक्षोदेवता यक्षस्थापने० ॥ ॐ अभित्यदेवं० इत्यादिना सुक्रतुकपास्वः इत्यन्तेन मत्रेण यमनैर्ऋतिमध्ये सप्तयक्षान्०॥ नमोस्तु सर्पेभ्य० प्रजापतिऋषिः अनुष्टुप्छंदः सर्पाःदेवताः सर्पस्थापने० ॥ ॐ नमोस्तु सर्पेभ्य० नैर्ऋतिवरुणमध्ये सर्पान्० ॥ ऋताषाड० देवाऋषयः गंधर्वाप्सरो देवता गंधर्वाप्सरसःस्थापने० ॥ ॐ ऋताषाडेति वरुणवायुमध्ये गंधर्वाप्सरसः ॥१७॥ यदक्रन्द० जमदग्निदीर्घतमाऋषी त्रिष्टुप्छंदः स्कंदो देवता स्कन्दस्थापने० ॥ ॐ यदक्रन्द० ब्रह्मसोमयोर्मध्ये स्कन्दं० ॥ तत्रैव नाममंत्रेण नंदीश्वरं० शूलमहाकालौ० ॥२०॥ अदितिर्द्यौ० ब्रह्मेशानयोर्मध्ये यक्षादीन् सप्त० ॥ २१ ॥ अंबे अंबिके० ब्रह्मेन्द्रमध्ये दुर्गां० ॥२२॥ इदं विष्णुरित्यस्य मेधातिथिऋषिः गायत्रिछंदः विष्णुर्देवता विष्णुस्थापने० ॥ इदं विष्णुरित तत्रैव विष्णुं ॥२३॥ पितृभ्य० प्रजापत्यश्विसरस्वत्या ऋषयः सर्वाणि यजूंषि पितरो देवताः स्वधास्थापने० ॥ पितृभ्य इति ब्रह्माग्निमध्ये स्वधां०॥२४॥

परंमृत्यावित्यस्य संकसुकऋषिः त्रिष्टुप्छंदः मृत्युर्देवता मृत्युरोगस्थापने० ॐ परं-मृत्याविति ब्रह्मयममध्ये मृत्युरोगौ०॥२५॥ गणानां० प्रजापतिऋषिः त्रीणि यजूंषि गणपतिर्देवता गणपतिस्थापने० ॥ ॐ गणानांत्वेति ब्रह्मनिर्ऋतिमध्ये गणपतिं॥२६॥ शन्नोदेवीरित्यस्य दध्यअथर्वणऋषिः गायत्रीछंदः आपोदेवता अपःस्थापने० ॥ ॐ शन्नोदेवी० ब्रह्मवरुणमध्ये अपः ॥२७॥ मरुतोयस्मेत्यस्य गौतमऋषिः गायत्रीछंदः मरुतो देवता मरुतः स्थापने० ॐ मरुतो यस्येति ब्रह्मवायुमध्ये मरुतः ॥२८॥ स्योनापृथिवीत्यस्य मेधातिथिऋषिः गायत्रिछंदः पृथिविदेवता गायत्रीस्थापने०॥ स्योना पृथिवीति ब्रह्मणः पादमूले पृथिवीं ॥ २९ ॥ पंचनद्य इति तत्रैव गंगादिनदीः ॥ इमं म इत्यस्य वरुणेति तत्रैव सप्तसागरान्० ॥ तदुपरि नाम्ना मेरुं ॥ ३२ ॥ बाह्ये सोमादिसमीपे आयुधानि क्रमेण स्थापयेत् ॥ गदायै० त्रिशूलाय० वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय० अंकुशाय० ॥४०॥ तद्बाह्ये उत्तरादिक्रमेण ॥ गौतमाय० भरद्वाजाय० विश्वामित्राय० कश्यपाय० जमदग्नये० वसिष्ठाय० अत्रये० अरुंधत्यै० ॥४८॥ तद्बाह्ये प्रागादिक्रमेण ॥ ऐन्द्र्यै० कौमार्यै० ब्राह्म्यै० वाराह्यै० चामुंडायै० वैष्णव्यै० माहेश्वर्यै० वैनायक्यै० ॥५६॥ इति प्रतिष्ठाप्य प्रत्येकं सह वा पूजयेत् ॥ ततस्तस्यामेव वेद्यामास्तृते वस्त्रे विरचिताष्टदलपद्मे लिखितवक्ष्यमाणमंडलेष्वादित्यादिग्रहादीन् स्थापयन्ति इति केचित् ॥ अन्येतु सर्वतोभद्रमंडलदेवतास्थापनं तत्पूजनं विनैव ग्रहवेद्यामास्तृते वस्त्रे विरचिताष्टदलपद्मे लिखितवक्ष्यमाणमंडलेष्वादित्यादिग्रहान् स्थापयन्ति ॥ वाजसनेयीनामाचारोऽप्येवं ॥ इति ॥

## ॥ अथ ग्रहस्थापनप्रयोगः ॥

देशकालौ संकीर्त्य अमुकरुद्रकर्मणि आदित्यादिग्रहाणां स्थापनं पूजनं च करिष्ये इत्याचारात् संकल्पं विधाय स्थापयेत् ॥ प्रणवस्य ब्रह्माऋषिः दैविगायत्रीछंदः परमात्माग्निर्देवता महाव्याहृतीनां क्रमेण विश्वामित्रजमदग्निभरद्वाजा ऋषयः सर्वासां प्रजापतिर्वा ऋषिः यथाक्रमं दैविगायत्रीदैव्युष्णिक् दैविगायत्रीछंदांसि अग्निवायुसूर्याश्च देवताः सूर्याद्यावाहने विनियोगः॥ ॐ भूर्भुवः स्वः कलिंगदेशोद्भव काश्यपगोत्र रक्तवर्ण सूर्य इहागच्छेत्यावाह्य॥ आकृष्णेत्यस्य हिरण्यस्तूपआंगिरसऋषिः त्रिष्टुप्छंदः सविता देवता सूर्यस्थापने०॥ ॐ आकृष्णेति मंत्रान्ते सूर्य इह तिष्ठेति ग्रहमध्ये विरचिताष्टदलपद्मकर्णिकायां द्वादशांगुले वर्तुले रक्तमंडले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैः स्थापयेत् ॥ ॐ भूर्भुवः स्वः यमुनातीरोद्भव आत्रेयसगोत्र शुक्लवर्ण सोमइहागच्छेत्यावाह्य ॥ इमंमेदेवा इत्यस्य वरुणऋषिः अत्यष्टिछंदः सोमोदेवता

सोमस्थापने० ॥ ॐ इमंमे देवा० सोमइहतिष्ठेत्याग्नेयदले चतुरस्रे श्वेतचतुरंगुलमंडले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतै० स्थापयेत् ॥ ॐ भूर्भुवः स्वः अवन्तीदेशोद्भव भारद्वाजसगोत्र रक्तवर्ण भौम इहागच्छेत्यावाह्य ॥ अग्निमूर्द्धेत्यस्य विरूपाक्ष ऋषिः गायत्रीछंदः अंगारको देवता अंगारकस्थापने० ॥ ॐ अग्निमूर्द्धेति मंत्रान्ते भौम इह तिष्ठेति दक्षिणदले त्र्यंगुले रक्तमंडले दक्षिणमुखं भौमं रक्तपुष्पाक्षतैः स्थापयेत् ॥ ॐ भूर्भुवः स्वः मगधदेशोद्भव आत्रेयसगोत्र पीतवर्ण बुध इहागच्छेत्यावाह्य ॥ उद्बुध्यस्वाग्न इत्यस्य परमेष्ठीऋषिः त्रिष्टुप्छंदः बुधोदेवता बुधस्थापने विनियोगः ॥ ॐ उद्बुध्यस्वाग्न० बुध इह तिष्ठेति ईशानदले बाणाकृतौ पीते चतुरंगुले मंडले उदङ्मुखं बुधं पीतपुष्पाक्षतैः स्थापयेत् ॥ ॐ भूर्भुवः स्वः सिंधुदेशोद्भव आंगिरसगोत्र पीतवर्ण गुरो इहागच्छेत्यावाह्य ॥ बृहस्पते अतीत्यस्य गृत्समदऋषिः त्रिष्टुप् छंदः बृहस्पतिर्देवता बृहस्पतिस्थापने० ॥ ॐ बृहस्पते अति अदयदर्य० गुरो इह तिष्ठेत्युत्तरदले दीर्घचतुरस्रे पीतवर्णषडंगुलमंडले उदङ्मुखं बृहस्पतिं पीताक्षतैः स्थापयेत् ॥ ॐ भूर्भुवः स्वः भोजकटदेशोद्भव भार्गवसगोत्र शुक्लवर्ण शुक्र इहागच्छेत्यावाह्य ॥ अन्नात्परिस्रुतस्य अश्विसरस्वतीन्द्राऋषयः अतिजगतीछंदः शुक्रोदेवता शुक्रस्थापने० ॥ ॐ अन्नात्परिस्रुत० शुक्र इह तिष्ठेति पूर्वदले पंचास्रे नवांगुलमंडले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः स्थापयेत् ॥ ॐ भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र कृष्णवर्ण शनैश्चर इहागच्छेत्यावाह्य ॥ शन्नोदेविरित्यस्य दध्यंगाथर्वणऋषिः गायत्रीछंदः शनिर्देवता शनैश्चरस्थापने० ॥ ॐ शन्नोदेवि० शनैश्चर इह तिष्ठेति पश्चिमे द्व्यंगुलमंडले कृष्णवर्णे धनुषाकृतिमंडले प्रत्यङ्मुखं शनिं कृष्णपुष्पाक्षतैः स्थापयेत् ॥ ॐ भूर्भुवः स्वः राठिनसदेशोद्भव पैठिनसगोत्र कृष्णवर्ण राहो इहागच्छेत्यावाह्य ॥ कयानश्चित्र इत्यस्य वामदेवऋषिः गायत्रीछंदः राहुर्देवता राहुस्थापने० ॥ ॐ कयानश्चित्र० नैर्ऋत्ये शूर्पाकारे कृष्णवर्णे द्वादशांगुलमंडले दक्षिणमुखं राहुं कृष्णपुष्पाक्षतैः स्थापयेत् ॥ ॐ भूर्भुवः स्वः अवन्तिदेशोद्भव जैमिनिगोत्र चित्रवर्ण केतो इहागच्छेत्यावाह्य ॥ केतुंकृण्व० मधुछंदाऋषिः अनिरुक्तागायत्रीछंदः केतुर्देवता केतु स्थापने० ॥ ॐ केतुंकृण्वन्निति वायव्ये ध्वजाकारे चित्रवर्णे षडंगुलमंडले धूम्रवर्णपुष्पाक्षतैः दक्षिणमुखं केतुं स्थापयेत् ॥ केतूनां बहुत्वेऽपि पूजादौ बहुत्वविशिष्टमेकदेवतात्वं ॥ सर्वान् आदित्याभिमुखान् स्थापयेत् ॥ इत्युक्तं मात्स्ये ॥

"अथाधिदेवतास्थापनम्"—अथाधिदेवताः सर्वे श्वेतपुष्पाक्षतैः स्थापयेत् ॥ ॐ भूर्भुवः स्वः रुद्र इहागच्छेत्यावाह्य ॥ त्र्यंबकमिति वसिष्ठऋषिः अनुष्टुप्छंदः

त्र्यंबको रुद्रो देवता रुद्रस्थापने० ॥ ॐ त्र्यंबकंयजामहे० सूर्यादुत्तरतो रुद्रं स्थापयेत् ॥ ॐ उमे इहागच्छ० श्रीश्चते० नारायणऋषिः त्रिष्टुप्छंदः उमादेवता उमास्थापने० ॥ ॐ श्रीश्चते० सोमदक्षिणे उमां० ॥ स्कन्द इहा० यदक्रन्द० भार्गवो जमदग्निर्दीर्घतमाऋषी त्रिष्टुप्छंदः स्कन्दोदेवता स्कन्दस्थापने० ॥ ॐ यदक्रन्द० भौमदक्षिणभागे स्कन्दं० ॥ विष्णो इहा० विष्णोरराटम० प्रजापतिऋषिः विष्णुर्देवता विष्णुस्थापने० ॥ ॐ विष्णोरराटमसीत्यारभ्य विष्णवेत्वेत्यन्ते बुधपश्चिमे विष्णुं० ॥ ब्रह्मन्निहागच्छ० आब्रह्मन्नित्यस्य प्रजापतिऋषिः यजुः ब्रह्मादेवता ब्रह्मस्थापने० ॥ आब्रह्मन्० गुरोःपूर्वभागे ब्रह्माणं० ॥ इन्द्र इहा० सजोषा इन्द्र० विश्वामित्रऋषिः त्रिष्टुप्छंदः इन्द्रोदेवता इन्द्रस्थापने० ॥ सजोषा इन्द्र० शुक्रात्प्राच्यामिन्द्रं० ॥ यम इहा० यमायत्वा० दध्यंगाथर्वणऋषिः यजुश्छंदः यमोदेवता यमस्थापने० ॥ यमाय त्वांगिरस्वत इत्यारभ्य धर्मः पित्र इत्यन्तेन शनेराग्नेयभागे यमं० ॥ कालइहा० कार्षिरसि० प्रजापतिऋषिः अनुष्टुप्छंदः कालोदेवता कालस्थापने० ॥ ॐ कार्षिरसीति मंत्रान्ते राहोरीशान्यां कालं० ॥ चित्रगुप्त इहा० ॐ चित्रावसो इत्यस्य यजुर्जगतीछंदः चित्रगुप्तो देवता चित्रगुप्तस्थापने० ॥ ॐ चित्रावसो स्वस्तिते० केतोर्नैर्ऋत्यां चित्रगुप्तं ॥ ९ ॥ इति ॥

"अथ प्रत्यधिदेवतास्थापनम्"—शुक्लपुष्पाक्षतैरेव ग्रहाधिदेवतयोर्मध्ये आदित्यादिक्रमेण अग्न्याद्याः सर्वाः प्रत्यधिदेवताः स्थापयेत्॥ तद्यथा ॥ ॐ भूर्भुवः स्वः अग्ने इहागच्छेत्यावाह्य ॥ अग्निदूत० विरूपाक्षऋषिः गायत्रीछंदः अग्निर्देवता अग्निस्थापने० ॥ ॐ अग्निदूतं० इति मंत्रान्ते अग्ने इह तिष्ठेति अग्निं० ॥ आप इहा० आपोहिष्ठेत्यस्य सिंधुद्वीपऋषिः गायत्रीछंदः आपो देवता अपां स्थापने० ॥ ॐ आपोहिष्ठा० आपः॥ पृथिवी इहा० स्योना पृथिवी० मेधातिथिऋषिः गायत्रीछंदः पृथिवी देवता पृथिवीस्थापने० ॥ स्योना पृथिवी० पृथिवी० विष्णो इहा इदं विष्णु० मेधातिथिऋषिः गायत्रीछंदः विष्णुर्देवता विष्णुस्थापने० ॥ ॐ इदं विष्णु० विष्णु० ॥ इन्द्र इहा० इन्द्र आसां० अप्रतिरथ ऋषिः त्रिष्टुप्छंदः इन्द्रोदेवता इन्द्र स्थापने० ॥ ॐ इन्द्र आसां० इन्द्रं०॥ इन्द्राणि इहा० अदित्यैरास्नासीतस्य दध्यंगाथर्वणऋषिः यजुस्त्रिष्टुप् वा इन्द्राणि देवता इन्द्राणि स्थापने० ॥ ॐ अदित्यैरास्नासीत्यारभ्य धर्मायदीष्वेत्यन्ते इन्द्राणिं० ॥ प्रजापते इहा० प्रजापत इत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छंदः प्रजापतिर्देवता प्रजापतिस्थापने० ॥ ॐ प्रजापते नत्व दित्यन्ते० प्रजापतिं० ॥ सर्पा इहा० नमोऽस्तु सर्पेभ्य० सर्पान्० ॥ ब्रह्मन् इहा०

ब्रह्मजज्ञान० प्रजापतिऋषिः ब्रह्मादेवता ब्रह्मस्थापने० ॥ ॐ ब्रह्मजज्ञान० ब्रह्माणं० ॥ उत्पलपरिमलकारादयस्तु ग्रहाणां दक्षिणपार्श्वे प्रत्यधिदेवताः स्थाप्या इत्याहुः

" अथ पंचलोकपालानां स्थापनम् "—गणानां त्वेत्यस्य प्रजापतिऋषिः यजुर्गणपतिदेवता गणपतिस्थापने० ॐ गणानां त्वा० राहोरुत्तरतः गणपतिं स्थापयेत् दुर्गेइहा० अंबे अंबिके० प्रजापतिऋषिः त्रिष्टुप्छंदः दुर्गादेवता दुर्गास्थापने०॥ ॐ अंबे अंबिके० शनेरुत्तरतो दुर्गां० ॥ वायो इहा० वायो येते० गृत्समदऋषिः गायत्रीछंदः वायुर्देवता वायुस्थापने० ॥ वायोयेते० सूर्यादुत्तरतो वायुं० ॥ आकाश इहा० घृतं घृतपावांन० प्रजापतिऋषिः ऋचां पंक्तिछंदः आकाशोदेवता आकाश स्थापने० ॥ ॐ घृतं घृतपावान० राहोर्दक्षिणत आकाशं० ॥ अश्विनौ इहा० यावांकशे० मेधातिथि ऋषिः गायत्रीछंदः अश्विनौ देवता अश्विनौ स्थापने० ॥ ॐ यावां कशे० केतोर्दक्षिणतः अश्विनौ० ॥ ५ ॥ एतानि विनायकादिस्थानानि चिन्तामणौ ॥ विनायकादीन् पंचोत्तर एवेति संप्रदायः ॥ उत्तरतो क्षेत्राधिपतिं वास्तोष्पतिं चावाहयेदित्येके ॥ क्षेत्राधिपते इहा० नहि स्पशमित्यस्य विश्वामित्रऋषिः त्रिष्टुप्छंदः क्षेत्राधिपतिर्देवता क्षेत्राधिपतिस्थापने० ॥ ॐ नहि स्पश० क्षेत्राधिपतिं० ॥ वास्तोष्पते० वास्तोष्पत इत्यस्य वसिष्ठऋषिः त्रिष्टुप्छंदः वास्तोष्पतिर्देवता वास्तोष्पतिस्थापने० ॥ ॐ वास्तोष्पते प्रति० वास्तोष्पतिं० ॥ एवं द्वात्रिंशद्देवता इत्युक्ता नारायणादयः ॥ हेमाद्रौ तु दिक्पालानामपि सूर्याभिमुखानां दिक्षु स्थापनाद्युक्तं ते चाष्टौ स्थाप्याः ॥ इति केचिन्न ॥ दशेति मदनरत्ने इति॥

" अथ दिक्पालदेवतास्थापनम् "—ॐ भूर्भुवः स्वः इन्द्र इहा० त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छंदः इन्द्रो देवता इन्द्र स्थापने०॥ ॐ त्रातारमिन्द्रं० प्राच्यामिन्द्रं०॥ अग्ने इहा० त्वन्नो अग्ने० हिरण्यस्तुप अंगीरसऋषिः त्रिष्टुप्छंदः अग्निर्देवता अग्निस्थापने० ॥ ॐ त्वनो अग्ने० आग्नेयामग्निं० ॥ यम इहा० सुगन्नुपन्थां० प्रजापतिऋषिः त्रिष्टुप्छंदः यमो देवता यमस्थापने० ॥ ॐ सुगन्नु पन्थां० दक्षिणस्यां यमं० ॥ नैर्ऋते इहा० असुन्वन्तं० प्रजापतिऋषिः त्रिष्टुप्छंदः निर्ऋतिर्देवता निर्ऋतिस्थापने० ॥ ॐ असुन्वन्तं० नैर्ऋत्यां नैर्ऋतिं० ॥ वरुण इहा० तत्त्वायामि० प्रतीच्यां वरुणं० ॥ वायो० आनोनियुद्भि० वायव्यां वायुं० ॥ सोम इहा० वयं सोम० बंधुऋषिः गायत्रीछंदः सोमोदेवता सोमस्थापने०॥ ॐ वयं सोम० उदीच्यां सोमं० ॥ ईशान इहा० तमीशान० गौतमऋषिः जगतीछंदः ईशानो देवता ईशान स्थापने० ॥ ॐ तमीशान० ईशान्यामीशानं० ॥ ब्रह्मन् इहा० अस्मे रुद्रा० प्रगाथ-

ऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता ब्रह्मस्थापने० ॥ ॐ अस्मेरुद्रा० ईशानेन्द्रयोर्मध्ये ब्रह्माणं० ॥ अनन्त इहा० स्योना पृथिवि० मेधातिथि ऋषिः गायत्रीछंदः अनन्त स्थापने० ॥ ॐ स्योनापृथिवि० निर्ऋतिवरुणयोर्मध्ये अनन्तं० ॥४४॥ एतच्च रुपनारायणमते ॥ अन्येतु नैर्ऋतिवरुणयोर्मध्ये ब्रह्मा ईशानेन्द्रयोर्मध्ये अनन्तं स्थाप्य मित्याहुः ॥ केचित्तु ब्रह्मानन्तयोः स्थापनं नेच्छन्ति ॥ एवं देवताः संस्थाप्य॥ मनोजूतिरिति मंत्रान्ते सूर्यः सुप्रतिष्ठितो वरदो भवेत्येवं सूर्यादीनां सर्वेषां प्रत्येकं मंत्रावृत्या प्रतिष्ठां विधाय पूजां कुर्यात् ॥इति॥

## ॥ अथ मत्स्यपुराणोक्तनवग्रहध्यानम् ॥

पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ॥ सप्ताश्वरथसंयुक्तो द्विभुजः स्यात् सदा रविः ॥ १ ॥ श्वेतः श्वेतांबरधरो दशाश्वश्वेतभूषणः ॥ गदापाणिर्द्विभुजश्च कर्तव्यो वरदः शशिः ॥२॥ रक्तमाल्यांबरधरः शक्तिशूलगदाधरः॥ चतुर्भुजो मेषगामी वरदः स्याद्धरासुतः ॥३॥ पीतमाल्यांबरधरः कर्णिकारसमद्युतिः ॥ खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥४॥ देवदैत्यगुरुस्तद्वत पीतश्वेतौ चतुर्भुजौ ॥ दंडिनौ वरदौ कार्यौ साक्षसूत्रकमंडलू ॥ ५ ॥ इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः ॥ वाणबाणासनधरः कर्त्तव्योर्कसुतः सदा ॥ ६ ॥ करालवदनः खड्गचर्मशूलीवरप्रदः॥ नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते ॥७॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः ॥ गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः॥८॥ सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः ॥ अंगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं शतं ॥ ९ ॥ " विष्णुधर्मोत्तरे " पंचवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः ॥ कपालशूलखट्वांगी चंद्रमौलिः सदाशिवः ॥१॥ अक्षसूत्रं च कमलं दर्पणं च कमंडलु॥ उमा बिभर्त्तिहस्तेषु पूजिता त्रिदशैरपि ॥२॥ कुमारः षण्मुखः कार्यः शिखंडकविभूषणः॥ रक्तांबरधरो देवो सदा मयूरवाहनः ॥३॥ कुक्कुटश्च तथा घंटा तस्य दक्षिणहस्तयोः ॥ पताका वैजयन्त्याख्या शक्तिः कार्या च वामयोः ॥४॥ विष्णुः कौमोदकी पद्मशंखचक्रधरः क्रमात् ॥ प्रदक्षिणं दक्षिणाधः करादारभ्य नित्यशः ॥५॥ पद्मासनस्थो जटिलो ब्रह्मा कार्यश्चतुर्मुखः॥ अक्षमालां स्रुवं बिभ्रत् पुस्तकं च कमंडलुं ॥६॥ वासः कृष्णाजीनं तस्य पार्श्वे हंसस्तथैव च ॥ चतुर्दन्तगजारूढो वज्री कुलिशभृत्करः ॥७॥ शचीपतिः कर्तव्यो नानाभरणभूषितः ॥ इन्द्रनीलः यमः कार्यो दंडहस्तो विजानता ॥८॥ रक्तस्रक् पाशहस्तश्च महामहिषवाहनः ॥ कालं करालवदनो नीलांगश्च विभीषणः ॥ ९ ॥ पाशहस्तो दंडहस्तः कार्यो वृश्चिकरोमवान् ॥ अपीच्यवेषं स्वाकारं द्विभुजं सौम्यदर्शनं

॥१०॥ दक्षिणे लेखनीं चित्रगुप्त वामे तु पत्रकं ॥ पिंगलश्मश्रुकेशान्तः पीनांगाज वरोहणः ॥११॥ पिंगाक्षस्त्रितयोरुण इति वा पाठः ॥ छागस्थसाक्षसूत्रोग्निसप्तार्चिः शक्तिधारकः ॥ चिन्हितं च परेणास्यकरमन्यं प्रकल्पयेत् ॥१२॥ आपः स्त्रिरूपधारिण्यः श्वेतमकरवाहनः ॥ दधानाः पाशकलशौ मुक्ताभरणभूषिताः ॥१३॥ शुक्लवर्णा मही कार्या दिव्याभरणभूषिताः॥ चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशांबरा ॥१४॥ रक्तपात्रं सस्यपात्रं पात्रमौषधिसंयुतं॥ पद्मं करे च कर्त्तव्यं भुवो पांडवनंदन ॥१५॥ दिग्गजानां चतुर्णां सा कार्या पृष्ठगता तथा॥ विष्णोरिन्द्रस्य च लक्षणमुक्तं ॥१६॥ वामे शच्याः करे कार्याः सौम्यसंतानमंजरी ॥ वरदा मंडिता कार्या द्विभुजा च तथा शची ॥१७॥ यज्ञोपवितीं हंसस्य एकवक्त्रश्चतुर्भुजः ॥ अक्षं स्रुचं स्रुवं विभ्रत् कुंडिकां च प्रजापतिः ॥१८॥ अक्षं च अक्षमालां च कुंडिकां च कमंडलुं ॥ अक्षसूत्रधराः सर्वे कुंडिकापुच्छभूषणाः ॥१९॥ एकभागस्त्रिभागो वा सर्वे कार्याश्च भीषणाः ॥ ब्रह्मलक्षणमागुक्तं ॥२०॥ अथ विनायकादिप्रतिमालक्षणानि विष्णुधर्मोत्तरे॥ चतुर्भुजस्त्रिनेत्रश्च कर्तव्योत्र गजाननः नागयज्ञोपवीतश्च शशांककृतशेखरः॥२१॥ दक्षे दन्तं करे दद्यात् द्वितीये चाक्षसूत्रकं॥ तृतीये परशुं दद्यात् चतुर्थे मोदकं तथा ॥२२॥ शक्तिबाणं तथा शूलं खड्गं चक्रं च दक्षिणे ॥ चन्द्रबिंबमधोभागे खेटमूर्ध्वे कपालकं ॥२३॥ सुकंटकं च बिभ्राणं सिंहारूढोरूदिग्भुजा ॥ एषा देवि समुद्दिष्टा दुर्गा दुर्गार्त्तिहारिणी ॥ २४ ॥ धावद्धरिणपृष्ठस्थो ध्वजधारिसमीरणः ॥ वरदानकरो धूम्रवर्णः कार्यो विजानता ॥ २५ ॥ नीलोत्पलाभं गगनं तद्वर्णांबरधारि च ॥ चन्द्रार्कहस्तं कर्तव्यं द्विभुजं सौम्यखंडवत् ॥ २६ ॥ द्विभुजौ सौम्यवरदौ कर्त्तव्यौ रूपसंयुतौ ॥ वयोरोषधयः कार्याः दिव्या दक्षिणहस्तयोः ॥ २७ ॥ वामयोः पुस्तकौ कार्यौ दर्शनीयौ तथा द्विजाः ॥ एकस्य दक्षिणे पार्श्वे वामे चास्य च यादव ॥ २८ ॥ नारीयुगं प्रकर्तव्यं सुरूपं चारुदर्शनं ॥ रत्नभांडकरे कार्यं चन्द्रं शुक्लांबरे तथा ॥ २९ ॥ अथ लोकपालस्वरूपाणि ॥ तत्रेन्द्राग्नियमब्रह्मरूपाण्यधिप्रत्यधिदेवतासूक्तान्येव ॥ खड्गचर्मधरो बालो निर्ऋतिर्निरवाहनः ॥ ऊर्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः ॥ ३० ॥ नागपाशधरो रक्तभूषणः पद्मनिपतिः। वरुणोंबुपतिः स्वर्णः वर्णो मकरवाहनः॥३१॥ वायुर्विनायकादिपंचके उक्तः ॥ सोमो ग्रहेषु॥ अनन्तः प्रत्यधिदेवतासु वर्णितः ॥ इति ध्यानम् ॥

“ अथ सूर्यादिग्रहाणां पूजाप्रकारः ”–आकृष्णेन० इति मंत्रं पठित्वा सूर्यायनमः आवाहनं सम०॥ आसनं पाद्यं अर्घ्यं आचमनीयं पंचामृतस्नानं स्नानं पुनराचमनीयं रक्तवस्त्रं वस्त्रान्ते आचमनीयं उपवीतं आचमनं रक्तचंदनं रक्तपुष्पाणि

धूपं दीपं नैवेद्यं आचमनं फलं तांबूलं दक्षिणां प्रदक्षिणां नीराजनं पुष्पांजलिं इत्याद्युपचारान् समर्प्य नमस्कुर्यात् ॥ एवं होमप्रकरणे वक्ष्यमाणस्तत्तन्मंत्रैः सोमाय नम इत्येवं प्रणवचतुर्थीनमोन्तेन नाममंत्रेण च सोमाद्यनन्तान देवान् पूजयेत् ॥ एतावत्स्पशक्तौतु आवाहितादित्यादिदेवताभ्यो नम इति मंत्रेण सर्वे पूजनीयाः तत्र वासांसि ग्रहवर्णानि देयानि ॥ रविभौमयोः रक्तचंदनं चन्द्रशुक्रयोः श्वेतं बुधगुरोः कुंकुमयुतं शनिराहुकेतून् आकृष्णागुरुं ॥ पुष्पाणि तद्वर्णानि ॥ धूपास्तु सल्लकीनिर्यासधूपः सूर्याय घृताक्तयवधूपश्चंद्राय सर्जरसोभौमाय अगरु बुधाय सिंहको गुरवे बिल्वागुरुः शुक्राय गुग्गलः शनिश्चराय राहवे केतवे च लाक्षाधूपः ॥ शल्लकी निर्यास कंडुरुक सर्जसाल सिहूलकं इति मध्यदेशे प्रसिद्धं॥ तस्य रसः बिल्वागुरुं बिल्वफलं निर्याससहितमगरुं ॥ घृतदीपाः ॥ नैवेद्यानि तु गुडोदनं सूर्याय ॥ घृतपायसमिन्दवे ॥ नीवारौदनहविष्यान्नमंगारकाय ॥ क्षीरयुतशाष्टिकोदनं बुधाय ॥ दध्योदनंगुरवे ॥ घृतोदनं शुक्राय ॥ तिलमाषमिश्रितोदनं शनिश्चराय ॥ मांसोदनं राहवे ॥ चित्रोदनं केतवे ॥ अधिदेवतादिभ्यस्तु वासो गंधपुष्पाणि श्वेतानि गुग्गलधूपः नैवेद्यं पायसादिर्यथालाभं ॥ विनायकादिपूजासु चंदनानुलेपनशतपत्रपुष्पगुग्गुलधूपघृतदीपघृतोदननैवेद्यादीनि ग्राह्याणि ॥ उक्तालाभे सर्वेभ्यो वा पायसं ततः सर्वभक्ष्यैश्चार्चयेत् ॥ इति वचनान्मोदकादीनि सर्वभक्ष्याणि निवेदयेत् ॥ तद्यथा ॥ एतानि मोदकादीनि भूरिभक्ष्याणि सूर्यादिभ्यो नवग्रहेभ्यो नम इति दद्यात्॥ एतेषां सूर्यादीनां सर्वेषां पूजापदार्थानुसमयेनैवेति मदनरत्नदानकांडे दानमयूखे च ॥ अत्र पूजैव पदार्थो नत्वेकैकोपचारसमर्पणं पदार्थः॥ तस्य मुष्टित्वपदार्थात्रयवाच्च ॥इति ॥

"अथ कलशस्थापनम्"—तत्रादौ ग्रहवेदीशानभागे गोमयोपलिप्ते सितैस्तंदुलैश्चतुर्विंशतिदलमष्टदलं वा कमलं सकर्णिकं विलिख्य तस्यां कर्णिकायां व्रीहीन्निधाय तेषु अव्रणं कलशं बहिर्दध्यक्षतविभूषितं चंदनमालाचर्चितं पूर्ववत् कलशस्थापनविधिना पूर्णपात्रपिधानान्तेन संस्थाप्य॥ तत्त्वायामीति मंत्रान्ते वरुण इहागच्छेति तस्मिन्कलशे वरुणमावाह्य वरुणाय नम इति पूजयेत्॥ कलशस्य मुखे० ॥ इत्यादिकैर्मंत्रैः कलशाभिमंत्रणं कुर्यात् ॥ तत इदं फलपुष्पमालाशोभितं विचित्रवर्णं वितानं बृहस्पतिदैवतं सूर्यादिभ्यो नममेत्युत्सृज्य वेद्युपरि बध्नीयात् ॥ इति ॥

## ॥ अथ चतुःषष्ठियोगिनीस्थापनम् ॥

आग्नेय्यां योगिनीपीठे महाकाली महालक्ष्मी महासरस्वतीश्चतुःषष्ठियोगिनी स्कान्दे काशीखंडोक्ताश्च पूजयेत् ॥ तद्यथा ॥ पीठे रक्तवस्त्रमाच्छाद्य पीठे पूर्वभागे त्रीणि त्र्यस्राणि विलिख्य तेषु त्र्यस्रेषु कलशस्थापनविधिना त्रीन् कलशान् क्रमेण

संस्थाप्य तेषु कलशेषु सुवर्णमय्यः तिस्रः प्रतिमाः कृताग्न्युत्तारणाः संस्थाप्य तासु प्रतिमासु ॐ भूर्भुवः स्वः महाकालीमावा० महालक्ष्मीमावा० महासरस्वतीमावा०॥ इति क्रमेणावाह्य संस्थापयेत् ॥ ततस्तदग्रे अष्टौ त्र्यस्राणीत्येका पंक्तिः एवमष्टौ त्र्यस्रपंक्तिः कृत्वा तेषु त्र्युस्रेषु वक्ष्यमाणनामभिरावाह्य संस्थाप्य पूजयेत्॥ तदित्थं॥ ॐ भूर्भुवः स्वः गजाननामावा० इत्येकस्मिन् कोष्टे संस्थाप्यैवमुत्तरेषु कोष्टेषु सिंहमुख्यादीन् स्थापयेत् ॥ तद्यथा ॥ सिंहमुख्यै० गृध्रास्यायै० काकतुंडिकायै० उष्ट्रग्रीवायै० हयग्रीवायै० वाराह्यै० शरभाननायै० ॥ ८ ॥ द्वितीयपंक्तौ उलूकायै० शिवारावायै० मयूर्यै० विकटाननायै० अष्टवक्रायै० कोटराक्ष्यै० कुब्जायै० विकटलोचनायै० ॥१६॥ तृतीयपंक्तौ शुष्कोदर्यै० ललजिह्वायै० श्वदंष्ट्रायै० वानरायै० रुक्षाक्ष्यै० केकराक्ष्यै० बृहत्तुंडायै० सुराप्रियायै० ॥२४॥चतुर्थपंक्तौ कपालहस्तायै० रक्ताक्ष्यै० शुष्क्यै० श्येन्यै० कपोतिकायै० पाशहस्तायै० दंडहस्तायै० प्रचंडायै० ॥३२॥ पंचमपंक्तौ चंडविक्रमायै० शिशुघ्न्यै० पापहंत्र्यै० काल्यै० रुधिरपायिन्यै० वसाधमायै० गर्भभक्षायै० शवहस्तायै० ॥४०॥ षष्ठपंक्तौ ॥ अंत्रमालिन्यै० स्थूलकेश्यै० बृहत्कुक्ष्यै० सर्पास्यायै० प्रेतवाहनायै० दंडशुकरायै० क्रोंच्यै० मृगशीर्षायै० ॥४८॥ सप्तमपंक्तौ वृषाननायै० व्यात्तास्यायै० धूम्रनिःश्वासायै० व्योमैकचरणोर्ध्वदृशायै० तापन्यै० शोषणीदृष्ट्यै० कोटर्यै० स्थूलनासिकायै० ॥ ५६ ॥ अष्टमपंक्तौ विद्युत्प्रभायै० बलाकास्यायै० मार्जार्यै० कटपूतनायै० अट्टाट्टहासायै० कामाक्ष्यै० मृगाक्ष्यै० मृगलोचनायै० ॥६४॥ ॐ मनोजूतिरिति मंत्रान्ते महाकाल्याद्याः मृगलोचनान्ताः सुप्रतिष्ठिता भवन्त्विति प्रतिष्ठा ॥ ततः पदार्थानुसमयेन ॐ महाकाल्यै० इतिषोडशोपचारैः पंचोपचारैर्वा महाकालीं संपूज्य एवं महालक्ष्म्यै० महासरस्वत्यै० इति महालक्ष्मीं महासरस्वतीं च पूजयेत् ॥ ततो गजाननादिमृगलोनान्ताभ्यो योगिनीभ्यो नम इत्येवं पूजयेत् ॥ ततो ब्राह्मणद्वारा सप्तशतीपाठं पाठयेत्॥

## ॥ अथैकपंचाशत्क्षेत्रपालस्थापनम् ॥

वायव्यां क्षेत्रपालपीठे एकपंचाशत्क्षेत्रपालान् पूजयेत् ॥ अथातः क्षेत्रपालानां वक्ष्ये पूजनमुत्तमं ॥ श्रृणुष्वावहितो भूत्वा न श्रुतं यत्त्वया क्वचित् ॥ ग्रामेषु नगरे चैवं पूज्यन्ते य हितार्थिभिः ॥ अपूजितास्तु कुर्वीत विघ्नान् शतसहस्रशः ॥ तत्पूजनप्रकारस्त्वेवं ॥ श्वेतवस्त्राच्छादिते पीठे चतुरस्रं विलिख्य तिर्यङ्मान्यां च सूत्रद्वंद्वं समान्तरालं दद्यात् ॥ एवं समा नवकोष्ठा भवन्ति ॥ अष्टदलं पद्मं वा लिखेत् ॥ ततो मध्यकोष्टे पद्मकर्णिकायां कलशोपरि स्थापयेत् तत्र सौवर्णीं प्रतिमां स्थापयेत् ॥ ततस्तस्यां प्रतिमायां ॐ नमोस्तु सर्पेभ्य इति मंत्रान्ते

क्षेत्रपालमावा० ॥१॥ ततः पूर्वदिक् कोष्टे ॥ ॐ भूर्भुवः स्वः अजराय० ॥ व्यापकाय० इन्द्रचौराय० इन्द्रमूर्तये० उक्षाय० कूष्मांडाय० ॥ ६ ॥ इति षट्कं स्थापयेत् ॥ आग्नेयकोणकोष्टे वरुणाय० बटुकाय० विमुक्ताय० लिप्तकाय० लिलालोकाय० एकदंष्ट्राय० ॥१२॥ इति द्वितीयषट्कं ॥ दक्षिणादिकोणकोष्टे ऐरावताय० औषधिघ्नाय० बंधनाय० आचिकाय० कंबलाय० भीषणाय० ॥१८॥ इति तृतीयषट्कं॥ निर्ऋतिकोणकोष्टे ॥ गणकाय० घंटाय० व्यालाय० अंशाय० चंद्रवारुणाय० फटाटोपाय० ॥२४॥ इति तुरीयष कं ॥ प्रतीचिदिक्कोष्टे ॥ जहालाय० ऋतवे० घंटेश्वराय विकटाय० मणिमानाय० गणबंधाय० ॥३०॥ इति पंचमषट्कं॥ वायव्यकोणकोष्टे ॥ मुंडाय० बब्रूकराय० सुधापाय० वैनाय० पवनाय० हुंढकर्णाय० ॥३६ इति षष्ठषट्कं ॥ उत्तरदिक्कोष्टे ॥ स्थविराय० दंतुराय० धनदाय० नागकर्णाय० महाबलाय० फेत्काराय० वीरकाय० ॥४३॥ इति सप्त ॥ ईशानदिक् कोष्टे ॥ सिंहाय० मृगाय० यक्षाय० मेघवाहनाय० तीक्ष्णाय० अमलाय० शुक्राय० ॥५०॥ एवं क्षेत्रपालान् संस्थाप्य ॥ मनोजूतिरिति मंत्रान्ते क्षेत्रपाल सुप्रतिष्ठितो भवेति क्षेत्रपालं प्रतिष्ठाप्य एवमजरादीन् सर्वान् प्रत्येकं प्रतिष्ठापयेत् ॥ अथवा मनोजूतिरिति मंत्रान्ते क्षेत्रपालादय शुक्रान्ताः सुप्रतिष्ठिताः भवन्त्विति प्रतिष्ठा ॥ ततः क्षेत्रपालाय नम इत्येवं सर्वान् अजरादीन् प्रत्येकं षोडशोपचारैर्वा प्रणवादिचतुर्थीनमोन्तैर्नामभिः पूजयेत् ॥ अथवा क्षेत्रपालादिभ्यः शुक्रान्तेभ्यो नम इति पूजयेदिति ॥ रुद्रांगत्वेन योगिनीनां क्षेत्रपालानां च पूजने मूलं मृग्यम् ॥

## ॥ अथ द्वादशलिंगतोभद्रमंडलदेवताप्रकारः ॥

ग्रहपीठादुत्तरतो रुद्रवेद्यां द्वादशलिंगोद्भवं लिंगतोभद्रमंडलं विलिखेत् ॥ तल्लेखनप्रकारस्तु ॥ आग्नेये प्रागुदीच्या रेखाः षड्त्रिंशत् प्रकल्पयेत् ॥ पदानि द्वादशशतं पंचविंशतिरेव च ॥ खंडेदुस्त्रिपदैः कोष्टे शृंखला षट्पदैः स्मृताः ॥ त्रयोदशपदा वल्ली भद्रं तु नवभिः पदैः ॥ त्रयोदशपदा वापी लिंगमष्टादशैः स्मृतं ॥ लिंगत्रयस्य पंक्तौ तु शोभा कोष्टा चतुर्दश ॥ तेषामुपरि पंक्तौ तु कोष्टाः सप्तदशैव तु ॥ पूजापंक्तिस्तु विज्ञेया परितः परिकल्पिताः॥ पूजापंक्त्यन्तरा पंक्तौ कोष्टा द्व्यशीति संख्या॥ परिधिः सच विज्ञेयो मंडलयोरंतराद्वयोः ॥ परिध्यन्तरकोष्टे तु सर्वतोभद्रमालिखेत् ॥ विशेषश्चात्र विज्ञेयः शृंखला षट्पदा भवेत् ॥ त्रयोदशपदा वल्ली भद्रं तु नवभिः पदैः ॥ पंचविंशत्पदा वापी परिधिः षोडशात्मकः ॥ मध्ये नवपदं पत्रं कर्णिका केसरान्वितं ॥ सत्वं रजस्तमो वर्णा परितो मंडलस्य तु ॥ त्रयः परिकरः

कार्यस्तत्र द्वाराणि कारयेत् ॥ सितेन्दुः शृंखलाः कृष्णा वल्ली नीलाः प्रकीर्तिता भद्रं च वारुणं ज्ञेयं वापी स्यात् श्वेतकर्णिका ॥ लिंगानि कृष्णवर्णानि पार्श्वतो द्वादशैव तु ॥ परिधिः पीतवर्णास्यात्कमलं पंचवर्णकमिति ॥ एवं लिंगतोभद्रमंडलं विलिख्य पूर्ववन्मंडदेवताः समर्चयेत् ॥इति॥

## ॥ अथ रुद्रयंत्रस्थापनम् ॥

तत्रादौ प्रधानकलशस्थापनम् ततो लिंगतोभद्रमंडलकर्णिकायां ताम्रमयकलशं विधिना संस्थाप्य पूर्णपात्रस्थानेऽतिविशालं ताम्रपात्रं निधाय तत्र कार्पासं क्षौमं वा यंत्रलेखनयोग्यं वस्त्रमास्तीर्य तस्मिन्वस्त्रे होमांगपीठपूजार्थं यंत्रं समालिखेत् ॥ तच्च स्कंदपुराणे स्कंदमहादेव संवादे उक्तं ॥ तद्यथा ॥ प्रणम्य जगतामीशमुमादेहार्धधारिणं ॥ यंत्रोद्धारमहं वक्ष्ये रुद्रकल्पानुसारतः ॥ मध्ये वृत्तं समालिख्य तन्मध्ये च दशाक्षरं ॥ बहिरष्टदलं पद्मं ततः षोडशपत्रकं ॥ चतुर्विंशति पत्राब्जं द्वात्रिंशत्पत्रकं तथा॥ चत्वारिंशत्पत्रकं तु वृत्तं सूर्यसमप्रभं॥ पंचपद्मात्मकं वृत्तं चतुरस्रं च भूगृहं ॥ सत्वं रजस्तमश्चेति त्रिगुणैः परितो वृतं ॥ चतुर्द्वारं द्वारदेशाद्बहिर्नागसमावृतं ॥ रुद्रपीठमिति ख्यातं देवतास्तत्र विन्यसेत् ॥ चत्वारिंशच्छतं चैकं देवतानामुदाहृतं ॥ कर्णिकामध्यदेशे तु रुद्रं पंचास्यमालिखेत् ॥ नमो भगवते रुद्रायेति तारादिकं न्यसेत् ॥ सोयं दशाक्षरो मंत्रः सर्वकामार्थसिद्धिदः ॥ प्रणवादिनमोन्तानि पंचास्यानि ततः परं ॥ सद्योजातं वामदेवमघोरं तदनन्तरं ततस्तत्पुरुषं प्रोक्तमीशानं पंचकं क्रमात् ॥ प्रधानमिदमाख्यातं प्रथमावरणस्ततः ॥ दलेष्वष्टसु नंद्यादीन् पूर्वादिक्रमतो न्यसेत् ॥ पूज्यपूजकयोर्मध्ये प्राची स्यात् यंत्रलेखने॥ आदौ नंदीमहाकालौ गणेशवृषभौ क्रमात्॥ ततो भृंगिरिटि स्कन्दोमा चंडेश्वरसंज्ञकाः॥ षोडशारे ततः पद्मे द्वितीयावरणे यजेत्॥ अनन्तं च तदा सूक्ष्मं शिवं चैकपदं तथा॥ एकरुद्रं त्रिमूर्तिं च श्रीकंठं वामदेवकं ॥ ज्येष्ठं श्रेष्ठं तथा रुद्रं कालं कलविकारणं ॥ बलं बलविकरणं बलप्रमथनं तथा ॥ तृतीयावरणे पद्मे चतुर्विंशद्दलं तथा ॥ अणिमा महिमा चेति गरिमा लघिमा तथा ॥ प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥ ततः परं क्रमेणैव न्यसेद्ब्राह्म्यादि देवताः ॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराह्यैन्द्री च चामुंडा चंडिका चेति ताः क्रमात्॥ ततोऽष्टध्वसितांगादीन् भैरवानि न्यसेत्पुनः ॥ असितांगो रुरुश्चंडः क्रोध उन्मत्तभैरवः ॥ कालभीषणसंहारा भैरवाश्चाष्टकीर्तिताः ॥ द्वात्रिंशत्पत्रके पूर्वं भवाष्टकमुदाहृतं ॥ ततोऽनन्तो वासुकिश्च तक्षकश्च कुलीरकः ॥ कर्कोटकः शंखपालः कंबलोश्वतरस्तथा ॥

ततोऽष्टसु न्यसेद्वैन्यं पृथुं हैहयमर्जुनं ॥ शाकुन्तलेयं भरतं नलं राममिति क्रमात् ॥ ततः कुलाचलानष्टौ दलेष्वष्टसु विन्यसेत् ॥ हिमवान्निषधो विन्ध्यो माल्यवान्पारियात्रिकः ॥ मलयो हेमकूटश्च गंधमादनसंज्ञकाः ॥ चत्वार्यावरणान्येवं पंचमावरणे ततः ॥ चत्वारिंशद्दले पद्मे पंचमावरणे न्यसेत् ॥ इंद्रादिलोकपालानामष्टौशक्तीस्तु विन्यसेत् ॥ शची स्वाहा च वाराही खड्गिनी वारुणी तथा ॥ मृगारूढा च कौबेरी मलिनी च तथाष्टमी ॥ ततोऽष्टानायुधानि वज्रादीनि च विन्यसेत ॥ वज्रं शक्तिदंडखड्गौपाशांकुशगदा अपि ॥ त्रिशूलं लोकपालानामायुधानि क्रमात् लिखेत् ॥ ततोऽष्टौ वाहनान्येषामष्टसु क्रमतो लिखेत् ॥ ऐरावतं तथा मेषं महिषं प्रेतसंज्ञिकं ॥ मकरं च मृगं चैव नरं च वृषभं तथा ॥ ऐरावतादयोप्यष्टौ दिग्गजास्तदनन्तरं ॥ ऐरावतः पुंडरीको वामनः कुमुदोंजनः ॥ पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः भूग्रहान्तः पुनर्लेख्या पंचपद्मात्मकाद्बहि ॥ इन्द्रं विन्यस्य पूर्वस्यामाग्नेयामग्निमेव च ॥ दक्षिणस्यां यमं चैव नैर्ऋत्यां निर्ऋतिस्तथा ॥ प्रतीच्यां वरुणं वायुं वायव्यां विन्यसेत्ततः ॥ कौबेरं चैव कौबेर्यामीशान्यामीशमालिखेत् ॥ विरूपाक्षं तु विन्यस्येदाग्नेयामग्नियोगतः ॥ नैर्ऋत्यां नैर्ऋतियोगे विश्वरूपं च विन्यसेत् ॥ वायव्यां वायुयोगे च लिखेत्पशुपतिं तथा ॥ ईशान्यामूर्ध्वलिंगं तु न्यसेदीशानयोगतः ॥ प्रागादिक्रमतो लेख्याः शेषाद्या भूग्रहाद्बहिः ॥ विप्रवर्णं श्वेतवर्णं सहस्रफणसंयुतं ॥ शेषं विन्यस्य पूर्वस्यां पूजयेदुपचारकैः ॥ तक्षकं वैश्यवर्णं च नीलं पंचशतैः फणैः॥ युक्तमुत्तुंगकायं च आग्नेयां दिशि विन्यसेत्॥ अनन्तं विप्रवर्णं च तथा कुंकुमवर्णकं ॥ सहस्रफणसंयुक्तं दक्षिणस्यां प्रपूजयेत् ॥ वासुकिं क्षत्रियं पीतवर्णं सप्तशतैः फणैः ॥ युक्तमुत्तुंगकायं च नैर्ऋत्यां दिशि विन्यसेत् ॥ शंखपालं क्षत्रियं च पीतं सप्तशतैः फणैः ॥ युक्तमावाह्य वारुण्यां पूजयेत् गंधधूपकैः ॥ महापद्मं वैश्यवर्णं नीलं पंचशतैः फणैः ॥ युक्तमुत्तुंगकायं च वायव्यां दिशि पूजयेत् ॥ कंबलं शूद्रवर्णं च कृष्णं त्रिंशत्फणैर्युतं ॥ कौबेर्यां दिशि विन्यस्य पूजयेच्च विधानतः ॥ कर्कोटकं शूद्रवर्णं श्वेतं त्रिंशत्फणायुतं ॥ ईशान्यां दिशि विन्यस्य पूजयेद्विधिवत्तराः ॥ रुद्रपीठमिदं सर्वं रुद्रकल्पे च विश्रुतं ॥ शंभुना स्वयमाख्यातं भक्तानुग्रहकारिणा ॥ कुंकुमागरुकर्पूरैर्भूर्जपत्रेऽथवा पटे ॥ लिखितं पूजितं भक्त्या सर्वकामार्थसिद्धिदं ॥ यंत्रं मंत्रमयं प्रोक्तं मंत्रात्मा देवतेति च ॥ पूजनीयं प्रयत्नेन तेनेदं देवतामयं ॥ नाग्निचोरभयं तत्र नच राज्यभयं क्वचित् ॥ यत्रेदं लिखितं यंत्रं पूज्यते विधितः सदा ॥ इति स्कन्दपुराणोक्तं रुद्रयंत्रम् ॥

## ॥ अथ श्रीरुद्रपूजनम् ॥

तत्र कृतनित्यक्रियेण परिहिताहतवाससः सोत्तरीयेन यज्ञोपवीतिना दक्षिण-पार्श्वे बद्धशिखेन कृतनर्य्यावस्थ्यान्तरभस्मरुद्राक्षधारणेन सुप्रक्षालितपाणिपादेन सव्ये पाणौ धृतपवित्रेण यजमानेन यथोक्ते गोमयोपलिप्ते शुचौ देशे रुद्रपीठदक्षिणतः प्रागग्राणामुदगग्राणां वा त्रयाणां कुशानामास्तरणं तदुपरि यथाकामं व्याघ्रादिचर्मण उत्तरलोम्नः प्राग्ग्रीवस्यास्तरणं ॥ तदभावे श्वेतकंबलस्य चित्रकंबलस्य वा आस्तरणं ॥ तदुपरि मृदुवस्त्रस्य च ॥ ॐ ऊर्ध्वकेशीति रक्षार्थं शिखाग्रंथिकरणं ॥ देवपद्धतौ व्युप्तकेशायेति मंत्रेण शिखाग्रंथिकरणमित्युक्तं ॥ ॐ सहस्राणि० परमेष्ठीर्ऋषिः अनुष्टुप्छंदः एकोरुद्रोदेवता महीप्रार्थने० इति महिप्रार्थना ॥ य एतावन्तश्चेति ककुभां प्रार्थना ॥ देवपद्धतौ तु घृतं घृतं पावान० इत्यादिना दिग्भ्यः स्वाहेत्यन्तेन मंत्रेण ककुभां प्रार्थनेत्युक्तं ॥ पृथिवी त्वयेति तस्मिन्नासने उदङ्मुखेनोपवेशनं ॥ अत्र भस्मरुद्राक्षधारणं ॥ स्ववामभागे अम्बोदककलशस्थापनं ॥ स्वदक्षिण भागे घंटादिपूजोपकरणानां ॥ स्वपुरतो गंधादिपात्राणां च ॥ करादिप्रक्षालनार्थपात्रस्य स्वपृष्ठतः ॥ घृतदीपस्याभावे तिलतैलदीपस्थापनं अथाचम्य त्रीन् प्राणानायम्य विधाय त्रिमात्रं प्रणवमुच्चार्य ॥ श्री गुरुभ्यो० गणेशाय० लक्ष्मीनारायणाभ्यां० उमामहेश्वराभ्यां० इति प्रणम्य देशकालौ संकीर्त्य करिष्यमाणामुकरुद्र होमांगत्वेन शिवपूजां करिष्ये ॥ अत्रावसरे भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासांश्च कुर्वन्ति परशुरामादयः ॥ नैवेति देवयाज्ञिकनारायणभट्टकमलाकरादयः ॥ हेमाद्रौ महार्णवे चाप्येवं ॥ छंदपुरुषादिसर्वान् पूर्वोक्तान् न्यासानष्टांगप्रणाममात्मनो रुद्ररूपेण ध्यानं च विधाय मानोमहान्तमिति सिद्धमंत्र स्मरणं ॥ नमः शंभवायेति संभारप्रोक्षणं नमः सुत्यायेति पीठकल्पनानि पूर्ववत्कर्त्तव्यानि ॥ ततः पीठपूजनमारभ्य पंचवक्त्रपूजनान्तां पूजां पूर्ववद्विधाय देवतावामभागे पार्वतीपूजनं ॥ ॐ नमो भगवत्यै उमादेव्यै० शंकरप्रियायै० पार्वत्यै० कालिन्द्यै० कोटर्यै० विश्वधारिण्यै० ह्रीं० ह्रीं० गंगादेव्यै० गंगादेवीभक्त्यै० इति संपूज्यैकादशरुद्रपूजनं ॥ अघोराय० पशुपतये० शर्वाय० विश्वरूपाय० विश्वरूपिणे० त्र्यंबकाय० कपर्दिने० भैरवाय० शूलपाणिने० ईशानाय० महेशाय० ॥११॥ इत्येकादशरुद्रपूजा ॥ अंगपूजा अग्रे उक्ता ॥इति॥

## ॥ अथ स्कान्दोक्तावरणपूजा ॥

ॐ नमो भगवते रुद्रायेति दशाक्षरमंत्रेण गंधादिभिः कर्णिकायां पूजनं ततस्तद्बहिर्दलमध्ये एवं ॥ प्राच्यां सद्योजाताय० दक्षिणे वामदेवा० प्रतीच्यां अघोरा-

य० उदीच्यां तत्पुरुषाय० मध्ये ईशानाय० ॥ तद्बहिरष्टदलेषु प्रागादिक्रमेण ॥ नंदिने० महाकालाय० गणेशाय० वृषभाय० भृंगिरिटये० स्कंदाय० उमायै० चंडेश्वराय० इति प्रथमावरणं ॥ तद्बहिः षोडशदले पूर्वादितः ॥ अनन्ताय० सूक्ष्माय० शिवाय० एकपदे० त्रिमूर्त्तये० एकरुद्राय० श्रीकंठाय० वामदेवाय० ज्येष्ठाय० रुद्राय० कालाय० कलविकरणाय० बलाय० बलविकरणाय० बलप्रमथनाय० ॥१६॥ इति द्वितीयावरणम् ॥ तद्बहिश्चतुर्विंशतिदले प्रागादिक्रमेण ॥ अणिमायै० महिमायै० लघिमायै० गरिमायै० प्राप्त्यै० प्राकाम्यै० ईशितायै० वशितायै० ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० ऐंद्र्यै० चामुंडायै० चंडिकायै० असितांगभैरवाय० रुरुभैर० चंडभैर० क्रोधभैर० उन्मत्तभैर कालभैर० ॥२४॥ तद्बहिर्द्वात्रिंशद्दले चतुर्थावरणं ॥ तत्र पूर्वादितः ॥ भवाय० शर्वाय० ईशानाय० पशुपतये० रुद्राय० उग्राय० भीमाय० महते० अनन्ताय० वासुकये० तक्षकाय० कुलीरकाय० कर्कोटकाय० शंखपालाय० कंबलाय० अश्वतराय० वैन्याय० पृथवे० वैन्याय० पृथवे० हैहयाय० अर्जुनाय० शाकुन्तलेयाय० भरताय० नलाय० रामाय० हिमवते० निषधाय० विन्ध्याय० माल्यवते० पारियात्राय० मलयाय० हेमकूटाय० गंधमादनाय० ॥३२॥ तद्बहिश्चत्वारिंशद्दले प्रागादिक्रमेण पंचमावरणं इन्द्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० शच्यै० स्वाहायै० वाराह्यै० खड्गिन्यै० वारुण्यै० वायव्यै कौबेर्यै० ईशान्यै० वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० ऐरावताय० मेषाय० महिषाय० प्रेताय० मकराय० हिरण्याय० नराय० वृषभाय० ऐरावताय० वामनाय० कुमुदाय अंजनाय० पुष्पदन्ताय० सार्वभौमाय सुप्रतीकाय० ॥४०॥ ततः पंचपाद्बहिश्चतुष्कोणं भग्रहं ॥ इन्द्राय० अग्नये० यमाय० नैर्ऋतये० वरुणाय० वायवे० कुबेराय० ईशानाय० विरूपाक्षाय० पशुपतये० ऊर्ध्वलिंगाय० ॥ भूगृहाद्बहिः ॥ विप्रवर्णाय श्वेतरूपाय सहस्रफणामंडलयुताय शेषाय० वैश्यवर्णाय नीलरूपाय पंचशतफणामंडलयुताय तक्षकाय० ॥ विप्रवर्णाय कुंकुमाभाय सहस्रफणामंडलयुक्तायानन्ताय० क्षत्रियवर्णाय पीतरूपाय सप्तशतफणामंडलसंयुक्ताय वासुकये० क्षत्रियवर्णाय पीतरूपाय सप्तशतफणामंडलयुताय शंखपालाय० वैश्यवर्णाय नीलरूपाय पंचशतफणामंडलयुताय महापद्माय० शूद्रवर्णाय कृष्णरूपाय त्रिशत्फणामंडलयुताय कंबलाय० शूद्रवर्णाय श्वेतरूपाय त्रिशत्फणामंडलयुताय कर्कोटकाय० ॥ इत्यावरणपूजा ॥

"अथ पुष्पांजलिः"—ॐ नमो भगवते रुद्रायेत्यनेन पुष्पांजलित्रयं देवमूर्द्धनि दत्त्वा ॥ ॐ नमो महद्भ्यो० ॥ ॐ त्र्यंबकं यजामहे० ॥ ॐ नमस्ते अस्तु भगवान्

विश्वेश्वराय महादेवाय त्र्यंबकाय० त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकंठाय सर्वेश्वराय श्रीमहादेवाय नम इति ॥ ॐ साम्राज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यं महाधिपत्यमयं समुद्रपर्यन्ताया एकराडिति ॐ राजाधिराजाय प्रसह्य सायिने ॥ नमो वयं वैश्रवणाय कुर्महे॥ समे कामान् कामकामाय मह्यं कामेश्वरो वैश्रवणो दधातु ॥ कुबेराय वैश्रवणाय नम इति ॥ सद्यो जातं प्रपद्यामीति पंचभिर्मंत्रैश्च प्रत्येकं पुष्पांजलिर्देयः ॥ ॐ एषते रुद्रभाग इति मंत्रेण इषुमुद्रा लिंगमुद्रा त्रिशूलमुद्रा पद्ममुद्रा कालकर्णिमुद्रा योनिमुद्रा धेनुमुद्रा इत्येताः सप्तमुद्राः प्रदर्शयेत् ॥ ततः प्रदक्षिणात्रयं कृत्वा विविधैः स्तोत्रैः स्तुत्वा मंत्रहीनं क्रियाहीनं० ॥ आवाहनं न जानामि०॥ इति संप्रार्थ्य इमारुद्रायेति मंत्रान्ते अनया पूजया भगवान् परमात्मा देवता सपरिवारः श्रीमहारुद्रः प्रीयतामिति पूजानिवेदनं समाचारात् ॥ ॐ द्रापे- अंधस० इत्यष्टांगप्रणामः ॥ इत्थं शिवपूजां विधाय रुद्रपीठादीशानदिग्भागे अव्रणं बहिर्दध्यक्षतविभूषितं गंधमाल्यादिभिश्चर्चितं कलशं पूर्वोक्तेन विधिना संस्थाप्य ॥ तस्मिन्कलशे ॥ ॐ इमा रुद्राय० रुद्रस्यावाहनमर्चनं च ॥ तत एकं विप्रं रुद्रजपार्थत्वेन त्वामहं वृणे इत्येवं वृत्वोपवेश्य कलशस्पर्शपूर्वकं सांगरुद्रजपस्तेन विप्रेण कारणीयः ॥ इति ॥

## ॥ अथ पदार्थावधारणम् ॥

आचार्यः अग्निसमीपमागत्याग्नेः पश्चिमत उपविशेत् ॥ यजमानस्तु दक्षिणतोऽग्नेर्ब्रह्मणः पश्चिमत उपविष्ट एवास्ते ॥ आचार्यस्त्वाचारादाचम्य प्राणानायम्य देशकालौ संकीर्त्य करिष्यमाण होमात्मकामुकरुद्राख्ये कर्मणि वैकल्पिकपदार्थावधारणं देवताभिधानं करिष्ये ॥ जपरुद्रांगहोमेतु जपात्मकामुकरुद्रांगहोमकर्मणि वैकल्पिकपदार्थावधारणं कुर्यात् ॥ तद्यथा ॥ पूर्वेण ब्रह्मणोगमनं परेण वा अग्नेः वामतः पात्रासादनमुत्तरतो वा ॥ द्वे पवित्रे त्रीणि वा ॥ आज्यस्थाली चरुस्थाली च तैजसि मृन्मये वा ॥ पालाश्यः समिधो यज्ञियवृक्षोद्भवा वा अन्या वा ॥ प्राचामाधारौ विदिशो वा॥ समिद्धतमे आज्यभागौ ॥ आग्नेयमुत्तरपूर्वार्द्धे सौम्यदक्षिणपूर्वार्द्धे ॥ वा ॥ पूर्णपात्रं दक्षिणावरो वा ॥ एतान्वैकल्पिकपदार्थानहमस्मिन्कर्मणि करिष्ये ॥ अथ देवताभिधानं ॥ प्रजापतिं इन्द्रं अग्निं सोमं एता आज्येन ॥ सनवग्रहमखरुद्रपक्षे आदित्यादीन् नवग्रहान् अमुकसंख्याभिरर्कादिसमिद्भिरेकैकयाज्याहुत्या एकैकया चर्वाहुत्या शतशीर्षं रुद्रं अमुकरुद्रहोमेनामुकमंत्रविभागपक्षेण तिलाज्यांद्युपकल्पितद्रव्येण रुद्रपीठदेवता एकैकयाज्याहुत्या जपरुद्रांगहोमे तु जपात्मकामुकरुद्रांगहोमेन नमः ॥ शंभवायेति मंत्रेण प्रतिरूपकं तिसृभिः षड्भिरष्टाभिरेकादशभि-

वाहुतिभिस्तिलाज्याद्युपकल्पितद्रव्येण चेति विशेषः ॥ शेषेण स्विष्टकृतं ॥ आज्येन अग्निं वायुं सूर्यं अग्निवरुणौ ॥ सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणं प्रजापतिं ॥ एता अंगप्रधानार्थदेवता अस्मिन्कर्मणि यक्ष्ये ॥ अग्नेर्दक्षिणतो ब्रह्मासनास्तरणं पुनर्वरणवैयर्थ्यात् पूर्वं यजमान वृत एव ब्रह्मा स्वासने उपविशति ॥ ततो यथाविधि प्रणीताप्रणयनादि प्रोक्षण्युत्पवनांतं कार्यं ॥ तत्रैतावान्विशेषः ॥ द्वितीयमेखलायां पश्चिमे च योनिरंध्रे परिस्तरणं ॥ पात्रासादनान्तरमुपकल्पनीयानि ॥ अर्कादिसमिधः ॥ तिलादिद्रव्याणि ॥ चरुस्थाली चेति ॥ ततस्त्रीनुपयमनकुशान्वामकरे उपगृह्यस्तिस्रः समिधस्तिष्ठन् अग्नावाधाय स पवित्रेण प्रोक्षण्युदकेनाग्नेः प्रदक्षिणं पर्युक्षणं ॥ इतरथावृत्तिः॥ पवित्रयोः प्रणीतासु निधानं ॥ ततो दक्षिणं जान्वाच्य जुहोति ॥ स्थानोपविष्टः उपयमनकुशसहितं प्रसारितांगुली हस्तं हृदि निधाय कुशैर्ब्रह्मान्वारब्धः समीद्धतमेऽग्नौ मनसा प्रजापतिं ध्यायन् स्रुवेण तूष्णीं प्रांचं वाघारमाधारयति ॥ अत्र न स्वाहाकारः ॥ इदं प्रजापतय इति त्यागो यजमानेन कर्त्तव्यः ॥ स्रुवे होमार्थं यद्दत्तं तस्य शेषं हुत्वा होमावशिष्टस्य संस्रवशब्दवाच्यस्य पात्रान्तरे प्राशनं भक्ष्यार्थं ॥ ॐ इन्द्राय स्वाहेति प्राञ्चं वाघारमात्रपति ॥ इदमिन्द्रायेति त्यागः ॥ इत्येतौ पूर्वोत्तरा एवाज्यभागौ समिद्धतमेऽग्नौ होतव्यौ ॥ इति ॥

"अथ यजमानेन द्रव्यत्यागः कार्यः"—सचैवं ॥ सर्वं होमद्रव्यं सर्वाश्च देवता उद्दिश्येदं यथादैवतमस्तु नममेति अथवा इदं समिदाज्यं चरुतिलादीनि आदित्याय सोमाय भौमाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतुभ्यो ईश्वराय उमायै स्कंदाय विष्णवे ब्रह्मणे इन्द्राय यमाय कालाय चित्रगुप्ताय अग्नये अद्भ्यः पृथिव्यै विष्णवे इन्द्राय इन्द्राण्यै प्रजापतये सर्पेभ्यो ब्रह्मणे विनायकाय दुर्गायै वायवे आकाशाय अश्विभ्यां इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानाय ब्रह्मणे अनन्ताय रुद्राय च त्यजामीति तद्यदेतं शतशीर्षाणं रुद्रमेतेनाशमयं स्तस्माच्छतशीर्ष रुद्रशमनीयं हवै तच्छतरुद्रियमित्याचक्षत इति शतपथश्रुत्या शतरुद्रियहोमे शतशीर्ष्णो रुद्रस्य देवतात्वावगमेन रौद्राध्यायेपि तस्यैव देवतात्वादिदं शतशीर्षे रुद्राय त्यजामीति त्यागः ॥ अथवा नमस्ते इति षोडशऋचैः प्रथमानुवाके इदमेकरुद्रायेति सप्ततिस्त्यागः ॥ तत इदं हिरण्यं वाहवे सेनान्ये इदं दिशां च पतये इदं दिशां वृक्षेभ्यो हरिकेशेभ्यः इदं पशूनां पतये इदं शष्पिंजराय त्विषीमते इत्यमुना प्रकारेण इदमानिर्हतेभ्यः इत्यन्ताः शतद्वयं चतुश्चत्वारिंशदधिकं त्यागः ॥ तत एकरुद्रायेत्येकोनत्रिंशत्यागः ॥ तत इदं बाहुभ्यो रुद्रेभ्य इति द्वयशी-

ति संख्यास्त्याग इति इदं रुद्रायेति वा त्यागः ॥ विशेषेण निरपेक्षपयैत्रैकत्रविशिष्टस्य रुद्रस्य विधौ देवतात्वेन श्रुतत्वात् ॥ श्रद्धावत्कर्तृकत्वात्यागपूर्वकत्वाच होमस्य सर्वहोमान्तरं त्यागस्यायुक्तत्वादिदानीमेव त्यागः कार्यः यजमानस्यैव होमकर्तृत्वे तु इदं सूर्याय त्यजामीत्येवं तत्र देवताभ्यः प्रत्याहुतित्यागः कार्यः ॥ ततो रुद्रौ तु मृडो नामेति वचनान्मृडनाम्नाग्नेः पंचोपचारैः पूजा ॥ ॐ अग्ने नयेति मंत्रेण मृडायाग्नये नम इत्यन्तेन ॥ ॐ अग्ने त्वमैश्वरं तेजः पावनं परमं हि तत् ॥ तस्मात्त्वदीयहृत्पद्मे श्रीरुद्रं तर्पयाम्यहं इति प्रार्थना ॥ अथाचार्यादयः सावधानाः यजमानाभीष्टसिद्धिं प्रार्थयन्तो होमं कुर्युः ॥ तत्र संग्रहपक्षे आचार्येण नवग्रहजपार्थं स्वतंत्रब्राह्मणपक्षे तेनैव वा प्रादेशमात्रादिभिरव्यंगाभिर्धूतकीटाद्यजग्धाभिः कनिष्ठावत्स्थूलाभिर्मधुसर्पिर्दध्यक्ताभिरर्कादिसमिद्भिः प्रतिग्रहमष्टोत्तरसहस्रसंख्याभिरष्टोत्तरशतसंख्याभिरष्टाविंशतिसंख्याभिर्वा प्रणवादिकैः स्वाहान्तैराकृष्णेनेत्यादिभिर्वक्ष्यमाणैर्मंत्रैरादित्यादीनुद्दिश्य होमः कार्यः ॥ दूर्वाणां तिसृणां तिसृणामेकैकाहुतिः कुशस्य तु बहुपत्रस्यैव ॥ अर्काद्यभावे पालाश्यप्रतिनिधेयाः ॥ अधिदेवतादीनां तु पालाशीभिरेव होमः ॥ समिधां संख्या ग्रहसंख्यातो न्यूना कार्या ॥ अप्रधानत्वात् एतेषां समिधः कनिष्ठपक्षे चतस्र इति शिष्टाः ॥ अत्र कनिष्ठपक्षाश्रयणेऽपि कर्मणः सांगत्वैव मध्यमोत्तमाश्रयणे तु फलाधिक्यं बोध्यं ॥इति॥

## ॥ अथ ग्रहहोमप्रयोगः ॥

आकृष्णेनेत्यस्य हिरण्यस्तूपआंगिरस ऋषिः त्रिष्टुप् छंदः सवितादेवता आदित्यप्रीतये कपिलाग्नावर्कसमिद्धोमे विनियोगः॥ आकृष्णेन भुवनानि पश्यन् स्वाहा॥ इति मंत्रेण हुत्वा इदं सवित्रे इति त्यागः ॥ एवं सर्वत्र ॥ इमं देवा इत्यस्य वरुणऋषिः अत्यष्टीछंदः सोमो देवता सोमप्रीतये पिंगलाग्नौ पलाशसमिद्धोमे०॥ ॐ इमं देवा० राजा स्वाहा इदं सोमाय० ॥ अग्निमूर्द्धेत्यस्य विरूपाक्षऋषिः गायत्रीछंदः अंगारकोदेवता अंगारकप्रीतये धूमकेत्वग्नौ खदिरसमिद्धोमे० ॥ ॐ अग्निमूर्द्धाजिन्वतीस्वाहा ॥ इदमंगारकाय० ॥ उद्बुध्यस्वेत्यस्य परमेष्ठीऋषिः त्रिष्टुप् बुधो देवता बुधप्रीतये जठराग्नौ अपामार्गसमिद्धोमे० ॥ ॐ उद्बुध्यस्वाग्ने० सीदतस्वाहा इदं बुधाय०॥ बृहस्पत इत्यस्य गृत्समदऋषिः त्रिष्टुप्छंदः बृहस्पतिर्देवता बृहस्पतिप्रीतये शिखिनामाग्नावश्वत्थसमिद्धोमे० ॥ ॐ बृहस्पते० धेहि चित्रं स्वाहा इदं बृहस्पतये० ॥ अन्नात्परिस्रुत० अश्विसरस्वतीन्द्रा ऋषयः अतिजगतीछंदः शुक्रोदेवता शुक्रप्रीतये हाटकाग्नौ उदुंबरसमिद्धोमे विनियोगः ॥ अन्नात्प० मधुस्वाहा इदं शु-

श्चराय० ॥ शन्नो देवीरित्यस्य दध्यङ्ङाथर्वणऋषिः गायत्रीछंदः शनैश्चरो देवता शनैश्चरप्रीतये महातेजाग्नौ शमीसमिद्धोमे० ॥ शन्नोदेवी० स्रवन्तु नः स्वाहा इदं शनैश्चराय० ॥ कयानश्चित्र इत्यस्य वामदेवऋषिः गायत्रीछंदः राहुर्देवता राहुप्रीतये हुताशनाग्नौ दूर्वासमिद्धोमे० ॐ कयानश्चित्र० वृत्तास्वाहा इदं राहवे०॥ केतुं कृण्वन्नित्यस्य मधुछंदा ऋषिः अनिरुक्तागायत्रीछंदः केतवो देवता केतुप्रीतये हुताशनाग्नौ रोहिताग्नौ वा कुशसमिद्धोमे० ॥ ॐ केतुं कृण्व० यथास्वाहा इदं केतुभ्यः ॥ अथाधिदेवता ॥ त्र्यंबकमित्यस्य वसिष्ठऋषिः अनुष्टुप् छंदः त्र्यंबकोरुद्रो देवता त्र्यंबकप्रीतये पलाशसमिद्धोमे० त्र्यंबकं यजामहे० इदं त्र्यंबकाय रुद्राय० ॥ श्रीश्चत इत्यस्य उत्तरनारायण ऋषिः त्रिष्टुप्छंदः उमादेवता प्रीतये पलाशसमिद्धोमे० ॥ ॐ श्रीश्चते० मयिषाणस्वाहा ॥ इदमुमायै० ॥ यदक्रन्द इत्यस्य भार्गवो जमदग्नि दीर्घतमावृषी त्रिष्टुप्छंदः स्कन्दो देवता स्कंदप्रीतये पलाशसमिद्धोमे०॥ यदक्रन्दप्र० अर्वन् स्वाहा इदं स्कन्दाय० ॥ विष्णोरराटमसि० इत्यस्य प्रजापतिर्ऋषिः यजुर्देवता विष्णुप्रीतये पलाश० ॥ विष्णोरराट० विष्णवेत्वा स्वाहा इदं विष्णवे०॥ आ ब्रह्मन्नित्यस्य प्रजापतिर्ऋषिः यजुः ब्रह्मादेवता ब्रह्मप्रीतये पलाश० ॥ आब्रह्मन् कल्पतां स्वाहा इदं ब्रह्मणे० ॥ सजोषा इन्द्रेत्यस्य विश्वामित्रऋषिः त्रिष्टुप् इन्द्रोदेवता इन्द्रप्रीतये पलाश० ॥ सजोषा० विश्वतोनः स्वाहा इदमिन्द्राय० ॥ यमायेत्यस्य दध्यङ्ङाथर्वणऋषिः यजुः सोमोदेवता यमप्रीतये पलाश०॥ यमाय त्वांगिरसे० घर्मपिते स्वाहा इदं यमाय० ॥ कार्षिरसि इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छंदः कालोदेवता कालप्रीतये० ॐ कार्षिरसि० भिरोषधीस्वाहा इदं कालाय० ॥ चित्रावसोरित्यस्य ऋषयो ऋषयः यजुर्जगती आसुरीबृहस्पतिर्वा प्राजापत्योस्मिन्वा सामगायत्रीछंदः चित्रगुप्तोदेवता चित्रगुप्तप्रीतयेपलाश० ॥ ॐ चित्राय० मशीयस्वाहा इदं चित्रगुप्ताय० ॥ इति ॥

"प्रत्यधिदेवताः" अग्निदूतमित्यस्य विरूपाक्षऋषिः गायत्रीछंदः अग्निर्देवता अग्निप्रीतये पलाश० ॥ अग्निदूतं इदमग्नये० ॥ आपोहिष्ठेत्यस्य सिंधुद्वीपऋषिः गायत्रीछंदः आपोदेवता अपां प्रीतये० पलाश०॥आपोहिष्ठा० इदमद्भ्यो० ॥ स्योनापृथिवीत्यस्य मेधातिथिऋषिः गायत्रीछंदः पृथिवीदेवता पृथिवीप्रीतये पलाश० ॥ स्योनापृथि० इदं पृथिव्यै० ॥ इदं विष्णुरित्यस्य मेधातिथिऋषिः गायत्रीछंदः विष्णुर्देवता पलाश० ॥ इदं विष्णु० इदं विष्णवे०॥ त्रातारमिन्द्रस्य गर्गऋषिः इन्द्रोदेवता इंद्रप्रीतये पलाश० ॥ त्रातारमिन्द्र० इदमिन्द्राय० ॥ अदित्यैरास्नासीत्यस्य दध्यंगाथर्वणऋषिः यजुरिंद्रोदेवता इंद्राणि प्रीतये पलाश० ॥ अदित्यैरा-

स्ना० इदमिन्द्राण्यै० ।। प्रजापत इत्यस्य हिरण्यगर्भऋषिः त्रिष्टुप्छंदः प्रजापतिर्देवता प्रजापतिप्रीतये पलाश०।। प्रजापते० योरयीणां स्वाहा इदं प्रजापतये०।। नमोस्तु सर्पेभ्य इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप्छंदः सर्पादेवता सर्पप्रीतये पलाश० ।। ॐ नमोस्तु सर्पेभ्यो० येनमः स्वाहा इदं सर्पेभ्यो० ।। ब्रह्मयज्ञानमित्यस्य प्रजापतिऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता ब्रह्माप्रीतये पलाश०।। ॐ ब्रह्मयज्ञा० इदं ब्रह्मणे०।।

" अथ गणपत्यादिलोकपालाः " गणानांत्वेत्यस्य प्रजापतिऋषिः यजुः गणपतिप्रीतये पलाश०।। गणानां० इदं गणपतये० ।। अंबे अंबिके इत्यस्य प्रजापतिऋषिः अनुष्टुप्छंदः दुर्गादेवता दुर्गाप्रीतये पलाश०।। अंबे अंबिके० वासिनीं स्वाहा इदं दुर्गायै० वायोयेत इत्यस्य गृत्समदऋषिः गायत्रीछंदः वायुर्देवता वायुप्रीतये पलाश० ।। वायोयेते० प्रीतये स्वाहा इदं वायवे० ।। घृतं घृत पावान इत्यस्य प्रजापतिऋषिः ऋचां पंक्तिश्छंदः आकाशोदेवता आकाशप्रीतये पलाशसमिद्धोमे० ॐ घृतंघृतहविरसिस्वाहा इदमाकाशाय०।। यावांकशेत्यस्य मेधातिथिर्ऋषिः गायत्रीछंदः अश्विनौदेवता आश्विनौप्रीतये पलाश० ।। यावांकशा० मिमिक्षतं स्वाहा० ।।

" अथ दिक्पालाः " त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छंदः इन्द्रोदेवता इन्द्रप्रीतये पलाश० ।। ॐ त्रातार० धात्विन्द्रः स्वाहा इदमिन्द्राय० ।। त्वन्नो अग्ने० इत्यस्य हिरण्यस्तूपऋषिः जगतीछंदः अग्निर्देवता अग्निप्रीतये पलाश० ।। त्वन्नो अग्ने तव व्रते स्वाहा इदमग्नये०।। सुगन्नुपन्थामित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छंदः यमोदेवता यमप्रीतये पलाश० ।। सुगन्नु० कृणोतु स्वाहा इदं यमाय० ।। असुन्वन्तमित्यस्य प्रजापतिऋषिः त्रिष्टुप्छंदः निर्ऋतिर्देवता निर्ऋतिप्रीतये० ।। असुन्व० मस्तु स्वाहा इदं नैर्ऋतये० ।। तत्त्वायामीत्यस्य शुनः शेष ऋषिः त्रिष्टुप्छंदः वरुणो देवता वरुणप्रीतये पलाश० ।। ॐ तत्त्वायामि० प्रमोषीः स्वाहा इदं वरुणाय० ।। आनो नियुद्भिरित्यस्य वसिष्ठऋषिः त्रिष्टुप्छंदः वायुर्देवता वायुप्रीतये पलाश० ।। आनोनियुद्भि० इदं वायवे० ।। वयं सो० सचेमहि स्वाहा इदं सोमाय०।। तमीशान० मित्यस्य गौतमऋषिः जगतीछंदः ईशानो देवता ईशानप्रीतये० पलाश० ।। ॐ तमीशान० स्वस्तये स्वाहा इदमीशानाय० ।। अस्मे रुद्रा इत्यस्य प्रागाथ ऋषिः त्रिष्टुप्छंदः ब्रह्मादेवता ब्रह्मणः प्रीतये पलाश० ।। अस्मे रुद्रा० देवाः स्वाहा इदं ब्रह्मणे० ।। स्योना० पृथिवीत्यस्य मेधातिथिऋषिः गायत्रीछंदः अनन्तो देवता अनन्तप्रीतये पलाशसमिद्धोमे० ।। ॐ स्योना० पृथि० पृथाः स्वाहा इदमनन्ताय० ।। एवं समिद्धो हुत्वा अनन्तपर्यन्ताभ्यो देवताभ्य आ कृष्णेत्यादिभिरुक्तैरेव मंत्रैस्तत्तदेवतां मनसा ध्यायन् स्रुवेणैकैकामाज्याहुतिं हुत्वैवं ताभ्य एव देवताभ्यस्तै-

रेव मंत्रैः स्रुवेणैकं चर्वाहुतिं जुहुयात् ॥ एतावत्कर्माचार्येणैव कर्त्तव्यं ॥ अथ जप-दशांशेन तिलयवव्रीह्यादि यजमानोपकल्पितद्रव्येण सूर्याद्या अनन्तपर्यन्ता देवता उद्दिश्य ऋत्विजः पूर्वोक्तैरेव मंत्रैस्तत्तद्देवतां मनसा ध्यायन्तः प्राङ्मुखा उदङ्मुखा-श्च उपांशुः होमं कुर्युः ॥ आहुतिसंख्या च सम्यक् सावधानतया ऋत्विग्भिः कार्या अधिदेवतानां तु प्रधानसंख्यातो न्यूनसंख्या होमे कर्त्तव्या ॥ इति ग्रहहोमः ॥

## ॥ अथ प्रधानजपहोमः ॥

तत्रादौ पूर्वोक्तान् पंचविधान् अंगन्यासान् विधाय ऋष्यादिस्मरणपूर्वकं रुद्रं ध्यायन् यजमानः स्वयं जुहुयात् ॥ अशक्तावेवंविधाः प्रतिनिधयो जुहुयुः ॥ तत्र द्रव्याणि ॥ कृष्णतिलाः यवाः मिश्रिता उभये व्रीहयः समिधः आज्यं वेति ॥ पुत्रार्थे महारुद्रे आज्यपरिप्लुता दूर्वा ॥ तत्र जपरुद्रांगहोमस्त्वित्थं कार्यः॥ नमः शंभ-वायेत्यस्य परमेष्ठीऋषिः सप्ताक्षरयोर्यजुरुष्णिकूछंदः षडक्षराणां यजुर्गायत्रीछंदः शंभवाद्यो मंत्रवर्णावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवता रुद्रप्रीतये अमुकरुद्रजपांगहोमे विनियोगः ॥ इति स्मृत्वा ॥ ॐ नमः शंभवायेत्यनयाप्रणवा-दिकया स्वाहान्तया तिस्रः पंचषडष्टौ दशैकादशवाहुतिः उक्तद्रव्याणामन्यतमेन द्र-व्येण जुहुयात् ॥ इयं च पंचाहुतिसंख्या सकृद्रूपकजपविषया ॥ अतश्च रुद्रमहा-रुद्रादौ रूपाणि गणयित्वा प्रतिरूपकं तिस्रः तिस्रः पंच पंच षट्षडाष्टाष्टौ दशदशै-कादशैकादशवाहुतिर्जुहुयात् ॥ इदं रुद्रायेति प्रत्याहुतित्यागः ॥ रुद्रजापका ऋत्वि-जो जुहुयुः ॥ तत्र सर्वेषु सर्वेष्वपि पक्षेषु जपरुद्रांगहोमे आहुतिसंख्या प्रागेवोक्ता॥ एवं ऋत्विग्भिर्जपरुद्रांगहोमप्रारंभानन्तरं केचित्पद्धतिकारा आचार्यस्तु नमः शंभवा-येति मंत्रेण स्वदेहे षडंगानि विन्यसेत् ॥ तद्यथा नमः शंभवाय च अंगुष्ठाभ्यां० म-योभवाय च तर्जनीभ्यां० नमः शंकराय च मध्यमाभ्यां० मयस्कराय च अनामि-काभ्यां० नमः शिवाय च कनिष्ठिकाभ्यां० नमः शिवतराय च करतलकरपृष्ठाभ्यां नमः ॥ एवं विन्यस्य हृदयादिन्यासं कृत्वा अग्नौ रुद्रं ध्यायेत् ॥ तद्यथा ॥ अथ रुद्रं महादेवं ध्यायेत्पंचमुखं शिवं ॥ प्रतिवक्त्रं त्रिनेत्रं च दशहस्तं दशायुधं ॥ कमंड-ल्वक्षसूत्राहित्राणशूलधरं हरं ॥ दंडडमरुखट्वांगाभयपात्रं पिनाकीनं ॥ अष्टसि-द्धियुतं सौम्यं सर्वाभरणभूषितं ॥ नीलग्रीवं शशांकार्द्धशेखरं स्मितसुंदरं ॥ शुद्धस्फ-टिकसंकाशं नागयज्ञोपवीतिनं ॥ अजातममृतं नित्यं सर्वव्यापिनमीश्वरं ॥ एवं ध्या-त्वा वन्हयन्तर्गतं गंधपुष्पाक्षतादिभिः समर्चयेत् ॥ ततो नमः शंभवायेति मंत्रेण प-लाशबिल्वोदुंबरवटमंदाराश्वत्थाम्रजाम्निमधूयुक्ता अष्टाविंशति अष्टौ वा समिधो

जुहुयात् ॥ तत अष्टाविंशतिरष्टौ वाज्याहुतिर्हुत्वा गवेधुक चरुणाष्टावाहुतिर्जुहुयात् ॥ अथवा बिल्वपत्रबिल्वफलबिल्वमूलेक्षदधिदुग्धमधुशर्करापायसगुडगुग्गुलसर्षपत्वक्पत्रजातीपत्रचंदनरक्तचंदन पलाशपुष्पार्कमधुकपुष्प धत्तुरपुष्प कदंबपुष्प बकुलपुष्प कमलपुष्प शंखपुष्पीपुष्प शतपत्रपुष्प पनसफलाम्रफलकदलीफल प्रियाल फल अलवृक्ष फल जंबु पीलुबदरराजामलफलजातीफललवंग एला करीर फलकेसर नाग केसर यक्षकर्दम सोमवल्ली शिवलिंगी शतावरी कमलिनी द्राक्षावल्ली नागवल्ली गडूची इत्यादीनि शिवहोमद्रव्याणि यथासंभवं जुहुयात् ॥ अत्र सर्वत्र नमः शंभवायेति मंत्रः ॥ केचिदेतावत्याचार्येण कृते जपरुद्रांगहोममाचरन्ति तत्र मूलं न पश्यामः ॥ ततः कलशेषु स्थापितानेकादशरुद्रानुद्दिश्य प्रत्येकमष्टाविंशतिरष्टौवाहुतीर्घृताक्तास्तिलैर्जुहुयात् ॥ ॐ रुद्राय स्वाहा ॥ अघोराय० पशुपतये० विरूपाय० विश्वरूपाय० त्र्यंबकाय० कपर्दिने० शूलपाणये० भैरवाय० ईशानाय० महेशानाय० इत्येकादशरुद्रेभ्यो होमः ॥ ततो मृत्युंजयमंत्रचंडिकास्तोत्रगणेश गायत्री रुद्र गायत्री अघोर मंत्रजापकाः स्वस्वकृतजपदशांशेन स्वस्वमंत्रेण होमं कुर्युः ॥ चंडिकास्तोत्रपाठकस्तु नमोदेव्यै महादेव्यै इति मंत्रेण स्वकृतजपदशांशहोमं कुर्यात् ॥ आचार्यस्तु ॥ ॐ याते रुद्र शिवातनूरिति मंत्रेण रुद्राणीमुद्दिश्य शर्कराज्यमधुयुक्तेन पायसेन तिलादिना च होमं कुर्यात् ॥ आचार्यस्तु ॥ ॐ यातेरुद्रशिवातनूरिति मंत्रेण रुद्राणीमुद्दिश्य शर्कराज्यमधुयुक्तेन पायसेन तिलादिना च होमं कुर्यात्॥ ततो नमो देव्यै महादेव्यै इति सिनीवाली पृथु बुके इति मंत्राभ्यां ह्रीं स्वाहेति मंत्रेण च त्रिमध्वक्तैस्तिलैर्जुहुयात् ॥ ॐ गणाय० स्कंदाय० पुष्पदन्ताय० कपर्दिने० नंदिने० चंद्राय० महाकालाय० भृंगिणे० गणानां त्वेति मंत्रेण गणपतिमुद्दिश्य लड्डुकैर्होमः ॥ जातवेदसे इति मंत्रेण दुर्गामुद्दिश्य दूर्वाज्यसर्षपै र्होमः॥ ॐ त्र्यंबकं इति मंत्रेण गुग्गुलहोमः ॥ ॐ जातवेदस इति मंत्रेण जातवेदसमुद्दिश्य सर्षपैर्होमः ॥ आकृष्णेनेति मंत्रेण सवितारमुद्दिश्य त्रिमध्वक्तैस्तिलैर्होमः ॥ इदं विष्णुरिति दध्योदनेन होमः ॥ श्रीसूक्तेन पंचामृतेन होमः ॥ तत इन्द्रादीन् उद्दिश्य त्रिमध्वक्तैस्तिलैर्होमः ॥ महाव्याहृतिभिस्तिलैर्यथेष्टसंख्या हुत्वा स्विष्टकृदादितंत्रं कुर्यात् इत्येवं वदन्ति तत्सर्वं निर्मूलं ॥ एवं यावच्चिकीर्षितं होमं कुर्यात् ॥ होमार्थे यदग्नौ जीवाद्युत्पद्यते तदाग्नये स्वाहेत्याज्याहुतिरनादिष्टं वा प्रायश्चित्तं कार्यं ॥ यत्तु होमावसरे हविः कुंडाद्बहिः पतति तन्नद्यादौ जले प्रक्षेपणीयं ॥ तदुक्तं शौनकेन ऋत्विजां जुह्वतां वन्हौ बहिः पतति यद्धविः॥ स ज्ञेयो वारुणो भागः प्रक्षेप्यो विमले जले ॥ तस्मादप्सु विनिक्षिपेदिति चतुर्थपादस्य वा पाठः ॥ एतच्च तिलादिद्रव्य-

विषयं ऋत्विजां जुह्वतामित्युक्तत्वात् ॥ यत्तु बृहत् शौनकेनोक्तं ॥ हूयमाने हविर्यज्ञे त्वहिः पतति यद्धविः ॥ द्रप्सश्च स्कंदमंत्रेण तदग्नौ निक्षिपेत्पुनरिति तद्धूयमानाश्चर्वाद्याहुतेः हस्ताद्भूमौ पाते ज्ञेयमिति ॥ एवं होमं समाप्य वक्ष्यमाणं स्विष्टकृद्धोमादिकं सर्वं कर्म कुर्यादिति ॥ इति जपरुद्रांगहोमप्रकारः ॥

## ॥ अथ प्रधानरुद्रहोमः ॥

होमरुद्रे तु पंचस्वपी होम एव भवति॥ अत्र यज्जाग्रत इत्याद्यृक् समुदायैकमंत्रत्वं ॥ एकक्रियाप्रकाशकत्वाभावेप्येकक्रिया विनियुक्तत्वात् ॥ एवमन्येषु पंचस्वंगमंत्रेषु ज्ञेयं ॥ अथैतस्य प्रकारः ॥ आचार्येण ग्रहहोमान्ते पूर्वोक्तान् पंचविधन्यासान् विधाय ऋष्यादिस्मरणपूर्वकं रुद्रं ध्यायन् यजमानः स्वयं जुहुयात् ॥ अशक्तावेवंविधा ऋत्विजो जुहुयुः॥ तद्यथा ॥ यज्जाग्रत इति षण्णां ऋचां शिव संकल्पऋषिः त्रिष्टुप्छंदः मनो देवता श्रीरुद्रप्रीतये होमे विनियोगः ॥ ॐ यज्जाग्रत इति षट्कर्चेन प्रणवादिकेन स्वाहान्तेन शिवसंकल्पेनैकामाहुतिं जुहुयात् ॥ इदं मनसे इति त्यागः ॥ सहस्रशीर्षेति षोडशर्चां नारायणपुरुषऋषिः आद्यानां पंचदशानामनुष्टुप्छदः जगद्बीजं पुरुषोदेवता श्रीरुद्रप्रीतये होमे० ॥ ॐ सहस्रशीर्षेति षोडशर्चेन प्रणवादिकेन स्वाहान्तेन पुरुषसूक्तेनैकामाहुतिं जुहुयात् ॥ इदं जगद्बीजाय पुरुषायेति त्यागः॥ अद्भ्यः संभृत इति षण्णां नारायणपुरुषऋषि आद्यानां तिसृणां त्रिष्टुप्छंदः द्वयोरनुष्टुप्छंदः अन्त्यस्याः त्रिष्टुप्छंदः आदित्यो देवता श्रीरुद्रप्रीतये होमे० ॥ अद्भ्यः इति षडर्चेनोत्तरनारायणेनैकामाहुतिं जुहुयात् ॥ इदमादित्यायेति त्यागः ॥ आशुः शिशान इति द्वादशानामप्रतिरथऋषिः त्रिष्टुप्छंदः सूर्यो देवता०॥ आशुः शिशान इति द्वादशर्चेन प्रणवादिकेन स्वाहान्तेन प्रतिरथेनैकामाहुतिं जुहुयात् ॥ इदमिन्द्रायेति त्यागः विभ्राडित्यस्य विभ्राट् सूर्यऋषिः जगतीछंदः सूर्योदेवता उदुत्यमिति तिसृणां प्रस्कण्वऋषिः गायत्रीछंदः विश्वेदेवादेवता अयंवेन इत्यस्य ब्रह्मस्वयंभु ऋषिः त्रिष्टुप्छंदः सोमोदेवता चित्रमित्यस्य ब्रह्मा स्वयंभु ऋषिः त्रिष्टुप्छंद सूर्यो देवता यदद्येत्यस्य श्रुतकक्षसुतंकक्षाहृषी गायत्रीछंदः सूर्यो देवता तरणिरित्यस्य प्रस्कण्वऋषिः गायत्रीछंद सूर्यो देवता तत्सूर्यस्येति द्वयोः कुत्सऋषि त्रिष्टुप्छंदः सूर्यो देवता बण्महानिति द्वयोर्जमदग्निऋषिः आद्यस्य बृहतीछंदः द्वितीयस्य सतो बृहतीछंदः सूर्यो देवता श्रायन्त इवेत्यस्य नृमेधऋषिः बृहतीछंदः सूर्योदेवता अद्या देवा इत्यस्य कुत्सऋषिः त्रिष्टुप्छंदः सूर्यो देवता आकृष्णेनेत्यस्य हिरण्यस्तूप आंगिरसऋषिः त्रिष्टुप्छंदः सूर्यो देवता सूर्यप्रीतये होमे विनियोगः॥

ॐ विभ्राडित्यनुवाकेन तिसृभिः प्रतीकचोदिताभिः सहितेन प्रणवादिकेन स्वाहान्तेनैकामाहुतिं जुहुयात् ॥ इदं सूर्यायेति त्यागः ॥ इदं रुद्रायेति वा पंचस्वाहुतिषु त्यागः ॥ रुद्रस्य सर्वात्मकत्वात् ॥ रुद्रोह्येवेदं सर्वमिति श्रुतेः ॥ एवं पंचाहुतिर्हुत्वा षडंगमंत्रैर्होमपक्षे रौद्राध्यायस्यार्षेयादिकं स्मरेत् ॥ तद्यथा ॥ नमस्ते रुद्रमन्यव इत्यादिकस्य रौद्राध्यायस्य परमेष्ठीऋषिः देवा वा ऋषयः प्रजापतिर्वाऋषिः नमस्ते रुद्रेत्यस्य गायत्रीछंदः याते रुद्रेत्यादीनां तिसृणामनुष्टुप्छंदः अध्यवोचदित्यादितिसृणां पंक्तिछंदः नमोस्तु नीलग्रीवायेत्यादि सप्तानामनुष्टुप्छंदः मानोमहान्तमिति द्वयोः कुत्सऋषिः जगतीछंदः सर्वासामेको रुद्रोदेवता नमो हिरण्यबाहवे इत्यादीनि द्रापे इत्यतः प्राक्तनाति सर्वाणि यजूंषि तत्र यजुषामनियताक्षरत्वादेकेषां छंदो न विद्यत इति कात्यायनोक्तेर्यजुषां छंदो विशेषनियमे नास्तीत्येके ॥ नमो हिरण्य बाहव इत्यादीनां श्वपतिभ्यश्चवो नम इत्यन्तानां यजुषां हिरण्यबाहुसेनानीर्दिशां पतिरित्यादिमंत्रवर्णावगतनामका उभयतो नमस्कारा बहवो रुद्रादेवताः ॥ ततो नमो भवाय च रुद्राय चेत्यादीनां प्रखिदते चेत्यन्तानां यजुषां भवाद्यो मंत्रलिंगावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवताः ततो नम इषुकृद्भ्यो धनुष्कृद्भ्यश्चवो नम इत्यस्य यजुष उभयतो नमस्कारा बहवो रुद्रा देवताः ॥ ततो नमो हिरण्य बाहवे इत्यादयो द्विद्विनो रुद्रा ॥ नमः सभाभ्यः इत्यादयो जातसंज्ञका रुद्रादेवताः ॥ नमो वः किरिकेभ्यः इत्यादीनामग्निवायुसूर्यहृदयभूतव्याहृतीनां अन्यतरतो नमस्कारा बहवो रुद्रा देवताः द्रापे इत्यस्या उपरिष्टाद्बृहतीछंदः इमारुद्रायेत्यस्याः कुत्सऋषिः जगतीछंदः याते रुद्रेत्यस्यानुष्टुप् छंदः परितोरुद्र मिढुष्टमेति द्वयोस्त्रिष्टुप्छंदः विकिरद्र सहस्राणोति द्वयोरनुष्टुप्छंदः सप्तानामेकोरुद्रो देवता असंख्यातेत्यादीनां त्रयाणां यजुषां धृतिछंदः बहवो रुद्रादेवताः रुद्रप्रीतये होमे० ॥ इति स्मृत्वा ॥ ॐ नमस्ते रुद्रमन्यव इति रौद्राध्यायेन प्रणवादिकेन स्वाहान्तेनैकामाहुतिं जुहुयात् ॥ तत्राष्टभिः प्रकारैर्मंत्रविभागः ॥ एकधा त्रिधा षोढा षोडशधा चतुश्चत्वारिंशदाष्टाचत्वारिंशद्द्वयैकषष्ट्युत्तरशतधापंचविंशतिउत्तरचतुःशतधा चेति ॥ तत्र रौद्राध्यायस्यार्षेयादिकं पूर्ववत् स्मृत्वा रुद्रप्रीतये होमे० ॥ इत्युक्त्वा नमस्ते रुद्रमन्यव इत्यादीनां तमेषां जंभे दध्मः स्वाहेत्यन्तेन संपूर्णेन रौद्राध्यायेनैकामाहुतिं जुहुयात् ॥ इदं रुद्रायेति त्यागः ॥ इत्येकधा पक्षः ॥ नमस्ते रुद्रेत्यादिकस्य अर्भकेभ्यश्चवो नम इत्यन्तस्यार्षेयादिकं प्राग्वत् स्मृत्वा रुद्रप्रीतये होमे विनियोगः ॥ ॐ नमस्ते रुद्रमन्यव इत्यादिभिरर्भकेभ्यश्चवो नमः स्वाहेत्यन्तैभिरनुवाकैरेकाहुतिः॥ इदं रुद्रायेति त्यागः ॥ नमस्तक्षभ्य इत्यादिभिः सुधन्वने चेत्यन्ततस्यार्षेयादिकं पू

वैवत्स्मृत्वा रुद्रप्रीतये होमे विनियोगः ॥ ॐ नमस्तक्षभ्य इत्याद्यायां सुधन्वने च स्वाहेत्यंतायामनुवाकाभ्यां द्वितीयाहुतिः ॥ इदं रुद्रायेति त्यागः नमः स्रुत्यायेत्यादिकस्य तमेषां जंभे दध्म इत्यन्तस्य पूर्ववत् ऋष्यादिक स्मृत्वा रुद्रप्रीतये होमे० ॥ नमः स्रुत्यायेत्यादिभिस्तमेषां जंभे दध्मः स्वाहेत्यन्तैश्चतुर्भिरनुवाकैस्तृतीयाहुतिः ॥ इदं रुद्रायेति त्यागः ॥ इति त्रेधामंत्रविभागः ॥ त्रेधामंत्रविधानसामर्थ्यान्न प्रत्यवरोहमंत्राणां पृथक् मंत्रत्वं ॥ अथ वक्ष्यमाणेषु सर्वेष्वपि षोढामंत्रविभागादिष्वार्षेयादिकं मंत्रविनियोगश्च पूर्ववद्ज्ञेयः ॥ तत्र षोढा मंत्रविभागः ॥ नमस्ते रुद्रेत्यादिना अर्भकेभ्यश्चवो नमः स्वाहेत्यंतेनैकैवविभागेन प्रथमाहुतिः ॥ नमस्तक्षभ्य इत्यादिना सुधन्वने च स्वाहेत्यन्तेनापरेण द्वितीयाहुति ॥ ॐ नम स्रुत्यायेत्यारभ्य य एतावन्त श्चेत्यस्या ऋचान्ते स्वाहाकारं प्रयुज्यत तृतीयाहुतिः ॥ एवमाहुतित्रयं हुत्वा ॥ ॐ नमोस्तु रुद्रेभ्यो ये दिवीत्यादिभिः स्वाहाकारान्तैस्त्रिभिर्यजुर्भिस्तिस्र आहुतयः ॥ इदं रुद्रायेति षट्सु त्यागः ॥ इति षोढा ॥ ॐ नमस्ते रुद्रेत्यारभ्य अर्भकेभ्यश्चवोनमः स्वाहेत्यन्तेनाद्याहुतिः ॥ ॐ नमस्तक्षभ्य इत्यारभ्य सुधन्वने च स्वाहेत्यन्तेन तृतीया ॥ ॐ असंख्यातेत्यादिभिः स्वाहाकारान्तैस्त्रिभिर्यजुर्भिर्य एतावन्तश्चेत्यन्तो स्वाहाकारान्तैर्दशभिर्मंत्रैर्दशाहुतयः ॥ ॐ नमोस्तु रुद्रेभ्यो येदिवीत्यादिस्वाहाकारान्तैस्त्रिभिर्यजुर्भिर्मंत्रैर्दशाहुतयः ॥ इदं रुद्रायेति षोडशसु त्यागः ॥ इति षोडशधा विभागः ॥ ॐ नमस्ते रुद्रमन्यव इत्याद्याभिः स्वाहाकारान्ताभिः षोडशभिर्ऋग्भि षोडशाहुतयः इदं रुद्रायेति षोडशसु त्यागः ॥ ॐ नमो हिरण्य बाहवे १ ॐ नमो उष्णीषिणे २ नमस्तक्षभ्य ३ नमोज्येष्ठाय ४ नमः स्रुत्याय ५ नमः शंभवाय ६ नमः पार्याये ७ त्येभिः स्वाहाकारान्तैः नमोवः किरिकेभ्यः इत्यतः प्राक्तनैःसप्तानुवाकैः सप्ताहुतयः ॥ ॐ नमो वः किरिकेभ्य इत्यादिना आदिनिर्हतेभ्यः स्वाहेत्यन्तेन यजुषा चैका ॥ इदं रुद्रेभ्यो रुद्रायेति वाष्टसु त्यागः॥ ॐ द्रापे अंधसस्पत इत्याद्याभिः स्वाहाकारान्ताभिर्विंशतिकंडिकाभिर्विंशतिराहुतयः ॥ इदं रुद्रायेति तासामाद्यासु सप्तसु त्यागः ॥ इदं रुद्रेभ्य इति त्रयोदशसु त्यागः ॥ इति चतुश्चत्वारिंशन्मंत्रविभागः ॥ ॐ नमो वः किरिकेभ्यः स्वाहा इदं किरिकेभ्यः ॥ ॐ देवानां हृदयेभ्य इदं० ॥ नमो विचिन्वत्केभ्यः स्वाहा इदं० ॥ नमो विक्षिणत्केभ्यः स्वाहा इदं० ॥ नम आनिर्हतेभ्यः स्वाहा इदं० ॥ इत्येताभिः पंचभिराहुतिभिः सह चतुश्चत्वारिंशन्मंत्रविभागः ॥ ॐ नमस्तेरुद्रमन्यव इत्याद्याभिः षोडशभिर्ऋग्भिः स्वाहाकारान्ताभिः षोडशाहुतयः ॥ इदमेकरुद्रायेति षोडशसु त्यागः ॥ ॐ नमोहिरण्यबाहवे सेनान्ये दिशांच पतयेनमः स्वाहा इदं० ॥ ॐ नमो वृक्षेभ्यो हरि-

केशेभ्यः पशूनां पतये नमः स्वाहा इदं० ॥ इत्येवमादि उभयतो नमस्कारैः पंचचत्वारिंशद्भिर्यजुर्भिः पंचचत्वारिंशदाहुतयः ॥ केचित्तु नमो हिरण्यबाहवे सेनान्ये दिशां च पतये स्वाहेत्येको मंत्रपुरस्तादेवैकनमस्कारयुक्तः ॥ नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये स्वाहेति प्रथमत एव द्विनमस्कारको द्वितीयो मंत्रः ॥ एवमुत्तरत्रापि चरममंत्रवर्ज्यं ॥ चरमस्त्वादौ द्विनमस्कारान्ते एकनमस्कारयुक्त इत्येवं मंत्रविभागं कल्पयन्ति ॥ तदथ द्वंद्विभ्यो जुहोति नमोमुष्यै चामुष्मै चेत्याद्युपक्रम्य नमो हिरण्ये बाहवे सेनान्ये दिशां च पतये नम इतीति श्रुत्या मंत्रस्वरूपस्य नमस्काराद्येकनमस्कारान्तस्याभिहितत्त्वेन श्रुतिविरुद्धमित्युपेक्ष्यं ॥ ॐ नमो भवाय च रुद्राय च स्वाहा इदं० ॥ ॐ नमः शर्वाय च पशुपतये च स्वाहा इदं० ॥ इत्येवमादिभिरन्यतरतो नमस्कारैः पंचाधिकसप्ततियजुभिः पंचसप्तत्याहुतयः ॥ ॐ नम इषुकृद्भयो धनुष्कृद्भयश्चवो नमः स्वाहा इदं० श्वेत्युभवतो नमस्कारेण यजुषा चैकाहुतिः ॥ ॐ नमो वः किरिकेभ्यो देवानां हृदयेभ्यः स्वाहा इदं० ॥ ॐ विचिन्वत्केभ्यो देवानां हृदयेभ्यः स्वाहा इदं॥ विक्षिणत्केभ्यो०॥ नम आनिर्हतेभ्यो० इत्यन्यतरतो नमस्कारैश्चतुर्भिर्यजुर्भिश्चतस्र आहुतयः ॥ केचित्तु नमोभवाय च रुद्राय च नमः स्वाहेत्येको मंत्रः ॥ एवमुभयतो नमस्कारत्वमन्यतरतो नमस्कारेषु मंत्रेषु कल्पयन्ति तत्तेषु श्रुताया अन्यतरतो नमस्कारताया हानिप्रसंगादश्रुताया उभयतो नमस्कारतायाः कल्पना चोपेक्ष्या ॥ ॐद्रापे अंधसस्पत इत्याद्याभिर्विंशतिकंडिकाभिःस्वाहाकारान्ताभिर्विंशति आहुतयः ॥ इदमेकरुद्रायेति वासामाद्यासु सप्तसु त्यागः॥ इदं रुद्रेभ्य इत्युत्तरासु सर्वासु॥ इत्येकषष्ठ्युत्तरधा विभागः॥ अथ पंचविंशत्युत्तरचतुःशतधाविभागः ॥ ॐ नमस्ते रुद्रमन्यव इत्यस्य त्रयः पादाः सन्तीति त्रिभिःपादैः स्वाहाकारान्तैस्तिस्र आहुतयः ॥ ॐयातेरुद्रशिवातनूरित्याद्यासु प्रत्येकं चत्वारः पादा इति तैर्द्वादशभिः पादैः स्वाहाकारान्तैर्द्वादशाहुतयः ॥ ॐ अध्यवोच इत्याद्यासु कंडिकासु प्रत्येकं पंच पंच पादा इति पंचदशभिः पादैः स्वाहाकारान्तैः पंचदशाहुतयः ॥ ॐ नमोस्तु नीलग्रीवेत्याद्यासु सप्तसु कंडिकासु प्रत्येकं चत्वारश्चत्वारःपादा इत्यष्टाविंशतिपादैः स्वाहाकारान्तैरष्टाविंशत्याहुतयः ॥ मानोमहान्त इति द्वयोः प्रत्येकं षड्षडिति द्वादशभिः पादैः स्वाहाकारान्तैर्द्वादशाहुतयः॥ इदमेकरुद्रायेति सप्ततित्यागाः ॥ ॐनमो हिरण्यबाहवे सेनान्ये स्वाहा इदं हिर० ॥ ॐ दिशांच पतये स्वाहा इदं० ॥ इत्यमुना प्रकारेणैकस्यां कंडिकायामष्टौ यजूंषीत्यष्टभिर्यजुभिरष्टावाहुतयः ॥ एवं दशभिः कंडिकाभिराहूतीनां प्रथमाऽशीतिः संपद्यते ॥ ॐ नमस्तक्षभ्यः स्वाहा इदं० ॥ ॐ रथकारेभ्यश्चवो नमः स्वाहा इदं

रथकारेभ्यः ॥ इत्याद्याभिर्दशभिः कंडिकाभिराहुतीनां द्वितीयाऽशीतिः ॥ ॐ नमः स्रुत्याय च स्वाहा इदं० ॥ पथ्याय च स्वाहा इदं० ॥ इत्याद्याभिः नमोवः किरिकेभ्य इत्यतः प्राक्तनाभिर्दशकंडिकाभिराहुतीनां तृतीयाऽशीतिः ॥ ॐ नमोवः किरिकेभ्यो देवानां हृदयेभ्य स्वाहा इदं ॥ ॐ विचिन्वत्केभ्यो देवानां हृदयेभ्यःस्वाहा इदं० ॥ ॐ नमो विक्षिण्वत्केभ्यो देवानां हृदयेभ्यः स्वाहा इदं० ॥ ॐ नम आनिर्हतेभ्यो० ॥ इति चतुर्भिर्विंशत्याहुतयः ॥ इदमेकरुद्रायेति तासामाद्यासु सप्तसु त्यागः ॥ इदं रुद्रेभ्य इत्युत्तरासु सर्वासु॥ इत्येकषष्ठ त्तरशतधात्रिभागः ॥ यजुर्भिश्चतस्त्र आहुतयः ॥ ॐद्रापे अंधसस्पत इत्याद्यासु चतुर्षु कंडिकासु प्रत्येकं चत्वारश्चत्वार-इति षोडशभिः पादैः स्वाहाकारान्तैः षोडशाहुतयः ॐ मीढुष्टमेत्यस्य पंचेति स्वाहाकारान्तैः पंचभिः पादैः पंचाहुतयः ॥ ॐ विकिरिद्र इति द्वयोः प्रत्येकं चत्वार इत्यष्टभिः पादैः स्वाहाकारान्तैरष्टावाहुतयः ॥ इदमेकरुद्रायेत्येकोनत्रिंशत्यागः ॥ असंख्यातेत्याद्यासु दशकंडिकासु प्रत्येकं चत्वारश्चेति स्वाहाकारान्तैश्चत्वारिंशद्रुपादैश्चत्वारिंशदाहुतयः॥ ॐ नमोस्तु रुद्रेभ्यः स्वाहा ॥ येदिविस्वाहा ॥ येषांवर्षमिषवः स्वाहा ॥ तेभ्यो दशप्राचीः स्वाहा ॥ दशदक्षिणास्वाहा ॥ दशप्रतीचीःस्वाहा ॥ दशोदीचीस्वाहा ॥ दशोर्ध्वास्वाहा ॥ तेभ्योनमो अस्तुस्वाहा ॥ तेनोवन्तु स्वाहा ॥ तेनोमृडयन्तु स्वाहा ॥ तेयं द्विष्मः स्वाहा ॥ ॐ यश्चनोद्वेष्टिस्वाहा ॥ ॐ तमेषां जंभेदध्मः स्वाहा ॥ इत्येवं त्रिषु कंडिकासु प्रत्येकं चतुर्दश चतुर्दशयजूंषीति द्विचत्वारिंशद्भिर्यजुभिर्द्विचत्वारिंशदाहुतयः ॥ इदं बहुभ्यो रुद्रेभ्य इति द्व्यशीति संख्याभिस्त्यागः ॥ इति पंचविंशत्युत्तरचतुःशतधा विभागः ॥ एवमेतेषां पक्षाणां अन्यतमपक्षाश्रयेण दशकृत्वो रौद्राध्यायेन हुत्वा ॥ ॐ यज्जाग्रत इत्यादिभिर्विभ्राड् इत्यनुवाकान्तैः पंचभिरंगमंत्रैः पूर्ववत्पंचाहुतिर्जुहुयात् ॥ तत एकावृत्त्या रौद्राध्यायेन पूर्ववद् हुत्वा ॥ वयं सोमेत्यस्य वंधुकऋषिः गायत्रीछंदः सोमोदेवता ॥ एषते इत्यनयोः प्रजापतिऋषिः सामपंक्तिर्यजुर्जगतीछंदः रुद्रोदेवता ॥ अवरुद्रमित्यस्य प्रजापतिर्ऋषिः पंक्तिछंदः रुद्रोदेवता भेषजमित्यस्य प्रजापतिऋषिः ककुप्छंदः रुद्रोदेवता त्र्यंबकमित्यनयोः क्रमेण वसिष्ठप्रजापतिऋषिः आस्तारपंक्तिछंदः रुद्रोदेवता ॥ त्र्यायुषमित्यस्य नारायणऋषिः उष्णिक्छंदः आशीर्देवता॥ शिवोनामेत्यस्य प्रजापतिऋषिः प्राजापत्या बृहतीछंदः रुद्रोदेवता ॥ निवर्तयामीत्यस्य प्रजापतिऋषिः प्राजापत्यात्रिष्टुप्छंदः लिंगोक्तादेवता रुद्रप्रीतये होमे विनियोगः ॥ ॐ वयं सोमेत्यस्य प्रजापतिऋषिः प्राजापत्यात्रिष्टुप्छंदः लिंगोक्तादेवता रुद्राष्टकंडिकात्मकेन महच्छिरसा एकामाहुतिं जुहुयात् ॥ ततः शान्त्यध्यायमंत्रैर्जुहुयात् ॥ तद्यथा ॥

ऋचंवाचमित्यस्य दध्यङथर्वणऋषिः चतुर्णां यजुषां दैवीजगतीछंदः ऋगादयोलिंगोक्तादेवता॥ वागोज इत्यस्य यजुर्जगतीछंदः वागादिलिंगोक्तादेवता शांत्यर्थं होमे०॥ ऋचं वाचं० स्वाहा ॥ इदं वाचे मनसे प्राणाय चक्षुषे श्रोत्राय वाचे ओजसे प्राणापानाभ्यां०॥ यन्मे इत्यस्य दध्यंगाथार्वणऋषिः पंक्तिछंदः बृहस्पतिर्देवता शान्त्यर्थं होमे० ॥ ॐ यन्मेछिद्रं० यस्पतिः स्वाहा इदं बृहस्पतये० महाव्याहृतीनां दध्यंङ्गाथर्वणऋषिः देवीगायत्री दैव्युष्णिक् देवीगायत्रीछंदांसि अग्निवायुसूर्योदेवताः॥ तत्सवितुरित्यस्य दध्यङाथर्वणऋषिः गायत्रीछंदः सवितादेवता शान्त्यर्थं होमे० ॥ ॐ भूर्भुवःस्वः तत्सवितु० स्वाहा इदं अग्निवायुसूर्येभ्यः सवित्रे च॥ कयानइत्यस्य दध्यङाथर्वणऋषिः गायत्रीछंदः इंद्रोदेवता शान्त्यर्थं होमे० ॥ ॐ कयान० स्वाहा इदमिन्द्राय० ॥ कस्त्वेत्यस्य दध्यङाथर्वणऋषिः गायत्रीछंदः इन्द्रोदेवता शान्त्यर्थं होमे० ॥ ॐ कस्त्वा० वसु स्वाहा इदमिन्द्राय० ॥ अभीषूण० दध्यङ्ङाथर्वण० पादनिचृद्गायत्रीछंदः इन्द्रोदेवता शान्त्यर्थं होमे० ॥ ॐ अभीषुण० स्यूतिभिः स्वाहा इदमिन्द्राय० ॥ कयात्वं० दध्यंगाथर्वणऋषिः अनिरुक्तागायत्रीछंदः इन्द्रोदेवताशान्त्यर्थं होमे० ॥ ॐ कयात्वं० भरस्वाहा इदमिन्द्राय० ॥ इन्द्रोविश्वस्येति दध्यंगाथर्वणऋषिः द्विपदाविराट्छंदः इन्द्रोदेवता० ॥ ॐ इन्द्रो वि० ष्पदे स्वाहा इदमिन्द्राय० ॥ शन्नोमित्र० दध्यंगा० अनुष्टुप्छंदः मित्रवरुणादयो लिंगोक्ता देवता शान्त्यर्थं० ॥ शन्नोमित्रः उरुक्रमस्वाहा इदंमित्राय वरुणायार्यम्णे इन्द्राय बृहस्पतय उरुक्रमाय विष्णवेच ॥ शन्नोवात० दध्यंगा० अनुष्टुप्छंदः वाय्वादयोलिंगोक्तादेवता० ॥ ॐ शन्नोवात० वर्षतु स्वाहा इदं वायवे सूर्याय पर्जन्याय च ॥ अहानिशं० दध्यंगा० द्विपदागायत्रीछंदः अहानिरात्रयश्च देवता० ॥ शन्न इन्द्राग्नि० दध्यंगा० त्रिष्टुप्छंदः इन्द्राग्नि इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौच देवता० ॥ अहानिशं० शंयोःस्वाहा इदमिंद्राग्निभ्यां इन्द्रावरुणाभ्यां इन्द्रापूषभ्यां इन्द्रासोमाभ्यां च ॥ शन्नोदेवी० दध्यंगा० गायत्रीछंदः आपोदेवता० ॥ शन्नो० तुनःस्वाहा इदमद्भ्यः॥ स्योनापृथिवी० दध्यंगा० गायत्रीछंदः पृथिवीदेवता० ॥ स्योना० प्रथाः स्वाहा इदं पृथिव्यै ॥ आपोहिष्ठेति दध्यंगा० गायत्रीछंदः आपोदेवता० ॥ आपोहिष्ठा० चक्षसे स्वाहा इदमद्भ्यः ॥ योव० दध्यंगा० गायत्रीछंदः आपोदेवता० योवःशिवतम० मातरः स्वाहा इदमद्भ्यः ॥ तस्माअरंगमा० दध्यंगा० गायत्रीछंदः आपोदेवता० ॥ तस्मा अ० चनः स्वाहा इदमद्भ्यः ॥ द्यौः शान्ति० दध्यंगा० एकाधिकशक्करीछंदः द्यौरादयोलिंगोक्ता देवता० ॐ द्यौः शान्ति० रेधिस्वाहा इदं दिवेन्तरिक्षाय पृथिव्या अद्भ्यः औषधीभ्यो वनस्पतिभ्यो विश्वेभ्यो देवेभ्यो ब्रह्मणे

सर्वस्मै शान्त्यै च ॥ हृते हृंहेत्यस्य दध्यंगा० ब्राह्मीअनुष्टुप् छंदः धर्मोदेवता शान्त्यर्थं होमे० ॥ ॐ हृते हृं० क्षामहे स्वाहा इदं धर्माय० ॥ हृते हृंहे० दध्यंगा० उष्णिक्छंदः धर्मोदेवता० ॥ ॐ हृते हृंहमा० जीवासं स्वाहाइदं धर्माय० ॥ नमस्ते हरसे० दध्यंगा० बृहतीछंदः अग्निर्देवता शां०॥ ॐ नमस्ते हरसे० शिरोभव स्वाहा इदमग्नये ॥ नमस्ते अस्त्वित्यस्य दध्यंगा० अनुष्टुप्छंदः विद्युत्स्तनयित्नुर्भगवान् देवता०॥ ॐ नमस्ते अ० समीहसे स्वाहा इति विद्युतेस्तनयित्नवे भगवते ॥ यतोयत दध्यं० अनुष्टुप्छंदः महावीरोदेवता० ॥ यतोयत० पशुभ्यः स्वाहा इदं महावीराय ॥ सुमित्रियान० दध्यंगा० प्राजापत्या जगतीआपोदेवता० ॥ सुमित्रिया० द्विष्मः स्वाहा इदमद्भ्यः ॥ तच्चक्षु० दध्यंगा० उष्णिक् छंदः इति कात्यायनः ब्राह्मीत्रिष्टुप् व्यूहनादेत्यष्टिर्वाछंदः इति सर्वानुक्रमसूत्रभाष्यकरः ॥ अक्षरातीतं पुर उष्णिक्छंदः इत्याचारादर्शकारः श्रीदत्तोपाध्यायः सूर्यो देवता शान्त्यर्थं होमे विनियोगः ॥ ॐ तच्चक्षुर्दे० शतात्स्वाहा इदं सूर्याय ॥ एवं रुद्रपरपर्यायरुद्रहोमएकप्रकार उक्तः ॥ अथापरप्रकारः ॥ यज्जाग्रत इत्यादिभिः रौद्राध्यायान्तैः षडंगमंत्रैः षडाहुतिर्हुत्वा रौद्राध्यायेन पूर्वोक्ताष्टप्रकाराणामन्यतमेनैकादशकृत्वो हुत्वा वयं सोमेत्यष्टकंडिकात्मकेन महच्छिरोमंत्रेणैकाहुतिं हुत्वा ऋचंवाचमित्यादिभिः शान्त्यध्यायमंत्रैश्चतुर्विंशतिराहुतिर्जुहुयात् ॥ प्रकारान्तरं यज्जाग्रत इत्यादिभिः रौद्राध्यायान्तैः षडंगमंत्रैः षडाहुतिं हुत्वा रौद्राध्यायमंत्रैर्होमान्ते एकैकेन चमकविभागेन हुत्वा शान्त्यध्यायमंत्रैश्चतुर्विंशतिराहुतिर्जुहुयादिति ॥ एष रुद्रहोम उक्तः ॥ एवं क्रमेण लघुरुद्रहोमं महारुद्रहोममतिरुद्रहोमं वा यावच्चिकीर्षितं तावत्यजमानः स्वयं कुर्यात् ॥ असंभवे ऋत्विजो वा होमं कुर्युः ॥ इति ॥

## ॥ अथ द्वारपालजाप्यसूक्तानि ॥

तानि च मदनरत्ने दानकांडे ॥ श्रीसूक्तं पावमानं च सोमसूक्तं सुमंगलं ॥ शान्त्यध्यायं चेन्द्रसूक्तं रक्षोघ्नं चेति बह्वृचौ ॥ श्रीसूक्तं हिरण्यवर्णां हरिणीमित्यादिपंचदशर्चा ॥ पावमानं स्वादिष्ठया इत्यादि ॥ सोमसूक्तं सोमवाहेत्यादि ॥ सुमंगलं क्रनिक्रदत्जनुषमित्यादि ॥ शान्त्यध्यायं शन्नइन्द्राग्नि इत्यादिवर्गत्रयं ॥ इन्द्रसूक्तं योजाते एवेत्यादि ॥ रक्षोघ्नं कृणुष्व पाज इत्यादि ॥ दक्षिणे तु द्वारपालौ रुद्रान् पुरुषसूक्तं ॥ श्लोकाध्यायं शुक्रि पंचमंडलाध्यायमेव चेति रुद्रान्नमस्ते रुद्रमन्यव इत्यध्यायः ॥ पुरुषसूक्तं सहस्रशीर्षा इत्यादिषोडशर्चं ॥ श्लोकाध्यायो योदेव सवितः प्रसुवमिति त्रिंशत्तमोध्यायः शुक्रियं ऋचंवाचमित्यध्यायः ॥ मंडलाध्यायो यदेतन्मंडलं इत्यादि मंडलब्राह्मणं ॥ तैत्तिरीयाणां तु आदित्यो वां

एष एतन्मंडलमिति मंडलाध्यायः प्रसिद्धः ॥ वामदेव्यं बृहत्साम ज्येष्ठसाम रथन्तरं ॥ तथा पुरुषसूक्तं च रुद्रसूक्तमतः परं ॥ आज्यदोहानि सामानि शान्तिकाध्यायमेव च ॥ भारुंडानि च सामानि पश्चिमे सामगौ स्थितौ ॥ वामदेव्यं कयानश्चित्र इत्यस्यामृचीगीतं बृहत्सामत्वामिद्धिहवामहे इत्यस्यामृचिगीतं ॥ ज्येष्ठं साम मूर्द्धानं दिव इत्यस्यां गीतं ॥ रथन्तरं साम अभित्वाशूरनोनुम इत्यस्यां गीतं ॥ पुरुषसूक्तं सहस्रशीर्षाइत्याद्यासु गीतं ॥ संहिता ॥ साच आवो राजेत्येकं साम ॥ तद्वा वर्गश्चत्वारि ॥ आज्यदोहानि त्रीणि देवव्रतानि त्रीणी इत्येकादशसामरूपा ॥ शान्तिकाध्याय अबोध्यग्निरित्याद्यासु गीतानि भारुडानि इमं स्तोम इत्याद्यासु गीतानि ॥ अथर्वांगिरसं नीलरुद्रं देव्यपराजिता ॥ मधुसूक्तं रौधसं च शान्तिकाध्यायमेव च ॥ अथर्वाणौ द्वारपालौ पठत उत्तरास्थितौ ॥ अथर्वणं सूक्तं छंदोगाय बृहद्गायेत्यादि आंगिरसं अंगिरसो जन्मनि इत्यादि ॥ नीलरुद्रं यारुद्रप्स्वावित्यादि अपराजिता देवी परिवर्त्मनीत्यादि ॥ मधुसूक्तं मधुवाता ऋतायते इति ॥ एवं चिकीर्षितं होमं कुर्यात् ॥ इति ॥

"अथोत्तरपूजनं"—ॐ अग्ने नयेति मंत्रेण गंधादिभिरुपचारैः स्वाहास्वधायुतमग्निं संकल्पपूर्वकमभ्यर्चयेत्॥ अग्नये गंधादिकं बर्हिरेव देयं॥ वास्तुग्रहयोगिनीक्षेत्रपालरुद्रपीठदेवतानामुत्तरोत्तरपूजायत्रावसरे केचिन्मन्यन्ते ॥ अन्येतु नवाहुतिहोमान्ते ॥ अपरेतु यजमानाभिषेकान्ते स्थापितसर्वपीठदेवतानां चोत्तरपूजां वदन्ति॥ ततः पूजां संपूर्णतां वाचयित्वा यस्य स्मृत्या०॥ आवाहनं न जानामि०॥ इति ॥

"अथ स्विष्टकृद्धोमः"—चरुशेषादवदाय ॥ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये० इति स्विष्टकृद्धोमं विदध्यात् ॥ यद्यनेकदिनसाध्यो होमस्तदा पर्युषितदोषपरिहारार्थं हविःशेषं स्विष्टकृदर्थं घृतमध्ये स्थापयेत् ॥ नष्टे दुष्टे वा हविषि आज्येनैव स्विष्टकृद्धोमः ॥ इति ॥

## ॥ अथानादिष्टप्रायश्चित्तहोमः ॥

ॐ भूरित्यस्याःप्रजापतिर्ऋषिः गायत्रीछंदः अग्निर्देवता प्रायश्चित्तहोमे विनियोगः ॥ ॐ भूः स्वाहा इदमग्नये नमम॥ ॐ भुवरित्यस्याः प्रजापतिर्ऋषिः उष्णिक्छंदः वायुर्देवता अनादिष्टप्राय० ॥ ॐ भुवः स्वाहा इदं वायवे नमम ॥ स्वरित्यस्याः प्रजापतिर्ऋषिः अनुष्टुप्छंदः सूर्यो देवता अना० ॐ स्वः स्वाहा इदं सूर्याय नमम ॥ ॐ भूर्भुवः स्वरिति महाव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णगायत्रीछंदांसि अग्निवायुसूर्योदेवता अना० ॥ ॐ भूर्भुवः स्व स्वाहा इदमग्निवायुसूर्येभ्यो० ॥ त्वन्नो अग्ने० इत्यस्य वामदेवऋषि त्रिष्टुप्छंद अग्निवरुणौदेवते० ॥ ॐ त्वन्नो अग्ने

वरुणप्रमुमुग्ध्यसमस्वाहा इदमग्निवरुणाभ्यां० ॥ सत्वन्न० वामदेवऋषिः त्रिष्टुप्छंदः अग्निवरुणौदेवते अना० ॥ ॐ सत्वन्नो अग्नेनराधि स्वाहा इदमग्निवरुणाभ्यां०॥ याश्चाग्न इत्यस्य वामदेवऋषिः बृहतीछंदः अग्निर्देवता अना० ॥ ॐ याश्चाग्रेः भेषजं स्वाहा इदमग्नये अयसे नमम ॥ येतेशतमित्यस्य वामदेवऋषिः त्रिष्टुप्छंदः वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्काः देवताः अनादिष्ट० ॥ येतेशतं वरुण स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च॥ उदुत्तममित्यस्य शुनः शेपऋषिः त्रिष्टुप्छंद वरुणो देवता० ॥ ॐ उदुत्तमं वरुणः स्यामस्वाहा ॥ इदं वरुणाय० ॥ प्रजापतये स्वाहा इदं प्रजापतये० ॥६॥इति॥

## ॥ अथ बलिदानप्रयोगः ॥

अग्न्यायतनस्य समंततो दिक्षु विदिक्षु च दिक्पालेभ्यो माषभक्तबलिदानं कार्यं ॥ तद्यथा ॥ त्रातारमित्यस्य गर्गऋषिः त्रिष्टुप्छंदः इन्द्रोदेवता इन्द्रप्रीत्यर्थं बलिदाने विनियोगः ॐ त्रातार० इन्द्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तबलिर्नमः ॥ भो इन्द्र दिशं रक्ष बलिं भक्ष मम सकुटुंबस्य यजमानस्य आयुः कर्ता पुष्टिकर्ता भवेति पुष्पाक्षतजलानि पूर्वाभिमुखौ भूमौ प्रक्षिपेत् एवं सर्वत्र अथाग्नेयां त्वन्नो अग्ने इत्यस्य हिरण्य स्तूपआंगिरसऋषिः त्रिष्टुप्छंदः अग्निर्देवता अग्निप्रीत्यर्थं बलिदाने० ॥ ॐ त्वन्नो अग्ने तवदेवस्तवव्रते० अग्नये सांगाय० भो अग्ने दिशं रक्ष० ॥ दक्षिणे ॥ सुगन्तु पन्थामित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप्छंदः यमोदेवता यमप्रीत्यर्थं० ॥ ॐ सुगन्तु पन्था० यमाय सांगाय० भो-यम० दिशं रक्ष बलिं भक्ष० ॥ नैर्ऋते ॥ असुन्वन्तमिति मंत्रान्ते नैर्ऋतये सांगाय० भोनिर्ऋते दिशं रक्ष० बलिं भक्ष०॥ पश्चिमे ॐ तत्वायामिति मंत्रान्ते वरुणाय सांगाय० भो वरुण बलिं भक्ष दिशं रक्ष०॥ वायव्ये आनोनियुद्भि० वसिष्ठऋषिः त्रिष्टुप्छंदः वायुर्देवता० ॥ वायवे सांगाय० भोवायो दिशं रक्ष बलिं भक्ष० ॥ उदीच्यां वयं सोम० बंधुऋषिः गायत्रीछंद० सोमो देवता० ॥ सोमाय सांगाय० भो दिशं रक्ष बलिं भक्ष० ॥ ईशान्यां तमीशान० गौतमऋषिः जगतीछंदः ईशानो देवता० ॥ ईशानाय सांगाय० भो ईशान दिशं रक्ष० ॥ ईशान पूर्वयोर्मध्ये अस्मे रुद्रा० प्रागाथ ऋषिः त्रिष्टुप्छंद ब्रह्मादेवता० ब्रह्मणे सांगाय० भो ब्रह्मन् दिशं रक्ष० बलिं भक्ष० ॥ पश्चिम नैर्ऋतयोर्मध्ये ॥ स्योना पृथिवी० मेधातिथिऋषिः गायत्रीछंदः अनन्तोदेवता० अनन्ताय सांगाय० भो अनन्त दिशं रक्ष बलिं भक्ष०॥ ॥इति॥ " अथ ग्रहवेद्याः समन्ततो ग्रहेभ्यो बलिं दद्यात् ॥ पूर्वे आकृष्णेन० हिरण्य स्तू॰ आंगिरसऋषिः त्रिष्टुप्छंदः सुर्योदेवता० सुर्याय सांगाय० भो सुर्य

अधिदेवताप्रत्याधिदेवतासहित दिशं रक्ष बलिं भक्ष० ॥ आग्नेयां इंद्दंदेवा० वरुण ऋषिः यजुः सोमोदेवता सोमाय उमाअपाधिदेवताप्रत्यधिदेवता सहिताय० भो सोम दिशं रक्ष बलिं भक्ष० ॥ दक्षिणस्यां अग्निमूर्द्धा० विरूपाक्ष ऋषिः अंगारकोदेवता० अंगारकाय स्कन्दभूमिरूपाधिदेवताप्रत्यधिदेवता सहिताय० भो अंगारक दिशं रक्ष बलिं भक्ष० ॥ ईशान्यां उद्बुध्यस्व० परमेष्ठी ऋषिः त्रिष्टुपूछंदः बुधोदेवता० ॥ बुधाय नारायणविष्णुरूपाधिदेवताप्रत्यधिदेवता सहिताय० भो बुध दिशंरक्ष बलिंभक्ष० ॥ अथोदीच्यां बृहस्पते० गृत्समदऋषिः त्रिष्टुपूछंद बृहहस्पतिर्देवता० बृहस्पतये० ब्रह्मेन्द्ररूपाधिदेवता प्रत्यधिदेवता सहिताय० भो बृहस्पते दिशं रक्ष० बलिं भक्ष० ॥ पूर्वे अन्नात्परिस्रुत० अश्विसरस्वतीन्द्राऋषयः अतिजगतीछंदः शुक्रो देवता० ॥ शुक्राय इन्द्रेन्द्राणिरूपाधिदेवताप्रत्यधिदेवता सहिताय० भो शुक्र दिशं रक्ष बलिं भक्ष०॥ प्रतीच्यां शन्नोदेवी० दध्यङ्ङथर्वणऋषिः गायत्रीछंदः शनिर्देवता० ॥ शनिश्चराय यमप्रजापतिरूपाधिदेवताप्रत्यधिदेवता सहिताय० भो शनिश्चर दिशं रक्ष बलिं भक्ष०॥ नैर्ऋत्यां कयानश्चित्र० वामदेवऋषिः गायत्रीछंदः राहुर्देवता० ॥ राहवे कालसर्परूपाधिदेवताप्रत्यधिदेवतासहिताय० भो राहो दिशं रक्ष बलिं भक्ष०॥ वायव्यां केतुं कृण्वन्० केतवे चित्रगुप्त ब्रह्मरूपाधिदेवता प्रत्यधिदेवता सहिताय० भो केतो दिशं रक्ष बलिं भक्ष०॥ अथ वेद्यारुत्तरतो विनायकादिपंचलोकपालेभ्यो बलिं दद्यात् ॥ गणानांत्वा० प्रजापतिऋषिः अनुष्टुप्छंदः गणपतिर्देवता० ॥ गणपतये सिद्धिबुद्धिसहिताय० भो गणपते दिशं रक्ष बलिं भक्ष० ॥ अंबे अंबिके० प्रजापतिर्ऋषिः अनुष्टुप्छंदः दुर्गादेवता० ॥ दुर्गायै सांगायै० भो दुर्गे दिशं रक्ष बलिं भक्ष०॥ आनोनियुद्भि० वसिष्ठऋषिः त्रिष्टुप्छंदः वायुर्देवता० ॥ वायवे सांगाय० भोवायो दिशं रक्ष बलिं भक्ष० ॥ घृतं घृतपावान० प्रजापतिर्ऋषिः ऋचांपंक्तिछंदः आकाशो देवता० ॥ आकाशाय० भो आकाश दिशं रक्ष बलिं भक्ष०॥ यावांकशे० मेधातिथिऋषिः गायत्रीछंदः अश्विनौ देवता० ॥ अश्विभ्यां सांगाभ्यां० भो अश्विनौ दिशं रक्षतं बलिं भक्षतं० ॥ वास्तोष्पते प्रतिजानी० वसिष्ठऋषिः त्रिष्टुप्छंदः वास्तोष्पतिर्देवता० ॥ वास्तोष्पतये सांगाय० भो वास्तोष्पते दिशं रक्ष बलिं भक्ष० क्षेत्रपालाय महाबलिं दद्यात् ॥ नहिस्पश० विश्वामित्रऋषिः त्रिष्टुपूछंदः क्षेत्रपालो देवता० ॥ क्षेत्रपालाय भूतप्रेतपिशाचराक्षस शाकिनी डाकिनी वैतालादि परिवार सहिताय० भो क्षेत्रपाल इमं बलिं गृहाण मम सकुटुंबस्य आयुः कर्ता० भवेति पुष्पाक्षतजलानि भूमौ प्रक्षिपेत् ॥ इमं बलिं शूद्रेन दुर्ब्राह्मणेन वा चतुष्पथे क्षिपेत्॥ प्रक्षालितपाणिपादराचामेत्॥ इति॥

## ॥ अथ पूर्णाहुतिहोमः ॥

तत्रोपकल्पनीयानि ॥ आज्यस्थाली ॥ होमावशिष्टादाज्यादन्यदाज्यं चैकंकृत्य स्रुक् खादिरस्रुवः संमार्गकुशाः पवित्रे नालिकेरफलं तांबूलबीडकं पूगीफलं पट्टवस्त्रखंडं रक्तसूत्रं पुष्पाणि पुष्पमाला इत्युपकल्प्य देशकालौ संकीर्त्य कृतस्यामुकरुद्रजपरुद्रांगहोमस्य होमरुद्रस्य वा संपूर्णतासिद्ध्यर्थं वसोर्धारासहितां पूर्णाहुतिं करिष्ये ॥ ततः आज्यस्थाल्यामाज्यं निरुप्याग्नावधिश्रित्य स्रुवं स्रुचं च कुशैः संमृज्य पवित्राभ्यामाज्यं उत्पूयावेक्ष्य अपद्रव्यं निरस्य चतुःकृत्वो द्वादशकृत्वो वाज्यं स्रुचि गृहीत्वा शिष्टाचारात्तस्यां सपूगीफलं तांबूलबीटकं तदुपरि पुष्पाणि तदुपरि पट्टवस्त्रवेष्टितं रक्तसूत्रबद्धं पुष्पमालासुशोभितं सुगंधद्रव्यसिंदूरादिद्रव्यचर्चितं नालिकेरादिफलं च निधायाधोमुखस्रुवश्छन्नां तां स्रुचं चादाय ॥ ॐ सप्तते० सप्तऋषयः त्रिष्टुप्छंदः अग्निर्देवता पूर्णाहुतिहोमे विनियोगः ॥ ॐ सप्तते अग्ने० इति मंत्रान्ते आसीन एवाचार्यो यजमानान्वारब्धः पूर्णाहुतिं जुहोति ॥ इदमग्नये सप्तवत इति त्यागः ॥ मूर्द्धानं दिव इत्यनेन वा ॥ समुद्रादुर्मिरिति त्र्युचेन वा ॥ पुनस्त्वादित्या रुद्रा वसव इत्यनया वा ॥ पूर्णा दर्वीत्यनया वा ॥ केचित्पूर्णाहुतिमेवमाचरन्ति ॥ समुद्रादुर्मि० वामदेवऋषिः त्रिष्टुप्छंदः यज्ञपुरुषो देवता मूर्द्धानं दिव० भरद्वाजऋषिः त्रिष्टुप्छंदः अग्निर्देवता पुनस्त्वेत्यस्य प्रजापतिऋषिः त्रिष्टुप्छंदः अग्निर्देवता पूर्णादर्वी० और्णवामऋषिः अनुष्टुप्छंदः शतक्रतुर्देवता सप्तते अग्न इत्यस्य सप्तऋषयः त्रिष्टुप्छंदः अग्निर्देवता धामन्त० वामदेवऋषिः जगतीछंदः आपोदेवता सर्वेषां पूर्णाहुतिहोमे विनियोगः ॥ ॐ समुद्रादुर्मिरीत्यादीन् मंत्रान् पठित्वा स्वाहाकारेण पूर्णाहुतिं हुत्वा ॥ इदमग्नये वैश्वानराय० आदित्य रुद्र वसुभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्चेति त्यागः ॥ तदेतत्करणमंत्राणां विकल्पाभ्युपगमात्समुच्चये च प्रमाणाभावात् चिन्त्यं ॥ केचित्तिष्ठन् पूर्णाहुतिमाचरन्ति तदपि निर्मूलम् ॥ इति ॥

## ॥ अथ वसोर्द्धाराहोमः ॥

वन्हेरुपरि स्तंभद्वयविधृता औदुंबरी मृत्तीपकोटरां वाहुप्रमाणामार्द्रां स्रुचं प्रागग्रां निधाय तदुपरि शृंखलावधृतेन निर्मलघृतपूरितेन ताम्रादिकुंभेनाधो यवमात्रछिद्रेणाज्यं विमुंचताग्नेरुपरि वासोर्द्धारां च पातयेत् ॥ तस्यां च घृतधारायां स्रुचप्रणालिकयाग्नौ पतन्त्यां ॥ ॐ वाजश्चमेत्यादीन् वेदू स्वाहेत्यन्तान् वसोर्द्धारामंत्रान् पठेत् ॥ घृतकुंभवसोर्धारां पातयेदनलोपरि ॥ इति वचनादस्मिन्स्मार्तवसोर्धाराहोमे पंचगृहीत्वाज्यस्य नतसाधनत्वं ॥ वाजश्चमेत्यादीनां वेदू स्वाहेत्यन्तानां

एकाधिकचतुः शतसंख्याकानां वसोर्धारामंत्राणां देवाऋषयः वाजश्च इत्यादीनां चतुरक्षराणां दैवी बृहतीछंदः शंचर इत्यादीनां त्र्यक्षराणां दैव्यनुष्टुप्छंदः प्रयति श्चम इत्येवं पंचाक्षराणां दैवीपंक्तिः आधिपत्यं च र इत्यादीनां सप्ताक्षराणां दैवी जगती यजुरुष्णिक् वा आयुर्यज्ञेन कल्पतामित्यादीनामष्टाक्षराणां यजुरनुष्टुप् प्राजापत्या गायत्रीवा ॐ भुवनस्पतये स्वाहेत्यादीनां नवाक्षराणां यजुर्बृहती आसरी जगती वा मुग्धाय वैनंशिनायेत्यादीनां दशाक्षराणां यजुः पंक्तिः आसुरीत्रिष्टुप् वा विनंशिन आन्त्यायेत्यादीनां एकादशाक्षराणां यजुस्त्रिष्टुप आसुरी पंक्तिर्वा ॥ अंगुलयः शक्करयो दिशश्चमे इत्यस्य द्वादशाक्षरस्य यजुर्जगती सामगायत्री वा प्राजापत्योष्णिगूत्रा आसुरी बृहती वा सर्वेषां वसोर्धाराहोमे विनियोगः ॥ तत्र इदमग्नय इति त्रीणी शतानि पंचषष्टिश्चत्यागास्तंत्रेण ॥ सप्तदशप्राजापत्यवत्सप्रा-नदेवतात्वात् ॥ ततो वाजाय स्वाहेत्यादीनामिदं वाजायेत्यादयस्त्रयोदशपृथक् त्यागः ॥ तत इदमग्नये इति त्रयोविंशतिस्त्यागास्तंत्रेण ॥ अत्र वसोर्धाराहोमे च-मकानुवाकानां मंत्रत्वेपि मंत्रान्तराण्यपि श्रूयन्ते ॥ श्रावये सूक्तमाग्नेयं वैष्णवं रौद्रमैन्दवं ॥ महावैश्वानरं साम ज्येष्ठ साम च पाठयेदिति ॥ समास्त्वेत्याग्नेयसूक्त-स्य अग्निऋषिः त्रिष्टुप्छंदः अग्निर्देवता वसोर्धाराहोमे विनियोगः ॥ ॐ समा-स्त्वेति नवर्चमग्निसूक्तं ॥ विष्णोर्नुकमिति षण्णां औतथ्योदीर्घतमाऋषिः त्रिष्टुप्छं-दः विष्णुर्देवता० ॥ ॐ विष्णोर्नुकमिति चतुः कंडिकात्मकं वैष्णवं सूक्तं ॥ नम-स्ते इत्यध्यायस्य परमेष्ठीऋषिः प्रथमागायत्री तिस्रोनुष्टुभस्तिस्रः पंक्तयः समा-नुष्टुभोद्वे जगत्यावंतयोः कुत्सोपि एकरुद्रः सर्वासां देवता० ॥ नमोहिरण्य बाहव इ-त्यादिनि द्रापे इत्यतः प्राकृतनानि सर्वाणि यजुंषी नमो हिरण्य बाहव इत्यादीनां श्वपतिश्चवो नम इत्यन्तानां यजुषां हिरण्य बाहवादयो मंत्रवर्णावगता उभयतो नम-स्कारा बहवो रुद्रा देवताः ततो नमो भवाय च रुद्राय चेत्यादीनां प्रखिदते चेत्य-न्तानां भवादयो मंत्रलिंगावगता अन्यतरतो नमस्कारा बहवो रुद्रा देवताः ॥ नम इषुकृद्भ्यो धनुष्कृद्भ्यश्चवो नम इत्यस्य यजुष उभयतो नमस्कारा बहवो रुद्रा दे-वताः ॥ ॐ नमो हिरण्य बाहव इत्यादयो द्विद्विनो रुद्राः ॥ नमः सभाभ्य इत्यादयो जाताख्या रुद्रा ॥ नमो वः किरिकेभ्य इत्यग्निवायुसूर्यहृदयभूतव्याहृतीना-मन्यतरतो नमस्कारा बहवो रुद्रा देवताः ॥ द्रापे इत्यस्या उपरिष्टाद् बृहतीछंदः ॥ इमारुद्रेत्यस्याः कुत्सऋषिः जगतीछंदः ॥ याते रुद्रेत्यस्य अनुष्टुप्छंदः ॥ परितो रुद्रमीढुष्टमेति द्वयोस्त्रिष्टुप्छंदः विकिरद् सहस्राणीति द्वयोरनुष्टुप्छंदः समानामेकोरुद्रो देवता ॥ असंख्यातेत्यादीनां दशानामनुष्टुप्छंदः ॥ बहवो रुद्रा देवताः ॥ नमोस्तु

रुद्रेभ्य इत्यादीनां त्रयाणां यजुषां धृतिछंदः बहवो रुद्रादेवताः वसोर्धारा होमे० ॥ ॐ नमस्ते रुद्रमन्यव इत्यध्यायो रौद्रं सूक्तं ॥ आप्यायस्वेति तिसृणां गौतमऋषिः आद्याया गायत्रीछंद द्वितीयायास्त्रिष्टुप्छंदः तृतीयायाः उष्णिक्छंदः सोमो देवता वसोर्धारा० ॥ ॐ आप्यायस्वेति त्र्युचमैंदवं सूक्तं ॥ महावैश्वानरसाम्नो वैश्वानर-ऋषिः पथ्या बृहतीछंदः वैश्वानरो देवता वसोर्धारा० ॥ इत्युक्त्वा महावैश्वानराख्यं सामद्वयं गायेत् ॥ महावैश्वानराख्ये आरण्यके षष्ठप्रपाठके पठितं सामद्वयं प्रसिद्धं ॥ ज्येष्ठसाम्नो भरद्वाजऋषिः त्रिष्टुप्छंदः वैश्वानरो देवता वसोर्धारा० ॥ इति स्मृत्वा ज्येष्ठसाम गायेत् ॥ मूर्धानं दिव इत्यस्यामृचीगीतं ज्येष्ठसाम प्रसिद्धं ॥ सामाध्य-यनाभावे ऋग्मात्रपठनीयमपि ॥ एतच्चोपलक्षणं ॥ तेनान्यान्यप्याग्नेयादीनि य-थाभ्यासं पठनीयानि॥ किं तु उपादेयगतैकत्वस्य विवक्षितत्वादेकैकमेव ॥ अथातो वसोर्धारां जुहोतीति ब्राह्मणमपि केचित् पठन्ति ॥ इति ॥

## ॥ अथ महारुद्रस्तुतिपाठः ॥

अनादिनिधनो रुद्रो गीयते श्रुतिभिः सदा ॥ राजसेन स्वयं ब्रह्मा सात्विकेन स्वयं हरिः ॥ १ ॥ तामसेन स्वयं रुद्रस्त्रितयं त्वयि संस्थितं॥ नमामि त्वां विरूपाक्ष नीलग्रीव नमोस्तुते ॥ २ ॥ त्रिनेत्राय नमस्तुभ्यमुमादेहार्धधारिणे ॥ त्रिशूलधारिणे तुभ्यं भूतानां पतये नमः ॥ ३ ॥ पिनाकीने नमस्तुभ्यं न-मो मीढुष्टमाय च ॥ नमामि त्वां महाभूतपतये त्वां नमाम्यहं ॥ ४ ॥ स्वयं भि-क्षान्नभोक्ता च भक्तानां राज्यदः स्वयं ॥ सूर्यरूपं समासाद्य देहीनां देहदायकः ॥ ५ ॥ यतीनां मुक्तिदस्त्वं च भुक्त्यार्थीनां च भुक्तिदः ॥ यदृच्छया सर्वमिदं ततं मध्ये च पालितं ॥ ६ ॥ अन्ते च विलयं नीतं शक्तिः कस्य भवादृते ॥ मंत्रहीनः क्रियाहीनो भक्तिहीनो महेश्वरः ॥ ७ ॥ विजयश्चैव संपूर्णस्त्वत्प्रसादात् त्रिलोचन॥ अनुस्वारेण हीनस्य जपस्याम्रेडितस्य च ॥ ८ ॥ दोषाः प्रयान्तु नाशं च त्वत्प्रसा-दात् महेश्वर ॥ महारुद्रे जपो यन्मे न्यूनो वाप्यधिकोपि वा ॥ ९ ॥ संपूर्णस्त्वत्प्र-सादाच्च भूयाद्भूतिविभूषण ॥१०॥ इति स्तुत्वा अग्निं प्रदक्षिणीकृत्य अग्नेः प-श्चात् प्राङ्मुखो यजमान उपविश्य त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणांसे हृदि च त्र्यायुषमिति प्रतिमंत्रमित्येवं त्र्यायुषकरणं ॥ संस्रवप्राशनं ॥ प-वित्राभ्यां मार्जनं ॥ पवित्रप्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रं वरो वा दक्षिणादानं च ॥ मयाचरितस्यामुकरुद्रस्यांगत्वसिद्धये ब्रह्मणे पूर्णपात्रं वरोवा दक्षिणां तुभ्यं संप्रददे इत्येवं दत्वा ॥ प्रणीताविमोकः ॥ अत्रावसरे केचिज्जपरुद्रांगहोमादशांशतस्तर्पणं तद्द-शांशतश्च मार्जनमप्यचरन्ति ॥ इति ॥

## ॥ अथ तर्पणमार्जनं च ॥

आचम्य प्राणानायम्य॥ देशकालौ स्मृत्वा श्रीमहारुद्रप्रीत्यर्थं जपरुद्रांगहोमदशांशेन तर्पणं करिष्ये ॥ ततो विमलजले शुभतीर्थे तीर्थाद्युपूर्णे पात्रान्तरे वा प्रागूवत् पीठं विभाव्य अर्कमंडलान्तः स्थितं रुद्रं ध्यात्वा अर्कमंडलाद्रजतसोपानमार्गेण जले रुद्रमावाह्य आवाहनादिमुद्राः प्रदर्श्य मनसा संपूज्य पुष्पांजलिं दत्वा जलतर्पणे विहितविधिना चंदनपुष्पयुतोदकेन नमः शंभवायेति मंत्रान्ते सांगं सपरिवारं रुद्रं तर्पयामीति तर्पयेत् ॥ ततो जलान्तः स्थितं देवं सूर्यमंडले विसर्जयेदिति तर्पणं ॥ मार्जनं कुर्यात् ॥ आचम्य प्राणानायम्य ॥ देशकालौ संकीर्त्य जपरुद्रांगतर्पणदशांशभूतं मार्जनं करिष्ये ॥ अथांजलिना शुद्धमुदकमादाय स्वात्मनि रुद्रं ध्यायन् ॥ ॐ नमः शंभवायेति मंत्रान्ते श्रीरुद्रमभिषिंचामीत्येवं मूर्द्धन्यभिषिंचेदिति मार्जनं ॥ अन्ये तु तर्पणमार्जने नेह कुर्वन्ति ॥ जपरुद्रे होममात्रस्यैव वाचनिकत्वेन तयोरभावात् ॥ होमरुद्रेपि न तर्पणमार्जने ॥ यत्र जपदशांशतो होमादिर्विहितं तत्रैव ते॥ इति॥

" अथ श्रेयोदानम् " तत्रादौ वरणक्रमेणोदङ्मुखा ऋत्विजः प्राङ्मुखयजमानहस्ते श्रेयः संपादनमाचरन्ति ॥ तद्यथा ॥ ॐ शिवा आपः सन्त्विति यजमानहस्ते उदकं दत्वा ॥ सौमनस्यमस्त्विति पुष्पाणि ॥ अक्षतं चारिष्टं चास्त्विति अक्षतांश्च दत्वा ॥ दीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्त्वितिपुनरुदकं दद्युः ततो मया भवन्नियोगेन श्रीरुद्रप्रीत्यर्थं अमुकरुद्रमध्ये यथांशेन कृतो यो जपस्तदंगभूतो यः कृतोहोमस्तस्माज्जपाद्धोमाच्च यज्जातं श्रेयस्तत्तुभ्यं संप्रददे इति॥ होमरुद्रे तु यथांशेन कृतो होमस्तस्माद्यज्जातं इति विशेषः॥ एतच्च निर्मूलत्वाद्यजमानप्रतारणमेव ॥ऋत्विक्कर्तृककर्मणः फलस्य यजमाननिष्ठत्वात्॥ केचित्तु पुत्रकृतवैतरणीदानजन्यश्रेयोदानवन्माघस्नानादिजन्यपुण्यदानवच्चेदमपि श्रेयोदानविरुद्धमित्याहुः॥ इदमपि वस्तुतःचिन्त्यमिति॥

## ॥ अथ दक्षिणादानम् ॥

सपत्नीको यजमानः अग्नेः पश्चिमतः प्राङ्मुखःउपविश्योदङ्मुखान् आचार्यादीनभ्यर्च्य वरणक्रमेण तेभ्यो दक्षिणां कनिष्ठमध्यमोत्तमपक्षाणां शक्त्यनुसारीपक्षमाश्रित्य दद्यात् ॥ दक्षिणा तूक्ता बौधायने च ॥ दशगाः सवत्साः स्वर्णभूषिताः वृषभैकादशास्तदलाभे एकां गां दद्यादित्याह भगवान् बौधायन इति ॥ एतदसंभवेतु गवामभावे निष्कं स्यात्तदर्द्धपादमेव वेति वचनोक्तं गोमूल्यं देयं॥ यत्तु त्रिंशत्पणिका गाव इति मूल्यं कात्यायनेनोक्तं तदत्यशक्तविषयं ॥ देशकालौ स्मृत्वा मयाचरितस्य जपात्मकस्य वा अमुकरुद्रस्य सांगतासिद्धये आचार्यादीनर्चयिष्ये इत्याचारात्संक-

रूपं कुर्यात्॥ ततो महारुद्ररूपिन्नाचार्य एतत्ते पाद्यमिति पाद्यं दत्वा शिष्टाचारात्पादौ प्रक्षाल्याभ्यर्च्य मह रुद्ररूपिन्नाचार्य इमे तुभ्यं वाससी ॥ एषते गंधः इमानि पुष्पाणि एषते धूपः दीपः तांबूलमित्येवमाचार्यं संपूज्य॥ ॐगवे नम इति गां च समभ्यर्च्य ॥ कुशाक्षतकुसुमजलान्यादाय पूर्वोक्तविशेषणवति काले देशे च मया आचरितस्य जपात्मकहोमात्मकस्य वा अमुकरुद्रस्य प्रतिष्ठासिद्ध्यर्थं अमुकसगोत्राय अमुकामुकैतावत्प्रवराय यजुर्वेदान्तर्गतमाध्यंदिनशाखाध्यायिने काण्वशाखाध्यायिने वा अमुकशर्मणे रुद्ररूपिणे आचार्याय यथाशक्त्यलंकृतामिमां सवत्सां गां रुद्रदैवत्यां इदं च हिरण्यं अग्निदैवत्यं तुभ्यं संप्रददे नममेति कुशकुसुमाक्षतसमन्वितं जलं आचार्यहस्ते दद्यात् ॥ आचार्यस्तु ॐ देवस्यत्वा० द्यौस्त्वाददातु० प्रतिगृह्णामीति मंत्रं पठित्वा प्रतिगृह्य ॐ कोदादिति मंत्रं पठित्वा स्वस्तीति ब्रूयात्॥प्रत्यक्षायाः गोरभावे तु तन्निष्क्रयं निष्कपरिमितं तदर्धं तदर्धं वा हिरण्यं दद्यात् ॥ अस्मिन्पक्षे गोनिष्क्रयभूतमिदं हिरण्यमग्निदैवतं तुभ्यमिति विशेषः ॥ एतावद्धिरण्यासंभवे रजतं दद्यात् ॥ ततो ब्रह्मन्नेतत्ते पाद्यमित्यादिना पूजापूर्वकं ब्रह्मणे दक्षिणां दद्यात् ॥ ततो ग्रहजापकेभ्यो ग्रहयज्ञोक्तां दक्षिणां दद्यात् ॥ तत्र सूर्यमंत्रजापकाय कपिलाधेनुर्देया ॥ तत्रैवं प्रयोगः ॥ ब्राह्मणं गां च संपूज्य ॥ जलमादाय॥ कपिले सर्वभूतानां पूजनीयासि रोहिणी ॥ तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥ इति मंत्रमुच्चार्य देशकालौ संकीर्त्य कृतैतत् ग्रहयज्ञप्रतिष्ठार्थं इमां कपिलां धेनुं रुद्रदैवतां तुभ्यं संप्रददे ॥ श्रीसूर्यः प्रीयतामिति वदन् विप्रकरे जलं प्रक्षिपेत् ॥ विप्रस्तु देवस्यत्वेति द्यौस्त्वेति वा मंत्रं पठन् प्रतिगृह्णीयात् ॥ ततः कोदादिति मंत्रं ॐ स्वस्तीत्यन्तं जपेत् ॥ सोममंत्रजापकाय शंखं दक्षिणां दद्यात् ॥ शंखं विप्रं च संपूज्य ॥ जलमादाय पूण्यस्त्वं शंखपुण्यानां मंगलानां च मंगलं ॥ विष्णुना च धृतो नित्यमतः शान्तिं प्रयच्छ मे ॥ ॐ इहेत्यादि इमं शंखं विष्णुदैवतं तुभ्यं संप्रददे ॥ भौममंत्रजापकाय रक्तवृषभो दक्षिणा देया ॥ विप्रं वृषभं संपूज्य जलमादाय ॥ धर्मस्त्वं वृषरूपेण जगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ इहेत्यादिइमं रक्तवृषभं ककुदान्वितं रुद्रदैवतं तुभ्यं संप्रददे ॥ बुधमंत्रजापकाय सुवर्णं दक्षिणां च दद्यात् ॥ ब्राह्मणं हिरण्यं च संपूज्य जलमादाय ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिं प्रयच्छमे ॥ इहेत्यादि इमं सुवर्णं अग्निदैवतं तुभ्यं संप्रददे ॥ गुरुमंत्रजापकाय पीतवस्त्रयुग्मं दक्षिणां च दद्यात् ॥ ब्राह्मणं पीतवस्त्रयुग्मं च संपूज्य जलमादाय ॥ पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभ॥ प्रदानात्तस्य मे विष्णुमतःशांतिं प्रयच्छ मे॥ इहेत्यादि इदं वस्त्रयुग्मं बृहस्पतिदैवतं तुभ्यं संप्रददे॥

शुक्रमंत्रजापकाय श्वेताश्वं दक्षिणां च दद्यात् ॥ विप्रमश्वं च संपूज्य जलमादाय ॥ विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः ॥ चन्द्रार्कवाहनो नित्यमतःशान्ति प्रयच्छ मे ॥ इदं श्वेताश्वं वरुणदैवतं तुभ्यं संप्रददे ॥ शनिश्चरमंत्रजापकाय कृष्णागौःदक्षिणाच ॥ ब्राह्मणं गां च संपूज्य ॥ यस्मात्त्वं पृथिवी सर्वा धेनुः केशववल्लभा ॥ सर्वपापहरा नित्यमतःशान्ति प्रयच्छ मे ॥ इमां गां रुद्रदेवतां तुभ्यं संप्रददे ॥ राहुमंत्रजापकाय आयसं दक्षिणां च ॥ ब्राह्मणमायसं संपूज्य ॥ इदमायसं विष्णुदैवतं तुभ्यं संप्रददे ॥ केतुमंत्रजापकाय छागं दक्षिणां दद्यात् ॥ विप्रछागं च संपूज्य ॥ यस्मात्त्वं सर्वयज्ञानामंगत्वेन व्यवस्थितः ॥ मानं विभावसो नित्यमतः शान्ति प्रयच्छ मे ॥ इमं छागं अग्निदैवतं तुभ्यं संप्रददे ॥ एता दक्षिणा आदित्यदक्षिणा धेनोर्यावता मूल्येन न्यूना भवति तावत्तावन्मूल्यं सुवर्णं तस्यास्तस्याः पूरणीयं ॥ तत्तन्मंत्रेणैव दातव्यं ॥ न चात्र सुवर्णमंत्रः पठनीय एतच्चाल्पधनविषयं ॥ प्राभूतधनेनत्वश्वमूल्यसमं स्वर्णं दातव्यं ॥ अयं मुख्यो दक्षिणाकल्पः ॥ अनुकल्पस्तु ॥ आदित्यादिग्रहेभ्यः प्रत्येकमेकैकसुवर्णभूषितां दक्षिणाः दद्यात् ॥ अथवा सर्वेभ्यः स्वर्णदक्षिणां दद्यात् ॥ ततो वरणक्रमेण ऋत्विजोऽपि संपूज्य संकल्पपूर्वकं तेभ्यो दक्षिणां दद्यात् ॥ प्रतिनिधिपक्षे पारितोषिकं दद्यात् ॥ ततो नानावेदान्तर्गतनानाशाखाध्यायिभ्यो नानागोत्रेभ्यो नानाशर्मभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथाशक्तिभूयसीं दक्षिणां दातुमुत्सृजे ॥ ॐ तत्सदिति वदन् भूयसीं दक्षिणां दद्यात् ॥ इति ॥

## ॥ अथाभिषेकः ॥

आचार्यादयः सर्वे ऋत्विजस्तिष्ठन्तः उदङ्मुखाः ग्रहवेदिसमीपस्थकलशोदकेन रुद्रकलशोदकेन योगीनीक्षेत्रपालपीठकलशोदकेन चाचारात् द्वारकलशोदकेन च दूर्वापंचपल्लवैर्वक्ष्यमाणमंत्रैर्वैदिकैः पौराणोक्तैश्च प्राङ्मुखोपविष्टं सकुटुंबं यजमानं तद्वामत उपविष्टां पत्नीं चाभिषिंचेयुः ॥ गीतवाद्यादिमंगलघोषपुरःसरोऽभिषेकः कार्यः ॥ ॐ आपोहिष्ठेति तिस्रः ॥ त्रातरमिन्द्रमित्येकं ॥ वरुणस्योत्तंभनमित्येकं ॥ भगप्रणेतरित्येकं ॥ इदमापरित्येकं ॥ पुनन्तु मेति नव ॥ आप्यायस्वेत्येकं ॥ पंचनद्य इत्येकं ॥ शिरोमेति पंच ॥ देवस्यत्वेति तिस्रः ॥ सोमस्यत्वेत्येकं ॥ इत्येतेऽभिषेकमंत्राः ॥ शिष्टास्तु पालाशं भवति ॥ औदुंबरं भवति ॥ न्यग्रोधं भवति ॥ अश्वत्थं भवति ॥ सर्वसुरभ्युन्मर्दनं भवति ॥ यद्देकल्पां जुहोमीति ॥ अथ साम गायति ॥ इत्येता ब्राह्मणकंडिकाश्च पठति ॥ पौराणोक्तमंत्राश्च ॥ सुरास्त्वामभिषिंचन्तु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः

॥१॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ॥ आखंडलोग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥३॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मति बुद्धिर्लज्जावपुःशांतिस्तुष्टिः कान्तिश्च मातरः ॥४॥ एतास्त्वामभिषिंचन्तु देवपत्न्यः समागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥५॥ ग्रहास्त्वामभिषिंचन्तु राहुकेतुश्च तर्पिताः ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयो मनवो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥ एते त्वामभिषिंचन्तुः सर्वकामार्थसिद्धये ॥ ९ ॥ एवमभिषिक्तः सपत्नीको यजमानः सर्वौषधीभिरुद्वर्त्तितांगः शुद्धोदकेन स्नातः स्नानवस्त्रं त्यजेत् ॥ अभिषिक्तैस्त्यक्तं वस्त्रजातं आचार्यो गृह्णीयात् ॥ मात्स्ये अभिषेकानन्तरं दक्षिणादानमित्युक्तं ॥ वशिष्ठचां तु दक्षिणादानोत्तरमभिषेक मित्युक्तं ॥ अथ शुद्धमाल्यानुलेपनांबरधरसपत्नीको यजमानो वास्तुग्रहयोगिनीक्षेत्रपालरुद्रपीठदेवतानां च गंधाद्युपचारैरुत्तरपूजां दक्षिणानमस्कारान्तां विधाय पुष्पांजलिं दत्त्वा ॥ आवाहनं न जानामि० ॥ अपराधसहस्राणि० ॥ यस्य स्मृत्या० ॥ मंत्रहीनं क्रिया० ॥ इत्यादिमंत्रैः पीठपंचके क्षमापयेत् तत उत्तिष्ठ ब्रह्मणस्पते० यान्तु देवगणाः सर्वे० इति मंत्राभ्यां पुष्पाक्षतप्रक्षेपेण स्थापितसर्वपीठदेवता विसर्जयेत् ॥ अथ पूजोपस्कराणि वास्तुग्रहयोगिनीक्षेत्रपालरुद्रपीठानि आचार्याय दद्यात् ॥ रुद्रप्रतिमादाने त्वयं मंत्रः ॥ श्रीरुद्रप्रतिमां स्वर्णमयीं वस्त्रयुगान्वितां श्री रुद्रप्रीतये प्रार्थिताभीष्टसंसिद्ध्यै तुभ्यं श्रीरुद्ररूपिणे ॥ संप्रदद्यात् विधानेन यथोक्तफलमस्तु मे ॥ १ ॥ यदा तु मारकतं लिंगं तदा अयं दानमंत्रः ॥ इदं मारकतं लिंगं रौप्यपीठसमन्वितं ॥ नंदिना राजतेनापि श्वेतवस्त्रयुगानि च ॥१॥ धान्यैर्द्वादशभिर्युतमेकादशफलान्वितं ॥ संप्रदद्याद्विधानेन यथोक्तफलमस्तु मे ॥ २ ॥ काश्मीरलिंगपक्षेतु इदमारकतलिंगपक्षेतु इदमारकतलिंगमित्यत्रेदं काश्मीरमित्यूहः ॥ द्वादशधान्यानि व्रीहियवमाषतिलमुद्गखल्वगोधूममसूरप्रियंगवश्यामाकनीवाराः ॥ तेषां मानं तु प्रस्थाधिकद्रोणावधियथाशक्तिग्राह्यं ॥ उक्तधान्याभावे यथासंभवं ग्राह्याणि ॥ ततः ॐ अग्नये नमः इत्यग्निं गंधादिभिः संपूज्य ॥ ॐ वयं हित्वा० ॐ अनुवीरैः० ॐ यज्ञ यज्ञं गच्छति मंत्रैः ॥ गच्छ त्वं भगवन्नग्ने स्वस्थानं कुंडमध्यतः ॥ हव्यमादाय देवेभ्यः शीघ्रं देहि प्रसीद मे ॥ गच्छ गच्छ सुरश्रेष्ठ० ॥ इति मंत्राभ्यामग्निं विसर्जयेत् ॥ यान्तु देवगणाः

सर्वे० इति मंत्रेण सर्वा मंडपदेवता द्वारदेवताश्च विसृज्य ध्वजपताकाद्युपस्करयुतं मंडपमाचार्याय दद्यात् ॥ तत्रेदं दानवाक्यं ॥ अमुं मंडपं ध्वजपताकाद्युपस्करयुतमाचार्याय तुभ्यं संप्रददे ॐ स्वस्तीति प्रतिब्रूयात् ॥ ततो यज्ञपात्राणि पूजोपस्करणानि चाचार्याय दद्यात् ॥ स च प्रतिपत्तिरूपत्वान्नात्र संकल्पवाक्यांततो भूरिदक्षिणां संकल्पयेत् ॥ ततः कृतस्य महारुद्रादिकर्मणः संपूर्णतासिद्धये यथोपपन्नेन यथाकालं नानागोत्रान्नानामुकशर्मणोऽमुकसंख्याकान् ब्राह्मणान् भोजयिष्ये इति संकल्पः ॥ यथाकालं ब्राह्मणान् भोजयेत् ॥ रूपे एकः ॥ रुद्र्यां त्रयः ॥ लघुरुद्रे एकादश ॥ महारुद्रे एकविंशत्युत्तरं ॥१२१॥ अतिरुद्रे एतदेवैकादशगुणं त्रयोदशशतान्येकत्रिंशच्चेति ॥१३३॥ ततः ब्रह्मार्पणं ब्रह्महवि० ॥ चतुर्भिश्च चतुर्भिश्च इत्युक्त्वा मया यत्कृतं यथाकालं यथादेशं यथाज्ञानं यथाशक्ति च महारुद्रादि कर्म तेन श्रीपरमेश्वरः प्रीयतां ॥ ॐ तत्सत् ब्रह्मार्पणमस्तु ॥ इति कुशजलाक्षतप्रक्षेपेण कर्म ब्रह्मार्पणं कुर्यात् ततः सदस्यांश्च गंधाक्षतपुष्पवस्त्रतांबूलदक्षिणादिभिः संपूज्य ॥ अंजलिं बध्वा मया यत्कृतं महारुद्रादिकर्म तत्कालहीनं भक्तिहीनं शक्तिहीनं श्रद्धाहीनं च भवतां ब्राह्मणानां वचनात्सर्वं संपूर्णतामच्छिद्रं चास्त्विति प्रार्थयेत् ॥ ततः संपूर्णमस्त्वच्छिद्रमिति सर्वे वदेयुः ॥ ततस्तेषां मंत्राशिषो गृहीत्वा तत्सानुनयं विसृज्य ब्राह्मणान् भोजयित्वा दीनानाथांश्चान्नादिना संतोष्य स्वयं सुहृन्मित्रादियुतः सोत्साहः संतुष्टो हविष्यं भुंजीतेति शिवम् ॥

धीमताऽनन्तदेवेन श्रीमदुद्धवसूनुना ॥ त्रैविद्यमोढसंज्ञेन काशिपुरनिवासिना ॥ १ ॥ श्रुतिस्मृत्यालवालोऽयं रुद्रकल्पद्रुमोऽर्पितः ॥ मदीयनाथयोर्विष्णुवंद्ययोः शिवपादयोः मुहुर्मुहुः प्रार्थयेहं सज्जनान् शुद्धमानसान्॥ मयोक्तमिह संशोध्य विचार्य सदसच्च यत् ज्ञात्वानुच्छिष्टमर्थं यः करोति ग्रंथगोपनं॥ तस्य श्रेयोऽर्थिनस्तन्न भूयाच्चौरो यतो हि सः यश्च श्रमः समुत्पन्नो ग्रंथस्यास्य विलेखने॥ सर्वात्मा तेन विश्वेशः प्रीयतां परमः शिवः

इति श्रीसूर्यपुरनिवासिना भीतडाखेडावालविप्रजातीयेन
द्विवेद्युपनामकपरशुरामात्मजेन जगन्नाथशर्मणा
संशोधिते श्रीरुद्रकल्पद्रुमे होमपरिच्छेदः

॥ समाप्तः ॥

# ॥ अथ श्रीरुद्रसूत्रम् ॥ ७ ॥

श्रीगणेशाय नमः । सिद्धिबुद्धिप्रदातारं विघ्नव्यूहविदारणम् । महागणपतिं वंदे भक्तकल्पमहीरुहम् ।१। श्रीनृसिंहं रमानाथं सच्चिदानंदविग्रहम् । विधींद्रादिभिराराध्यं भक्तकामद्रुमं भजे ।२। सच्चिदानंददेहाय शिवादेहार्धधारिणे । नम ॐ कारवाच्याय शिवायाभीष्टदायिने । ३ । याज्ञवल्क्यमुनीन्नत्वा कात्यायनमुनींस्तथा ॥ श्रीगुरून् पितरौ रुद्रग्रंथकर्तॄंस्तथापरान् । ४ । श्रुतिं शातपथीं वीक्ष्य बृहत्पाराशरीं स्मृतिम् । बौधायनमुनेःसूत्रे श्रीमदुद्धवसूनुना । ५ । धीमताऽनंतदेवेन रुद्रसूत्रं विरच्यते । उपकाराय सर्वेषां परं वाजसनेयिनाम् । ६ । अथातः पंचांगरुद्राणां न्यासपूर्वकं जपविधिं व्याख्यास्यामो ब्राह्मणो विधिवत्स्नातो धृतविभूतिरुद्राक्षः सव्ये पाणौ कुशान् दक्षिणे पवित्रं चोपगृह्याचम्य स्वासन उदङ्मुख उपविष्टस्त्रिःप्राणानायम्य त्रिमात्रं प्रणवमुच्चार्य श्रीगुरून् गणेशं लक्ष्मीनारायणावुमामहेश्वरौ च प्रणमेद्देशकालौ स्मृत्वा कृतसंकल्पो लघुरुद्रादिषु मातृपूजाभ्युदयिके कृत्वा विनायकशांतिं नवग्रहयज्ञमसंभवे ग्रहयज्ञमेव वा कृत्वा ब्रह्माणं वृत्वा कृतस्वस्तिवाचनो भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासान् कुर्यात् सर्वमंत्रपूजाजपांगत्वादिति तांत्रिका नैवेति ब्रह्मवादिनोऽवैदिकत्वाद्वैदिकमंत्रपूजाजपांगत्वाभावात् संध्योपासनादावदर्शनाच्छ्रौतं सर्वानुक्रमसूत्रोक्तं न्यासं कृत्वा पंचांगरुद्रन्यासान् कुर्याद्गनादेशेंऽगुष्ठानामिकाभ्यां पराशरस्मृतिदृष्टानि पंचांगरुद्रन्यासरुद्रध्यानार्चनानि वक्ष्यामोऽभिधास्येऽथ रुद्राणामित्यभिधायेषेत्वादिषु मंत्रेषु खंब्रह्मांतेष्विति पाराशर्यां समाम्नातत्वात् खंब्रह्मांतानामिषेत्वादिकानां माध्यंदिनशाखायां समधीतत्वात्तद्गतरुद्रेतिकर्तव्यताविधेर्माध्यंदिनशाखाविषयत्वप्रतीतेः। मनोज्योतिरबोध्यग्निमूर्धानं मर्माणित इति काण्वशाखासमधीतपाठस्य मनोज्योतिरिति मंत्रस्य प्रतीकग्रहणाच्च तस्य सर्ववाजसनेयिशाखासाधारण्यात्सर्वयजुः शाखासमधीताद्वाजसनेयिशाखासमधीतं रुद्रं प्रशस्ततमं ब्रह्मवादिनो वदंत्यादित्यानीमानि शुक्लानि यजूंषीति श्रुतेः । कृष्णत्वेनाप्राशस्त्याच्चान्ययजुषां, बह्वृचादयः स्वपरंपरागृहीतयजुःशाखा समधीतं रुद्रजपादिकुर्युरिति ब्रह्मवादिनः “ पारंपर्यागतो येषां वेदः सपरिबृंहणः । तच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथेति’’ वसिष्ठस्मृतेः स्वाध्यायोऽध्येतव्य इति श्रुतेन्नास्वाध्यायोध्येतव्य इति श्रुतिः । १ । अथ श्रौतं सर्वानुक्रमसूत्रोक्तं न्यासं वक्ष्यामस्तस्य ब्रह्मयज्ञांगत्वं ब्रह्मयज्ञारंभे इति वचनाद्रुद्रपूजाजपाद्यंगत्वमप्येके छन्दः पुरुषमेनोनिर्णोदनं शरीरे न्यसेत्त्रियग्विकल्पमसऊर्ध्वबुध्नस्तस्याक्षिणी गौतमभरद्वा-

जौ, श्रोत्रे विश्वामित्रजमदग्नी, नासिके वसिष्ठकश्यपौ, वागत्रिर्गायत्रीं छंदोऽग्निर्देवता शिरसि विन्यसेद्देवमेवोष्णिहं सवितारं ग्रीवास्वनूके बृहतीं बृहस्पतिं बाह्वोर्बृहद्रथंतरे द्यावापृथिवीमध्ये त्रिष्टुभमिंद्रं श्रोण्योर्जगतीमादित्यं मेढ्रेतिछंदसं प्रजापतिं पायौ यज्ञायज्ञियं वैश्वानरमूर्वोरनुष्टुभं विश्वान् देवानष्ठीवतोः पंक्तिमरुतः पादयोर्द्विपदां विष्णुं प्राणेषु विछंदसं वायुम्॥ नातिरिक्तेष्वंगेषु न्यूनाक्षरं छंद आपो-देवतेत्येवं सर्वांगेषु प्रणवादिचतुर्थी नमोंऽतं योजयित्वा वेदमयः संपद्यते शापा-नुग्रहसमर्थो भवति ब्राह्मं तेजश्च वर्धते न कुतश्चिद्भयं विंदते ऋङ्मयो यजुर्मयः साम-मयस्तेजोमयो ब्रह्ममयोऽमृतमयः संभूय ब्रह्मैवाभ्येति तस्मादेतन्नाब्रह्मचारिणे नात-पस्विने नासंवत्सरोषिताय नाप्रवक्त्रेऽनुब्रूयादित्याह भगवान् कात्यायनः । २ ।

अथ पंचांगरुद्रन्यासा मनोजूतिरिति हृदि विन्यसेन्मनोज्योतिरिति काण्वाना मबोध्यग्निरिति शिरसि मूर्धानं दिव इति शिखायां मर्माणित इति कवचं मानस्तोक इत्यस्त्रमिति प्रथमो यातेरुद्रशिवातनूरघोरेति चूडायामस्मिन्महत्यर्णव इति शिरस्यसंख्याता सहस्राणीति ललाटे त्र्यंबकं यजामह इति द्वौ नेत्रयोर्मानस्तोक इति नासिकायामवतत्यधनुरिति वक्त्रे नीलग्रीवाइति द्वौ कंठे नमस्त आयुधायेति प्रको-ष्ठयोर्ये तीर्थानीति हस्तयोर्नमोवः किरिकेभ्य इति हृदये नमो हिरण्य बाहव इति नाभाविमारुद्रायेति गुह्ये मानोमहांतमित्यूर्वोरेषते रुद्रभाग इति जान्वोरवरुद्रमिति जंघयोरध्यवोचदिति कवचं नमो बिल्मिन इत्युपकवचं नमोऽस्तु नीलग्रीवायेति मु-ष्टितो विमुक्तया मध्यमया नेत्रं प्रमुंचधन्वनस्त्वमित्यस्त्रं यएतावंतश्चेतिदिग्बंध इति द्वि-तीयो ब्रह्मरंध्रनासिकाललाटास्यकंठहृदयदक्षिणवामकरनाभिपत्सु दशार्णवस्य व-र्णान् प्रणवादीन्नमोंऽतान् सानुस्वारान् क्रमान्न्यसेदिति तृतीयस्त्रातारमिंद्रं त्वन्नो-ऽग्ने तवसुगन्तु पंथामसुन्वंतं तत्वायाम्यानोनियुद्भिर्वयं सोमतमीशानमस्मे-रुद्राः स्योनापृथिवीति दशमंत्रैर्दशदिक्षु प्राच्यादिषु संपुटं कुर्यादेतैर्मंत्रैरिंद्रादीन् दि-क्षु प्रणमेदिति तुरीयः षडंगानि तन्मुद्राभिः शैवीभिर्न्यसेच्छिवसंकल्पं हृदयमेकैव ऋक् काण्वानां पुरुषसूक्तं शिर उत्तरनारायणशिखाऽप्रतिरथं कवचमाशुः शि-शान इति द्वादशर्चमप्रतिरथमित्याहुस्तस्माब्रह्मा प्रतिरथजपत्याशुः शिशानो वृष-भोनभीम इत्यैंद्रेयाभिरूपाद्द्वादश भवंतीति श्रुतेर्विभ्राडित्यनुवाको नेत्रं शतरुद्रिय-मस्त्रंरौद्राध्यायं शतरुद्रियमित्याचक्षते • षष्ठिश्च हवै त्रीणि च शतान्येतच्छतरुद्रिय-मथ त्रिंशदथ पंचत्रिंशदिति श्रुतेरिति पंचम एषते रुद्रभाग इति मुद्रा प्रदर्शयेच्छि-वपुष्टिः शिवस्येति वचनाच्छ्रीकामः शीर्ष्णि तेजस्कामो नेत्रयोरन्नाद्यकामो मुखे रोगनाशकामो ग्रीवायां सर्वकामो हृदये ज्ञानी नाभौ प्रजाकामो गुह्ये पशुकामो

जंघयोर्ग्रामकामो जान्वोराष्ट्रकामः पाद्योर्वशीकरणकामो वामहस्ते पापक्षयाभिचार व्याध्यपगमकामावहिः शरीरात्कुर्वीरन्न्यासमंत्राः प्रणवादिकाः पूजामंत्राश्चैवं न्यस्ततनुः साक्षाद्रुद्रो भवति ॥ ३ ॥ पंचास्यं सौम्यं सर्वाभरणभूषितं मृगलांछनमूर्धानं शुद्धस्फटिकसन्निभं फणासहस्रविस्फूर्जदुरगेंद्रोपवीतिनं सप्तार्चिर्धिज्वलज्जटाजूटकिरीटिनं सहस्रकरविभ्राजत्खट्वांगादिविभूषितं ब्रह्मांडखंडवत् काशत्कपालवरधारिणं देदीप्यमानं चंद्रार्कज्वलदग्नित्रिनेत्रिणं कपालमालिनमक्षमाला निःशेषवारिपूर्णकमंडलुडमरुधारिणं केयूरबद्धनागेंद्रमूर्धमणिविराजितं मेखलाकिंकीणिमालामुक्तारावविराजितं क्वणन्नूपुरधारिणं व्याघ्रचर्मपरीधानं व्याघ्रचर्मोत्तरीयं वरेण्यं गंगाधरं सुरार्चितमुक्षासनस्थितमुमादेहार्धधारिणममृतप्लुतहृष्टांगं दिव्यभोगसमाकुलं दिग्देवतासमन्वितं सुरासुरनतं नित्यं शाश्वतमव्यक्तं सर्वव्यापिनं विश्वरूपं नंदिनमित्यात्मानं रुद्ररूपं ध्यायेत् ॥४॥

अथार्चयेदनुगुप्ते गोचर्ममात्रे शुचौ देशे स्थंडिले वस्त्राच्छन्नेष्टदलमंबुजमालिख्य तन्मध्ये दशार्णमालिखेदेतदर्चापीठं नमः शंभवायेति समभ्यर्च्य मानोमहांतमिति सिद्धमंत्रं स्मृत्वार्घमापूर्य गंधपुष्पाभ्यामभ्यर्च्याष्टकृत्वोऽभिमंत्र्यात्मानं संभारांस्तेनोदकेन प्रोक्षयेदर्घपूरणादिषु संभारप्रोक्षणांतेषु नमः शंभवायेति मंत्रपुष्पैरक्षतैर्वा पीठपूजां कुर्यात्पीठाधः आधारशक्तिकूर्मानंतवराहपृथिवीर्विचित्रदिव्यमंडपपरितः कल्पवृक्षसुवर्णवेदिकारत्नसिंहासनान्युपर्युपर्य्यभ्यर्चयेद्धर्मज्ञानवैराग्यैश्वर्याणि पादेषु तान्येवाकारपूर्वाणि गात्रेष्वनंतपद्मानंदकंदसंविन्नालप्रकृतिमयपत्रविकारमयकेसरलिपिमयकर्णिकाः सिंहासनोपरि सानुस्वाराकारोकारमकारादीन् सत्वादीन् गुणान् क्रमतः पद्मदलकेसरकर्णिकास्वेवमन्यानि त्रिकाणि द्वादशषोडशदशकलात्मसहितान्यर्कसोमाग्निमंडलानि ब्रह्मविष्णु महेश्वरानात्मांतरात्मपरमात्मनो ज्ञानात्मानं पद्मस्याग्रतःप्रादक्षिण्येन पद्मपत्रेषु वामाज्येष्ठारौद्रीकाली कलविकरणी बलविकरणी बलप्रमथनी सर्वभूतदमनीः कर्णिकायां मनोन्मनीमित्येताःपीठदेवताश्चतुर्थीनमोऽता ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानंताय योगपीठात्मने नम इति पीठं पुष्पांजलिना समभ्यर्च्य सत्वज्ञानानंतानंदरूपेवरं धामैव सकलं पीठं विचिंत्य स्वललाटे पुनस्तेजोरूपं शिवं ध्यात्वा नमः शंभवायेत्यावाह्यासनं दद्याद् दशार्णेन पाद्यमर्घ्यं नमः शंभवायेत्याचमनीयं याते रुद्रशिवातनूरस्मिन्महत्यर्णवेऽसंख्यातासहस्राणि त्र्यंबकं यजामहे द्वे मानस्तोकेऽवततत्यधनुर्नीलग्रीवा द्वे नमस्त आयुधाय ये तीर्थानि नमो वः किरिकेभ्यो नमो हिरण्यबाहवे इमा रुद्राय मनोमहांतमेषतेरुद्रा-

ऽवरुद्राध्यवोचन्नमो विल्विने नमोस्तुनीलग्रीवाय प्रमुंच यएतावंतश्चों नमो भगवते रुद्रायेति न्यासमंत्रैर्मानस्तोके नमः शंभवायेति मंत्राभ्यां सहितैः सोंकारैर्गंधोदकेन देवं स्नापयित्वा स्नानाचमनीयवस्त्राचमनीययज्ञोपवीताचमनीयगंधपुष्पधूपदीपनैवेद्याचमनीयानि नमः शंभवायेति समर्प्य दशार्णेन नमस्कृत्य प्रदक्षिणानीराजनपुष्पांजलिदानानि नमःशंभवायेति कुर्यात् ॥ ५ ॥ अथ पराशरबौधायनादिप्रोक्तविधिना जपेच्छिवसंकल्पं पुरुषसूक्तमुत्तरनारायणमप्रतिरथं विभ्राडिति पंचांगमंत्रान् जपित्वा षडंगमंत्रानित्येके तिसृणां महाव्याहृतीनां रुद्रस्य चादाविति चत्वारोंऽतेचैवमित्यष्टौ प्रणवा अष्टप्रणवयुक्तं रुद्रं सकृज्जपेद्रौद्राध्यायं रुद्रमित्याचक्षते नीलसूक्तं शांत्यध्यायं चैष आद्यो रुद्रः पूर्ववत्पंचांगमंत्रान् जपित्वाऽष्टप्रणवयुक्तं रुद्रमेकादशकृत्वोंऽत्यं सपंचांगमंत्रं वा जपेन्नीलसूक्तं शांत्यध्यायं चैष द्वितीयः षडंगानि जप्त्वा पूर्ववद्रुद्रमेकादशकृत्वो नीलसूक्तं सकृद्वयं सोमेत्यष्टं च नीलसूक्तमित्याचक्षते सप्तर्चं काण्वानीं शांत्यध्यायं चैवं वा द्वितीयः पंचांगानि जपित्वा पूर्ववद्रुद्रमेकादशकृत्वो जपेदंतरांतरा वाजश्चम इत्यष्टानुवाकानामेकादशधा कृतानामेकमेकं जपेदाद्ये पठिते रुद्रे वाजश्चम इति चतस्रो द्वितीये सत्यंचमेति चतस्रस्तृतीये ऊर्क्चेति चतस्रस्तुरीयेऽश्माचेति तिस्रःपंचमेऽग्निश्चेत्यर्द्धेंद्रसंज्ञा इति पंचानुवाका अंशुश्चेति ग्रहसंज्ञाः षष्ठे सप्तमेऽग्निश्चमे धर्मश्चम इति यज्ञक्रतुसंज्ञे एकाचेत्ययुक्स्तोमसंज्ञामष्टमे चतस्रश्चम इति युग्मस्तोमसंज्ञां नवमे त्र्यविश्चम इति वयःसंज्ञे दशमे वाजाय स्वाहेति नामग्राहकल्पसंज्ञे एकादशे इति त्रयो विभक्ताः शांत्यध्यायं चैवं वा द्वितीयःपंचांगमंत्रान् जपित्वा रौद्राध्यायमेकादशकृत्वःशांत्यध्यायं चैवं वा द्वितीयोऽस्य रुद्र इत्याख्यैनं सकृदावर्त्य ब्रह्महत्यादिभिः सर्वैर्महापापैर्मुक्तो भवतीत्याहुरत्रिपराशरशातातपारुद्रमावर्त्य रुद्रतां यातीति भगवान् पराशरो यावज्जीवं प्रत्यहं रुद्रं जपेत्सर्वेषु ग्रहदोषेषु दुःस्वप्नेऽद्भुतदर्शनश्च।क्निन्यादि ग्रहदोषे ज्वरादिसर्वरोगशांतिकामः सर्वपापक्षयकामः श्रीकामःपुष्टिकामः पुत्रकामः पशुकामः शिवत्वप्राप्तिकामो मोक्षकामः सर्वकामो रुद्रएकादशगुणश्चेद्रुद्रैरेताभिरेकादशभिर्महारुद्र एतैरेकादशभिरतिरुद्रः स्याज्जपांत इमारुद्रायेति जपं निवेद्य द्राप हृष्टांगं प्रणम्य विकिरिद्रेति विसृज्य शिवरूपो विहरेच्छिवरूपो विहरेत्॥६॥इतिरुद्रसूत्रे प्रथमोध्यायः॥

## ॥ अथ द्वितीयोध्यायः ॥

अथ पराशरबौधायनादिप्रोक्तं रुद्रहोमविधिं व्याख्यास्यामो विंशतिहस्तमष्टादशं षोडशहस्तं चतुर्दशहस्तं द्वादशहस्तं दशहस्तं वा मंडपं कृत्वा तस्य

मध्यप्रदेशे कंठमेखलायोनिनालनाभियुक्तमाहुतिसंख्यामानोक्तमानं चतुरस्रं कुंडं कुर्यात्तयोरसंभवे तत्प्रमाणं चतुरस्रं चतुरंगुलोच्चं स्थंडिलं कुर्यात्तस्मादीशान्यामरत्निप्रमाणां चतुरस्रां द्वादशांगुलोच्चां वस्त्राच्छन्नां रुद्रार्चावेदिं कुर्यान्मनुष्यनरेंद्रबालयोषिद्ग्रामनगरदेशाजाविकाश्वकुंजरेषूपद्रुतेषु मारीरोगरिपुभयेषु सर्वकामः पायसेनाज्येन वा जुहुयाज्जपांगहोमे चरुव्रीहितिलयवसमिधामन्यतमेनासनोपवेशनाद्यास्वस्तिवाचनात्पुण्याहे कृत्वा शुक्लांबरधरः शुक्लमाल्यानुलेपनो गंधमाल्यफलादिभिरर्चितवारिपूर्णकलशहस्तो मंगलवाद्यवेदमंत्रघोषाभ्यां ब्रह्मणा सहितः सपत्नीको यजमानो मंडपश्चेत्तं प्रदक्षिणीकृत्य पश्चिमद्वारेण मंडपांतः प्रविश्याग्न्यायतनात्पश्चिमत उपविश्य कृतजपरुद्रांगहोमसंकल्पो भूमिर्भूमिमवागान्माता मातरमन्वगात् । भूयाम पुत्रैः पशुभिर्योनो द्वेष्टि समिद्यताम्–इति भूमिं संस्पृश्य राक्षोघ्नमंत्रैर्गौरसर्षपान्मंडपांतः सर्वतोऽवकीर्यापोहिष्ठेति त्र्यृचेन कुशैः पंचगव्येन मंडपांतः सर्वतः प्रोक्ष्य स्योना पृथिवीति महीद्यौरिति मंत्राभ्यां भूमिं संप्रार्थ्य स्वस्तिन इन्द्र इति त्रिर्जपेत् ॥१॥ वास्तुमंडलदेवताश्च विधिवदर्चयेत्प्रक्षालितपाणिपादः स्वाचांतः सपत्नीको ब्रह्मणा सहितः प्राग्द्वारेण मंडपांतः प्रविशेदग्निस्थानात्पश्चादुपविश्य कुंडं चेत्संमृज्य कुशोदकेन प्रोक्ष्य श्वेतवर्णालंकृतायामुपरितनमेखलायामिदं विष्णुरिति विष्णुं रक्तवर्णालंकृतायां मध्यमेखलायां ब्रह्मयज्ञानमिति ब्रह्माणं कृष्णवर्णालंकृतायामधोमेखलायामिमारुद्रायेति रुद्रं रक्तवर्णालंकृतायां योनावंबे अंबिके इति गौरीमावाह्यार्चयेत्कुंडे स्थंडिले वा गृह्योक्तेन विधिनाग्निमुपसमाधाय छंदः पुरुषन्यासपंचांगरुद्रन्यासरुद्रध्यानानि पूर्ववद्रुद्रवेद्यां रुद्रमभ्यर्च्य पायसादिना चेच्छ्रपयित्वाऽऽज्यभागाविष्टवाग्नावग्निं सनःपितेत्यभ्यर्च्य पंचांगमंत्रैः पंचभिः पंचाहुतीर्हुत्वा नमस्त इत्यध्यायेनैकं त्रिधा विभक्तेन तिस्रो वाहुतीर्जुहोत्याद्यानुवाकैराद्या द्वाभ्यां द्वितीया चतुर्भिस्तृतीया यद्वा द्वे तूक्ते अवतानांते तृतीया प्रत्यवरोहैस्तिस्रः षोडश वा पूर्वोदिते द्वे सहस्राणि सहस्रश इत्यृगंते तृतीयाऽवतानैर्दश प्रत्यवरोहैस्तिस्रश्चतुश्चत्वारिंशद्वा षोडर्ग्भिः प्रथमाभिः षोडश सप्तानुवाकैर्नमोव इत्यतः प्राक् सप्तनमोवः किरिकेभ्य इत्येका द्राप इति विंशत्या विंशतिरष्टाचत्वारिंशद्वा नमोवः किरिकेभ्य पंचव्याहृतिभि पंचेत्यष्टाचत्वारिंशत् ॥ २ ॥ एकषष्ट्यधिकं शतं वाद्याभिः षोडशर्ग्भिः षोडशोभयतो नमस्काराः षट्चत्वारिं शदन्यतरतो नमस्कारा नवसप्ततिर्द्राप इति विंशत्या त्रिंशतिःपंचविंशत्युत्तरं चतुः शतं वाद्यायां गायत्र्यां त्रयः पादास्तएव त्रीणि यजूंष्यनुष्टुप् चत्वारश्चत्वार इत्येकैकस्यां चत्वारि चत्वारि पंक्तिषु पंचशादा इत्येकैकस्यां पंच पंच सप्तस्वनुष्टुप्सु चत्वारश्चत्वार-

इत्येकैकस्यां चत्वारि चत्वारि जगत्योः पठतःप्रत्येकं षट् नमो हिरण्येतितिस्रोऽशीतयो नमोवःकिरिकेभ्य इति चत्वार्यर्यत्यानुवाके षोडशचतुष्पदा इत्येकैकस्यां चत्वारि चत्वारि मीढुष्टमेति पंचपादा इति पंच प्रत्यवरोहेष्वेकैकस्मिँश्चतुर्दश चतुर्दश षष्टिश्च हवैं त्रीणि शतान्येतच्छतरुद्रियमथ त्रिंशदथ पंचाशदिति श्रुतेरेवमन्यतमेन विधिना विभक्तेन रुद्रेण दशकृत्वो हुत्वा पूर्ववत्सपंचांगमंत्रेण वैकादशेन जुहुयाद्रुद्रसमाप्तावेकैकेन चमकविभागेन जुहुयान्नत्वा वयं सोमेति शिरसैकामंते शांत्यध्यायेन प्रतिमंत्रमेवं रुद्रीमहारुद्रातिरुद्राणामन्यनमेन यथाकामं जुहुयात् ॥ ३ ॥ होमांतेऽग्नावग्निं पूर्ववदभ्यर्च्य स्विष्टकृतं महाव्याहृतीः सर्वप्रायश्चित्तं प्राजापत्यं हुत्वा दिग्पालेभ्यस्तत्तल्लिंगैर्मंत्रैर्बलीन् हरति चतुर्गृहीतेन द्वादशगृहीतेन वाज्येनाछिन्नधारया सप्तते अग्ने समिध इति पूर्णाहुतिं जुहोति मूर्धानं दिव इति वा पुनस्त्वेति वा पूर्णादर्वीति वेमं स्तनयित्नुवाकेन वौदुंबर्या स्रुचा पंचगृहीताज्येन संततधारया घृतेऽग्नौ प्राप्ते वाजश्चम इत्यष्टानुवाकैर्वसोर्धारां जुहोति जपांगहोमे प्रतिरूपं तिस्रस्तिस्रः पंचपंच षट्षडष्टावष्टौ दशदशैकादशत्वाऽहुतीर्नमः शंभवायेति जुहोति नाममंत्रैर्न शिरसा न चमकानुवाकैर्न शांतिमंत्रैर्न मातृपूजादीनि स्वस्तिवाचनांतानीति विशेषोऽन्यत्समानमाचार्याय ब्रह्मणे च दक्षिणां दद्यादृत्विजश्चेत्तेभ्यश्च रुद्रं पूर्ववदभ्यर्च्य यथाशक्तिब्राह्मणान भोजयेत् ॥ ४ ॥

अथातो मंत्रसिद्धिविधिं वक्ष्यामो गोष्ठारण्यसिद्धिक्षेत्रशिवालयाभ्यगारनदीसमुद्रतीरपर्वतानामन्यतमेऽन्यत्र वा शुद्धदेशे मनोरमे कंदमूलफलगोमूत्रयावकक्षीरदधिशाकाज्यहविष्यमुन्यन्नानामन्यतरभोजनश्चरुभिक्षाशी वा धीरो दृढव्रतो मौनी जितक्रोधो जितेंद्रियो धौतवासास्त्वधःशायी शिरसा सह रुद्रसहस्रं जपेत्सर्वे मंत्राःसिद्धाश्चिंतितार्थफलप्रदा रुद्रस्येव ब्राह्मणेंद्रस्य स्युरित्याह भगवान् पराशरः

अथ पराशरानुक्तमविरोधिनं बौधायनोक्तरुद्राभिषेकविधिंव्याख्यास्यामस्तीर्थे विधिवत्स्नातः शुचिः प्रयतो ब्रह्मचारी शुक्लवासास्तस्य दक्षिणप्रत्यग्देशे तन्मुखोपविष्ट आचमनप्राणायामादीनि स्वस्तिवाचनांतानि छंदः पुरुषन्यासपंचांगरुद्रन्यासान् कृत्वाऽत्मनि देवताः स्थापयेत्प्रजनने ब्रह्मा पादयोर्विष्णुर्हस्तयोर्हरो बाह्वोरिंद्रो जठरेऽग्निर्हृदये शिवः कंठे वसवो वक्त्रे सरस्वती नासिकयोर्वायुर्नयनयोः सूर्याचंद्रमसौ कर्णयोरश्विनौ ललाटे रुद्रा मूर्ध्न्यादित्याः शिरसि महापुरुषं शिखायां चामुंडा पृष्ठे पिनाकी पुरतः शूली पार्श्वयोःशिवशंकरौ सर्वतोऽग्निर्ज्वालामालापरिवृतः सर्वेष्वंगेषु सर्वा देवतास्तिष्ठतु तिष्ठतांतिष्टंत्विति यथार्हं सर्वत्रानुषजत्यंत्ये तिष्टंत्वित्यनंतरं मां रक्षत्विति ब्रूयादग्नि मे वाचि श्रितः, वागिति वाचिस्पृशेद्वायुर्मे प्राणे श्रितः, प्राण इति हृदय सूर्यो मे चक्षुषि श्रितः, चक्षुरिति

चक्षुषी चंद्रमा मे मनसि श्रितः, मन इति वक्षो दिशो मे श्रोत्रे श्रिताः, श्रोत्रमिति श्रोत्रमापो मे रेतसि श्रिताः, रेत इति लिंगं पृथिवी मे शरीरे श्रिता, शरीरमोषधीवनस्पतयो मे लोमसु श्रिताः, लोमानीति रोमकूपानिंद्रो मे वले श्रितः, वलमिति सर्वांगानि पर्जन्यो मे मूर्ध्नि श्रितः, मूर्धेति मूर्धानमीशानो मे मन्यौ श्रितः, मन्युरिति हृदयमात्मा मे आत्मनि श्रितः, आत्मेति वक्षो हृदयं, हृदयं मयि, अहममृते, अमृतं ब्रह्मणीति सर्वत्र पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात्। वैश्वानरोरश्मिभिर्वा दधानः। अंतस्तिष्ठत्वमृतस्य गोपा इति सर्वशरीरमात्मानं रुद्ररूपं ध्यायेद्यथोक्तं पुरस्तात् ॥ ६ ॥

अथात्मानमाराधयेदाराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां मां गृहाण महेश्वरेति स्वात्मनि रुद्रमावाह्य त्र्यंबकं यजामह इति गंधादिभिरभ्यर्चयेदर्घ्यपूर्णार्चनाभिमंत्रणसंभारैरात्मप्रोक्षणानि कृत्वा पूर्ववत्पीठमभ्यर्च्य शिवलिंगादावाराधयेदात्वायहंतु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः। वाताजरैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोमिति स्वहृदयकुहरात्सूर्यमंडलाद्वा देवमावाह्य संस्थापिते सद्योजातं प्रपद्यामीत्यावाहनं दद्यात्सद्योजाताय वै नमो नमइत्यासनं भवे भवेनातिभवे भवस्वमामिति पाद्यं भवोद्भवाय नमः । वामदेवाय नम इत्यापोहिष्टेति तिसृभिश्च स्नानमष्टकृत्वाद्भिस्तर्पयेद्भवं शर्वमीशानं पशुपतिं रुद्रमुग्रं भीमं महांतमिति देवं तर्पयामीति देवं तर्पयामीति सर्वत्र ज्येष्ठायनम इत्याचमनीयं श्रेष्ठाय नमो रुद्राय नम इति मधुपर्कं कालाय नम इति गंधं कलविकरणाय नमो वलकिरणाय नमो वलाय नमो वलप्रमथनाय नम इति पुष्पाणि सर्वभूतदमनाय नम इति धूपं मनोन्मनाय नम इति दीपं भवोद्भवाय नम इति नैवद्यमष्टभिर्मंत्रैरष्टौ पुष्पाणि भवाय शर्वायेशानाय पशुपतये रुद्रायोग्राय भीमाय महतइति देवाय नम इति सर्वत्राथास्या घोरतनूरघोरेभ्यस्तत्पुरुषायेशानः सर्वविद्यानामित्युपतिष्ठते ॥ ७ ॥ अथैतस्य शिवस्य मूर्धनि हिरण्येन कलशेन संततधारां निषिचिन्मधुना सर्पिषा पयसा वेक्षुरसेन नालिकेररसेनाम्ररसेनैषामभावे गंधोदकेन केवलोदकेन वाद्येन द्वितीयेन वा रुद्रेण सर्वेषांमते पूर्ववदभ्यर्चयेदेवं रुद्री महारुद्राति रुद्राणामन्यतमेन यथाकामभिषिंचेदभिषेकनिवेदनादिविसर्जनांतं पूर्ववदक्षोभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकावधि । यक्ष्मं शीर्षण्यं मास्तिष्काज्जिह्वायां विवृहामिते ॥ ग्रीवाभ्यस्तउष्णिहाभ्यः क्रकसाभ्यो अनूक्यात् । यक्ष्मं दोषण्यमंसाभ्यां वाहुभ्यां विवृहामिते ॥ आंत्रेभ्यस्ते गुदाभ्यो वनिष्टोर्हृदयादधि ॥ यक्ष्मं मतस्नाभ्यां पक्तः प्लाशिभ्यो विवृहामिते ॥ ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां

भपदाभ्याम् । यक्ष्मं श्रोणिभ्यां भासदाद्भंससो विवृहामिते ॥ मेहनाद्धनं करणाल्लो-मभ्यस्ते नखेभ्यः । यक्ष्मं सर्वस्मादात्मनस्ततमिदं विवृहामिते ॥ अंगादंगाल्लोम्नो लोम्नो जातं पर्वणि ॥ यक्ष्मं सर्वस्मादात्मनस्ततमिदं विवृहामित इत्यापोहिष्ठेति तिसृभिश्चाभिषिक्तोदकेन व्याधिनो मूर्धाद्यापादात्सर्वांगानि संमृज्यात्पापक्षयार्थी व्याधिविमोचनार्थी जीवनार्थी श्रीकामः शांतिकामः पुष्टिकामस्तुष्टिकामो मो-क्षकामः कुर्यादेवं कुर्वन् सिद्धिमवाप्नोत्याचार्याय दक्षिणां दद्याद्दशगाः सवत्साः सुवर्णभूषितां वृषभैकादशास्तदभावे एकां गां दद्यादित्याह भगवान् बौधायनो ब्रह्मणे हिरण्यं यथाशक्ति ब्राह्मणान् भोजयेन्नमो भगवते वाजसनेयाय याज्ञवल्क्याय नमो भगवते कात्यायनाय ॥ ८ ॥ इति रुद्रसूत्रे द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

अथातो भस्मत्रिपुंड्रधारणविधिं व्याख्यास्याम सद्योजातं प्रपद्यामि सद्यो जा-ताय वै नमोनमः । भवे भवेनाति भवे भवस्वमां भवोद्भवाय नमः । वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्रायनमः कालायनमः कलविकरणाय नमो बलविक-रणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमः ॥ अघोरेभ्योऽ-थघोरेभ्यो घोर घोर तरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ईशानः सर्ववि-द्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवो मे अस्तु सदा-शिवोम् ॥ इति पंचभिर्मनुभिर्नैर्यावसथ्यान्यतरसंभवं भस्म परिगृह्य सव्ये कृत्वा दक्षिणेन पिधायाग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह्वा इदं भस्म मन इत्येतानि यजूंषि भस्मानीति त्रिरभिमं-त्र्यापो ज्योतिरसोमृतं ब्रह्मभूर्भुवः स्वरोमिति तस्मिन्नप आसिच्य मानस्तोक इति संक्षुभ्येशानः सर्वविद्यानामिति शिर उध्धुलय तत्पुरुषायेति मुखमघोरभ्य इति हृदयं वामदेवायेति गुह्यं सद्योजातमिति पादौ प्रणवेन सर्वांगानि यास्य प्रथमा रेखा सागार्हपत्यश्चाकारो रजोभूर्लोकश्चात्मा क्रिया शक्ति ऋग्वेदः मातः सवनं महादेवो देवता यास्य द्वितीया रेखा साच दक्षिणाग्निरुकारः सत्वमंतरिक्षमंतरात्मेच्छा-शक्तिर्यजुर्वेदो माध्यंदिनं सवनं महेश्वरो देवता यास्य तृतीया रेखा स आहवनीयो मकारस्तमोद्यौः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयं सवनं शिवोदेवतेति ध्या-यन् त्र्यंबकं यजामह इति त्र्यायुषमिति द्वाभ्यां ऋग्भ्यां मध्यमांगुलीभिरनुलोमं शिरो ललाटवक्षःस्कंधेषु तिस्रो रेखाः प्रकुर्वीत मध्यरेखां विलोमामंगुष्ठेन कृत्वाऽ-नुलोममनामातर्जनीभ्यां रेखाद्वयं वा तिस्रो रेखा एव वा कुर्वीत नोध्धूलनं ने-

त्रयुग्मप्रमाणास्ता रुद्रहोमार्चनेष्वन्यत्रापि चैतन्यंशांभवं व्रतमेतत्सर्वेषु वेदेषु वेदवादिभिरुक्तं तत्समाचरेन्मुमुक्षुरपुनर्भवाय ॥ १ ॥ अथातो रुद्राक्षधारणविधिं व्याख्यास्यामो महाव्रतं सर्वपापघ्नमिदमिति ब्रह्मवादिनो वदंति रुद्रजपहोमार्चनेष्वन्यत्रापि चैतन्नित्यमानर्थक्यस्मरणाद्विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः सर्वेंद्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य हृत्पुंडरीकं विरजं विशुद्धं मध्ये विशदं विशोकं विचिंत्य तस्मिन्नादिमध्यांतवीहीनमेकं विभुं चिदानंदमरूपमद्भुतं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशांतमुमासहायं चिंतयन् त्र्यंबकं यजामह इत्योंनमः शिवायेति वा प्रतिष्ठितरुद्राक्षाणां सहस्रं प्रतिष्ठामंत्रयोरन्यतरेण धारयेदेवं यो धारयेत्स रुद्रवद्वेदभावे सहस्रस्यैकं शिखायां शिरसि चत्वारिंशदेकं नयनयोर्मध्ये कर्णयोः षट् षट् कंठे द्वात्रिंशद्बाह्वोः षोडश षोडश करयोर्द्वादश द्वादश वक्षस्यष्टोतरं शतं यो धारयेत्स रुद्रवत्पूज्यो भवेन्मुक्ताप्रवालस्फटिकरौप्यवैडूर्यकांचनैः समेततान्यो धारयेत्सशिवो भवेत् ॥ २ ॥ अथातो रुद्रविनियुक्तानां मंत्राणामृषिदैवतछंदांस्यनुक्रमिष्यामो मनोजूतिर्बृहस्पतिरांगिरसो यजुर्विश्वेदेवा अबोध्यग्निर्बुधगविष्ठिरौ त्रिष्टुबग्निमूर्धानं भरद्वाजस्त्रिष्टुबग्निर्वैश्वानरो मर्माणि विवस्वाँस्त्रिष्टुप् लिंगोक्ता याते रुद्रेत्यादीनां रौद्राध्यायेदिनोपरिष्टाद्वक्ष्यामो दशार्णस्य प्रजापतिर्विराड्रुद्रस्त्रातारं गर्गस्त्रिष्टुबिंद्रस्त्वन्नो अग्न आंगिरसो हिरण्यस्तूप आग्नेयी जगती सुगन्नुपंथां प्रजापतिस्त्रिष्टुबैवस्ततोऽसुन्वंतं प्रजापतिस्त्रिष्टुप्निर्ऋतिस्तत्त्वायामि शुनः शेपस्त्रिष्टुप्वरुण आनोनियुद्भिर्वसिष्ठस्त्रिष्टुब्वायुस्तमीशानं गोतमजगतीमीशानोऽस्मेरुद्राः प्रयाथास्त्रिष्टुब्ब्रह्मा स्योना मेधातिथिर्गायत्र्यनंतो यज्जाग्रतः षण्णां शिवसंकल्पस्त्रिष्टुप्मनः सहस्रशीर्षा षोडशर्चा नारायणः पुरुषः पंचदशानुष्टुप् षोडशी त्रिष्टुप् जगद्बीजं पुरुषोऽद्भ्यः षण्णां पूर्वानुवाक्यस्यार्षमाद्यास्तिस्त्रस्त्रिष्टुभो द्वे अनुष्टुभावंत्यस्त्रिष्टुब्वादित्य आशुर्द्वादशानामत्र प्रतिरथस्त्रिष्टुबिंद्रो विभ्राडबृहद् विभ्राट्सौर्य उदुत्यंतिस्रः प्रस्कण्वः प्रतीकचोदितानां ब्रह्मस्वयंभ्वानोगुस्त्योयदद्यश्रुतकक्षसुतकक्षौ तरणिः प्रस्कण्वस्तत्सूर्यस्य वयो कुत्सो बण्महान् द्वयोजमदग्निः श्रायंत इव नृमेधोऽग्रादेवाः कुत्स आकृष्णेन हिरण्यस्तूप आंगिरसो विभ्राड् जगती उदुत्यं तिस्रो० गायत्र्यस्तंभरनथा जगतीमयं वेनस्त्रिस्त्रिष्टुभो यदद्य गायत्र्यौ तत्सूर्यस्य त्रिष्टुभौ बण्महान्द्वे बृहती सतो बृहत्यौ श्रायंत इव बृहती मद्यादेवा द्वे त्रिष्टुभौ सर्वाः सौर्यः ॥३॥ प्रणवस्य ब्रह्मा दैवी गायत्री परमात्मामग्निमीहाव्याहृतीनां प्रजापतिर्देवावाग्निर्वा गंधर्वा वा त्रीणि यजूंष्यग्निवायुसूर्यदैवत्यान्विशतरुद्रियं परमेष्ठिन आर्षं देवानां वा

प्रजापतेर्वा प्रथमागायत्री तिस्रोऽनुष्टुभास्तिस्रः पंक्तयः सप्तानुष्टुभो द्वे जगत्यौ मानो द्वे कुत्सस्यैकरुद्रः सर्वासां हिरण्य बाहव इत्यादीनि यजूंषि प्रागंत्यानुवाका द्वाहुरुद्रदैवत्यानि तेषामुभयतो नमस्कारा अन्येऽन्यतरतो नमस्कारा अपरे हिरण्य बाहव इत्यादयो द्वंद्विनो रुद्राः सभाम्यः इत्यादयो जाताख्या अंत्यानुवाकस्य प्रथमोपरिष्टा बृहती द्वितीया जगती कुत्सस्य तृतीयानुष्टुप् द्वे त्रिष्टुभो द्वे अनुष्टुभावेकरुद्रः सप्तानामसंख्यातादशानुष्टुभां प्रत्यवरोहयजुषां च बहवो रुद्राश्चमकानुवाका अष्टौ देवामार्षं सर्वाणि यजूंष्यग्निदेवत्यानि शिरसः प्रजापतिरनुक्तानां वय सोम वंधुस्त्र्यायुषं नारायणो वयं सोम गायत्री सोम एषते द्वे यजुषी रौद्रे अवरुद्र पंक्तिर्भेषजं ककुप् त्र्यंबकं द्वे अनुष्टुभावेतत्ते आस्तारपंक्तिः पंचरौद्रयास्त्र्यायुषमुष्णिह यजमानाशिषंशिवो नामयजुःक्षुरं निवर्तयामि यजुर्लिंगोक्तं दैवतम् ॥ ४ ॥ ऋचं वाचमध्यायो वैश्वदेवो दध्यङाथर्वणदृष्टऋचं वाचं पंच यजूंषि लिंगोक्तदैवतानि यन्मे पंक्ति बृहस्पतिर्महाव्याहृतीनां सावित्र्याश्चदध्यङाथर्वणो दैवतमुक्तं सावित्र्या गायत्री कयानस्तिस्रोदध्यङाथर्वणेन दृष्टा गायत्र्य ऐंद्र्यः कयात्वमैंद्र्यनिरुक्ता गायत्रीं द्वे विश्वस्य द्विपदा विराडिंद्रः शन्नो द्वे अनुष्टुभौ लिंगोक्तामित्रादयोऽहानि शं द्विपदा गायत्री लिंगोक्ता मित्रादयोऽहानि शं द्विपदा गायत्री लिंगोक्ता अहानि रात्रयः शन्न इंद्राग्नि त्रिष्टुबिंद्राग्न्यादयो लिंगोक्ता शन्नो देवी गायत्र्यापः स्योना दध्यङाथर्वणश्छंद उक्तं पृथिव्यापोहिष्टास्तिस्रो दध्यङाथर्वणदृष्टा गायत्र्य अब्देवत्या द्यौः शांतिर्द्वादश यजूंषि लिंगोक्ता दैवतानि दृतेहृंहेत्यादीनां यजुषां लिंगोक्ता अंतरीक्षादयो नमस्ते हरसे दध्यङाथर्वणो बृहतीमग्निनमस्ते अस्तु द्वे अनुष्टुभौ विद्युदादयः सुमित्रिया दध्यङार्थर्वणो यजूंषी आपस्तच्चक्षुः पुर उष्णिक् सौरी सद्योजातमित्यादीनां पंचानां सद्योजात वामदेवाघोरतत्पुरुषेशानास्त्रिष्टुप् जगत्यनुष्टुप् गायत्र्यनुष्टुभो रुद्रोऽग्निरिति भस्मेत्यादीनां पिप्पलादो गायत्री कालाग्निरुद्र आपो ज्योतिः प्रजापतिर्यजुर्ब्रह्माग्निवायुसूर्या आपोहिष्टा तिसृणां सिंधुद्वीपश्छंदो दैवतमुक्तमक्षीभ्यां षण्णां विवृहानुष्टुब् यक्ष्महा ॐ नमो रुद्रायोंन्नमो रुद्राय ॥ ५ ॥ इतिरुद्रसूत्रे तृतीयोऽध्यायः ॥

धीमतानंतदेवेन श्रीमदुद्धवसूनुना । त्रैविद्यमोढसंज्ञेन काशीपुरनिवासिना ॥ १ ॥ मया विरचितं चैतच्छ्रुतिस्मृतिपुराणतः । स्वकल्पिततत्रशंकात्र न कार्या विबुधैरतः परोपकृतये कृत्वा रुद्रसूत्रं समर्पितम् ॥ मदीयनाथयोर्विष्णुत्र्यंबयोः शिवपादयोः ॥ न मदीया कृतिर्यस्मात्कृतिरेषा शिवस्य च॥ यथा प्रेरितवान् रुद्रस्तथा लेखितवानहम्

अध्येतव्यमिदं सूत्रं विप्रैर्वाजसनेयिभिः । रुद्रस्य त्रिविधस्याशु तत्वज्ञानाभिलाषिभिः मुहुर्मुहुः पार्थयेहं सज्जनान् शुद्धमानसान्॥ मयोक्तमिह संशोध्यं विचार्य सदसच्चयत् ज्ञात्वानुच्छिष्टमर्थं यः करोति ग्रंथगोपनम्॥ तस्य श्रेयोऽर्थिनस्तन्न भूयाच्चौरो यतो हि सः यश्च श्रमः समुत्पन्नो ग्रंथस्यास्य विलेखने॥ सर्वात्मा तेन विश्वेशः प्रीयतां परमः शिवः

## ॥ अथ ग्रंथकर्तृप्रार्थना ॥

मया सद्वासद्वा यदिह गदितं मंदमतिना ।
किमेतच्छक्यं वाऽध्यवसितुमपि स्वल्पमतिना ॥
तदेवं यत्किंचित्सततमिह विख्यातमहिमा ।
प्रतापोऽयं सर्वो विकसति हि पित्रोश्चरणयोः ॥ १ ॥

जगति सकलविद्यासिंधुमुष्टिंधयानां ।
परभणिति परिक्षा युज्यते सज्जनानाम् ॥
तदिह मम विमृश्यं भूषणं दूषणं वा ॥
यदि भवति विदग्धैस्तद्ध्रुवं पुस्तकेषु ॥ २ ॥

अनेन प्रीयतां देवौ पार्वतीपरमेश्वरौ ॥
महारुद्रादिकर्तृभ्यो मुक्तिं भुक्तिं च यच्छतु ॥ ३ ॥

रुद्रकल्पद्रुमस्येयं प्रथमासंस्कृतिस्त्वियम् ॥
पूर्णाभूदीशकृपयानयेशः शं विधास्यतु ॥ ४ ॥

इति श्रीसूर्यपुरवास्तव्यखेडावालविप्रजातीयेन द्विवेद्युपनामकेन श्रीपरशुरामात्मजेन " जगन्नाथशर्मणा " संशोधितः श्रीरुद्रसूत्रसमन्वितः श्रीरुद्रकल्पद्रुमः



समाप्तः

## पांचसो वर्षनो जुनो मंत्रशास्त्रनो भंडार

# "श्रीमंत्रसारसमुच्चयः" (पूजाविधिसहितः)

जेमां यथाविधि मुद्राप्रकार यंत्रलक्षण दीक्षाविधि नक्षत्रचक्र अकथह-चक्र दुष्टमंत्रशोधनप्रकार अकडमचक्र षट्पत्रचक्र ऋणधनशोधन मंत्रदश-संस्कार गुरुशिष्यलक्षणो दीक्षासमय क्रियावतीदीक्षाप्रयोग रामपुरश्चर्या मंत्रस्नान संध्याविधि भूशुद्धयादिन्यास कलाकेशवश्रीकंठादिमातृकान्यास तत्त्वन्यास पात्रासादन रामयंत्र ९ समुच्चय रामनवमीव्रतविधि हनुमत्पुरश्चर्या हनुमन्मालामंत्र हनुमद्दीपदान दमनमहोत्सव विष्णुशयनमहोत्सव पवित्रा-रोपणोत्सव विजयोत्सव विष्णुप्रबोधोत्सव रथमहोत्सव त्रैपुरोत्सव होलिको-त्सव नृसिंहपुरश्चर्या नृसिंहसामराजविधि पुरुषसूक्तन्यास वेदोक्तनृसिंहपूजा सहस्राक्षरादिमालामंत्रो कार्त्तवीर्यार्जुनपुरश्चर्या कार्त्तवीर्यमालामंत्रो कार्त्तवीर्य-दीपदान विष्णुपुरश्चर्या वराहयंत्रोद्धार गणपतिपुरश्चर्या लक्ष्मीहरिद्रा गणेश-मालामंत्रो सूर्यादिनवग्रहमालामंत्रो त्रिकालसंध्याप्रयोग गायत्रीपुरश्चर्या सर-स्वतीपुरश्चर्या भूतलीपीमंत्र चतुःषष्ठीमातृकापूजा भूतयंत्रो तारापुरश्चर्या चतुःषष्ठीशक्तिपूजा कमलात्मिकापुरश्चर्या लक्ष्मीमालामंत्रो षोडशीश्रीविद्या-पुरश्चर्या त्रिपुरसुंदरीपूजा बालात्रिपुरामंत्र भुवनेश्वरीपुरश्चर्या श्रीकालीपुर-श्चर्या भद्रकालीश्मशानकालीसुमुखीमंत्रो छिन्नमस्तापुरश्चर्या रेणुकास्वयंव-रामधुमतीप्रमदावंदीकालरात्रीमंत्रो वशीकरणस्तंभनमोहनआकर्षणउच्चाटन-विद्वेषणमारणमंत्रप्रयोग शतचंडीविधान दुर्गाप्रयोग धूमावतीपुरश्चर्या त्रिपुर-भैरवीपुरश्चर्या मातंगीपुरश्चर्या चतुःषष्ठीयोगिनीपूजा कर्णपिशाचीनीप्रयोग शीतलामंत्र बगलामुखीपुरश्चर्या श्रीपार्थिवपूजा शिवमंत्रप्रयोग दक्षिणामूर्त्ति-प्रयोग अघोरास्त्र पाशुपतास्त्रमंत्रो क्षेत्रपालप्रयोगः बटुकभैरवदीपदान सर्व-देवपूजामंत्रो प्रणवस्वरूपनिरूपण विगेरे बसो विषयो शुद्धसंस्कृत भाषामां वर्णवेलां छे, पुस्तकपृष्ठ पांचसो, किंमत दोढ रूपीयो, फक्त बसो नकल बाकीछे, माटे आजेज मंगावो, पुस्तको थई रहेथी जरूर पस्ताशो ॥ इति शिवम् ॥

संवत् १९८३ वर्षारंभः } शास्त्री. जगन्नाथ परशुराम द्विवेदी. ठे. वाडीफळीया मु. सुरत

घणांज सुधारा वधारा साथे आवृति बीजी

# श्रीश्राद्धकौमुदी ( सूतकनिर्णयसहिता )

जेमां यथाविधि षट्पिंडविधि पुत्तलविधान नित्यश्राद्ध प्रयोग त्र्यहश्राद्ध पंचकविधान सूर्यसूक्त इंद्रसूक्त रुद्रसूक्त सूतिकाविधान रामरक्षास्तोत्र दशाहश्राद्ध एकादशाहश्राद्धप्रयोग हेमाद्रिप्रयोग पंचसूक्तो वृषोत्सर्ग द्वादशाहश्राद्धप्रयोग त्रयोदशाहश्राद्ध श्रवणीश्राद्ध शय्यादानविधि नारायणबलीश्राद्धप्रयोग तीर्थश्राद्ध अभिषेकमंत्रो ( ३० ) प्रेतबलीप्रयोग सर्पबली भूतबलि काकबलि नीलोद्वाहप्रयोग मातृकास्थापन नांदीश्राद्ध ग्रहस्थापन लक्ष्मीसूक्त मधुपर्क विवाहविधि तर्पणविधिमंत्रो ( ६४ ) पिंडदानमंत्रो ( २४ ) त्रिपिंडश्राद्ध मासिकमहालयश्राद्ध सूतकनिर्णय विगेरे पोणोसो विषयो गुजरातीमां टीपणी साथे संस्कृत भाषामां वर्णवेलां छे, पुस्तक पृष्ठ त्रणसो, स्वर्गवासी डे. ए. इ. तापीशंकर प्राणशंकर स्मारक मदद मळवाथी किंमत फक्त बार आना, वि. पि. थी मंगावनार पासे एक रूपीयो, सामटी पांच नकलना बेरवेठा चार रूपीया.

शाके. १८४८ } शास्त्री. जगन्नाथ परशुराम द्विवेदी.
वर्षारंभः } ठे. वाडीफळीया मु. सुरत.

घणांज सुधारा वधारा साथे आवृत्ति त्रीजी.

# "श्रीविवाहचंद्रिका" (षोडशसंस्कारसहिता)

---

जेमां यथाविधि गणेश (कुरवडी) स्थापन मंडपमुहूर्त ग्रहयज्ञ गणपतीपूजा मातृकापूजा नांदीश्राद्ध अर्घचंदन ब्राह्मणप्रार्थना पुण्याहवाचन अभिषेक कुशकंडिका ग्रहस्थापन नवग्रहहोम उत्तरपूजन बलिदान पूर्णाहुतिमंत्रो श्रेयोदान दानविधि आशीर्वाद गर्भाधान प्रयोग पुंसवन सीमन्तोन्नयन जातकर्म बालरक्षाविधि षष्ठीपूजा नामकरण आंदोलाशयन भूम्युपवेशन अन्नप्राशन अन्तरितप्रायश्चितप्रयोग चूडाकरण कर्णवेध जन्मदिनपूजा उपनयन व्रात्यप्रायश्चित्त वेदारंभ केशान्त समावर्त्तन वाग्दान हस्तमेलापकश्लोक (३०) मधुपर्क कन्यादानसंकल्प विवाहहोम सप्तपदी चतुर्थीकर्म कुंभविवाह अर्कविवाह तुलसीविवाह आवसथ्याधान औपासनहोम पक्षादिकर्मविधि श्रौताधानप्रयोग विगेरे पोणोसो विषयो गुजराती-भाषामां टीपणी साथे शुद्ध संस्कृत भाषामां वर्णवेलां छे, पुस्तक पृष्ठ अढीसो, किंमत बार आना वि. पि. थी मंगावनार पासे एक रूपियो ॥

संवत् १९८३ } शास्त्री जगन्नाथ परशुराम द्विवेदी.
वर्षारंभः } ठे. वाडीफळीया मु—सुरत.